# शब्दकल्पद्रुमः ।

अर्थात्

एतद्देशप्रचलितसकलकोषाद्यशेषशास्त्रस्थसङ्कलिताकारादिवर्णक्रमविन्यस्तशब्द-तल्लिङ्ग-नानार्थ-पर्य्याय-प्रमाण-प्रयोग-धातु-तदनुबन्धाभिधेय-
सहित-तत्तच्छब्दप्रसङ्गोत्थित-वेद-वेदाङ्ग-वेदान्त-न्याय-पुराणेतिहास-सङ्गीत-शिल्प-सूपकारशास्त्र-ज्योतिष-
तन्त्राख्यान-काव्यालङ्कार-छन्दःप्रभृति-नाम-लक्षणोदाहरण-द्रव्यगुण-रोगनिदानौषध-
स्मृत्युक्तव्यवस्थादिसंयुक्त-सर्व्वदर्शनमतानुसारि-संस्कृताभिधानग्रन्थः ।

## स्यार-राजा-राधाकान्तदेव-बाहादुरेण

विरचितः ।

पाणिनिमतानुसारि-प्रत्येकशब्दव्युत्पत्ति-मूलग्रन्थातिरिक्तबहुलशब्दार्थ-प्रमाण-प्रयोग-पर्य्याय-धातूदाहरणादिभिः
नूतनसङ्कलितबहुलशब्द-तदर्थ-तत्प्रमाण-प्रयोगादिसहित-
सुप्रशस्तपरिशिष्टेन च सार्द्धम्

## श्रीवरदाप्रसादवसुना तदनुजेन श्रीहरिचरणवसुना च

अशेषशास्त्रविशारदकोविदवृन्दसाहाय्येन संपरिवर्द्धितः । नागराक्षरैः प्रकाशितश्च ।

चतुर्थः काण्डः ।

अन्तर्गतवर्णाः । व—ष ।


कलिकाता-राजधान्यां

रामनारायण-यन्त्रे मुद्रितः । ७१ नं० पाथुरियाघाट-ष्ट्रीट्-स्थितभवनात् प्रकाशितश्च । शकाब्दाः १८१४

PRINTED BY K. P. BASU, RAMNARAYAN PRESS; AND CONSIDERABLY IMPROVED, CAREFULLY REVISED AND PUBLISHED
BY HARADA PRASAD BASU, AND HARI CHARAN BASU. 71, PATHURIAGHATA STREET. CALCUTTA:

To be had at the Sabdakalpadruma Office, No. 71. Pathuriaghata Street, Calcutta: and at the Baptist Mission Press. No. 24 Lower Circular Road Calcutta: Price for Subscribers in India, Re. 1. and Countries out of India 3s. for each number.

# शब्दकल्पद्रुमः।

## चतुर्थकाण्डम्।



य, अन्तःस्थयकारः। स च षड्विंशव्यञ्जनवर्णः॥ अस्योच्चारणस्थानं तालु। (यदुक्तं सिद्धान्तकौमुद्याम्। "इचुयशानां तालु।" तथा च शिक्षायाम्। १७।

"कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू॥")

तस्य स्वरूपं यथा,—

"यकारं शृणु चार्व्वङ्गि! चतुष्कोणमयं सदा।
पलालधूमसङ्काशं स्वयं परमकुण्डली॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा।
प्रणमामि सदा वर्णं मूर्त्तिमन्मोक्षमव्ययम्॥"

इति कामधेनुतन्त्रे ५ पटलः॥

वङ्गीयवर्णमालायामस्य लेखनप्रकारो यथा,—

"अर्द्धचन्द्रक्रमतो रेखा चतुष्कोणमयी शुभा।
नारायणशिवधयस्तासु तिष्ठन्ति नित्यशः॥
मात्रा कुण्डलिनी ज्ञेया ध्यानमस्य प्रचक्षते॥"

तस्य ध्यानं यथा,—

"धूम्रवर्णां महारौद्रीं षड्भुजां रक्तलोचनाम्।
रक्ताम्बरपरीधानां नानालङ्कारभूषिताम्॥
महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम्।
एवं ध्यात्वा यकारन्तु तन्मन्त्रं दशधा जपेत्॥"

तत्प्रणाममन्त्रो यथा,—

"त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा।
प्रणमामि सदा वर्णं शक्तिमामोक्षमव्ययम्॥"

इति वर्णोद्धारतन्त्रम्॥

अस्य नामानि यथा,—

"यो वायुर्वसुधा वायुर्व्विश्वात्मा पुरुषोत्तमः।
युगान्तः पवनः शीघ्रो धूमार्च्चिः प्राणिसेवकः॥
सर्व्वाश्रमो जटी लोला वायुवेगी यशस्करी।
चण्डांशुः चपला बाली हृदयं कपिलाप्रभुः॥
आग्नेयो यापकस्त्यागी होमो यानं प्रभा सुखम्।
चण्डः सर्व्वेश्वरी धूमचामुण्डा सुरेश्वरी॥
जगाला मरुयो माता हंसिनी भृङ्गनायकः।
वेगः शोषको भीमो मनिरागन्धवेदिनी।
मेढ़ः सोमः षष्ठिनामा पावका प्राणसंज्ञकः॥"

इति नानातन्त्रशास्त्रम्॥

(धात्वनुबन्धविशेषः। स तु दिवादिगणद्योतकः। तथा च कविकल्पद्रुमे। "दिवाद्यो यानुबन्धकः॥" छन्दःशास्त्रान्तर्गतगणविशेषः। तथा च छन्दोमञ्जर्य्याम्।

"आदिगुरुः पुनरादिलघुर्यः॥"

अस्य चाकृतिकचिह्नं यथा, ।ऽऽ;

काव्यादौ अस्य प्रथमप्रयोगे अश्रीलाभः फलम्। यथा, वृत्तरत्नाकरटीकायाम्।

"यो लक्ष्मीं रसु दाहं यवनमथ यवौ मः सुखं यस्तु खेदम्॥")

यः, पुं, (याति वातीति। या गतौ + डः।) वायुः। यशः। यानम्। याता। इति शब्दरत्नावली॥ सर्व्वनाम। यच्छब्दार्थे इति यावत्। इति विश्वः॥

यकः, त्रि, यः। ये इति भाषा। अव्ययसर्व्वनाम्नष्टेः प्रागकच्। ("अव्ययसर्व्वनाम्नामकच् प्राक् टेः।" ५। ३। ७१। इति पाणिनिसूत्रम्। यथा, ऋग्वेदे। ८।२१।१८।

"चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु॥")

यकृत्, क्ली, (यच् + "शकेर्ऋतिन्।" उणा० ४।५८। इत्यत्र "बाहुलकात् यजेः कश्च।" इत्युज्ज्वलदत्तोक्त्या ऋतिन् जस्य च कः।) कुक्षेर्दक्षिणभागस्थमांसखण्डकम्। तत्पर्य्यायः। कालखण्डम् २। इत्यमरः। २। ६। ६६॥ कालखञ्जम् ३ कालेयम् ४ कालकम् ५। इति हेमचन्द्रः॥ करट्ठा ६ महाखायुः ७। इति राजः॥ (यथा, ऋग्वेदे। १०। १६३। ३।

"यक्नं मतस्नाभ्यां यकः प्लाशिभ्यो विवृहामि ते।"

"यकः हृदयसमीपे वर्त्तमानः कालमांसविशेषो यकृत् तस्मात्।" इति तद्भाष्ये सायणः।) अथ शरीरावयवविशेषस्य यकृतः स्वरूपमाह।

"अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः।
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्॥"

अथ यकृद्रोगमाह।

"शोणितमस्य हेत्वादि समस्तं यकृदामये।
किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः॥"

अथ यकृद्रोगचिकित्सा।

"प्लीहोदिष्टाः क्रियाः सर्व्वा यकृत्यपि समाचरेत्।
कार्य्यञ्च दक्षिणे बाहौ तत्र शोणितमोक्षणम्॥
क्षारञ्च विडकृष्णाभ्यां पूतिकस्याम्बु निस्तुतम्।
पिबेत् प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये॥"

इति भावप्रकाशः॥

(तथा च।

"वातेनोद्दीरितं रक्तं कफेन च घनीकृतम्।
पित्तेन पाकतां प्राप्तं त्रिदोषग्रथितं यकृत्॥
लक्षणं तस्य वक्ष्यामि तेन तद्यापि साधयेत्।
क्षीयते तेन मनुजो मृत्युराशु प्रवर्त्तते॥
वमिरामस्तयोर्ज्ञारो तृष्णाश्च श्वासः श्रमः।
दाहोऽरुचिस्तृषामूर्च्छा कण्ठे शोषः शिरोव्यथा॥
कृच्छ्रमूत्रञ्च प्रतिश्यायः शोषणं कटुवाक्च।
सशल्यं हृदि शूलञ्च निद्रानाशः प्रतापतः॥
हृदये मथ्यते चाद्यं जठरं गच्छति स्वनम्।
एतैर्लिङ्गैर्विजानीयात् यकृत् कोष्ठे च बध्यते॥"

अथास्य चिकित्सा।

"निम्बगोपथवपीतवं निशा
काश्मरी च तुलसी च किंशुका।
क्वाथ एव हृदयामयापहः
आशु शूलयकृतञ्च नाशयेत्॥
सौराष्ट्रीकाशीसमहौषधानि
दुरालभानातिप्रवालकञ्च।
दार्व्वी यमानी ककुभः समङ्गा
क्वाथः समस्तैर्यकृदाशु हन्ति॥"

इति हारीते चिकित्सितस्थाने चतुर्थेऽध्याये।

"शोणितस्य दक्षिणात् पार्श्वात् कुर्य्याद्यकृदपि च्युतम्॥"

इति वाभटे निदानस्थाने द्वादशेऽध्याये।)

यकृदात्मिका, स्त्री, (यकृत इवात्मा स्वरूपं यस्याः। बहुव्रीहौ कः। टापि अत इत्वम्।) तैलपायिका। इति शब्दचन्द्रिका॥

यक्षवैरी, [न्] पुं, (यक्षस्य वैरी नाशकः ।) रीठा-करञ्जः । यथा,—
"गौषघ्नो मांसदलनो यक्षवैरी चलच्छदः ।"
इति शब्दचन्द्रिका ॥

यक्ष, क ङ महि । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) क ङ, यक्षयते । महि पूजायाम् । इति दुर्गादासः ॥

यक्षः, पुं, (यक्ष्यते पूज्यत इति । यक्ष+घञ् । यद्वा, ईं लक्ष्मीमश्नोतीति । अक्ष+अच् ।) गुह्यकमात्रम् । गुह्यकेश्वरः । इति मेदिनी । षे, १२ ॥ इन्द्रगृहम् । क्षपणकः । इति [illegible] ॥ यक्षस्वरूपं यथा,—
"आजानुयं च तिलकाः कुबेरवरकिङ्कराः ।
शैलप्रस्तरकरा अञ्जनाकारमूर्त्तयः ।
विकटाकारवदनाः पिङ्गलाक्षा महोदराः ।
स्फटिका रक्तवेशाश्च दीर्घस्कन्धाश्च केचन ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥
यक्षगणो यथा,—
"प्रचेतसः सुता यक्षास्तेषां नामानि मे शृणु ।
केवलो हरिकेशश्च कपिलः काञ्चनस्तथा ।
मेघमाली च यक्षाणां गण एष उदाहृतः ॥"
तस्य व्युत्पत्तिर्यथा,—
"धातुर्यक्षत्ययोक्तश्च दहने चर्पणे च सः ।
यद्भयक्षुत्सवानेष तस्माद्यक्षो भवत्ययम् ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
(अपरा निरुक्तिर्यथा, विष्णुपुराणे ।१।५।४१।
"मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु जक्षणात् ॥"
क्ली, पूजा । यथा, ऋग्वेदे । ७ । ६१ । ५ ।
"अमूरा विश्वा वृषणा विमा वां
न यासु चित्रं ददृशे न यक्षम् ॥"
"न यक्षं न पूजा दृश्यते ।" इति तद्भाष्ये सायनः ॥ तथाच अथर्ववेदे । ११ । २ । २४ ।
"तव यक्षं पशुपते अप्स्वन्तः ॥")

यक्षकर्द्दमः, पुं, (यक्षप्रियः कर्द्दमः ।) कर्पूरागुरु-कस्तूरीकक्कोलानां मिश्रितसमभागः । इत्यमरः । २ । ६ । १३३ ॥ "कर्पूरादिभिर्यक्षप्रियैः समभागैः साधितोऽनुलेपनभेदो यक्षकर्द्दम उच्यते । यक्षप्रियः कर्द्दमो यक्षकर्द्दमः ।
'कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनन्तथा ।
महासुगन्धमित्युक्तं नामतो यक्षकर्द्दमः ॥'
इति धन्वन्तरिः ॥
अन्यत्रापि ।
कर्पूरागुरुकस्तूरीकक्कोलघुसृणादि यत् ।
एकीकृतमिदं सर्व्वं यक्षकर्द्दम इष्यते ॥"
इति तट्टीकायां भरतः ॥

यक्षतरुः, पुं, (यक्षप्रियो यक्षाश्रितो वा तरुः । शाकपार्थिवादिवत् समासः ।) वटवृक्षः । इति राजनिर्घण्टः ॥ (विवरणमस्य वटशब्दे ज्ञातव्यम् ॥)

यक्षधूपः, पुं, (यक्षप्रियो धूपः ।) धूपसामान्यम् । धूनकधूपः । इति केचित् । धुना इति ख्यात इति केचित् । इति भरतः ॥ तत्पर्य्यायः । सर्ज्जरसः २ अरालः ३ सर्व्वरसः ४ बहुरूपः ५ । इत्यमरः । २ । ६ । १२७ ॥ रालः ६ धूनकः ७ वह्निवल्लभः ८ । इति रभसः ॥ शालसारः ९ शालजः १० शालनिर्य्यासः ११ सर्ज्जः १२ । इति रत्नमाला ॥ (अस्य पर्य्यायान्तरं यथा,—
"रालस्तु शालनिर्य्यासस्तथा सर्ज्जरसः स्मृतः ।
देवधूपो यक्षधूपस्तथा सर्व्वरसश्च सः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
एतेन साधकपूजनविधौ देवीपूजा चोक्ता यथा कालिकापुराणे ६८ अध्याये ।
"न यक्षधूपं वितरेत् माधवाय कदाचन ।"
"यक्षधूपेन वा देवीं महामायां प्रपूजयेत् ॥")
सरलद्रवरसः । टारपिन तैल इति भाषा । तत्पर्य्यायः । पायसः २ श्रीवासः ३ सरलद्रवः ४ । इति हेमचन्द्रः । ३ । ३११ ॥

यक्षरसः, पुं, (यक्षप्रियो रसः । शाकपार्थिववत् समासः ।) पुष्पमद्यम् । तत्पर्य्यायः । मध्वासवः २ । इति त्रिकाण्डशेषः ॥

यक्षराजः, पुं, (यक्षाणां राजा । "राजाहःसखिभ्यष्टच् ।" ५ । ४ । ९१ । इति समासान्तटच् ।) कुवेरः । इति शब्दरत्नावली ॥ (यथा, महाभारते । ५ । १६४ । ४९ ।
"इत्युक्तो भगवान्देवो यक्षराजः सुपूजितः ।
प्रययौ वह्नितैः सर्व्वैर्निमेषान्तरचारिभिः ॥")

यक्षराट्, [ज्] पुं, (यक्षेषु राजते इति । राज्+"सत्सूद्विषद्रुहेति ।" ३।२।६१ । इति क्विप् ।) कुवेरः । (यथा, भागवते । ६ । १८ । १७ ।
"तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥"
यक्षराजमात्रम् । मणिभद्रः । यथा, महाभारते । ३ । ६४ । १२७ ।
"तथा सो यक्षराडत्र मणिभद्रः प्रसीदतु ॥"
यक्षा इव मत्ता राजन्तेऽत्र । राज्+क्विप् ।) रङ्गमण्डपः । इति मेदिनी । जे, ३५ ॥

यक्षराट्पुरी, स्त्री, (यक्षराजः पुरी ।) अलका । सा च कैलासपर्व्वतस्थितकुवेरपुरी । इति जटाधरः ॥

यक्षरात्रिः, स्त्री, (यक्षप्रिया यक्षाणां वा रात्रिः ।) कार्त्तिकी पूर्णिमा । तत्पर्य्यायः । दीपाली २ । इति त्रिकाण्डशेषः ॥

यक्षसाधनं, क्ली, (यक्षाणां साधनम् ।) यक्षोपासना । यथा, वाराहीतन्त्रे ।
"यक्षाणां यक्षिणीनाञ्च पैशाचीनाञ्च साधनम् ।
भूतवेतालनागानां मारणोच्चाटनानि च ।
अधोगमनमेतेषां साधने ऐहिकं हितम् ॥"

यक्षामलकं, क्ली, (यक्षाणामामलकम् ।) पिण्डखर्ज्जूरफलम् । इति शब्दमाला ॥

यक्षावासः, पुं, (यक्षाणामावासो वासस्थानम् ।) वटवृक्षः । इति राजनिर्घण्टः ॥

यक्षिणी, स्त्री, (यक्षः पूजा अस्त्यस्याः । यक्ष+इनिः । ङीप् ।) कुवेरपत्नी । इति शब्दरत्नावली ॥ यक्षभार्य्या च ॥ (यथा, कथासरित्सागरे । १० । १७८ ।
"सोऽपि सुप्ताशु विजने भ्रातुः पुत्रं तमभ्यधात् ।
अहृतिं मा कृथाः पुत्र ! मम विद्धा हि यक्षिणी ॥")

यक्षी, स्त्री, (यक्षस्य भार्य्या । यक्ष+पुंयोगादिति ङीष् ।) कुवेरपत्नी । इति शब्दरत्नावली ॥ (यक्षभार्य्या । यथा, महाभारते । ३ । ६४ । १२७ ।
"यक्षी वा राक्षसी वासि उताहोस्वित् सुराङ्गना ।
सर्व्वथा कुरु मे स्वस्ति रक्षस्वास्माननिन्दिते ! ॥")

यक्षोडुम्बरकं, क्ली, (यक्षप्रियमुडुम्बरम् । ततः स्वार्थे कन् ।) अश्वत्थफलम् । इति त्रिकाण्डशेषः ॥

यक्ष्मघ्नी, स्त्री, (यक्ष्माणं हन्ति । हन्+"अमनुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति टक् । ततो ङीप् ।) द्राक्षा । इति शब्दमाला ॥

यक्ष्मा, [न्] पुं, (यक्ष+"वाहुलकात् सर्व्वधातुभ्योऽपि ।" उणा० ४।१४५ । इत्यत्र उज्ज्वलदत्तोक्त्या मनिन्प्रत्ययेन साधुः ।) रोगविशेषः । तत्पर्य्यायः । क्षयः २ शोषः ३ । इत्यमरः । २ । ६ । ५१ ॥ राजयक्ष्मा ४ रोगराट् ५ ॥ अथ राजयक्ष्माधिकारः । "तत्र राजयक्ष्मणो विप्रकृष्टं सन्निकृष्टञ्च निदानमाह ।
'वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥'
वेगोऽत्र वातमूत्रपुरीषाणाम् ।
'वातमूत्रपुरीषाणि निगृह्णाति यदा नरः ॥'
इति चरकवचनात् ॥
क्षयात् क्षीयतेऽनेनेति क्षयः तेनातिव्यवायानशनैर्ष्यादयो धातुक्षयहेतवः क्षयशब्देनोच्यन्ते । साहसात् बलवता समं मल्लयुद्धादितः । विषमाशनात् बहु स्तोकमकाले वा भुक्तं तत् विषमाशनम् । तस्मात् । त्रिदोषः सान्निपातिकः । हेतुचतुष्टयात् अन्येऽपि हेतवः हेतुचतुष्टय एवान्तर्भवन्ति । यक्ष्मणः पर्य्यायाः राजयक्ष्मक्षयशोषाः ॥ यक्ष्मादीनां शब्दानां निरुक्तिमाह ।
'वैद्यो व्याधिमतां यस्मात् क्रियाभिर्न यक्ष्यते ।
स यक्ष्मा प्रोच्यते लोके शब्दशास्त्रविशारदैः ॥'
यक्ष्यते पूज्यते ।
'राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ।
तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः ॥
क्रियाक्षयकरत्वात्तु क्षय इत्युच्यते बुधैः ।
संशोषणाद्रसादीनां शोष इत्यभिधीयते ॥'
संप्राप्तिमाह ।
'कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा ।
क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानवः ॥'
कफप्रधानैर्दोषैः रसवर्त्मसु रुद्धेषु अनन्तरा सर्व्वे धातवः क्षीयन्ते ततो मानवः शुष्यति ।

…रणभूतस्य रसस्य क्षये कार्य्याणां रक्तादी-
नामनुक्रमेण क्षीयमाणत्वात् ॥ * ॥ मार्गाव-
रोधे रसक्षयहेतुमाह चरकः ।
‘रसस्रोतःसु रुद्धेषु स्वस्थानस्थो विदह्यते ।
ऊर्द्धं कासवेगेन बहुरूपः प्रवर्त्तते ॥’
स्वस्थानस्थः हृदयस्थः । कासं विनापि द्रवक्षयी
भवति मार्गावरोधकुपितवातेन रसस्य शोष-
णात् । उक्तञ्च ।
‘वायोर्द्धातुक्षयात् कोपो मार्गस्यावरणेन च ।’
‘अनुलोमक्षयं दृष्ट्वा प्रतिलोमक्षयाच्च ॥’
अनुलोमक्षयं दर्शयित्वा प्रतिलोमक्षयमप्याह ।
अतिव्यवायिनो वा रेतसि क्षीणे प्रतिलोमक्रमे-
णान्तरा सर्व्वे धातवो रसपर्य्यन्ताः क्षीयन्ते ।
तद्यथा । शुक्रे क्षीणे मज्जा क्षीयते मज्जनि
क्षीणेऽस्थि क्षीयते । एवं पूर्व्वं पूर्व्वं क्षीयते ।
ननु कार्य्यस्य शुक्रस्य क्षये कथं कारणभूतानां
मज्जादीनां क्षयः । उच्यते । शुक्रक्षयाद्वायुः
कुप्यति । यदुक्तम् ।
‘वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति ।’
स वायुः शोषित्वक्रमेण मज्जादीन् सर्व्वान्
धातून् संशोषयति । ततस्तदनन्तरं मानवः
शुष्यति ॥ * ॥ पूर्व्वरूपमाह ।
‘श्वासाङ्गसादकफसंस्रवतालुशोष-
वम्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्येत्
शुष्कांस्तरून् पवनधूमदवार्द्दितांश्च ॥’ * ॥
रूपाणि लक्षणमाह ।
‘अंसपार्श्वाभितापश्च सन्तापः करपादयोः ।
ज्वरः सर्व्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥’
अंसयोः पार्श्वयोः अभितापः पीडा अत्र
सकलधातुक्षयपूर्व्वकः सकलशरीरशोषोऽपि
द्रष्टव्यः । क्षीयन्ते धातवः सर्व्वे ततः शुष्यति
मानव इति संप्राप्तिः । एवं त्रिरूपे एकादश-
रूपे च बोद्धव्यम् । एतानि त्रीणि लक्षणानि
शोषाविरोधेन चरकोक्तानि । सुश्रुतेन
त्वत्र षट्लक्षणान्युक्तानि ।
‘भक्तद्वेषो ज्वरः कासः श्वासः शोणितदर्शनम् ।
स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि ॥’ * ॥
सकलतया दोषाणां भेदादेकादश लक्षणा-
न्याह ।
‘स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥’
अनिलादुक्तत्वात् एवं पित्तात् कफाच्च । यत
आह सुश्रुतः ।
‘एकादशभिरेभिर्व्वा षड्भिर्व्वापि समन्वितम् ।
त्रिभिर्व्वा पीडितं लिङ्गैः कासातीसारपीडितम् ॥’
…क एषमतः शोषः सन्निपातात्मको गदः ।
…दितश्च लिङ्गानि दोषाणां निपतन्ति च ॥’

असाध्ययक्ष्माणमाह ।
‘एकादशभिरेभिर्व्वा षड्भिर्व्वापि समन्वितम् ।
त्रिभिर्व्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः ।
जह्याच्छोषार्द्दितं जन्तुमिच्छन् सुविपुलं यशः ॥’
तत्र विशेषमाह ।
‘सर्व्वैरर्द्धैस्त्रिभिर्व्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्व्वरूपोऽप्यतोऽन्यथा ॥’
सर्व्वैर्लिङ्गैरेकादशभिः । अर्द्धैः षड्भिः त्रिभि-
र्ज्वरकासरुधिरवमनैः । अतोऽन्यथा मांसबले
सति सर्व्वरूपोऽपि प्रत्याख्याय चिकित्स्यः ।
‘महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्जयेत् ॥’
महाशनं क्षीयमाणमित्येकमसाध्यलक्षणम् ।
अतीसारनिपीडितमिति द्वितीयम् । यत
उक्तम् ।
‘मलायत्तं बलं पुंसां शुक्रायत्तन्तु जीवनम् ।
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥’
शूनमुष्कोदरमिति तृतीयम् ॥ * ॥ अरिष्ट-
माह ।
‘शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीडितम् ।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥’
मेहन्तं शुक्रं क्षरन्तम् । शुक्लाक्षत्वादीनि
एकैकशोऽरिष्टलक्षणानि ॥ * ॥ अवधिमाह ।
‘परं दिनसहस्रन्तु यदि जीवति मानवः ।
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः ॥’
शोषपीडितो मानवश्चेत्तरुणो भवति । सुभि-
षग्भिरुपक्रान्तो भवति । तदा परं दिनसह-
स्रम् । द्वितीयदिनसहस्रं यदि जीवति तत्र
नो नविकल्प इत्यर्थः । एतेन शोषपीडितो
मानवश्चेत्तरुणो भवति । सहृद्यश्चिकित्स्यो
भवति । तदा प्रथमदिनसहस्रं जीवेदेव इत्युक्ता
चिकित्सामाह ।
‘ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् ।
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥’
आत्मवन्तं यत्नवन्तं धृतिमन्तं वा ॥ * ॥
अथ निदानविशेषैः शोषविशेषानाह ।
‘व्यवायशोकवार्द्धक्यव्यायामाध्वप्रशोषिताम् ।
व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥’
व्रणोरःक्षतसंज्ञौ शोषिणौ । व्रणशोषी उरः-
क्षतशोषी च ॥ * ॥ तत्र व्यवायशोषिणो
लक्षणमाह ।
‘व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।
पाण्डुदेहो यथापूर्व्वं क्षीयन्ते चास्य धातवः ॥’
शुक्रस्य क्षयलिङ्गैः सुश्रुतोक्तैः । तानि यथा,
शुक्रक्षये मेढ्रवृषणयोर्वेदना अशक्तिर्मैथुने
चिराद्वा प्रसेकः प्रसेके चाल्पशुक्रदर्शनमिति ।
यथापूर्व्वं क्षीयन्ते चास्य धातवः प्रथमं शुक्रं
क्षीयते पश्चात् शुक्रक्षयजनितवायुना मज्जा-
द्योऽपि धातवो यथापूर्व्वं क्षीयन्ते ॥ * ॥
शोकशोषिणो लक्षणमाह ।
‘प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।
विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥’

प्रध्यानशीलः यस्याभावेन शोको जनितस्त-
द्ध्यानपरः । स्रस्ताङ्गः शिथिलाङ्गः । तादृशः
व्यवायशोषिसदृशः । तेन शुक्रादिसर्व्वधातुक्षय-
युक्तो भवति । परं शुक्रक्षयकृतैर्विकारैर्मेढ्र-
वृषणवेदनादिभिर्वर्जितो भवति । व्याधिस्व-
भावात् ॥ * ॥ जराशोषिणो लक्षणमाह ।
‘जराशोषी कृशो मन्दवीर्य्यबुद्धिबलेन्द्रियः ।
कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ॥
ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीडितः ।
सम्प्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥’
मन्दप्रस्रुतः स्रवणार्थः । शुष्करूक्षमलच्छविः
शुष्करूक्षे मलच्छवी यस्य सः ॥ * ॥ अध्व-
शोषिणो लक्षणमाह ।
‘अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः ।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥’
संभृष्टस्येव परुषा छविर्यस्य सः । प्रसुप्तगात्रा-
वयवः प्रसुप्तः स्पर्शाज्ञः । क्लोमं तिलकं पिपासा-
स्थानम् ॥ * ॥ व्यायामशोषिणो लक्षणमाह ।
‘व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥’
एभिरेव स्रस्ताङ्गत्वादिभिरध्वशोषिणो लक्षणै-
रेव । भूयिष्ठं अत्यर्थम् ॥ * ॥ सनिदानं व्रणशोष-
माह ।
‘रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषी याप्योऽसाध्यश्च स स्मृतः ॥’
उरःक्षतस्य निदानमाह ।
‘धनुषायास्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पततो विषमोन्नतात् ॥
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥
अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीं वा तरतो हयैर्व्वा सह धावतः ॥
सहसोत्पततो दूरं तूर्णञ्चातिप्रनृत्यतः ।
तथान्यैः कर्म्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥
क्षीणे चातिप्रसक्तस्य स्त्रीष्वल्पप्रमिताशिनः ।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते ॥’
आयास्यतः आयासं कुर्व्वतः । दम्यं वृषादिकम् ।
अन्यञ्च गजोष्ट्रादिकम् । शिला दीर्घपाषाणः ।
अश्म प्रस्तरखण्डः । निर्घातोऽभिघातविशेषः ।
व्याधिः उरःक्षताख्यः ॥ * ॥ उरःक्षतस्य लक्षण-
माह ।
‘उरो विरुज्यतेऽत्यर्थं भिद्यते च विभज्यते ।
शूलं भवति तस्यार्द्दं शुष्यत्यङ्गं प्रवेपते ॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रकम्पते ।
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ॥
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा ॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहु ।
कासमानस्य चाभीक्ष्णं कफः सासृक् प्रवर्त्तते ॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।
अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतम् ॥’
विरुज्यते पीड्यते । भिद्यते विदार्य्यत इव ।

यजुः, [ स् ] क्ली, (इज्यतेऽनेनेति । यज् + "अर्त्ति-पृवपियजीति ।" उणा० २ । ११८ । इति उसिः ।) वेदविशेषः । इत्यमरः । १ । ६ । ३ ॥
"इज्यतेऽनेनेति यजुः । यजे औ देवार्च्चादानसङ्गतौ । चासुसिस् इति उस् ।" इति भरतः ॥ * ॥
अपि च । यजुराह जैमिनिः । शेषे वा यजुः-शब्दः । शेषे ऋक्सामभिन्ने मन्त्रजाते तत्र यज्ञमन्त्रजातं प्रश्लिष्य पठितं गानादिविच्छेद-रहितं तत् यजुरिति । इति तिथ्यादितत्त्वम् ॥
यजुर्व्वेदस्य षड्शीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादश भेदा भवन्ति । चरकाः १ आह्वरकाः २ कठाः ३ प्राच्यकठाः ४ कपिष्ठलकठाः ५ औपमन्यवाः ६ आलालकठाः ७ चारायणीयाः ८ वारायणीयाः ९ वार्त्तान्तवेयाः १० श्वेताश्वतराः ११ मैत्रायणीयाश्चेति १२ । तत्र मैत्रायणीया नाम सप्त भेदा भवन्ति । मानवाः १ दुन्दुभाः २ चैकेयाः ३ वाराहाः ४ हारिद्रवेयाः ५ श्यामाः ६ श्यामायनीयाश्चेति ७ । तेषामध्ययनमष्टौ शतम् । यजुः-सहस्राण्यधीत्य शाखापारो भवति । तान्येव द्विगुणान्यधीत्य पदपारो भवति । तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति । षडङ्गान्यधीत्य षडङ्गविद्भवति । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि । तत्र प्राच्योदीच्या नैरृत्या निर्द्देश्याः । तत्र वाजसनेया नाम सप्तदश भेदा भवन्ति । जाबालाः १ औधेयाः २ काण्वाः ३ माध्यन्दिनाः ४ शापीयाः ५ तापायनीयाः ६ कापालाः ७ पौण्ड्रवत्साः ८ आवटिकाः ९ परमावटिकाः १० पाराशर्य्याः ११ वैधेयाः १२ वैनेयाः १३ औधेयाः १४ गालवाः १५ वैजवाः १६ कात्यायनीयाश्चेति १७ । प्रतिपदमनुपदं छन्दो भाषा धर्म्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि भवन्ति । उपज्योतिषम् १ लाङ्गलचयम् २ प्रतिज्ञा ३ अनुवाक्यम् ४ परिसंख्या ५ चरणव्यूहम् ६ श्राद्धकल्पः ७ प्रवराध्यायश्च ८ शाखम् ९ क्रतुः १० संख्या ११ अनुगमः १२ यज्ञम् १३ पारायणः १४ होत्रकम् १५ पशवः १५ उक्थानि १७ कूर्म्मलक्षणम् १८ । इत्यष्टादशपरिशिष्टानि ।
"द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके ।
इत्युक्तं परिसंख्यातमेतत् सकलं सशुक्रियम् ॥
ग्रन्थांश्च परिसंख्यातं ब्राह्मणञ्च चतुर्गुणम् ।
आद्यावारभ्य वेदान्तं ब्रह्मयाज्ञतिपूर्व्वकम् ।
वेदमध्याय एतेषां होमान्ते तु समारभेत् ॥"
तत्र तैत्तिरीयका नाम द्विभेदा भवन्ति । औख्याः खाण्डिकेयाश्चेति । तत्र खाण्डिकेया नाम पञ्च भेदा भवन्ति । आपस्तम्बी १ बौधायनी २ सत्याषाढी ३ हिरण्यकेशी ४ औधेयाश्चेति ५ । तत्र कठानामुपगानविशेषः । चतुश्चत्वारिंशदुपग्रन्थान् ।
"मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।
यजुर्व्वेदः स विज्ञेयोऽन्ये शाखान्तराः स्मृताः ॥"
यजुर्व्वेदस्य धनुर्व्वेद उपवेदः । यजुर्व्वेदस्य भारद्वाजगोत्रम् । रुद्रदेवत्यम् । त्रैष्टुभं छन्दः । यजुर्व्वेदः शुक्लः । दीर्घः । कपाली । ताम्रवर्णः । काञ्चननयनः । आदित्यवर्णः वर्णेन । पञ्चारत्निमात्रः । अस्य ध्यानम् ।
"वन्दे रौद्रं त्रैष्टुभं ताम्रवर्णं
भारद्वाजं रुक्मनेत्रं शुभाङ्गम् ।
यजुर्व्वेदं दीर्घमादित्यवर्णं
कापालीनं पञ्च चारत्निमात्रम् ॥"
य इदं दैवतं रूपं गोत्रं प्रमाणं छन्दो वर्णं वर्णयति स विद्यां लभते स विद्यां लभते । जन्मजन्मनि वेदपारो भवति । जन्मजन्मनि वेदधारी भवति । अव्रतो व्रती भवति । अप्रयतः प्रयतो भवति । अब्रह्मचारी ब्रह्मचारी भवति । जातिस्मरो जायते । इति चरणव्यूहम् ॥ ( ऋक्सामभिन्नो मन्त्रविशेषः । इति केचित् ॥)

यजुर्व्वेदः, पुं, ( यजुरेव वेदः । यजुषां वेद इति वा ।) वेदविशेषः । तस्याधिपतिर्यथा,—
"ऋग्वेदाधिपतिर्जीवः सामवेदाधिपः कुजः ।
यजुर्व्वेदाधिपः शुक्रः शशिजोऽथर्व्ववेदराट् ॥"
इति ज्योतिषम् ॥
अस्य वक्ता वैशम्पायनः । स तु आदावेक एवासीत् । यथा,—
"ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः ।
यजुर्व्वेदप्रवक्तारं वैशम्पायनमेव च ॥
जैमिनिं सामवेदस्य श्रावकं सोऽन्वपद्यत ।
तथैवाथर्व्ववेदस्य सुमन्तुमृषिसत्तमम् ॥
एक आसीद्यजुर्व्वेदस्तञ्चतुर्धा व्यकल्पयत् ।
चातुर्होत्रमभूद्यस्मिंस्तेन यज्ञमथाकरोत् ॥
आध्वर्य्यवं यजुर्भिः स्यादृग्भिर्होत्रं द्विजोत्तमाः ।
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्व्वभिः ॥
ततः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ।
यजूंषि च यजुर्व्वेदं सामवेदञ्च सामभिः ॥
एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ।
शाखानान्तु शतेनाथ यजुर्व्वेदमथाकरोत् ॥
सामवेदं सहस्रेण शाखानाञ्च विभेदतः ।
अथर्व्वाणमथो वेदं बिभेद नवकेन तु ॥"
इति कौर्म्मे ४९ अध्यायः ॥

यज्ञः, पुं, इज्यते हविर्दीयतेऽत्र । (इज्यन्ते देवता अत्र इति वा । यज् + "यजयाचयतविच्छप्रच्छरक्षो नङ् ।" ३।३।९० । इति नङ् ।) यागः । तत्पर्य्यायः । सवः २ अध्वरः ३ यागः ४ सप्ततन्तुः ५ मखः ६ क्रतुः ७ । इत्यमरः ।२।७।१३॥ इष्टिः ८ इष्टम् ९ वितानम् १० मन्युः ११ आहवः १२ सवनम् १३ हवः १४ अभिषवः १५ होमः १६ हवनम् १७ महः १८ । इति शब्दरत्नावली ॥ स त्रिविधः । सात्त्विको राजसिकस्तामसिकश्च । सात्त्विकयज्ञो यथा,—
"अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥"
राजसिकयज्ञो यथा,—
"अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥"
तामसिकयज्ञो यथा,—
"विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥"
इति श्रीभगवद्गीतायाम् १७ अध्यायः ॥ * ॥
स च नानाविधः । यथा,—
"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥"
इति श्रीभगवद्गीतायाम् ४ अध्यायः ॥ * ॥
पञ्च यज्ञा यथा,—
"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥"
इति गारुडे ११५ अध्यायः ॥ * ॥
(तथाच मनुः । ४ । २१—२२ ।
"ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा ।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥
एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥"
अपरपञ्चयज्ञा उक्ता यथा, शिवपुराणे वा[...]
संहितायामुत्तरभागे । १८ । ८९—१०६ ।
"कर्म्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः ।
ध्यानयज्ञो ज्ञानयज्ञः पञ्च यज्ञाः प्रकीर्त्तिताः ।
कर्म्मयज्ञरताः केचित्तपोयज्ञरताः परे ।
जपयज्ञरतास्त्वन्ये ध्यानयज्ञरतास्तथा ॥
ज्ञानयज्ञरतास्त्वन्ये विशिष्टाश्चोत्तरोत्तरम् ।
कर्म्मयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः [...]
कामान् कामी ततो भुक्त्वा कामासक्तः पुनर्भवे[...]
अकामो रुद्रभवने भोगान् भुक्त्वा ततश्च्युतः ॥
तपोयज्ञरतो भूत्वा जायते नात्र संशयः ।
तपस्वी च पुनस्तस्मिन् भोगान् भुक्त्वा ततश्च्युत[...]
जपध्यानरतो भूत्वा जायते भुवि मानवः ।
जपध्यानरतो मर्त्त्यस्तद्देशिष्टवशादिह ॥
ज्ञानं लब्ध्वा चिरादेव शिवसायुज्यमाप्नुया[...]
तस्मान्मुक्तौ शिवाज्ञप्तः कर्म्मयज्ञोऽपि देहिना[...]
अकामः कामसंयुक्तो बन्धायैव भविष्यति ।
तस्मात् पञ्चसु यज्ञेषु ध्यानज्ञानपरो भवेत् [...]
ध्यानं ज्ञानञ्च यस्यास्ति तीर्णस्तेन भवार्णवः [...]
हिंसादिदोषनिर्मुक्तो विशुद्धश्चित्तसाधनः ।
ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ।
बहिः कर्म्मकरा यद्वन्नातीव फलभागिनः ॥
दृष्टा नरेन्द्रभवने तद्वदत्रापि कर्म्मिणः ।
ध्यानिनां हि वपुः सूक्ष्मं भवेत् प्रत्यक्षमैश्वर[...]
तथेह कर्म्मिणां स्थूलं मृत्काष्ठाद्यैः प्रकल्पित[...]
* ध्यानयज्ञरतास्तस्माद्देवान् पाषाणमृण्मया[...]
नात्यन्तं प्रतिपद्यन्ते शिवयाथात्म्यवेदनात् [...]
आत्मस्थं यः शिवं त्यक्त्वा बहिरभ्यर्च्चयेन्नरः [...]
हस्तस्थं फलमुत्सृज्य लिहेत् कूर्परमात्मनः [...]
ज्ञानात् ध्यानं भवेत् ध्यानाज्ज्ञानं भूयः प्रव[...]
तदुभाभ्यां भवेन्मुक्तिस्तस्मात् ध्यानरतो भ[...]
द्वादशान्ते तथा वह्नौ ललाटे भ्रूमध्यान्तरे[...]

नासाग्रे वा तथास्ये वा कन्धरे हृदये तथा ।
नाभौ वा शम्भुसस्थाने अक्षाविद्धेन चेतसा ॥
वह्निर्यागोपचारेण देवं दृष्ट्वैव पूजयेत् ।
अथवा पूजयेन्नित्यं लिङ्गे वा शतकेऽपि वा ॥
वह्नौ वा स्थण्डिले वाथ भक्त्या वित्तानुसारतः ॥
अथवान्तर्बहिश्चैव पूजयेत् परमेश्वरम् ।
अन्तर्यागरतः पूजां बहिः कुर्व्वीत वा न वा ॥")
अस्योत्पत्तिर्यथा,—

ऋषय ऊचुः ।

"कथं यज्ञवराहस्य देहो यज्ञत्वमाप्तवान् ।
त्रेतात्वमगमन् पुत्त्रा वराहस्य कथं वद ।
तन्नोऽद्य श्रोष्यमाणानां कथयस्व महामते ! ॥

श्रीमार्कण्डेय उवाच ।

शृणुध्वं द्विजशार्दूला यत् पृष्टोऽहं महाद्भुतम् ।
यस्मिन् देवास्तिष्ठन्ति यज्ञे सर्व्वं प्रतिष्ठितम् ॥
यज्ञेन ध्रियते पृथ्वी यज्ञस्तारयति प्रजाः ।
अन्नेन भूता जीवन्ति पर्ज्जन्यादन्नसम्भवः ॥
पर्ज्जन्यो जायते यज्ञात् सर्व्वं यज्ञमयं ततः ।
स यज्ञोऽभूद्वराहस्य कायात् शम्भुविदारितात् ॥
यथाहं कथये तद्वः शृणुध्वमवहिता द्विजाः ।
विदारिते वराहस्य काये भर्गेण तत्क्षणात् ॥
ब्रह्मविष्णुशिवा देवाः सर्व्वैश्च प्रमथैः सह ।
निर्व्वाणात् समुद्धृत्य तच्छरीरं नभः प्रति ॥
तद्बिभेजुः शरीरन्ते विष्णोश्चक्रेण खण्डशः ।
तस्याङ्गसन्धयो यज्ञा जातास्ते वै पृथक् पृथक् ॥
यस्माद्यस्माच्च ये यज्ञास्तान् शृणुध्वं महर्षयः ।
भ्रूनासासन्धिना जातो ज्योतिष्टोमो महाध्वरः ॥
हनुश्रवणसन्ध्योस्तु वह्निष्टोमो व्यजायत ।
चक्षुर्भ्रुवोः सन्धिना तु व्रात्यष्टोमो व्यजायत ॥
राजः पौनर्भवष्टोमस्तस्य पोत्रोष्ठसन्धिना ।
वृद्धष्टोमबृहत्स्तोमौ जिह्वामूलादजायत ॥
अतिरात्रं सवैराजमधोजिह्वान्तरादभूत् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
स्नानं तर्पणपर्य्यन्तं नित्ययज्ञाश्च सर्व्वशः ।
कण्ठसन्धेः समुत्पन्ना जिह्वातो विधयस्तथा ॥
वाजिमेधो महामेधो नरमेधस्तथैव च ।
प्राणिहिंसाकरा येऽन्ये ते जाताः पादसन्धितः ॥
राजसूयोऽथ कारीषो वाजपेयस्तथैव च ॥
पृष्ठसन्धौ समुत्पन्ना ग्रहयज्ञास्तथैव च ॥
प्रतिष्ठोत्सर्गयज्ञाश्च दानश्राद्धादयस्तथा ।
हृत्सन्धितः समुत्पन्नाः साविन्नीयज्ञ एव च ॥
सर्व्वेषां साधका यज्ञाः प्रायश्चित्तकराश्च ये ।
ते मेढ्रसन्धितो जाता यज्ञास्तस्य महात्मनः ॥
रक्षःसत्रं सर्पसत्रं सर्व्वश्चैवाभिचारिकम् ।
गोमेधो वृषयज्ञश्च खुरेभ्यो ह्यभवन्निमे ॥
मायेष्टिः परमेष्टिश्च गोष्पतिर्भोगसम्भवः ।
लाङ्गूलसन्धौ संजाता अग्निष्टोमस्तथैव च ॥
नैमित्तिकाश्च ये यज्ञाः संक्रान्त्यादौ प्रकी-
र्त्तिताः ।
लाङ्गूलसन्धौ ते जातास्तथा द्वादशवार्षिकम् ॥
तीर्थप्रयोगसामीप्यमनुःपञ्चैकस्तथा ।
आर्कमाथर्व्वणश्चैव नाभिसन्धेः समुद्गताः ॥
कपोत्कर्षः पैत्र्ययज्ञः पञ्चमार्गोऽतियोजनः ।
लिङ्गसंस्थानदेहस्य यज्ञा जातास्तु जानुनि ॥
एवमष्टाधिकं जातं सहस्रं द्विजसत्तमाः ॥
यज्ञानां सततं लोका यैर्भाव्यन्तेऽधुनापि च ।
सुगस्य पोत्रात् संजाता नासिकायाः स्रुवो-
ऽभवत् ॥
अन्ये स्रुक्स्रुवभेदा ये ते जाताः पोत्रवासयोः ।
ग्रीवाभागेन तस्याभूत् प्राग्वंशो मुनिसत्तमाः ॥
इष्टापूर्त्तं यजुर्धर्म्मो जाताः श्रवणरन्ध्रतः ।
दंष्ट्राभ्यो ह्यभवन् यूपाः कुशा रोमाणि चाभ-
वन् ॥
उद्गाता च तथाध्वर्युर्होता समिध एव च ।
अग्रदक्षिणवामाङ्गपश्चात्पादेषु सङ्गताः ॥
पुरोडाशाः सचरवो जाता मस्तिष्कसञ्चयात् ।
कर्णनेत्रयुगाज्जाता यज्ञकेतुस्तथा खुरात् ॥
मध्यभागोऽभवद्वेदी मेढ्रात् कुण्डमजायत ।
रेतोधारास्तथैवाज्यं स्वराश्मन्त्राः समुद्गताः ॥
यज्ञालयः पृष्ठभागात् हृत्पद्मात् यज्ञ एव च ।
सदात्मा यज्ञपुरुषो सुप्ताः कथात् समुद्गताः ॥
एवं यावन्ति यज्ञानां भाण्डानि च हवींषि च ।
तानि यज्ञवराहस्य शरीरादेव चाभवन् ॥
एवं यज्ञवराहस्य शरीरं यज्ञतामगात् ।
यज्ञरूपेण सकलमाप्यायितुमिदं जगत् ॥
एवं विधाय यज्ञन्तु ब्रह्मविष्णुमहेश्वराः ।
सुष्टुत्तं कनकं घोरमासेदुर्यत्नतत्पराः ॥
ततस्तेषां शरीराणि पिण्डीकृत्य पृथक् पृथक् ।
त्रिदेवाश्चिशरीराणि व्यधमन्मुखवायुभिः ॥
सुष्टुत्तस्य शरीरन्तु व्यधमन्मुखवायुना ।
स्वयमेव जगत्स्रष्टा दक्षिणाग्निस्ततोऽभवत् ॥
कनकस्य शरीरन्तु ध्मापयामास केशवः ।
ततोऽभूद्गार्हपत्याग्निः पञ्चवैतानभोजनः ॥
घोरस्य तु वपुः शम्भुर्ध्मापयामास वै स्वयम् ।
तत आहवनीयोऽग्निस्तत्क्षणात् समजायत ॥
एतैस्त्रिभिर्जगत् व्याप्तं निर्म्मलं सकलं जगत् ।
एतत् यत्र त्रयं नित्यं तिष्ठति द्विजसत्तमाः ।
समस्ता देवतास्तत्र वसन्तेऽनुचरैः सह ॥
एतद्ब्रह्मपदं नित्यमेतदेव त्रयात्मकम् ।
एतत् त्रयीविधिस्थानमेतत् पुण्यकरं परम् ॥
यस्मिन् जनपदे चैते श्रूयन्ते अग्नयस्त्रयः ।
तस्मिन् जनपदे नित्यं चतुर्व्वर्गो विवर्द्धते ॥
एतद्वः कथितं सर्व्वं यत् पृष्टं द्विजसत्तमैः ।
यथा यज्ञवराहस्य देहो यज्ञत्वमाप्तवान् ।
तथा च तस्य पुत्त्राणां देहास्त्रेतात्वमागमन् ॥"

इति कालिकापुराणे ३० अध्यायः ॥*॥

ब्रह्मण आदियज्ञो यथा,—

पुलस्त्य उवाच ।

"पूर्व्वमेव मया ख्यातं यदा स्वायम्भुवो मनुः ।
जातः परमधर्म्मात्मा शतरूपापतिः स्वयम् ॥
स्रष्टा प्रजापतिः पूर्व्वं सृष्टिकर्म्मण्ययोजयत् ।
वत्स ! त्वमेव संकल्प्य स्वयं सृष्टिं कुरु प्रभो ॥
स्वयं तु पुष्करं गत्वा ब्रह्मा यज्ञस्य विस्तरम् ।
ब्रह्मोद्गाता होताध्वर्युश्चत्वारो यज्ञवाहकाः ।
एकैकस्य त्रयश्चान्ये परिवाराः स्वयं कृताः ॥
एते वै षोडश प्रोक्ता ऋत्विजो वेदचिन्तकाः ।
शतानि त्रीणि षड्भिश्च यज्ञाः सृष्टाः स्वय-
म्भुवा ॥

भीष्म उवाच ।

ब्रह्मणः ब्रह्मणो विप्र ! समाप्तिं वद साम्प्रतम् ॥

पुलस्त्य उवाच ।

मन्वन्तरे व्यतीते तु यज्ञस्यावभृथोऽभवत् ।
दक्षिणा ब्रह्मणा दत्ता प्राची होतुस्तु दक्षिणा ॥
अध्वर्य्यवे प्रतीची तु उद्गातुश्चोत्तरा तथा ।
त्रैलोक्यं सकलं ब्रह्मा ददौ तेषान्तु दक्षि-
णाम् ॥
धेनूनाञ्च शतं साष्टं दातव्यं यज्ञसिद्धये ।
अध्वर्य्युर्वा बहुस्रावि स्वेच्छया दानमिष्यते ॥"

इति पाद्मे सृष्टिखण्डे ३१ अध्यायः ॥*॥

ब्राह्मणादीनां स्वधर्म्मयज्ञा यथा,—

"आरम्भयज्ञाः क्षत्त्राः स्युर्हविर्यज्ञा विशः
स्मृताः ।
परिचारयज्ञाः शूद्रास्तु जपयज्ञास्तु ब्राह्मणाः ॥"

इति मात्स्ये ११८ अध्यायः ॥*॥

हिंसायज्ञस्य अधर्म्मजनकत्वं यथा,—

"तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्त्तयत् प्रभुः ।
दैवतैः सह संहृत्य सर्व्वसाधनसंभृतम् ॥
तस्याश्वमेधे वितते समाजग्मुर्महर्षयः ।
महर्षयश्च तान् दृष्ट्वा दीनान् पशुगणांस्तदा ॥
विश्वं भुजन्ते त्वपृच्छन् कोऽयं यज्ञविधिस्तव ।
अधर्म्मो बलवानेष हिंसाधर्म्मेप्सया तव ॥
न नः पशुवधस्त्विष्टस्तव यज्ञेश्वरोत्तम ! ।
अधर्म्मो धर्म्मघाताय प्रारब्धः पशुभिस्त्वया ॥
नायं धर्म्मो ह्यधर्म्मोऽयं न हिंसा धर्म्म उच्यते ।
आगमेन भवान् धर्म्मं प्रकरोतु यदीच्छति ॥
विधिदृष्टेन यज्ञेन धर्म्मेणाव्ययहेतुना ॥
एवं विश्वभुगिन्द्रस्तु ऋषिभिस्तत्त्वदर्शिभिः ।
उक्तो न प्रतिजग्राह मानमोहसमन्वितः ॥
तेषां विवादः सुमहान् जज्ञे इन्द्रमहर्षि-
णाम् ।
जङ्गमैः स्थावरैः केन यष्टव्यमिति चोच्यते ॥
ते तु खिन्ना विवादेन तत्त्वयुक्ता महर्षयः ।
सन्धाय वाक्यमिन्द्रेण पप्रच्छुः खेचरं वसुम् ॥

ऋषय ऊचुः ।

महाप्राज्ञ कथं दृष्टस्तव यज्ञविधिर्नृप ! ।
उत्तानपादे ! प्रब्रूहि संशयं नो नुद प्रभो ! ॥

सूत उवाच ।

श्रुत्वा वाक्यं वसुस्तेषामविचार्य्य बलाबलम् ।
वेदशास्त्रमनुस्मृत्य यज्ञतत्त्वमुवाच ह ॥
यष्टव्यं पशुभिर्मेध्यैरथ मूलफलैरपि ।
हिंसा स्वभावो यज्ञस्य इति मे दर्शनागमः ॥
एवं स्वोत्तरात्से तु युक्तात्मानं ततो धिया ।
अवश्यं भाविनं दृष्ट्वा तमसो ह्यशपंस्तदा ॥
इत्युक्तमात्रो नृपतिः प्रविवेश रसातलम् ।
धर्म्माणां संशयच्छेत्ता राजा वसुरधो गतः ॥

तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशयः ।
"तस्मान्न हिंसा यज्ञस्य यदुक्तमृषिभिः पुरा ॥"

इति मात्स्ये ११६ अध्यायः ॥

तद्वैदिकपर्य्यायः । वेनः २ अध्वरः ३ मेधः ४ विदथः ५ नार्य्यः ६ सवनम् ७ होत्रा ८ इष्टिः ९ देवताता १० मखः ११ विष्णुः १२ इन्दुः १३ प्रजापतिः १४ घर्म्मः १५ । इति पञ्चदश यज्ञनामानि । इति वेदनिघण्टौ । ३ । १७ ॥ (विष्णुः । यथा, महाभारते ।१३।१४९।११७।
"यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥")

यज्ञकृत्, त्रि, (यज्ञं करोतीति । कृ + क्विप् । यागकर्त्ता । (यथा, श्रीमद्भागवते ।४।४।७।

"तामागतां तत्र न कश्चनाद्रियद्-
विमानितां यज्ञकृतो भयाज्जनः ।
ऋते स्वसॄर्वै जननीञ्च सादराः
प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा ॥"

पुं, विष्णुः । यथा, महाभारते । १३ । १४९ । ११८ ।
"यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग् यज्ञसाधनः ॥")

यज्ञपशुः, पुं, (यज्ञार्थः पशुः ।) घोटकः । इति शब्दमाला ॥ (यथा, श्रीमद्भागवते । ४ । १९ । ११ ।
"चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ।
वैण्ये यज्ञपशुं स्पर्द्धन्नपोवाह तिरोहितः ॥")
छागश्च ॥

यज्ञपुरुषः, पुं, (यज्ञरूपी पुरुषः ।) विष्णुः । इति हेमचन्द्रः । २ । १३ ॥ (यथा, श्रीमद्भागवते । २ । ७ । ११ ।

"सत्रे ममास भगवान् हयशीरषाथो
साक्षात् स यज्ञपुरुषस्तपनीयवर्णः ।
छन्दोमयो मखमयोऽखिलदेवतात्मा
वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥")

यज्ञभाजनं, क्ली, (यज्ञस्य भाजनम् ।) यज्ञपात्रम् । इति जटाधरः ॥

यज्ञभूषणः, पुं, (यज्ञं भूषयतीति । भूष + णिच् + ल्युः ।) श्वेतदर्भः । इति राजनिर्घण्टः ॥ (कुशमात्रम् । यथा, भावप्रकाशे पूर्व्वखण्डे प्रथमे भागे ।
"कुशो दर्भस्तथा बर्हिः सूच्यग्रो यज्ञभूषणः ।
ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च ॥")

यज्ञयोग्यः, पुं, (यज्ञे योग्यः उचितः ।) उडुम्बरवृक्षः । इति राजनिर्घण्टः ॥ यागार्हे, त्रि ॥

यज्ञवल्ली, स्त्री, (यज्ञस्य वल्ली ।) सोमवल्ली । इति राजनिर्घण्टः ॥ (गुणादयोऽस्याः सोमलताशब्दे ज्ञातव्याः ॥)

यज्ञवाटः, पुं, (यज्ञस्य वाटो यत्र ।) यज्ञस्थानम् । इति हेमचन्द्रः ॥ (यथा, श्रीमद्भागवते । १० । २३ । ३३ ।
"इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ।
ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥")

यज्ञवृक्षः, पुं, (यज्ञस्य वृक्षः ।) वटवृक्षः । इति राजनिर्घण्टः ॥ (विकङ्कतः । तत्पर्य्यायो यथा,
"विकङ्कतः स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

यज्ञश्रेष्ठा, स्त्री, (यज्ञे श्रेष्ठा ।) सोमवल्ली । इति राजनिर्घण्टः ॥

यज्ञसाधनः, पुं, (यज्ञं साधयतीति । सिध + णिच् + ल्युः ।) विष्णुः । इति महाभारते तस्य सहस्रनामस्तोत्रम् । १३ । १४९ । ११८ ॥ (यज्ञसाधके, त्रि । यथा, ऋग्वेदे । १।१४५।३।
"पुरुप्रैषस्ततुरिर्यज्ञसाधनः ।"
"यज्ञसाधनः यज्ञसाधकः अस्याधीनत्वात् यज्ञस्य ।"
इति तद्भाष्ये सायणः ॥)

यज्ञसारः, पुं, (यज्ञे सारः उत्कृष्टः ।) यज्ञोडुम्बरवृक्षः । इति राजनिर्घण्टः ॥

यज्ञसूत्रं, क्ली, (यज्ञे धृतं सूत्रम् ।) यज्ञोपवीतम् । यथा,—
"पवित्रं यज्ञसूत्रञ्च यज्ञोपवीतमित्यपि ।
यज्ञसूत्रं तदेवोपवीतं स्याद्दक्षिणे भुजे ॥
उद्धृते वामबाहौ तु प्राचीनावीतमन्यदः ।
निवीतन्तु तदेव स्यादूर्द्धवक्षसि लम्बितम् ॥"
इति जटाधरः ॥

तस्य प्रमाणं यथा,—
"ऊर्द्ध्वन्तु त्रिवृतं कार्य्यं सधवानिर्म्मितं शनैः ।
तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥
त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् ।
शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् ॥
यजुर्व्विदां नाभिमितं सामगानामयं विधिः ।
वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम् ॥"
इति कल्किपुराणे ४ अध्यायः ॥

अस्य धारणे मन्त्रो यथा,—
"यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ।"
इति संस्कारतत्त्वधृतभट्टभाष्यम् ॥

यजुर्व्वाक्यम्,—
"यज्ञोपवीतं परमं पवित्रं
बृहस्पतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥"
इति पशुपतिः ॥

युगभेदे तत्सूत्रनियमो यथा,—
"सत्ये स्वर्णमयं सूत्रं त्रेतायां राजतं तथा ।
द्वापरे ताम्रजं प्रोक्तं कलौ कार्पाससम्भवम् ॥"
इति हरिवंशमार्कण्डेयः ॥

अन्यच्च ।
"यज्ञार्थं धार्य्यते सूत्रं यज्ञं ब्रह्मण्यमिष्यते ।
स्वर्णं रौप्यं ताम्रमयं पट्टं कार्पासवाह्निकम् ॥
मृगाजिनं गुटं शस्त्री यथालब्धं निधाय च ।
यज्ञसूत्रं परिचरेद्ब्रह्मलिङ्गक्रियात्मकम् ॥
न तत्र नियमो ग्राह्यः सूत्रब्राह्मण्यगृह्यया ॥"
इति हारीतसंहिता ॥

यज्ञस्थानं, क्ली, (यज्ञस्य स्थानम् ।) यज्ञवाटः । इति जटाधरः ॥

यज्ञाङ्गः, पुं, (यज्ञं अङ्गति प्राप्नोतीति । अङ्ग + अच् ।) उडुम्बरः । इत्यमरः । २ । ४ । २२ (अस्य पर्य्यायो यथा,—
"यज्ञाङ्गो जन्तुवृक्षश्च हेमदुग्धोऽप्युडुम्बरः ॥"
इति वैद्यकरत्नमालायाम् ।
"उडुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
खदिरवृक्षः । इति राजनिर्घण्टः ॥ ब्राह्मयष्टिका । इति शब्दचन्द्रिका ॥ (यज्ञ एव अङ्गं यस्य । विष्णुः । यथा, महाभारते ।१३।१४९।११७ ।
"भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥"
यज्ञस्याङ्गमिति ।) यागावयवे यज्ञसाधने क्ली ॥ (यथा, कुमारसम्भवे । १ । १७ ।
"यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ॥")

यज्ञाङ्गा, स्त्री, (यज्ञमङ्गति प्राप्नोति या । अङ्ग + अच् । टाप् ।) सोमवल्ली । इति राजनिर्घण्टः ॥ (विषयोऽस्याः सोमवल्लीशब्दे ज्ञातव्यः ॥)

यज्ञान्तः, पुं, (यज्ञस्य अन्तोऽवसानं यस्मिन् ।) अवभृथः । इति हेमचन्द्रः । ३ । ४९८ ॥ यज्ञशेषश्च ॥ (यथा, महाभारते । १३ । १४९ । ११८ ।
"यज्ञान्तकृत् यज्ञगुह्यमन्नमन्नाद एव च ॥")

यज्ञारिः, पुं, (यज्ञस्य दक्षयज्ञस्य अरिर्नाशकः ।) शिवः । इति धनञ्जयः ॥ रावणश्च ॥

यज्ञिकः, पुं, पलाशवृक्षः । इति जटाधरः ॥ (अनुकम्पितो यज्ञदत्तः । "बह्वचो मनुष्यनाम्नष्ठच् वा ।" ५ । ३ । ७८ । इति ठच् ।
"ठाजादावूर्द्ध्वं द्वितीयादचः ।" ५।३।८३। इति प्रकृतेर्द्वितीयादच ऊर्द्ध्वस्य लोपः । यज्ञदत्तः ।
इति काशिका ॥)

यज्ञियं, त्रि, (यज्ञमर्हतीति । यज्ञ + "यज्ञर्त्विग्भ्यां घखञौ ।" ५।१।७१। इति घः ।) यज्ञकर्म्मार्हम् । इत्यमरः । २।७।२७ ॥ (यथा, शाकटायने २९ । १६ ।
"अतो यज्ञविभागो हि यज्ञियैर्हि सुरैः पुरा
यज्ञाय हितम् । इति मुग्धबोधव्याकरणम् ।
(यथा, मनुः । २ । २३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥"

यज्ञियः, पुं, (यज्ञाय हितः । यज्ञ + घः ।) द्वापरयुगम् । इति त्रिकाण्डशेषः ॥ (खदिरवृक्षः । तत्पर्य्यायो यथा,—
"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥"
इति भावप्रकाशे पूर्व्वखण्डे प्रथमे भागे ॥
पलाशः । तत्पर्य्यायो यथा,—
"पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः ।
क्षारश्रेष्ठो वातहरो ब्रह्मवृक्षो समिद्वरः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥

यज्ञियदेशः, पुं, ( यज्ञियश्चासौ देशश्चेति । ) यागकरणोपयुक्तदेशः । यथा, मनुः ।२।२३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥"

यज्ञियशाला, स्त्री, ( यज्ञिया शाला । ) यागमण्डपम् । इति जटाधरः ॥

यज्ञीयः, पुं, ( यज्ञे भवः इति । यज्ञ + "गहादिभ्यश्च ।" ४ । २ । १३८ । इति छः ।) उडुम्बरवृक्षः । इति राजनिर्घण्टः ॥ यागसम्बन्धिनि, त्रि ॥ (यथा, महाभारते । ३ । १२४ । ६ ।
"प्रशस्तेऽहनि यज्ञीये सर्व्वकामसमृद्धिमत् ।
कारयामास शर्य्यातिर्यज्ञायतनमुत्तमम् ॥")

यज्ञीयब्रह्मपादपः, पुं, ( यज्ञीयश्चासौ ब्रह्मपादपश्चेति । ) विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥

यज्ञेश्वरः, पुं, ( यज्ञानामीश्वरः । ) विष्णुः । यथा,
"यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्व्वे ॥"
इति श्राद्धतत्त्वम् ॥

यज्ञेष्टं, क्ली, (यज्ञे इष्टम् ।) दीर्घरोहिषकतृणम् । इति राजनिर्घण्टः ॥

यज्ञोडुम्बरः, पुं, ( यज्ञोचितः उडुम्बरः । ) उडुम्बरवृक्षः । यज्ञडुमुर इति भाषा ॥ तत्पर्य्यायः । हेमदुग्धी २ यज्ञफलः ३ यज्ञाङ्गः ४ हेमदुग्धकः ५ उडुम्बरः ६ जन्तुफलः ७ । इति शब्दरत्नावली ॥ अस्य गुणाः यथा, भावप्रकाशे ।
"उडुम्बरो हिमो रूक्षो गुरुः पित्तकफास्रनुत् ।
मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः ॥"

यज्ञोपवीतं, क्ली, ( यज्ञार्थं उपवीतम् । ) यज्ञसूत्रम् । पैता इति भाषा । तत्पर्य्यायः । पवित्रम् २ ब्रह्मसूत्रम् ३ द्विजायनी ४ । इति त्रिकाण्डशेषः ॥ तस्य निरूपणं यथा । उपवीतमाह गोभिलः । यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव । यज्ञोपवीतं विशिष्टविन्यासधारणकर्म्मतया कुरुते । किं तत् सूत्रम् । सूत्रं विशेषयति छन्दोगपरिशिष्टम् ।
"ऊर्द्ध्वन्तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥"
वामावर्त्तवलितं तन्तुत्रयं त्रिगुणं कृत्वा दक्षिणावर्त्तवलितं कार्य्यं एवं त्रिवृतं त्रिसवं उपवीतं स्यात् । एको ग्रन्थिरिति नानात्वनिषेधार्थम् । तथा बौधायनः ।
"क्षौमं सौत्रं त्रिस्त्रिवृतं यज्ञोपवीतमानाभेः ॥"
क्षौमं कृमिकोषोद्भवं पट्टसूत्रादिमयमित्यर्थः । सौत्रं कार्पासोद्भवम् । तथा मनुः ।
"कार्पासमुपवीतं स्यात् विप्रस्योर्द्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥"
त्रिस्त्रिवृतमित्युक्तत्वात् मनुवचनेऽपि त्रिवृत्त्वं त्रिसवत्वेन विशेष्यम् । यत्तु पैठीनसिवचनम् । कार्पासमुपवीतं षट्तन्तु त्रिवृतं ब्राह्मणस्य । क्षौमं राजन्यस्य । आविकं वैश्यस्य । तदसम्भवे षट्तन्तुविधायकम् । नवतन्तुत्वं यत्तमाह देवलः ।
"यज्ञोपवीतं कुर्व्वीत सूत्राणि नव तन्तवः ।
एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा ॥"
एकेन ग्रन्थिना युक्त इति शेषः । द्विगुणस्त्रिगुणोऽथवेति । तन्तुत्वेन द्विसवस्त्रिसवो वा कर्त्तव्यः । द्विसवत्वं त्रिसवत्वासम्भवे । शोभिते वाशब्दो विकल्पार्थः । अपिशब्दो वस्त्रकुशरज्ज्वोः सूत्रानुकल्पत्वप्रदर्शनार्थः । एवकारस्त्रिसवत्वव्यवच्छेदार्थः । द्वितीयो वाशब्दः अनुक्तमौञ्जवालादिसमुच्चयार्थः । तथा निगमपरिशिष्टम् । वाससा यज्ञोपवीतानि कुरुते तदभावे त्रिवृता सूत्रेण । कुशमुञ्जवालप्रतिसररज्जुभिर्व्वा । वालोऽत्र गोवालः । यथा देवलः ।
"कार्पासक्षौमगोवालशणरज्जुतृणोद्भवम् ।
सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः ॥"
तदभाव इति करणाद्वस्त्राभावे कुशरज्जुभिरिति बोद्धव्यम् । इति श्राद्धविवेकः ॥ * ॥ अथोपनयनदिनम् । तत्र गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनं शस्तम् । क्षत्त्रियस्य गर्भैकादशे । गर्भद्वादशे वैश्यस्य शस्तम् । असामर्थ्ये ब्राह्मणस्य षोडशवर्षपर्य्यन्तमेव । क्षत्त्रियस्य द्वाविंशतिवर्षपर्य्यन्तम् । वैश्यस्य चतुर्व्विंशतिवर्षपर्य्यन्तं तदनुष्ठानकालः । तत्र मासाः माघफाल्गुनचैत्रवैशाखज्यैष्ठाषाढ़ा विहिताः । तत्र तिथयः द्वितीयैकादशीद्वादशीपञ्चमीदशमीतृतीया विहिताः । तत्र वाराः बृहस्पतिशुक्ररवीणां प्रशस्ताः । सामगानां मङ्गलवारोऽपि । तत्र नक्षत्राणि । स्वाती ज्येष्ठा धनिष्ठा अश्विनी अनुराधा हस्ता रेवती पुष्या चित्रा श्रवणा मृगशिरः शतभिषा पूर्व्वफल्गुनी उत्तरफल्गुनी पूर्व्वभाद्रपदा उत्तरभाद्रपदा रोहिणी पूर्व्वाषाढ़ा । तत्र लग्नानि वृषसिंहतुलाधनुर्मीनसंज्ञकानि । तत्र पक्षः शुक्लः । तत्रचन्द्रादिशोभने अनध्यायादीन् परित्यज्य कर्त्तव्यम् । इति ज्योतिषतत्त्वमतम् ॥ * ॥ अथोपनयनम् । तत्र गोभिलः । गर्भाष्टमेषु ब्राह्मणमुपनयेत् गर्भैकादशेषु क्षत्त्रियं गर्भद्वादशेषु वैश्यम् । आषोड़शात् ब्राह्मणस्यानतीतः कालो भवति आद्वाविंशात् क्षत्त्रियस्य आचतुर्व्विंशात् वैश्यस्य । अत ऊर्द्ध्वं पतितसावित्रीका भवन्ति । नैतानुपनयेयुर्नाध्यापयेयुर्न एभिर्व्विवाहयेयुः ॥ आषोड़शादित्यभिविधावाङ् ॥ तथा च विष्णुधर्म्मोत्तरम् ।
"षोड़शाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः ।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता ॥
सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निवर्त्तते ॥"
अत्र षोड़शवर्षाणामुपनयनाकृत्ता प्रतीयते ।
"पतिता यस्य सावित्री दश वर्षाणि पञ्च च ।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः ॥"
इति यमवचनेन तदनन्तरता प्रतीयते अनयोर्गर्भजन्मनाभ्यामविशेषता । तथा च माधवः ।
"व्रतबन्धविवाहे च वत्सरपरिगणनमाचुराचार्य्याः ।
आधानपूर्व्वकमेके प्रसूतिपूर्व्वं सदान्ये तु ॥"
यत्तु द्विजानामित्युपक्रम्य पैठीनसिवचनम् । द्वादशषोड़शविंशतिश्चेदतीता अवकृष्टकाला भवन्ति । तद्द्वादशवर्षाद्युपरि ब्राह्मणादीनां महाव्याहृतिहोमप्रायश्चित्तार्थं षोड़शवर्षोपरि गुरुप्रायश्चित्तमिति । तथा च शङ्खलिखितौ । व्रात्यचान्द्रायणं चरेत् गोप्रदानञ्च कुर्य्यात् । चान्द्रायणाशक्तौ धेन्वष्टकं तन्मूल्यं वा सार्द्धद्वाविंशतिकार्षापणाः गोमूल्यं कार्षापण एकः मिलित्वा सार्द्धत्रयोविंशतिकार्षापणाः देयाः । पितृमातृरहितस्य निःस्वस्य देशोपप्लवादिना पतितसावित्रीकस्य वा विषये तु मनुविष्णू ।
"येषां द्विजानां सावित्री नानुतिष्ठेद् यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपना-
ययेत् ॥
कृच्छ्रं प्राजापत्यम् । तदशक्तौ धेनुत्रयं तन्मूल्यं वा नव कार्षापणाः । अज्ञातप्रायश्चित्तं प्रत्याह नैतानित्यादि । तत्र बहुवचनं तत्कर्म्मसंसर्गिणां प्रायश्चित्तप्रदर्शनार्थम् । तथा च स्मृत्यन्तरम् ।
"व्रात्याचार्य्यस्य भुक्तान्नं कृच्छ्रपादेन शुध्यति ।
यश्चोपनयते व्रात्यान् त्रिभिः कृच्छ्रैः स शुध्यति ॥"
भुजबलभीमरत्नचिन्तामण्योः ।
"स्वातीशक्रधनाश्विमित्रकरभे पौष्णेन्दुचित्रा-
हरि-
त्विन्दौ तोयपतौ भगेऽदितिसुते भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्त्तव्यं व्रतकर्म्म मङ्गलतिथौ वाराः सितार्केज्यकाः ॥"
अदितिसुत उत्तरफल्गुनी । सागरः पूर्व्वाषाढ़ा । दीपिकायाम् ।
"जीवार्केन्दुबुधसुतौ हरिशयनवहिर्भास्करे
चोत्तरस्थे
स्वाध्याये वेदवर्णाधिप इह शुभदे चौरिमे
नादितौ च ।
शुक्रार्केज्यर्क्षलग्ने रविमदनतिथिं प्रोज्झ्य
षष्ठाष्टमेन्दू
नो जीवास्तातिचारेऽर्कसितगुरुदिने कार्त्तशुद्धौ व्रतं स्यात् ॥"
रविमदनतिथिं सप्तमीं त्रयोदशीम् । षष्ठाष्टमेन्दू लग्नापेक्षया । रत्नचिन्तामणौ ।
"माघे द्रविणशीलाढ्यः फाल्गुने च दृढ़व्रतः ।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥
ज्यैष्ठे गहनगीतिज्ञ आषाढ़े क्रतुभाजनः ।
शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च व्रतम् ॥"
राजमार्त्तण्डः ।
"पुनर्व्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥"
आश्वलायनः । उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चूड़ोपनयनगोदानविवाहाः । विवाहः सार्व्वकालिक इत्येके । आपूर्य्यमाणे पक्षे शुक्ले पक्षे । गृह्यगर्गः ।

"स्मृतिमुक्ताननध्यायान् सप्तमीञ्च त्रयोदशीम्।
पञ्चयोर्माघमासस्य द्वितीयां परिवर्ज्जयेत्॥"
श्रीपतिव्यवहारसमुच्चये।
"कार्त्तिकस्याश्विनस्यापि फाल्गुनाषाढ्योरपि।
कृष्णपक्षे द्वितीयायामनध्यायं विदुर्ब्बुधाः॥"
भुजबलः।
"चैत्रकृष्णद्वितीयायां निशश्वैवाष्टकासु च।
मार्गे च फाल्गुने चैव आषाढ़े कार्त्तिके तथा॥
पञ्चयोर्माघमासस्य द्वितीयां परिवर्ज्जयेत्।
नाकालवृष्टौ कुर्व्वीत व्रतबन्धशुभक्रियाम्॥"
उपनयने उत्तरायणशुक्लपक्षयोर्विधानात् कार्त्तिकादौ कृष्णपक्षे च द्वितीयानिषेधः पुनःसंस्कारमहंति इत्युक्तप्रायश्चित्तरूपोपनयनपरः। वैश्योपनयनपरश्च। तथा च गर्गः।
"विप्रस्य क्षत्त्रियस्यापि मौञ्जी स्यादुत्तरायणे।
दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे।
अनध्यायेऽपि कुर्व्वीत यस्य नैमित्तिकं भवेत्॥"
अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः। नैमित्तिकं प्रायश्चित्तरूपम्। चैत्रशुक्लतृतीया आषाढ़शुक्लदशमी मन्वन्तरादित्वेन निषिद्धा। वैशाखशुक्लतृतीया युगादित्वेन निषिद्धा। सन्ध्यामशुचिरनभार्य्यो रिक्तासु बहुदोषभाक्। सामगानां कुजवारेऽप्युपनयनम्। शाखाधिपबलात्। यथा च।
"शाखाधिपे बलिनि केन्द्रगतेऽथवास्मिन्
वारेऽस्य चोपनयनं कथितं द्विजानाम्।
नीचस्थितेऽरियगृहेऽथ पराजिते वा
जीवे भृगावुपनयः स्मृतिकर्म्महीनः॥"
अस्य शाखाधिपस्य। ज्ञानचिन्तामणौ।
"जन्मोदये जन्मसु तारकासु
मासेऽथवा जन्मनि जन्मभे वा।
व्रतेन विप्रो न बहुश्रुतोऽपि
विद्याविशेषैः प्रथितः पृथिव्याम्॥
अस्तं गते दैत्यगुरौ गुरौ वा
क्षयेऽपि वा पापयुतेऽप्युडुक्ते।
व्रतोपनीतो दिवसे प्रयाणं
प्रयाति देवैरपि रक्षितो यः॥"
उदये लग्ने। व्रतेन उपनयनेन। इति संस्कारतत्त्वम्॥

यज्युः, त्रि, (यजतीति। यज्+"यजिमनिशुन्धिदसिजनिभ्यो युच्।" उणा०३।२०। इति युच्।) यजुर्व्वेदवेत्ता ब्राह्मणः। इत्युणादिकोषः॥ यजमानः। इति संक्षिप्तसारोणादिवृत्तिः॥ (यथा, ऋग्वेदे।१।३१।१३।
"त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय।"
"हे अग्ने त्वं यज्यवे यष्टव्यो यजमानस्य पायुः पालकः।" इति तद्भाष्ये सायणः॥)

यज्वा, [न्] पुं, (यज्+"सुयजोर्ङ्वनिप्।" ३।२।१०३। इति ङ्वनिप्।) विधिना इष्टवान्। वेदविधानेन कृतयागः। इत्यमरः।२।७।८॥ (यथा, नैषधचरिते।३।२४।
"राजा स यज्वा विबुधव्रजत्रा
कृत्वाध्वराज्योपमयेव राज्यम्।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः
पूर्व्वं त्वहो शेषमशेषमन्यम्॥")

यज्वपतिः, पुं, चन्द्रः। इति त्रिकाण्डशेषः॥

यत्, ई ङ यत्ने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-अक०-सेट्। अनिङ्(निङ्)।) ई, यत्तः। ङ, यतते पठितुं शिष्यः। इति दुर्गादासः॥

यत्, क खेदोपस्कारयोः। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) खेद इह ताडनम्। क, यातयति पुत्त्रं पिता ताडयति इत्यर्थः। यातयति गृहं गृहिणी उपस्करोति इत्यर्थः। निरः प्रत्यर्पणे। प्रत्यर्पणं परीवर्त्तः। निर्यातयति धान्येन माषान् लोकः धान्यं दत्त्वा माषान् गृह्णाति इत्यर्थः। इति दुर्गादासः॥

यत्, व्य, हेतुः। यस्मात्। इत्यमरः।३।४।३॥ (यथा, उत्तररामचरिते।
"अत्र स्थिता तृणमदात् बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म॥")

यत्, [द्] त्रि, (यजति सर्व्वैः पदार्थैः सह सङ्गतो भवतीति। यज्+"त्यजितनियजिभ्यो डित्।" उणा०१।१३१। इति अदिः डित्।) बुद्धिस्थत्वोपलक्षितधर्म्मावच्छिन्नम्। इति न्यायमतं सिद्धान्तकौमुद्यादिटीकाश्च॥ ये इति भाषा॥ (एकविंशतिविभक्तिषु पुंलिङ्गे तस्य रूपाणि यथा, यः१ यौ२ ये३। प्रथमा। यम् ४ यौ ५ यान् ६। द्वितीया। येन ७ याभ्याम् ८ यैः ९। तृतीया। यस्मै १० याभ्याम् ११ येभ्यः १२। चतुर्थी। यस्मात् १३ याभ्याम् १४ येभ्यः १५। पञ्चमी। यस्य १६ ययोः १७ येषाम् १८। षष्ठी। यस्मिन् १९ ययोः २० येषु २१। सप्तमी॥ * ॥ स्त्रीलिङ्गे तस्य रूपाणि यथा, या १ ये २ याः ३। प्रथमा। याम् ४ ये ५ याः ६। द्वितीया। यया ७ याभ्याम् ८ याभिः ९। तृतीया। यस्यै १० याभ्याम् ११ याभ्यः १२। चतुर्थी। यस्याः १३ याभ्याम् १४ याभ्यः १५। पञ्चमी। यस्याः १६ ययोः १७ यासाम् १८। षष्ठी। यस्याम् १९ ययोः २० यासु २१। सप्तमी॥ * ॥ क्लीवलिङ्गे तस्य रूपाणि। यत् १ ये २ यानि ३। प्रथमा। यत् ४ ये ५ यानि ६। द्वितीया। शेषः पुंवत्॥)

यतः, व्य, (यद्+"पञ्चम्यास्तसिल्।" ५।३।७। इति तसिल्। "तद्धितश्चासर्व्वविभक्तिः।" १।१।३८। इति तसिल्प्रत्ययान्तस्याव्ययत्वम्।) हेतुः। यस्मात्। इत्यमरः।३।४।३॥ (यथा, मनुः।२।११७।
"लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत्॥")
यद्+"इतराभ्योऽपि दृश्यन्ते।"५।३।१४। इति तसिल्प्रत्ययेन। येन। यथा, भागवते।१।५।१२।
"यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो!॥"
येभ्यः। यथा, भागवते।१।१५।२१।
"सद्वै धनुस्त इषवः स रथो हयास्ते
सोऽहं रथी नृपतयो यत आनमन्ति॥"
यत्र। यथा, अभिज्ञानशकुन्तले।
"यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना॥")

यतमः, त्रि, (यत्+"वा बहूनां जातिपरिप्रश्ने डतमच्।" ५।३।९३। इति डतमच्।) बहूनां मध्ये निर्द्धारित एकः। एषां मध्ये यः यच्छब्दात् डतमप्रत्ययेन निष्पन्नः। इति मुग्धबोधव्याकरणम्॥ ("यतमो भवतां कठः।" इति काशिका॥)

यतरः, त्रि, (यत्+"किं यत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्।"५।३।९२। इति डतरच्।) द्वयोर्मध्ये निर्द्धारित एकः। अनयोर्मध्ये यः यच्छब्दात् डतरप्रत्ययेन निष्पन्नः। इति मुग्धबोधव्याकरणम्॥ (यथा, ऋग्वेदे।७।१०४।१२।
"तयोर्यत् सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत्॥")

यति, त्रि, बहुवचनान्तयावच्छब्दार्थकः। यतगुलि इति भाषा। यच्छब्दात् निपातनात् डतिप्रत्ययेन निष्पन्नम्। इति मुग्धबोधव्याकरणम्॥ (यथा, ऋग्वेदे।१०।१५।१३।
"त्वं वेत्थ यति ते जातवेदः।"
"यति ते यावन्तस्ते भवन्ति।" इति तद्भाष्ये सायणः॥)

यतिः, पुं, (यतते चेष्टते मोक्षार्थमिति। यत्+"सर्व्वधातुभ्य इन्।" उणा०४।११७। इति इन्।) निर्ज्जितेन्द्रियग्रामः। तत्पर्य्यायः यती २ इत्यमरः।२।७।४४॥ भिक्षुः संन्यासिकः ४ कर्म्मन्दी ५ रक्तवसनः ६ परिव्राजकः ७ तापसः ८ पाराशरी ९ परिकाङ्क्षी १० मस्करी ११ पारिरक्षकः १२। इति हेमचन्द्रः॥ निकारः। विरतिः। इति मेदिनी॥ * ॥ तस्य वाराणस्यां वासो यथा,—
"अष्टौ मासान् विहारस्य यतीनां संयतात्मनाम्
एकत्र चतुरो मासानब्दं वा निवसेत् पुनः॥
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते।
यतिभिर्मोक्षकामैश्च अविमुक्तं निषेव्यते॥"
इति मात्स्ये अविमुक्तमाहात्म्ये १५९ अध्यायः॥
यतिधर्म्मो यथा,—
"अलाबुं दारुपात्रञ्च मृन्मयं वैदलं तथा।
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्॥
एककालं चरेद्भैक्षं न प्रसज्जेत विस्तरे।
भैक्ष्ये प्रसक्तो हि यतिर्विषयेष्वपि सज्जति॥
विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत्॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः॥
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्व्वशः।
अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते॥

…ल्पाशाभ्यवहारेण रहःस्थानासनेन च ।
…ह्रियमाणानि विषयैरिन्द्रियाणि निवर्त्तयेत् ॥
…न्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
…हिंसया च भूतानाममृतत्वाय कल्पते ॥
…वेक्षेत गतीर्नृणां कर्म्मदोषसमुद्भवाः ।
…रये चैव पतनं यातनाश्च यमक्षये ॥
…प्रयोगं प्रियैश्चैव संयोगञ्च तथाप्रियैः ।
…रया चाभिभवनं व्याधिभिश्चोपपीड़नम् ॥
…हादुत्क्रमणञ्चास्मात् पुनर्गर्भे च सम्भवम् ।
…निकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥
…धर्म्मप्रभवञ्चैव दुःखयोगं शरीरिणाम् ।
…र्म्मार्थप्रभवञ्चैव सुखसंयोगमक्षयम् ॥
…क्ष्मताञ्चान्ववेक्षेत योगेन परमात्मनः ।
…हेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ॥
…षितोऽपि चरेद्धर्म्मं यत्र तत्राश्रमे रतः ।
…मः सर्व्वेषु भूतेषु न लिङ्गं धर्म्मकारणम् ॥
…लं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।
…नामग्रहणादेव तस्य वारि प्रसीदति ॥
…रक्षणार्थं जन्तूनां रात्रावहनि वा सदा ।
…रीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ॥
…ह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ।
…षां स्नात्वा विशुद्ध्यर्थं प्राणायामान् समाचरेत् ॥
…णायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः ।
…व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥
…ह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
…थेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥
…णायामैर्द्दहेद्दोषान् धारणाभिश्च किल्विषम् ।
…प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ।
…उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ।
…ध्यानयोगेन सम्पश्येत् गतिमस्यान्तरात्मनः ॥
…सम्यग्दर्शनसम्पन्नः कर्म्मभिर्न निबध्यते ।
…दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥
…अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्म्मभिः ।
…तपसश्चरणैश्चोग्रैः साधयन्तीह तत् पदम् ॥
…अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
…चर्म्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥
…जराशोकसमाविष्टं रोगायतनमातुरम् ।
…रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत् ॥
…नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
…तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते ॥
…प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
…विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥
…यदा भावेन भवति सर्व्वभावेषु निस्पृहः ।
…तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥
…अनेन विधिना सर्व्वांस्त्यक्त्वा सङ्गान् शनैः शनैः ।
…सर्व्वद्वन्द्वविनिर्म्मुक्तो ब्रह्मण्येवावतिष्ठते ॥
…ध्यानिकं सर्व्वमेवैतत् यदेतदभिशब्दितम् ।
…न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते ॥
…अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
…आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत् ॥
…शरणमज्ञानामिदमेव विजानताम् ।
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥
अनेन क्रमयोगेन परिव्रजति यो द्विजः ।
स विधूयेहपाप्मानं परं ब्रह्माधिगच्छति ॥”

इति मानवे ६ अध्यायः ॥

( ब्रह्मणः पुत्त्रविशेषः । यथा, श्रीमद्भागवते ।४।८।१ ।
“सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः ।
नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्द्ध्वरेतसः ॥”
नहुषपुत्त्रः । यथा, महाभारते ।१।७५।३० ।
“यतिं ययातिं संयातिमायातिमयतिं ध्रुवम् ।
नहुषो जनयामास षट्सुतान् प्रियवाससि ॥”
विश्वामित्रपुत्त्रः । यथा, महाभारते ।१३।४।५७ ।
“आरालिर्णाचिकश्चैव चाम्पेयोज्जयनौ तथा ।
नवतन्तुर्वकनखः शयनो यतिरेव च ॥”
त्रि । कर्म्मसुपरतोऽयज्वा । यथा, ऋग्वेदे । ८।३।९ ।
“येनायतिभ्यो भृगवे धने हिते
येन प्रस्कण्वमाविथ ॥”
“येन सुवीर्य्येण यतिभ्यः कर्म्मसूपरतेभ्योऽयज्वभ्यो जनेभ्यः सकाशात् धनमाहृत्य भृगवे महर्षये प्रयच्छसि ।” इति तद्भाष्ये सायणः ॥)

यतिः, स्त्री, ( यम्यते रसनाचेति । यम् + “स्त्रियां क्तिन् ।” ३ । ३ । ९४ । इति क्तिन् । “अनुदात्तोपदेशवनतितनोत्यादीनामिति ।” ६ । ४ । ३७ । इति मकारलोपः ।) पाठविच्छेदः । इति मेदिनी । ते, ४६ ॥ जिह्वेष्टविश्रामस्थानम् । यथा,—
“यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते ।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया ॥
क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्व्वसुतिभिः
पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च ।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा लक्ष्मीः पुष्यात्तनुलमहिमा मां करुणया ॥
इतमाखण्डयसुरुयास्तु नेच्छन्ति सुनयो यतिम् ।
इत्याह भट्टः स्वग्रन्थे गुरुमें पुरुषोत्तमः ॥”

इति छन्दोमञ्जरी । १ । १६—१८ ॥

(नियम्यते इति । यम् + क्तिन् । यतते चेष्टते व्रतादिरक्षार्थं इति वा । यत + “सर्व्वधातुभ्य इन् ।” उणा० ४।११७। इति इन् ।) विधवा । रागः । सन्धिः । इति शब्दरत्नावली ॥ वाद्याङ्गप्रबन्धविशेषः । यथा,—
“यतिरोढ़ाप्यवच्छेदो गजरी रूपकं ध्रुवम् ।
गणपः सारिगोणी च नादश्च कथितं तथा ।
प्रहरणं छन्दनश्च प्रबन्धा द्वादश स्मृताः ॥”
यथा दं थातः । इत्येकताल्यां यतिः । इति सङ्गीतदामोदरः ॥ ( सा त्रिविधा । यथा, मार्कण्डेयपुराणे । २३ । ५३ ।
“चतुर्विधं पदं तालं त्रिःप्रकारं लयत्रयम् ।
यतित्रयं तथा तोद्यं मया दत्तं चतुर्विधम् ॥”)

यतिचान्द्रायणं, क्ली, (यतिभिरनुष्ठेयं चान्द्रायणम् ।) व्रतविशेषः । यथा,—
“अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते ।
नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥”

इति मानवे ११ अध्यायः ॥

यतिचान्द्रायणे पादोनधेनुचतुष्टयं तदशक्तौ सपादैकादशकार्षापणाः । इति प्रायश्चित्तविवेकः ॥

यतिनी, स्त्री, (यतं संयमोऽस्या अस्तीति । यत + इनिः । स्त्रियां ङीप् । ) विधवा । यथा,—
“विधवा जानिका रण्डा विश्वस्ता यतिनी
यतिः ॥”

इति शब्दरत्नावली ॥

यतिमैथुनं, क्ली, ( यतीनां दुश्चरतीनामिव गोपनीयं मैथुनम् ।) यतिगोप्यरतिः । तत्पर्य्यायः । खञ्जनरतम् २ । इति त्रिकाण्डशेषः ॥

यती, स्त्री, (यतिः । कृदिकारादिति स्त्रियां ङीष् ।) विधवा । इति शब्दरत्नावली ॥

यती, [ न् ] पुं, ( यतं संयमोऽस्यास्तीति । यत + इनिः । ) यतिः । जितेन्द्रियः । इत्यमरः । २ । ७ । ४४ ॥ ( यथा, मुग्धबोधे कारकप्रकरणे ।
“स्पृष्ट्वा दधिं शारकमेतदर्थेका-
मुष्मीतवर्म्म यतिभिः सुदर्शनम् ॥” )

यतुका, } स्त्री, ( यत् + बाहुलकात् उकन् पक्षे
यतूका, } ऊक । स्त्रियां टाप् । ) वृक्षविशेषः । यथा,—
“रजनी स्यात्तु यतुका यतूका जननीति च ॥”

इति शब्दरत्नावली ॥

यत्नः, पुं, ( यत + “यजयाचयतविच्छप्रच्छरक्षो नङ् ।” ३ । ३ । ९० । इति नङ् । ) रूपादिचतुर्व्विंशतिगुणान्तर्गतगुणविशेषः । स च त्रिविधः । प्रवृत्तिः १ निवृत्तिः २ जीवनयोनिः ३ । यथा,—
“प्रवृत्तिश्च निवृत्तिश्च तथा जीवनयोनयः ।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्त्तितम् ॥”
तेषां कारणं यथा,—
“चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥
निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ।
यत्नो जीवनयोनिस्तु सर्व्वदातीन्द्रियो भवेत् ।
शरीरे प्राणसञ्चारे कारणं तत् प्रकीर्त्तितम् ॥”

इति भाषापरिच्छेदः ॥

उद्योगः । यथा,—
“उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥”

इति हितोपदेशः ॥

यत्नवान्, [ त् ] त्रि, यत्नविशिष्टः । यत्नशब्दात् वतुप्रत्ययेन निष्पन्नः ॥ (यथा, हरिवंशे । ८६।६ ।
“कंसेनापि समाज्ञप्तश्चाणूरः पूर्व्वमेव तु ।
योद्धव्यं सह कृष्णेन त्वया यत्नवतेति वै ॥”)

यत्र, इ क संकोचने । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) दन्त्यवर्गाद्योपधः । इ क, यन्त्रयति मन्त्रेण सर्पं जाङ्गलिकः । यन्त्र

इत्यनेनैवेदचिह्नेद्रदशुबन्धो वेदेयूचारअभेदार्थः । इति दुर्गादासः ॥

यत्र, व, यस्मिन् । येखाने इति भाषा । यच्छब्दात् सप्तम्यास्त्रल्प्रत्ययेन निष्पन्नम् । इति सिद्धान्तकौमुदी ॥ ( यथा, श्रीमद्भगवद्गीतायाम् ।
"यत्र यत्र मनो देही धारयेत् सकलं धिया । स्नेहाद्वा यदि वा लोभाद् याति तत्तत् सरूपताम् ॥" )

यथा, व, सादृश्यम् । साम्यम् । तत्पर्य्यायः । वत् २ वा ३ तथा ४ एव ५ एवम् ६ । इत्यमरः । ३ । ४ । ६ ॥ ( यथा, उत्तररामचरिते । २ । ४ ।
"वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति च । भवति च तयोर्भूयान् भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥")

यथाकामी, [ न् ] त्रि, ( यथा कामयते इति । कामि + णिनिः । यद्वा, काममनतिक्रम्य प्रवृत्तिरस्यास्तीति । यथाकाम + अत इनिठनाविति इनिः ।) स्वेच्छाचारी । तत्पर्य्यायः । स्वरुचिः २ स्वच्छन्दः ३ स्वैरी ४ अपावृतः ५ स्वतन्त्रः ६ निरवग्रहः ७ । इति हेमचन्द्रः । ३ । १६ ॥ निर्यन्त्रणः ८ । इति जटाधरः ॥ ( यथा, याज्ञवल्क्यसंहितायाम् । १ । ८१ ।
"यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् । स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥")

यथाक्रमं, व, क्ली, क्रमानुरूपम् । क्रममनतिक्रम्येति व्याकरणम् ॥ ( यथा, रघुवंशे । ३ । १० ।
"यथाक्रमं पुंसवनादिकाः क्रियाः
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥")
अपि च ।
"यथाक्रमेण पुत्रेण कार्य्या प्रेतक्रिया सदा । पतितापतिता वापि एकोद्दिष्टविधानतः ॥"
इति श्राद्धतत्त्वम् ॥

यथाजातः, त्रि, ( यथा न जातः इति यथाजातः । जातोऽपि पुत्रादिरजात इव प्रतीयते विद्यया शौर्य्येण वा न केनापि विदितत्वात् ।) मूर्खः । इत्यमरः । ३ । १ । ४८ ॥ नीचः । इति जटाधरः ॥

यथातथं, व, क्ली, ( यथा वर्त्तते तथानतिक्रम्य इति अनतिवृत्तौ अव्ययीभावः । अव्ययीभावश्च । २ । ४ । १८ । इति नपुंसकत्वम् । "ह्रस्वो नपुंसके प्रातिपदिकस्य ।" १ । २ । ४७ । इति ह्रस्वः । "नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।" २ । ४ । ८३ । इति प्रथमाविभक्तेरमादेशः ।) यथार्थम् । इति हारावली ॥ ( यथा, श्रीमद्भागवते । ६ । १ । ४१ ।
"येन स्वधाम्न्यमी भावा रजःसत्त्वतमोमयाः । गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥")

यथापूर्व्वं, व, क्ली, ( पूर्व्वमनतिक्रम्य इत्यव्ययीभावः ।) पूर्व्वस्थितदेशकालानुरूपम् । यथा,—
"अक्षतायां प्रतिष्ठायां प्राणानां प्रतिमासु च । यथापूर्व्वं यथा भावः स्वर्गादीनां न विच्युता ॥"
इति तिथ्यादितत्त्वधृतकालिकापुराणवचनम् ॥

यथामुखीनः, त्रि, ( यथामुख + "यथामुखसंमुखस्य दर्शनः खः ।" ५ । २ । ६ । इति खः । ) मुखप्रतिबिम्बाश्रयः । मुखस्य सदृशं यथामुखं प्रतिबिम्बं निपातनात् सादृश्येऽव्ययीभावः । यथामुखं दर्शनः यथामुखीनः । इति सिद्धान्तकौमुदी ॥ अपि च ।
"ततश्चिचीषमाणोऽसौ हैमरत्नमयो मृगः । यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥"
इति भट्टिः ॥
मुखस्य सदृशं यथामुखं दर्पणादिस्थप्रतिबिम्बमुच्यते । सादृश्यार्थेऽव्ययीभावः । इति भरतः ॥ निर्म्मलत्वात् सीताया अग्रतो यथामुखीनः प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म इवशब्दलोपो द्रष्टव्यः । इति जयमङ्गलः ॥

यथायथं, व, क्ली, ("यथास्वे यथायथम् ।" ८ । १ । १४ । योग्यमात्मा यथास्वमात्मीयं तद्यथायथम् । तस्मिन् यथाशब्दस्य द्वित्वं क्लीवत्वञ्च निपात्यते । यथायथं ज्ञाता यथास्वभावमित्यर्थः । यथात्मीयमितिवेति । इति सिद्धान्तकौमुदी ।) यथास्वम् । इत्यमरः । ३ । ४ । १५ ॥ (अनुरूपम् । यथा, श्रीमद्भागवते । १० । १८ । १६ ।
"तत्रोपाहूय गोपालान् कृष्णः प्राह विहारवित् । हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥"
"यथायथं वयोवर्णाद्यनुरूपम् ।" इति तट्टीकायां श्रीधरस्वामी ॥ यथा च,—
"लिङ्गमव्यक्तमल्पत्वात् व्याधीनां तद्यथायथम् ॥"
इति वाग्भटे निदानस्थाने प्रथमेऽध्याये ॥
"यथायथं यस्य व्याधेर्यद्रूपं तदेवाभिहितम् ।" इति तद्व्याख्याने विजयरक्षितः ॥)

यथार्थं, व, क्ली, यथातथम् । इत्यमरः ।३।४।१५॥
"हे अव्यभिचारिणि । अर्थमनतिक्रान्तं यथार्थं यथास्वरूपं यथातथं उभयत्र अव्ययीभावः । यथार्थमेवेदम् । यथातथं वक्ति सभासु विद्वान् ।" इति भरतः । तत्पर्य्यायः ।
"सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् । यथास्थितञ्च सद्भूतेऽलीके तु वितथानृते ॥"
इति हेमचन्द्रः ॥
( यथा, महाभारते । १३ । ६ । १८ ।
"कृतश्चापकृतं किञ्चित् कृते कर्म्मणि सिध्यति । सुकृतं दुष्कृतं कर्म्म न यथार्थं प्रपद्यते ॥" )

यथार्ह, व, क्ली, ( अर्हं योग्यमनतिक्रम्य इत्यव्ययीभावः ।) यथायोग्यम् । यथा,—
"कृत्वा तु तौ यथान्यायं यथार्हेण संविदम् । उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥"
इति देवीमाहात्म्यम् ॥

यथार्हवर्णः, पुं, ( यथार्हं यथायोग्यं वर्णयतीति । वर्ण + अच् ।) चरः । इत्यमरः । २ । ८ । १३ ॥ यथायोग्यमचरं रूपं जातिश्च ॥

यथाशक्ति, व, क्ली, शक्त्यनुसारेण । शक्तिमन[तिक्र]म्य । इति मुग्धबोधव्याकरणम् ॥ ( य[था,] श्रीमद्भागवते । ६ । १२ । १६ ।
"पश्य मां निर्जितं शक्र ! वृक्णायुधभुजं मृ[धे] घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥")

यथाशास्त्रं, व, क्ली, शास्त्रानुसारेण । शास्त्रमन[तिक्र]म्य । यथा, मलमासतत्त्वे ।
"यथाशास्त्रञ्च निर्णीतो यथाव्याधि चिकित्[सि]तः । न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो बुधैः"

यथास्थितं, त्रि, सत्यम् । इति हेमचन्द्रः ।२।१[illegible]

यथास्वं, व, क्ली, ( स्वमनतिक्रम्येत्यव्ययीभावः) यथावाञ्छितम् । इत्यमरः ॥ ( यथा, सु[श्रुते] चिकित्सास्थाने ८ अध्याये ।
"बल्कं ततोऽश्मकुम्भैस्तु परिषिक्तन्तु सर्पिषा । तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक् ।"

यथेप्सितं, व, क्ली, (ईप्सितमनतिक्रम्येति ।) य[था]वाञ्छितम् । ( यथा, भट्टिकाव्ये । २ । २८ ।
"तान् प्रत्यवादीदथ राघवोऽपि
यथेप्सितं प्रस्तुतकर्म्म धर्म्म्यम् ।
तपो मरुद्भिर्भवतां शराग्निः
सन्धुक्ष्यतां नोऽरिसमिन्धनेषु ॥")
तत्पर्य्यायः । कामम् २ प्रकामम् ३ पर्य्याप्त[म् ४] निकामम् ५ इष्टम् ६ । इत्यमरः । २ । ६ । [illegible] षट् इत्यानतिक्रमे स्वच्छन्दप्रवृत्तौ कामार्थे प्रायः क्रियाविशेषणानि क्रियाविशेषणा[नां] क्लीवत्वमेषाम् । ईप्सितस्यानतिक्रमो यथे[प्सित]मित्यव्ययीभावः । इति भरतः ॥

यथेष्टं, व, क्ली, इष्टमनतिक्रम्य । यथेप्सि[तम्] यथा,—
"कुर्य्युर्यथेष्टं तत् सर्व्वमीशास्ते स्वधनस्य वै ।"
इति दायभाग[illegible]

यथेष्टचारी, [ न् ] पुं, ( यथेष्टं चरतीति । च[र +] णिनिः । ) पक्षी । इति शब्दचन्द्रिका ॥

यथेष्टाचरणः, त्रि, ( यथेष्टं आचरणं यस्य ) यथेष्टाचारी । यथा,—
"क्रियाहीनस्य मूर्खस्य महारोगिण एव च यथेष्टाचरणस्याहुर्मरणान्तमशौचकम् ॥"
यथेष्टाचरणस्य दूरतवेश्याद्यासक्तस्य । शुद्धितत्त्वम् ॥

यथेष्टाचारी, [ न् ] पुं, स्वेच्छाचारी । य[थेष्ट]माचरितुं शीलमस्य इत्यर्थे इन्प्रत्ययेन निष्प[न्नम्]

यथोचितं, व, क्ली, ( उचितमनतिक्रम्येति ) यथायोग्यम् । यथाप्राप्तम् । यथा । "[illegible] अंशो यथोचितात् ।" इत्यमरः । २।८।[illegible] (यथा च श्रीमद्भागवते । ४ । २२ । ५० ।
"कर्म्माणि च यथाकालं यथादेशं यथाबल[म्] यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् ॥" त्रि, यथोचितमस्यास्तीति । अर्श आद्यच् । यथार्हः । यथा, मार्कण्डेये । १६ । १८ ।
"वयमाप्यायिता मन्त्रैर्यज्ञभागैर्यथोचितैः । इष्ट्वा [illegible]

ादितं, व, क्ली, ( उदितं कथितमनतिक्रम्य
त्यव्ययीभावः।) यथोक्तम्। यथा,—
'यथोदितन्ते पितृभिः कुरु दारपरिग्रहम्॥"
इति मार्कण्डेयपुराणे रुचिस्तोत्रम्॥
, व, ( यस्मिन् काले इति। यद्+"सर्व्वै-
कान्यकिंयत्तदः काले दा।"५।३।१५। इति दा।)
ास्मिन् काले। यथा,—
'यदा यदा सतां हानिर्व्वेदमार्गानुसारिणाम्।
ादा तदा कलेर्वृद्धिरनुमेया विचक्षणैः॥"
इति तिथ्यादितत्त्वधृतवचनम्॥
, व, पश्चान्तरम्। सम्भावना। तत्पर्य्यायः।
ेत् २ यद्युवा ३। यथा,—
'यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्।
ात:स्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ॥"
•इति मलमासतत्त्वम्॥
'अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
ाधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥"
इति श्रीभगवद्गीता॥
यद्युवाल्पतरसम्भारः स्यादपि पशुनैव कुर्य्यात्
ेति। यद्युवेति निपातसमुदायो यद्यर्थे।" इति
तिथ्यादितत्त्वम्॥
यं, त्रि, ( यस्येदमिति। यद्+"वृद्धाच्छः।"
।२।११४। इति छः।) यत्सम्बन्धि। यथा,
"यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम्॥"
इति छन्दोमञ्जर्य्यां द्वितीयस्तवकः॥
, पुं, (यजते इति। यज्+उः। पृषोदरादि-
ात् जस्थाने दकारः।) देवयान्यां जातो
यातेर्ज्येष्ठपुत्रः। तस्य वंशे पितृशापात् राजा-
ाक्रवर्त्ती नासीत्। तद्वंशे द्वापरयुगस्यान्ते
ीकृष्णोऽवतीर्णः। इति श्रीभागवतमतम्॥
स्य मातुलकन्याविवाहकारणं यथा,—
ारां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि।
ं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः॥
ां यदो! प्रतिपद्यस्व पाप्मानं जरया सह।
ौवनेन त्वदीयेन चरेयं विषयानहम्॥
र्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम्।
त्वा संप्रतिपत्स्यामि पाप्मानं जरया सह॥
यदुरुवाच।
सितश्मश्रुधरो दीनो जरया शिथिलीकृतः।
ीवलीसन्ततगात्रश्च दुर्द्दर्शो दुर्ब्बलः कृशः॥
ाशक्तः कार्य्यकरणे प्रापभूतश्च यौवने।
ोपजीविभिश्चैव तां जरां नैव कामये॥
ान्ति ते बहवः पुत्त्रा मत्तः प्रियतरा नृप!।
रां ग्रहीतुं धर्म्मज्ञ! पुत्त्रमन्यं वृणीष्व वै॥
ययातिरुवाच।
ो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि।
ाराज्यमातुलसम्बन्धात् प्रजा वै ते भविष्यति॥"
इति मात्स्ये ३१ अध्यायः॥ *॥
हर्य्यश्वराजपुत्रः। यथा, हरिवंशे। ९३।३३।

"तस्यैवं सुप्रवृत्तस्य पुत्त्रकामस्य धीमतः।
मधुमत्यां सुतो जज्ञे यदुर्नाम महायशाः॥")
यदुनाथः, पुं, ( यदूनां नाथः। ) श्रीकृष्णः। इति
हेमचन्द्रः। २। १३३॥
यदुपतिः, पुं, (यदूनां पतिः।) श्रीकृष्णः। यथा—
"यदुपतेः क्व गता मथुरापुरी
रघुपतेः क्व गतोत्तरकोशला।
इति विचिन्त्य कुरुष्व मनः स्थिरं
न सदिदं जगदित्यवधारय॥"
इति रूपसनातनगोस्वामिनौ॥
यदृच्छा, स्त्री, स्वातन्त्र्यम्। तत्पर्य्यायः। स्वैरिता २।
इत्यमरः।३।२।२॥ स्वरिता ३। इति तट्टीका॥
(यथा, गीतायाम्। २। ३२।
"यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्त्रियाः पार्थ! लभन्ते युद्धमीदृशम्॥")
यद्युवा, व, यदि। यथा। "यद्युवाल्पतरसम्भारः
स्यादपि पशुनैव कुर्य्यात्। यद्युवेति निपातसमु-
दायो यद्यर्थे। अपि च। यद्युवा "उभयं
चिकीर्षेच्छौचं स्नानञ्च इति तेनैव कल्पेन
कमण्डलुरासन्नं सोदकं कमण्डलुं दर्भवटुं वा
स्नानासने निधाय तेनैव प्रत्याहृत्याचमेत्।"
इति तिथ्यादितत्त्वम्॥
यद्वा, स्त्री, बुद्धिः। इति संक्षिप्तसारोणादिवृत्तिः॥
पक्षान्तरञ्च॥
यन्ता, [ऋ] पुं, (यम्+तृच्।) सारथिः। (यथा,
रघौ। ७। ४४।
"प्रहारमूर्च्छापगमे रथस्था
यन्तॄनुपालभ्य निवर्त्तिताश्वान्।
यैः सादिता लक्षितपूर्व्वकेतून्
तानेव सामर्षतया निजघ्नुः॥)
हस्तिपकः। इत्यमरः। ३। ३। ५६॥ ( यथा,
माघे। ५। ४२।
"सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते॥")
विरतिकारके, त्रि॥
यन्त्रं, क्ली, (यन्त्र्यतेऽनेनेति। यम+"गुधृवीपचिवचि-
यमिसदिक्षदिभ्यस्त्रः।" उणा० ४। १६६।
इति त्रः।) देवाद्यधिष्ठानम्॥ ( यथा, देवी-
भागवते। ३। २६। २१।
"अर्च्चाभावे तथा यन्त्रं नवार्णमन्त्रसंयुतम्।
स्थापयेत् पीठपूजार्थं कलसं तत्र पार्श्वतः॥")
पात्रभेदः। नियन्त्रणम्। इति हेमचन्द्रः॥
अयियन्त्रम्। इति महाभारतटीकायां नील-
कण्ठः॥ कामान् वन्दूक इत्यादि भाषा॥ *॥
बाधम्। यथा,—
"यन्त्रस्य गुणदोषौ न विचार्य्यौ मधुसूदन!।
अहं यन्त्रं भवान् यन्त्री न मे दोषा न मे गुणाः॥"
इति महाभारतम्॥
दारुयन्त्रादि। कल इति भाषा। यथा,—
"ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन! तिष्ठति।

भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ानि मायया॥"
इति श्रीभगवद्गीतायाम्। १८। ६१॥
अस्यार्थः।"सर्व्वभूतानां हृन्मध्ये ईश्वरोऽन्तर्यामी
तिष्ठति। किं कुर्व्वन् सर्व्वाणि भूतानि मायया
निजशक्त्या भ्रामयंस्तत्तत्कर्म्मसु प्रवर्त्तयन् यथा
दारुयन्त्रमारूढ़ानि कृत्रिमाणि भूतानि सूत्र-
धारो लोके भ्रामयति तद्वदिति। यद्वा यन्त्राणि
शरीराणि आरूढ़ानि भूतानि देहाभिमानिनो
जीवान् भ्रामयन्नित्यर्थः।" इति श्रीधरस्वामी॥
अथ पूजाधारयन्त्रम्। तत्र नारदीये।
"आपोऽग्निर्हृदयं चक्रं विष्णोः षोड़शसुन्दरम्।
यन्त्रञ्च प्रतिमास्थानमर्च्चने सर्व्वदा हरेः॥"
गौतमीये।
"शालग्रामे मणौ यन्त्रे प्रतिमामण्डलेषु च।
नित्यं पूजा हरेः कार्य्या न तु केवलभूतले॥"
योगिनीतन्त्रे।
"लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च।
मण्डलस्थां महामायां यन्त्रस्थां प्रतिमासु च।
जलस्थां वा शिलास्थां वा पूजयेत् परमेश्वरीम्॥"
एतत् सर्व्वं यन्त्राभावे। कौलावलीये।
"यत्रापराजितापुष्पं जवापुष्पञ्च विद्यते।
करवीरे शुक्लरक्ते द्रोणं वा यत्र तिष्ठति।
तत्र देवी वसेन्नित्यं तद्यन्त्रे चक्रिकार्च्चनम्॥"
एतत् सर्व्वयन्त्राभावे। तथा च।
"यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतैव हि।
देहात्मनोर्यथा भेदो यन्त्रदेवतयोस्तथा॥"
तथा।
"आदौ लिखेद्यन्त्रराजं देवतायाश्च विग्रहम्।
कामक्रोधादिदोषोत्थसर्व्वदुःखनियन्त्रणात्॥
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः।
विना यन्त्रेण पूजायां देवता न प्रसीदति॥
दुःखनियन्त्रणाद्यन्त्रमित्याहुस्तन्त्रवेदिनः॥"
इति यन्त्रपूजाप्राधान्यम्॥ *॥
अथ धारणयन्त्राणि। तत्रादौ भुवनेश्वरी-
यन्त्रम्। शारदायाम्।
"आलिख्याष्टदिगर्गलान्युदरगं पाशादिकं
साधकं
कोष्ठेष्वष्टमनून् परेषु विलिखेद्द्वादशमन्त्राद्वयम्।
अष्टपूर्व्वापरषट्कयुग्म् स्वयवरान् योमाय-
नागर्गले-
ष्वालिखेन्नवजाधिपादिगुणशः पंक्तिद्वयात्तत्-
परम्॥
कोष्ठेष्वष्टयुगार्णमालसहितां युग्मस्वरान्तर्गतां
मार्णां केशरगां दलेषु विलिखेन्मन्त्रं त्रिपंक्ति-
क्रमात्।
त्रिः पाशाङ्कुशवेष्टितञ्च लिपिभिर्व्वीतं क्रमाद्-
व्युत्क्रमात्
पश्चाद्येन घटेन पङ्कजसुखेनावेष्टितं तद्बहिः॥"
घटार्गलमिदं यन्त्रं मन्त्रिणां श्रीप्रदं महत्।
पाशश्रीशक्तिकन्दर्पकामशक्तीन्दिराङ्कुशाः॥
प्रथमोऽष्टाक्षरो मन्त्रस्ततः कामिनि रञ्जिनि।
स्वाहान्तोऽष्टाक्षरः सद्भिरपरः परिकीर्त्तितः॥

ह्रीं गौरि रुद्रदयिते योगेश्वरि सवर्मफट् ।
द्विठान्त: षोड़शार्णोऽयं मन्त्र: सद्भिरुदीरित: ॥"
इति घटार्गलयन्त्रम् ॥✱॥
"तारे हुँ विलिखेत् सरोजकुहरे साध्याभिधानान्वितं
मन्त्रार्णान् वसुसंख्यकान् वसुदलेष्वालिख्य तद्बाह्यत: ।
शक्त्या त्रि: परिवेष्टितं घटगतं पद्मस्थमन्तार्णकं
यन्त्रं वश्यकरं ग्रहादिभयहृल्लक्ष्मीप्रदं कीर्त्तिदम् ॥"
इति त्वरितायन्त्रम् ॥ ✱ ॥
"पद्मं भानुदलान्वितं प्रविलिखेत् तत्कर्णिकायां पुनस्तारं शक्तिगबीजसाध्यसहितं तत्केशरेषु क्रमात् ।
मर्द्दिन्यामनुसम्भवान् युगलशो वर्णान् पुन: पत्रगान्
मन्त्रार्णान् युगशो विधाय विलिखेदन्त्यं तदन्ते दले ॥"
मन्त्रस्तु । [स्थितम् ।
"उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितं यदि शक्यमशक्यं वा तन्मे भगवति शमय स्वाहा ॥
मातृकार्णेन संवीतं भूपुरद्वयमध्यगम् ।
यन्त्रञ्च विन्ध्यवासिन्या: प्रोक्तं सर्व्वसमृद्धिदम् ॥
रक्षाकरं विशेषेण क्षुद्रभूतादिनाशनम् ।
राज्यदं भ्रष्टराज्यानां वश्यदं वश्यमिच्छताम् ॥
सुतार्थिनीनां सुतदं रोगिणां रोगशान्तिदम् ।
बहुना किमिहोक्तेन यन्त्रं यत् कामदो मणि: ॥"
इति वनदुर्गायन्त्रम् ॥✱॥
अथ लक्ष्मीयन्त्रम् ।
"वेदादिस्थितसाध्यनामयुगश: श्रीशक्तिमारान्वितं
किञ्जल्केषु दिनेशपत्रविलसत्मन्त्राक्षरं तद्बहि: ।
पद्मं व्यञ्जनकेशरं स्वरलसत्पत्राष्टयुग्मं धराबिम्बाभ्यां वसुकुम्भया त्वरितया यन्त्रं लिखेद्वेष्टितम् ।
भूपुरद्वयकोणेषु श्रियौ लेख्यौ पुन: पुन: ।
महालक्ष्मीयन्त्रमिदं सर्व्वैश्वर्य्यफलप्रदम् ॥
सर्व्वदु:खप्रशमनं सर्व्वापद्विनिवारकम् ।
बहुना किमिहोक्तेन परमस्मान्न विद्यते ॥"✱॥
अथ त्रिपुरभैरवीयन्त्रम् । [त्रिशो
"मध्याद्यं नवयोनिषु प्रविलिखेद्बीजानि वर्णास्त्रिशो
गायत्र्या: पुनरष्टपत्रविवरेष्वालिख्य लिप्यावृतम् ।
भूबिम्बद्वितयेन मन्मथयुजा कोणेषु संवेष्टितं
यन्त्रं त्रैपुरमीरितं त्रिभुवनप्रक्षोभणं श्रीप्रदम् ॥"
गायत्री तु ।
"मन्मथं त्रिपुरादेवि विद्महे पदमुद्धरेत् ।
उक्त्वा कामेश्वरिपदं प्रवदेदथ धीमहि ॥
अन्ते च प्रवदेत्तूयन्नन: क्लिन्ने प्रचोदयात् ।
गायत्र्येषा समाख्याता त्रैपुरी सर्व्वसिद्धिदा ॥"
यन्त्रान्तरम् ।
"वह्नेर्गेहयुगान्तरस्थमदने मायां लिखेद्वाग्भवं
षट्कोणेष्वथ सन्धिषु प्रविलिखेत् हुंकारमावेष्टितम् ।
श्रीबीजेन समीरितं त्रिभुवनप्रक्षोभणं त्रैपुरं
यन्त्रं पञ्चमनोभवात्मकमिदं सौन्दर्य्यसम्पत्करम् ॥"
इति त्रिपुरायन्त्रम् ॥✱॥
अथ श्रीविद्यायन्त्रम् ।
"विशेषं धारणं यन्त्रं प्रसङ्गात् कथयामि ते ॥
रेफहकारयोर्मध्ये देवीनामभिसुस्थकम् ।
साध्यनाम द्वितीयान्तं तस्योर्द्ध्वे विलिखेन्मनुम् ॥
तत्रैव मातृका सर्व्वा विलिखेच्चक्रबाह्यत: ।
पञ्चगव्यान्वितेनैव सूत्रेण परिवेष्टयेत् ॥
तत्र प्राणं प्रतिष्ठाप्य विद्यामष्टोत्तरं शतम् ।
तत् स्पृष्ट्वा प्रजपेन्मन्त्रं देवीध्यानपरायण: ॥
स्त्रीणां मध्यगतं कृत्वा रजतस्याथवा पुन: ।
करे धृत्वा जगद्वश्यं हृदये श्रीषु वल्लभम् ॥
कण्ठे धनं लभेद्बाहौ स्तम्भनं जृम्भनं भवेत् ।
शिखायां मोक्षमाप्नोति तस्माद्यत्नेन धारयेत् ॥"✱॥
अथ गणेशयन्त्रम् ।
"बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं दिक्षु लक्ष्मीमायाकन्दर्पभूमीस्तदनुरसपुटेष्वालिखेद्बीजषट्कम् ।
तत्सन्धिष्वङ्गमन्त्रान् वसुदलकमले मूलमन्त्रस्य वर्णान्
शिष्टान् पत्रेषु विद्वान् विलिखतु गुणशश्चान्त्यमन्त्ये पलाशे ॥
आवीतं लिपिभि: क्रमोत्क्रमवशात् पाशाङ्कुशाभ्यामपि
भूबिम्बद्वितयेन वेष्टितमिदं यन्त्रं गणाधीशितु: ।
लाक्षाकुङ्कुमरोचनान्वगमदैर्भूर्जोदरे हेम्नि वा
संलिख्याभि[illegible]न् लभेत सकलै: संप्रार्थनीयां श्रियम् ॥
उक्तं महागणपतेर्व्विधानं सुरपूजितम् ।
सर्व्वसिद्धिकरं पुंसां समस्तपुरुषार्थदम् ॥"✱॥
अथ श्रीरामयन्त्रम् ।
"तारं मध्ये विलिखतु मनुं षट्सु कोणेषु सन्धिष्वङ्गं मायां स्मरमपि लिखेत् कोणगण्डेषु पश्चात् ।
किञ्जल्केषु स्वरगणमतो पत्रमध्येषु मालामन्त्रस्यार्णान् गुहसुखमितानष्टमे पञ्चवर्णान् ॥
दशाक्षरेण संवेष्ट्य कादिवर्णैश्च भूपुरे ।
दिग्विदिक्षु लिखेद्बीजे नरसिंहवराहयो: ॥
नमो भगवते स्याच्चतुर्थ्या रघुनन्दनम् ।
रक्षोघ्नविशदायान्ते मधुरादि समीरयेत् ॥
प्रसन्नवदनायेति पश्चादमिततेजसे ।
बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ।
प्रणवादिनमोऽन्तोऽयं मालामन्त्र: प्रकीर्त्तित: ॥"
अथ नृसिंहयन्त्रम् ।
"बीजं साध्यसमन्वितं प्रविलिखेन्मध्येऽष्टपत्रेष्व
मन्त्रार्णान् श्रुतिशो विभज्य विलिखेच्छिष्टा बहिर्व्वेष्टयेत्
बाह्ये कोणगबीजवह्निवसुधागेहद्वयेनावृतं
यन्त्रं क्षुद्रविषग्रहामयरिपुप्रध्वंसनं श्रीप्रदम् ॥"
अथ गोपालयन्त्रम् । [वह्नि
"पिण्डं मूलेन बीतं दहनपुरयुगे कोणराजत्
कुर्य्यात् पद्मं दशार्णस्फुरितदशदलं कामबीजे वीतम् ।
पद्मं किञ्जल्कसंस्थस्वरविलसितदलप्रोल्लसत्षोड़शार्णं
किञ्जल्कचक्रनाढ्यं विलसितयुगदलेष्वर्पितानष्टवर्णान् ।
पाशाङ्कुशाभ्यामावीतं क्षौणीपुरयुगास्त्रिषु ।
अष्टाक्षरेण लसितं यन्त्रं गोपालदैवतम् ॥
धर्म्मार्थकामफलदं सर्व्वरक्षाकरं स्मृतम् ।
पञ्चान्तको धरासंस्थो मनुबिन्दुविभूषित: ॥
पिण्डबीजमिदं प्रोक्तं सर्व्वसिद्धिकरं परम् ।
स्मर: कृष्णाय ठद्वन्द्वं षड़र्णो मनुरीरित: ॥
गोपीजनान्ते प्रवदेद्वल्लभायाग्निवल्लभा ।
अयं दशाक्षरो मन्त्रो इष्टाद्दष्टफलप्रद: ॥
प्रणवं हृदयं कृष्णं ङेऽन्तसुक्ता तत: परम् ।
ताद्दशं देवकीपुत्रं हुं फट्स्वाहासमन्वितम् ।
षोड़शाक्षरमन्त्रोऽयं गोविन्दस्य जगत्पते: ॥
पिण्डं रतिपतेर्ब्बीजं नमो भगवते तत: ।
नन्दपुत्राय बालादिवपुषे श्यामलाय च ॥
गोपीजनपदस्यान्ते वल्लभाय द्विठावधि ।
अनुष्टुप् मन्त्र आख्यातो गोपालस्य जगत्पते:
अनङ्ग: कृष्णगोविन्दौ ङेऽन्तावष्टाक्षरो मनु:
इति गोपालयन्त्रम् ॥ ✱
अथ गोपालस्य यन्त्रान्तरम् ।
"प्राक् प्रत्यक् दक्षिणोदक् विधिवदभिलिखेत् सप्तरेखाचतु
कोणोद्यच्छूलयुक्तं वलययुगयुतं मध्यपूर्व्वं तदन्तम्
श्लोकस्यार्णान् पुरस्ताद्दसुपदविवरेष्वक्षरर्णं लिखित
तद्बाह्ये द्वादशार्णैस्तदनुपरिवृतं देवकीपुत्रयन्त्रम्
तं सुक्ती देव देवेतं तं वेदे वरतो वतम् ।
तं वतो रूढ़तो ख्यातं तं ख्यातो देवकीसुत
लिखितं भूर्ज्जपत्रादौ यन्त्रमेतद्यथाविधि ।
विधृतं बाहुना नित्यं सर्व्वकामफलप्रदम् ॥
पलाशपट्टफलके लिखितं साधु साधितम् ।
गोस्थाने निखनेदेतत् गवां वृद्धिर्भवेत्तदा ॥"✱
अथ शिवयन्त्रम् । तत्रादौ षट्कोणम
कृत्वा तदन्त: साध्यनामयुक्तं प्रासादबी
विलिख्य षट्कोणेषु प्रणवसहितपञ्चाक्षरवर्ण
विलिख्य विवरेषु षड़ङ्गमन्त्रान् तद्बहि: प
दलानि विरचय्य तद्दलेषु ॐ ईशानाय न
ॐ तत्पुरुषाय नम: ॐ अघोराय न

ॐ सद्योजाताय नमः ॐ वामदेवाय नमः।
इति पञ्चमन्त्रान् प्रागादिक्रमेण लिखेत्। तद्बहिरष्टदलानि रचयित्वा तद्दलेषु मातृकावर्णान् लिखेत्। तद्बहिर्वृत्तं भूम्बकेन वेष्टयेत्। एतद्यन्त्रं जपहोमादिना सम्पूज्य धारयेत्। आयुरारोग्यैश्वर्य्यादिसिद्धिर्भवति ॥ ✱ ॥ अथ मृत्युञ्जयस्य यन्त्रम्।

"मध्ये साध्याचराढ्यं भुवनमभिविलिखेन्मध्यमं दिग्दलेषु
कोणेष्वन्त्यं मनोस्तत् चितिभुवनमथो दिक्षु चक्रं विदिक्षु।
टान्तं यन्त्रं तदुक्तं सकलभयहरं पैड़भूतापमृत्यु
व्याधिव्यामोहदुःखप्रशमनसुहितं श्रीप्रदं कीर्त्तिदायि ॥" ✱ ॥

अथ कालीयन्त्रम्। यामले।

"आद्यं बीजं ससाध्यं प्रथमषडस्रके तद्बहिश्चाष्टकोणे
पूर्व्वाद्यं चाष्टबीजं तदनु वसुदलद्वन्द्वके बीजषट्कम्।
किञ्जल्कं तत् स्वराढ्यं वसुदलविवरे स्वाहया बीजषट्कं
कूर्चाभ्यामेव वीतं चितिरसयुगयोरन्तरे यन्त्रराजम् ॥
देवीबीजत्रयं तत् प्रतिदिशमपरं शक्तिबीजद्वयं तत्
कोणे कोणे लिखेद्यस्त्रिजगति स गुरुः शङ्करस्यापि विष्णोः ॥"

अथ शान्तिकादौ ताराधारणयन्त्रम्। तदुक्तं तन्त्रकारीये।

"योनियुग्मे लिखेन्मन्त्रं मन्त्री हेमशलाकया।
बीजत्रीणां दीर्घवर्णान् षट्कोणे विलिखेत्ततः ॥
अष्टपत्रेष्वष्टवर्णान् तद्बहिर्भूपुरद्वयम्।
अष्टवज्रं भूपुरे च विलिख्य साधकोत्तमः ॥
स्वर्णपट्टे भूर्ज्जे वा रूप्ये वाप्यथ सुव्रते।
विलिखेद्धेमलेखन्या गन्धाष्टकसमन्वितम् ॥
शलाकार्केण वालिख्य कुशमूलेन वा पुनः ॥"

कवीराकल्पे।

"वेष्टितं पीतवर्णेन जतुना परिवेष्टयेत् ॥
धारयेत् पट्टसूत्रेण शिरसा कण्ठभूषणम्।
नारीणां वामभुजे चैवमन्येषां दक्षिणे भुजे।
अपुत्रापि लभते पुत्रं निर्धनो धनवान् भवेत् ॥
इमां रक्षां पुरा बध्वा शान्त्यर्थं गौतमादिभिः।
अर्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ॥"

अस्यार्थः। योनियुग्मे षट्कोणे। तस्य मध्ये स्वर्णशलाकादिना भूर्ज्जपत्रादौ कुङ्कुमरोचनाचन्दनजटामांसीनां समांशं विधाय पङ्क्तिक्रमेण मूलमन्त्रं लिखित्वा तस्य हकाररेफयोर्मध्ये अमुकस्य रक्षां कुरु कुरु अमुकीनां शुभं समुत्पादयेति वा अस्य शान्तिं कुरु कुरु इत्यादि वा साध्यसहितं विलिख्य षट्कोणेषु अभिन्नान् दीर्घवर्णान् आ ई ऊ ऐ औ अः एकैकं लिखेत्। तदुक्तम्।

"स्वराणां मध्यगं यच्च तच्चतुष्कं नपुंसकमिति।"

अष्टपत्रेष्वष्टवर्णान्। ऐं ह्रीं ॐ ऐं ह्रीं फट् स्वाहेति लिखेत्। तदुक्तम्।

"वाग्भवं कूर्चदेवीश्च तारकं वाग्भवं तथा।
कूर्चलेखा चास्त्रमन्त्रान्ते वह्निजायावधिर्मनुः ॥
अष्टाक्षरो मनुः प्रोक्तो मन्त्राणां सार ईरितः ॥"

अथ यन्त्रलिखनद्रव्यम्।

"काश्मीररोचनालाक्षामृगनाभिमदचन्दनैः।
विलिखेद्धेमलेखन्या यन्त्राण्येतानि देशिकः ॥
भूमिस्पृष्टं शवस्पृष्टं यन्त्रं निर्म्माल्यसङ्गतम्।
विदीर्णं लङ्घितं मन्त्री यन्त्रं नैव च धारयेत् ॥
सौवर्णे राजते पात्रे भूर्जे वा सम्यगालिखेत्।
अथवा ताम्रपट्टे वा गुटिकां कृत्य धारयेत् ॥
यावज्जीवं सुवर्णे स्यात् रौप्ये विंशतिवार्षिकम्।
भूर्ज्जे द्वादश वर्षाणि तदर्द्धं ताम्रपट्टके ॥"

इति तन्त्रसारः ॥ ✱ ॥

अन्यत् कालिकापुराणे ,७७।७८।७९ अध्यायेषु द्रष्टव्यम् ॥ ✱ ॥ अथ यन्त्रसंस्कारः। वीरमहेश्वरतन्त्रे।

"स्नात्वा संकल्पयेन्मन्त्री गुरोरर्च्चनमाचरेत्।
पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम् ॥
तत्र चक्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम्।
तदुद्धृत्य ततश्चक्रं स्थापयेत् स्वर्णपात्रके ॥
पञ्चामृतेन दुग्धेन शीतलेन जलेन च।
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमेन च ॥
पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात्।
तोयधारान्तरैः कुर्य्यात् पञ्चामृतविधिं बुधः ॥
हाटकैः कलसैर्देवीमष्टभिर्व्वारिपूरितैः।
कषायजलसम्पन्नैः कारयेत् स्नानमुत्तमम् ॥
स्नानं समाप्य तां देवीं स्थापयेत् स्वर्णपाठके।
यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचोदयात् ॥
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत्।
अष्टोत्तरशतं देवि! देवताभावसिद्धये ॥
आत्मशुद्धिं ततः कृत्वा षड़ङ्गैर्देवतां यजेत्।
तत्रावाह्य महादेवीं जीवन्यासञ्च कारयेत् ॥
उपचारैः षोड़शभिर्मेहासुराद्विभिः सदा।
फलताम्बूलनैवेद्यैर्देवीं तत्र समर्च्चयेत् ॥
पट्टसूत्रादिकं दद्यात् वस्त्रालङ्कारमेव च।
अगुरुं चामरं घण्टां यथायोग्यं महेश्वरि! ।
सर्व्वमेतत् प्रयत्नेन दद्याद्दात्महिते रतः ॥
ततो जपेत् सहस्रञ्च सकलेप्सितसिद्धये।
बलिदानं ततः कृत्वा प्रशमेच्चक्रराजकम् ॥
अष्टोत्तरशतं हुत्वा सम्पाताज्यं विनिःक्षिपेत्।
होमकर्म्मण्यशक्तश्चेत् द्विगुणं जपमाचरेत् ॥
धेनुमेकां समानीय स्वर्णघण्टाद्यलङ्कृताम्।
गुरवे दक्षिणां दद्यात् ततो देव्या विसर्ज्जनम् ॥"

अस्य प्रयोगः। कृतनित्यक्रियः स्वस्तिवाचनपूर्व्वकं सङ्कल्पं कुर्य्यात्। आद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवतायाः पूजार्थं अमुकयन्त्रसंस्कारमहं करिष्ये। इति संकल्प्य पञ्चगव्यमानीय ह्रौमिति मन्त्रेणाष्टोत्तरशतं अभिमन्त्र्य प्रणवेन यन्त्रं तत्र क्षिपेत्। तत उत्तोल्य स्थापयेत्। ततः शीतलजलचन्दनगन्धकस्तूरीकुङ्कुमैः स्नापयित्वा पञ्चगव्यमानीय ह्रौमिति मन्त्रेणाष्टोत्तरशतमभिमन्त्र्य प्रणवेन पूर्व्ववत् शोधयित्वा स्नापयेत्। तत्र क्रमः। प्रथमं क्षीरेण स्नापयित्वा धूपं दद्यात्। एवं दध्ना घृतेन मधुना शर्करया च। ततोऽष्टभिः कलसैः कुङ्कुमगोरोचनाचन्दनमिश्रितैस्तोयैः स्नापयेत्। सर्व्वत्र स्नानं मूलमन्त्रेण ततो यन्त्रमुत्तोल्य कुशाग्रेण तत् स्पृष्ट्वा यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचोदयात्। इत्यष्टोत्तरशतमभिमन्त्र्य प्राणप्रतिष्ठां कुर्य्यात्। अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुःसामानि छन्दांसि चैतन्यं देवता प्राणप्रतिष्ठायां विनियोगः। तद्यथा। आं ह्रीं क्रौं यं रं लं वं शं षं सं ह्रौं हं सः अमुकदेवतायाः प्राणा इह प्राणाः। एवं आमित्यादि अमुकदेवतायाः जीव इह स्थितः। एवं आमित्यादि अमुकदेवतायाः सर्व्वेन्द्रियाणि। एवं आमित्यादि अमुकदेवताया वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति प्राणान् प्रतिष्ठाप्य तत्र प्रकृतदेवतामावाह्य षोड़शोपचारैः पञ्चोपचारैर्व्वा पूजयेत्। ततः पट्टसूत्रादिकं दत्त्वा अष्टोत्तरशतं जप्त्वा शक्तश्चेत् बलिं दद्यात्। ततोऽष्टोत्तरशतहोमं कृत्वा प्रत्याहुतिसम्पातं दद्यात्। होमाभावे द्विगुणजपः कार्य्यः। ततो दक्षिणां दत्त्वा अच्छिद्रावधारणं कुर्य्यात्। इति तन्त्रसारः ॥ ✱ ॥ औषधपाकार्थयन्त्राणि यथा,—

"भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके।
कूपिकाकण्ठपर्य्यन्तं वालुकाभिश्च पूरिते ॥
भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते।
वालुकायन्त्रमेतद्धि यन्त्रतन्त्रबुधैः स्मृतम् ॥"

इति वालुकायन्त्रम् ॥

"निबद्धमौषधं सूतं भूर्ज्जे तत्त्रिगुणाम्बरे।
रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि ॥
सन्धानपूर्णे कुम्भान्तः स्वावलम्बनसंस्थितम्।
अधस्ताज्ज्वालयेदग्निं तत्तदुक्तक्रमेण हि।
दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥"

सन्धानं काञ्जिकादि। इति दोलायन्त्रम् ॥ ✱ ॥

"साम्बुस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च।
पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥"

इति स्वेदनयन्त्रम् ॥

"अधःस्थाल्यां रसं क्षिप्त्वा निदध्यात्तन्मुखोपरि।
स्थालीमूर्द्ध्वमुखीं सम्यक् निरुध्य मृदुमृत्स्नया ॥
ऊर्द्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्लामारोप्य यत्नतः ॥
अधस्ताज्ज्वालयेदग्निं यावत् प्रहरपञ्चकम्।
स्वाङ्गशीतं ततो यन्त्रादुद्धरेद्यात्रसमुत्तमम्।
विद्याधराभिधं यन्त्रमेतत्तज्ज्ञैरुदाहृतम् ॥"

इति विद्याधरयन्त्रम् ॥

"वालुकासु समस्ताङ्गं गर्त्ते मूषारसान्विता।

दीप्तोपलैः मंत्रगुयाद्यन्त्रं भूधरनामकम् ॥"

इति भूधरयन्त्रम् ॥

"यन्त्रं डमरुसंज्ञं स्यात्तत् स्याल्योर्मुद्रिते मुखे॥"

इति डमरुयन्त्रम्। इति भावप्रकाशः॥ (तथाच।

"अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा।
सैव छिद्रान्विता मध्ये गम्भीरामारणोचिता॥"

इति अन्धमूषायन्त्रम् ॥

"द्वौ भागौ तु सदुग्धस्य एकावल्लीकन्दत्तिका।
लोहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥
नरकेशसमं किञ्चित् छागीदुग्धेन पेषयेत्।
माषद्वयं दृढं मर्द्द्य तेन मूषां सुसम्पुटाम् ॥
शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः सन्धि लेपयेत्।
रौद्रमूषा समाख्याता सम्यक्पारदसाधिका॥"

इति मूषायन्त्रम् ॥ ॥

"बालुकापूरिते भाण्डे तन्मध्ये सूतकं क्षिपेत्।
रसं मूषागतञ्चैव भाण्डं स्थावेण रोधयेत् ॥
लिप्त्वा मृल्लवणैः सन्धिं पाचयेच्चुल्लिकाग्निना।
बालुकायन्त्रमेतद्धि योजयेद्रसकर्म्मणि ॥"

इति बालुकायन्त्रम् ॥

"तिर्य्यक्कण्ठं काचकुप्यां गिलयेत् सल्पभाण्डकैः।
तिर्य्यक्कृत्वा पचेत् भाण्डं वकयन्त्रमिति स्मृतम्॥"

इति वकयन्त्रम् ॥

"ऊर्द्धाधः संपुटाकारं तन्मध्ये रससंस्थितम्।
कच्छपीयन्त्रमेतद्धि रसादिद्रव्यसाधनम् ॥"

इति कच्छपीयन्त्रम् ॥॥

इति वैद्यकरसेन्द्रसारसंग्रहे जारणाद्यधिकारे॥

चिकित्सोपयुक्तयन्त्रविवृतिर्यथा,—

"यन्त्रशतमेकोत्तरमत्र हस्तमेव प्रधानतमं यन्त्राणामवगच्छ। किं कारणम्। यस्माद्धस्ता-द्दृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद्यन्त्रकर्म्म-णाम्। तत्र मनःशरीराबाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि। तानि षट्प्रका-राणि। तद्यथा। स्वस्तिकयन्त्राणि। सन्दंश-यन्त्राणि। तालयन्त्राणि। नाडीयन्त्राणि। शलाकायन्त्राणि। उपयन्त्राणि चेति ॥

तत्र चतुर्व्विंशतिः स्वस्तिकयन्त्राणि। द्वे सन्दंश-यन्त्रे। द्वे एव तालयन्त्रे। विंशतिर्नाड्यः। अष्टा-विंशतिः शलाकाः। पञ्चविंशतिरुपयन्त्राणि॥ तानि प्रायशो लौहानि भवन्ति तत्प्रतिरूप-काणि वा तदलाभे। तत्र नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि तस्मात् तत्सारूप्यादागमादु-पदेशादन्ययन्त्रदर्शनाद्युक्तितश्च कारयेत्। समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च। सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥

तत्र स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि सिंहव्याघ्रवृकतरक्षृक्षद्वीपिमार्जारशृगाल-मृगैर्व्वारुककाककङ्कुररचासभासशशघात्यु-लूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजाञ्जलिकर्णाव-भञ्जननन्दिमुखमुखानि मसूराकृतिभिः कीलै-रवबद्धानि मूलेऽङ्कुशवदावृत्तवारङ्गाण्यस्थि-विलग्नशल्योद्धरणार्थमुपदिश्यन्ते॥॥सनिग्रहो-ऽनिग्रहश्च सन्दंशौ षोड़शाङ्गुलौ भवतस्त्वङ्मांस-सिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते।

तालयन्त्रे द्वादशाङ्गुले मत्स्यतालुवदेकतालद्वि-तालके कर्णनासानाड़ीशल्यानामाहरणार्थम्।

नाड़ीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येक-तोमुखान्युभयतोमुखानि च तानि स्रोतोगत-शल्योद्धरणार्थं रोगदर्शनार्थमाचूषणार्थं क्रिया-सौकर्य्यार्थञ्चेति तानि स्रोतोद्वारपरिणाहानि यथायोगपरिणाहदीर्घाणि च।

भगन्दरार्शोऽर्व्वुदव्रणवस्त्युत्तरवस्तिमूत्रवृद्धिद-कोदरधूमनिरुद्धप्रकशसन्निरुद्धगुदयन्त्राण्यलाबु-शृङ्गयन्त्राणि चोपरिष्टाद्वक्ष्यामः।

शलाकायन्त्राण्यपि नानाप्रकाराणि नाना-प्रयोजनानि यथायोगपरिणाहदीर्घाणि च तेषां गण्डूपदशरपुङ्खसर्पफणवड़िशमुखे द्वे द्वे एषणा-व्यूहनचालनाहरणार्थमुपदिश्येते। मसूरदल-मात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्ध-रणार्थम्। षट्कार्पासकृतोष्णीषाणि प्रमार्ज्जन-क्रियासु। त्रीणि दर्व्वाकृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम्। त्रीण्यन्यानि जाम्बव-वदनानि त्रीण्यङ्कुशवदनानि षड़ग्निकर्म्मस्व-भिप्रेतानि। नासार्व्वुदहरणार्थमेकं कोलास्थि-दलमात्रमुखं खल्लतीक्ष्णौष्ठम्। अञ्जनार्थमेकं कलायपरिमण्डलमुभयतो मुकुलाग्रम्। मूत्र-मार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाण-परिमण्डलमिति।

उपयन्त्राण्यपि रज्जुवेणिकापट्टचर्म्मान्तवल्कल-लतावस्त्राष्ठीलाश्म-मुद्गर-पाणिपाद-तलाङ्गुलि-जिह्वा-दन्तनखमुख-बालाश्वकटकशाखाष्ठीवन-प्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि चेति।

एतानि देहे सर्व्वस्मिन् देहस्यावयवे तथा।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत्॥
यन्त्रकर्म्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तन-चालनविवर्त्तनविवरणपीड़नमार्गविशोधनविक-र्षणाहरणाञ्चनोन्नमनविनमनभञ्जनोन्मथना-चूषणैषणदारणर्ज्जूकरणप्रक्षालनप्रधमनप्रमा-र्ज्जनानि चतुर्विंशतिः॥

स्वबुद्ध्या चापि विभजेद्यन्त्रकर्म्माणि बुद्धिमान्।
असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः॥

तत्रातिस्थूलमसारमतिदीर्घमतिह्रस्वमग्राहि विषमग्राहि वक्रं शिथिलमत्युन्नतं मृदुकीलं मृदुमुखं मृदुपाशमिति द्वादश यन्त्रदोषाः।
एतैर्दोषैर्विनिर्म्मुक्तं यन्त्रमष्टादशाङ्गुलम्।
प्रशस्तं भिषजा ज्ञेयं तद्धि कर्म्मसु योजयेत्॥
दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः।
निर्हरेत्तु शनैः शल्यं शल्ययुक्त्यपेक्षया॥

विवर्त्तते साध्ववगाहते च
शल्यं निगृह्योद्धरते च यस्मात्।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्व्वेष्वधिकारि चैव॥"

इति सुश्रुते सूत्रस्थाने सप्तमेऽध्याये॥॥

गोलाध्यायोक्तयन्त्राणि यथा,—

"अथ यन्त्राध्यायो व्याख्यायते। तत्रादौ त
रम्भप्रयोजनमाह।

दिनगतकालावयवा ज्ञातुमशक्या यतो वि
यन्त्रैः

वक्ष्ये यन्त्राणि ततः स्फुटानि संक्षेपतः कति
चित्

गोलो नाड़ीवलयं यष्टिः शङ्कुर्घटी चक्रम्।
चापं तुर्य्यं फलकं धीरेकं पारमार्थिकं यन्त्रम्

"अथ प्रथमं गोलयन्त्रमाह।

अपवृत्तगाद्भिचिह्नं क्षितिजे धृत्वा कुजे
संसक्तं

नाड़ीवृत्ते विन्दुं कृत्वा धृत्वाथ जलसमं क्षि
जम्

रविचिह्नस्य च्छाया पतति कुमध्ये यथा तथ
विधृते

उन्नगोले कुजविन्दोर्मध्ये नाड्यो द्युयाताः स्यु

"अथ नाड़ीवलयमाह।

अपवृत्ते कुजलग्ने लग्नं नाड्यो खगोलनलिकाम
भूस्थं ध्रुवयष्टिस्थं चक्रं षष्ट्या निजोदयेष्वाङ्कग
वृत्तेऽर्द्धीभायासृदयेऽर्के न्यस्य नाड़िका ज्ञेय
दृक्च्छायासूर्य्यान्तरेऽथ लग्नं प्रभायाश्च॥
केनचिदाधारेण ध्रुवाभिमुखकीलकेऽत्र धृते
अथवा कीलच्छायातलमध्ये स्युर्नता नाड्यः
घटिकायन्त्रलक्षणादिकं घटीयन्त्रशब्दे द्रष्टव्य

"अथ शङ्कुमाह। [शङ्कु
समतलमस्तकपरिधिर्भ्रमसिद्धो दन्तिदन्त
तच्छायातः प्रोक्तं ज्ञानं दिग्देशकालानाम्

इति शङ्कुयन्त्रम्

अथ चक्रमाह।

चक्रं चक्रांशाङ्कं परिधौ श्रवणसूत्रलादिकाधार
धात्री भिभ आधारात् कल्प्या भार्द्धेऽत्र
खार्द्धेच

तन्मध्ये सूक्ष्माक्षं क्षिप्त्वार्काभिमुखनेमिकं धार्य्यं
भूमेरुन्नतभागास्तत्राक्षच्छायया भुक्ताः॥
ततस्वार्द्धान्तञ्च नता उन्नतलवसंगुणीकृतं द्यु
लम्

द्युदलोन्नतांशभक्तं नाड्यः स्थूलाः परैः प्रोक्ताः

"अथ वेधेन ग्रहज्ञानमाह।

"पैत्र्यपुष्यान्तिमवारुणाना-
मच्चद्वयं नेमिगतं यथा स्यात्।
दूरेऽन्तरेऽप्यंशुभखेचरौ वा
तथात्र यन्त्रं सुधिया प्रधार्य्यम्॥
नेमिस्थहद्यान्तगतं प्रपश्येत्
खेटञ्च धिष्ण्यस्य च योगताराम्।
नेम्यक्षयोरन्तरगुणोऽस्तु मध्ये
येऽंशाः स्थिता भध्रुवको युतस्ते॥
प्रत्यक् स्थिते भेऽथ पुरःस्थिते ते-
ऽर्द्धोनो ध्रुवः स्यात् खचरस्य भुक्तम्॥"

"अथ चापं तुर्य्यगोलं चाह।

दलीकृतं चक्रमुशन्ति चापं
कोदण्डखण्डं खलु तुर्य्यगोलम्॥"

"अथ फलकयन्त्रमाह ।
इष्टक्षवेऽथ स्फुटकाल उक्तः
सुखेन गाम्भीर्ययुतं मयातः ।
यन्त्रोत्तमं निखिलस्य सारं
स्पष्टं प्रवक्ष्ये फलकाख्ययन्त्रम् ॥"
"इदानीं यन्त्रलक्षणमाह ।
आयतं चतुरस्रकं सुफलकं ज्याङ्गा-९० ङ्गुलै-
र्विस्तृतं
विस्ताराद्द्विगुणा-१८० यतं सुगणकेनायाममध्ये
तथा ।
आधारः खयमाङ्गुलादिघटितः कार्य्या च
रेखा तत-
स्त्वाधाराद्वलम्बकवत्सदृशी वा लम्बरेखोच्यते ॥
तस्यां नवख-९० ङ्गुलकैर्विभज्य
प्रत्यङ्गुलं तिर्य्यगतः प्रसार्य्य ।
स्यात्तानि तन्नायतसूत्ररेखा
जीवाभिधानाः सुधिया विधेयाः ॥
आधारतोऽथः खगुणा-३० ङ्गुलेषु
ज्यालम्बयोगे सुषिरञ्च सूक्ष्मम् ।
इष्टप्रमाणा सुषिरे शलाका
क्षेप्याक्षसंज्ञा खलु सा प्रकल्प्या ॥
अक्षाङ्गुलव्यासमतश्च रन्ध्रात्
कृत्वा सुवृत्तं परिधौ तदङ्कम् ।
षष्ट्या घटीनां भगणांश-३६० कैश्च
प्रत्यंशकं चाप्युपलैश्च दिग्भिः ॥
अथ सरन्ध्रा तनुपट्टिकैका
षष्ट्यङ्गुला दीर्घतया तथाक्षात् ॥"
इदानीं यन्त्रोपकरणमाह ।
यत् खण्डकैः स्थूलचरं फलाख्यं
तन्नोक्त-१८ वृत् स्याच्चरशिञ्जिनीह ॥"
इदानीं पट्टिकासाधनमाह ।
वेदाः ४ भवाः ११ शैलभुवो १७ धृतिश्च १८
विश्वे १३ च बाणाः ५ फलकार्द्धभिन्नाः ।
अर्कोद्धृताः स्युः क्रमशः खदेषो
राश्यर्द्धलभ्यानि हि खण्डकानि ॥
तैः क्रान्तिपाताद्रविभुक्तयज्या
षड्राहृताद्यमवदेन युक्ता ।
दिग्भी क्रान्त्या भवतीह यष्टि-
र्या पट्टिकायां सुषिरात् प्रदेया ॥"
इदानीं यष्टिप्रयोजनमाह ।
र्थ्यं तथा फलकयन्त्रमिदं यथैव
त्यार्कयोर्गच्छति तुल्यमिनस्य तेजः ।
याच्छया भ्रमति तत्परिधौ यमंशं
तांशके मतिमता तरविः प्रकल्प्यः ॥
चप्रोता रविकम्पगता पट्टिका न्यस्य तस्माद्-
रेखाद्युपरि फलकेऽथ च गोलक्रमेण ।
द्दृश्यचरदलगुणाङ्के या च्या तया न
मे इति नतघटिकाः स्युर्नता उन्नताः ॥"
अथ यष्टियन्त्रमाह ।
ज्याविष्कम्भार्द्धं वृत्तं कृत्वा दिगङ्कितं तच्च ।
भाभ्यां प्राक् पश्चात् स्युभ्यरतश्च तन्मध्ये ॥
परिधौ षष्ट्यङ्कं यष्टिमेच्छुतिमितः क्षिप्ते ।

चिह्नाङ्कुला निधेया षष्ट्यग्राभ्यान्तरं यावत् ॥
तावत्या मौर्व्या यद्द्वितीयवृत्ते धनुर्भवेत् तत्र ।
दिनगतशेषा नाड्यः प्राक् पश्चात् स्युः क्रमेणै-
वम् ॥"
"इदानीं धीयन्त्रं विवक्षुरादौ तत्प्रशंसामाह ।
अथ किमु पृथुतन्त्रैर्धीमतो भूरियन्त्रैः
स्वकरकलितयष्टेर्दत्तमूलाग्रदृष्टेः ।
न तदविदितमानं वस्तु यद्दृश्यमानं
दिवि भुवि च जलस्थं प्रोच्यतेऽथ स्थलस्थम् ॥
अथ प्रश्नः ।
वंशस्य मूलं प्रविलोक्य चाग्रं
तत्स्थान्तरं तस्य समुच्छ्रयञ्च ।
यो वेत्ति यष्ट्यैव करस्थयासौ
धीयन्त्रवेदी वद किं न वेत्ति ॥"
"अथ यष्ट्या ध्रुववेधेन पलभामाह ।
यष्ट्यग्रमूलसंस्थं विद्ध्वा ध्रुवमग्रमूलयोर्लम्बौ ।
बाहुर्लम्बान्तरभूर्लम्बोच्छ्रायान्तरं कोटिः ॥
कोटिर्द्वादशगुणिता बाहुविभक्ता पलप्रभा
ज्ञेया ॥"
"इदानीं वंशादिवेधमाह । .
विद्ध्वैवं वंशतलं दृगुच्छ्रायाहताद्बाहोः ।
कोट्या लब्धं ज्ञेयं खर्वंशमध्ये महीमानम् ॥
विद्धाग्रो वंशाग्रं भूमानं कोटिसंगुणं भक्तम् ।
दोष्णा वंशोच्छ्रायो दृगुच्छ्रायेण संयुतो ज्ञेयः ॥
उदाहरणम् ।
पञ्चघ्नाङ्कुला १४५ यष्टिरष्टयष्टिर्दृगुच्छ्रयः ।
षट्करासत्रवेधे दोः कोटिः सप्तदशाङ्कुला ॥
अग्रवेधे रसेषा ११६ दोः कोटिस्तुरगकुञ्जराः ।
वंशस्य यस्य तन्मानं चात्मवंशान्तरं वद ॥"
"अथ केवलाग्रवेधेनाह ।
अग्रं विद्ध्वाथैष्यः पुनरपविष्टश्च तद्विदात् ॥
निजभुजभक्ते कोटी तदन्तरहृतो दृगौच्च्यविश्लेषः
भूमिर्वंशौच्चमतः पृथक् पृथक् पूर्ववज्ज्ञेयम् ॥
अथ प्रश्नः ।
ऊर्द्ध्वस्थस्य यदादिभिर्यमविहितस्याप्रमाणं सखे !
वंशस्य प्रगुणस्य यस्य सुषमे देशे समालोक्यते ।
अग्रेण समवस्थितो [illegible] वदस्वान्तरं चोच्छ्रयं
मन्ये यन्त्रविदां वरिष्ठ [illegible] यातोऽसि धीयन्त्र-
वित् ॥
उदाहरणम् ।
दृष्टयष्ट्योरूर्द्ध्वसंस्थेन वंशाग्रं विद्धता भुजः ।
दृष्टचतुष्करोऽथान्ययष्ट्या ज्याङ्गाङ्गुलः सखे ।
निविष्टेन तथा कोटिरङ्गुलं वेधयोरपि ।
आत्मवंशान्तरं ब्रूहि वंशोच्छ्रायञ्च वेधवित् ॥"
"अथ जलान्तर्वेधमाह ।
एवं तोयेऽप्यौच्च्यं तत्र दृगौच्च्योज्झितं भवति ।
किंवा यष्ट्या कोटौ दृगुच्छ्रायौ जलान्तरे
माहुः ।
अथ प्रश्नः ।
दूरस्थस्य न दूरगस्य यदि वा तटस्थस्य तटस्य वा
वंशस्य [illegible] सलिले दृश्यमानं सखे ।
अग्रेण समवस्थितो यदि वदस्वान्तरं चोच्छ्रयं

[illegible] सर्वेषामतीन्द्रियममृतज्ञानेन मन्ये भुवि ॥
उदाहरणम् ।
दृष्टा येन बहुला कोटिर्बाहुश्च चतुरङ्गुलः ।
ऊर्द्ध्वस्थेनोपविष्टेन बाहुरेकादशाङ्गुलः ॥
कोटिरष्टाङ्गुला तोये वंशाग्रं विध्यता सखे ! ।
चात्मवंशौ दृगुच्छ्रायौ वंशौच्च्यं चान्तरं वद ॥"
"किंवा यष्ट्यग्रस्थोदाहरणम् ।
षड्दिक्रमरैस्तुल्याङ्गुलाग्रयवा क्रमात् ।
आत्मतोयान्तरं दृष्टा वंशौच्च्यं चान्तरं वद ॥"
"अथ स्वयंवहमाह ।
लघुदारुजसमचक्रे समसुषिराराः समान्तरा
नेम्याम् ।
किञ्चिद्वक्रास्तोन्याः सुषिरस्यार्द्धे पृथक् तासाम् ॥
रसपूर्णे तच्चक्रं द्व्याधाराक्षस्थितं स्वयं भ्रमति ॥"
"अथान्यदाह ।
उत्कीर्य्य नेमिमथवा परितो मदनेन संलग्नम् ।
तदुपरि तालदलाद्यं कृत्वा सुषिरे रसं क्षिपेत्
तावत् ॥
यावद्रसैकपार्श्वे छिद्रजलं नाप्नुतो याति ।
पिहितच्छिद्रं तदतश्चक्रं भ्रमति स्वयं कृता-
हृतम् ॥"
"अथान्यदाह ।
ताम्रादिमयस्याङ्कुशरूपनलस्याम्बुपूर्णस्य ॥
एकं कुण्डजलान्तर्द्वितीयमग्रं त्वधोमुखञ्च
बहिः ।
युगपन्मुक्तं चेत् कं नलेन कुण्डाद्बहिः पतति ॥
नेम्यां बद्ध्वा घटिकाश्चक्रं जलयन्त्रवत् तथा
धार्य्यम् ।
नलकप्रच्युतसलिलं पतति यथा तद्घटीमध्ये ॥
भ्रमति ततस्तत् सततं पूर्णघटीभिः समाकृष्टम् ।
चक्रच्युतं तदुदकं कुण्डे याति प्रणालिकया ॥"
"इदानीमन्येषां स्वयंवहमुपहसन्नाह ।
यदधोरभूनलं तत् सापेक्षत्वात् स्वयंवहं ग्राम्यम् ।
चतुरचमत्कारकरी युक्तिर्यन्नं नहि ग्राम्या ॥
एवं बहुधा यन्त्रं स्वयंवहं कुहकविद्यया भवति ।
नैवं गोलाश्रितया पूर्वोक्तत्वाच्च याप्युक्तम् ॥"
इति सिद्धान्तशिरोमणौ गोले यन्त्राध्यायः ॥)
यन्त्रकं, क्ली, यन्त्रकाष्ठम् । (कुन्दम् । इति हेमचन्द्रः ।
४।५७२ ॥) कुँद इति भाषा । यन्त्यते काष्ठमने-
नेति यमधातोष्ट्रप्रत्ययेन यन्त्रं ततः स्वार्थे कप्रत्य-
येन निष्पन्नम् । ( यथा, सुश्रुते । ४ । २ ।
"कार्य्यो नोपखिकायन्त्रः कर्म्मोमाषेण यन्त्रकम् ।
न कुर्य्यात् चक्रलिकाच तेन क्लिश्यति हि व्रणः ॥"
यन्त्रयति बध्नाति सेतुप्रभृतीनीति । यन्त्र+
ण्वुल् । सेतुप्रभृतिनिर्म्मातरि, त्रि । यथा, रामा-
यणे । २ । ८० । १ ।
"स्वकर्म्माभिरताः शूराः खनकाः यन्त्रकास्तथा ।"
"यन्त्रकाः जलप्रवाहादियन्त्रणसमर्थाः ।" इति
तट्टीका ॥ )
यन्त्रगृहं, क्ली, (यन्त्रस्य गृहम् । ) तैलिशाला ।
इति हेमचन्द्रः । ४ । ६३ ॥ घानिघर इति
भाषा ॥

यन्त्रगोल:, पुं, कलायविशेष:। इति शब्दचन्द्रिका ॥ मटर् इति भाषा ॥

यन्त्रणं, क्ली, (यन्त्र+ल्युट्।) रक्षणम्। बन्धनम्। (यथा, सुश्रुते सूत्रस्थाने अष्टादशाध्याये। "यन्त्रणमत ऊर्द्ध्वमधस्तिर्य्यक् ॥") नियमनम्। इति मेदिनी। णे, ७१ ॥ (यथा, सुश्रुते उत्तरतन्त्रे ४१ अध्याये।
"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात्।
व्रणितस्य भवेच्छोष: स चासाध्यतमस्तत: ॥")

यन्त्रणा, स्त्री, (यन्त्रि+"ण्यासश्रन्थो युच्।" ३।३।१०७। इति युच्। टाप्।) पीडा। यथा, नैषधे। ४।१०।
"मदनतापभरेण विदीर्य्य नो
यदुदपाति हृदा दमनस्वसु:।
निविडपीनकुचद्वययन्त्रणा
तमपराधमधात् प्रतियन्त्रती ॥"
(पीडाशब्देऽस्या विशेषो विज्ञेय: ॥)

यन्त्रपेषणी, स्त्री, (पिष्यतेऽनयेति। पिष्। करणे ल्युट्। ङीप्। यन्त्रमेव पेषणी।) पेषणार्थयन्त्रम्। इति जटाधर: ॥ याँता इति भाषा ॥

यन्त्रिका, स्त्री, (यन्त्रयति ज्ञातकौतुका पीडयतीति। यन्त्रि+ण्वुल्। टापि अत इत्वम्।) पत्न्या: कनिष्ठा भगिनी। यथा, हेमचन्द्र:।
"कनिष्ठा श्यालिका हाली यन्त्रिका केलिकुञ्चिका ॥"

यन्त्रित:, त्रि, (यन्त्रि+क्त:।) बद्ध:। इति धरणि: ॥ (यथा, देवीभागवते। ३।१७।१७।
"ते भ्रात्रा जयकुर्व्वन्तु हठादाक्रम्य यन्त्रिताम्।
वेगमाना मुनिं प्राह सुरभि: साश्रुलोचना ॥")

यन्त्री, [न्] त्रि, यन्त्रविशिष्ट:। यन्त्रशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्न: ॥ (यन्त्रयति बध्नातीति। यन्त्रि बन्धने+णिनि:। बन्धनकारक:। यथा, रामायणे। १।१।७६।
"अक्षेयोऽनुत्तमास्त्रानं ज्ञात्वा पैतामहाद्वरात्।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ॥")

यभ, ओ मैथुने। इति कविकल्पद्रुम: ॥ (भ्वा०-पर०-सक०-अनिट्।) ओ, अयाप्सीत्। यभति युवा। इति दुर्गादास: ॥

यम, ओ उ विरतौ। इति कविकल्पद्रुम: ॥ (भ्वा०-पर०-सक०-अनिट्। क्त्वावेट्।) ओ, यन्ता। उ, यमित्वा यन्त्वा। विरतिर्निवृत्ति:। यच्छति पापात् साधु:। इति दुर्गादास: ॥

यम, क मि परिवेषणे। तदभावे। इति कविकल्पद्रुम: ॥ (चुरा०-पर०-सक०-सेट्।) क मि, यमयति यामयति। परिवेषणं भक्षादेरर्पणम्। [illegible]मिश्रेऽपि। विवक्षयाभाविवक्षस्य रूपमिति रमानाथ:। केचित्तु परिवेषण एवायं मित्संज्ञ:। यमयत्यन्नं द्विजाय यज्वा। अन्यत्र नियामयति संयामयति इत्याहु:। अन्ये तु अपरिवेषण एवायं मित्संज्ञ:। 'नियमयति विमार्गप्रस्थितानाञ्च दण्डम्।' इति शाकुन्तले। परिवेषणे तु यामयत्यन्नं द्विजाय यज्वा इत्याहु:। तेन उभयस्य प्रामाणिकत्वादुभयत्र विकल्पस्यानर्थकत्वादनुबन्ध: कृत:। इति दुर्गादास: ॥

यम:, पुं, (यमयति नियमयति जीवानां फलाफलमिति। यम्+अच्।) दक्षिणदिक्पाल:। तत्पर्य्याय:। धर्म्मराज: २ पितृपति: ३ समवर्त्ती ४ परेतराट् ५ कृतान्त: ६ यमुनाभ्राता ७ शमन: ८ यमराट् ९ काल: १० दण्डधर: ११ श्राद्धदेव: १२ वैवस्वत: १३ अन्तक: १४। इत्यमर:।१।१।६१ ॥ धर्म्म: १५ धर्म्मराट् १६ जीवितेश: १७ महिषध्वज: १८ औडुम्बर: १९ दण्डधार: २० कीनाश: २१ दम: २२ महिषवाहन: २३ शीर्णपाद: २४ भीमशासन: २५ कङ्क: २६ हरि: २७। इति शब्दरत्नावली ॥ कर्म्मकर: २८। इति जटाधर: ॥ * ॥ चतुर्द्दशयमतर्पणं यथा,—
"यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम्।
यमुनायां विशेषेण नियतस्तर्पयेद्यमान् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय वै नम: ॥
एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन् दद्यात् जलाञ्जलीन्।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥"
इति तिथ्यादितत्त्वधृतभविष्यपुराणवचनम् ॥
तस्योत्पत्तिर्यथा,—
"संज्ञा च रविणा दृष्टा निमीलयति लोचने।
यतस्तत: सरोषोऽर्क: संज्ञां निष्ठुरमब्रवीत् ॥
मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमम्।
तस्माज्जनिष्यसे मूढे! प्रजासंयमनं यमम् ॥"
मार्कण्डेय उवाच।
"ततस्तस्यास्तु संजज्ञे भर्त्तृशापेन तेन वै।
यमश्च यमुना चेयं प्रख्याता सुमहानदी ॥"
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे ७७ अ: ॥
पुण्यात्मनां सम्बन्धे तस्य रूपं यथा,—
"तानागतांस्ततो दृष्ट्वा नरान् धर्म्मपरायणान्।
भास्करि: प्रीतिमासाद्य स्वयं नारायणो भवेत् ॥
चतुर्ब्बाहु: श्यामवर्ण: प्रफुल्लकमलेक्षण:।
शङ्खचक्रगदापद्मधारी गरुडवाहन: ॥
स्वर्णयज्ञोपवीती च स्मेरचारुतरानन:।
किरीटी कुण्डली चैव वनमालाविभूषित: ॥"
पापिनां सम्बन्धे तस्य रूपं यथा,—
"त्रिंशद्योजनदीर्घाङ्गो वापीसदृशलोचन:।
धूम्रवर्णो महातेजा: प्रलयाम्भोधरध्वनि: ॥
कृष्णाधिराजलोमा च ज्वलदग्निशिखाग्रवत्।
नानारत्नस्फुरच्चापखड्गैर्व्वितमहानिल: ॥
सुदीर्घदशनश्रेणि: शूर्पोपमनखावलि:।
प्रचण्डमहिषारूढ: संदष्टदशनच्छद: ॥
दण्डहस्तश्चर्म्मवासा भ्रूकुटीकुटिलाकृति: ॥"
इति पाद्मे क्रियायोगसारे २२ अध्याय: ॥

अस्यानधिकारो यथा,—
"प्रोवाच धर्म्मं वरदं ब्रवीमि
कार्य्यं मया तत् खलु धर्म्मराज! ॥
ब्रह्मोवाच।
ये भक्ता: पुण्डरीकाक्षे कर्म्मणा मनसा गिरा
स्वकर्म्मनिरता दान्ता न नियम्या हि ते त्वया।
लभ्य: संपूजितो येस्तु यै: लभ्य: ऋतुमाश्रित:
येषु नित्यं स्थित: कृष्णो न ते त्वद्विषयोपगा:
नम: कृष्णाच्युतानन्त वासुदेवेत्युदीरितम्।
यैर्भावभावितो धर्म्म! न ते त्वद्विषयोपगा:
दानं ददद्भिर्येर्नित्यमच्युत: प्रीयतामिति।
ब्रह्मापुरस्सरैर्धर्म्म! न ते त्वद्विषयोपगा:।
उत्तिष्ठद्भि: स्वपद्भिश्च प्रपद्भिश्च जनार्द्दन:।
यै: स्मृतस्तु सदा धर्म्म! न ते त्वद्विषयोपगा
सर्व्वबाधासु ये कृष्णं संस्मरन्त्युच्चरन्ति च।
तद्भावभाविनो ये च न ते त्वद्विषयोपगा: ॥
स एव धाता सर्व्वस्य तन्नियोगकरा वयम्।
यमसंयमने व्यक्त: यौऽव्यक्तसंयमको हरि: ॥
इति वह्निपुराणे नरसिंहप्रादुर्भावाध्याय: ॥
अपि च।
ब्राह्मण उवाच।
"यत् कृत्वा सुमहत् पुण्यं धर्म्माधर्म्मविनिश्चये
प्रमाणं त्वं हि लोकानां परं मे ब्रूहि तद्यम! ॥
यम उवाच।
यमो यम इति श्रुत्वा वृथा हृद्विजते जन:
आत्मा च यमितो येन न तस्येव यम: स्मृत
आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम्
ध्यानं प्रसादो माधुर्य्यं सन्तोषश्च यमा दश
यमैश्च नियमैश्चैव य: करोत्यात्मसंयमम्।
स चाहत्वा तु मां याति परं ब्रह्म सनातनम्
इति तत्रैव यमशम्भिलोपाख्यानम् ॥ * ॥
सावित्रीकृतं यमाष्टकं स्तोत्रं यथा,—
सावित्र्युवाच।
"तपसा धर्म्ममाराध्य पुष्करे भास्कर: पुरा
धर्म्मांशं यं सुतं प्राप धर्म्मराजं नमाम्यहम्
समता सर्व्वभूतेषु यस्य सर्व्वस्य साक्षिण:।
अतो यन्नाम शमनमिति तं प्रणमाम्यहम्।
येनान्तश्च कृतो विश्वे सर्व्वेषां जीविनां परम्
कर्म्मानुरूपकाले च तं कृतान्तं नमाम्यहम्
बिभर्त्ति दण्डं दण्डाय पापिनां शुद्धिहेतवे।
नमामि तं दण्डधरं य: शास्ता सर्व्वजीविनाम्
विश्वे च कलयत्येव य: सर्व्वायुश्च सन्ततम्।
अतीव दुर्निवार्य्यश्च तं कालं प्रणमाम्यहम्।
तपस्वी वैष्णवो धर्म्मी संयमी विजितेन्द्रिय:।
जीविनां कर्म्मफलदं यमं प्रणमाम्यहम्।
स्वात्मारामश्च सर्व्वज्ञो मित्र: पुण्यकृतां भवे
पापिनां क्लेशदो यस्तं पुण्यमित्रं नमाम्यहम्।
यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा।
यो ध्यायति परं ब्रह्म तमीशं प्रणमाम्यहम्।
इत्युक्त्वा च सावित्री प्रणनाम यमं तत:।
यमस्तां विष्णुभजनं कर्म्मपाकमुवाच ह ॥

अस्य व्युत्पत्तिं यमशब्दे द्रष्टव्यम् । (अश्विनौ इति, पुं । यथा, अश्ववैद्यके । १ । १५२ ।
"एकैकाङ्गेन चैकेन भिन्नेन च विशेषतः ।
यमजं वाजिनं विन्द्यात् वामनं वामना-ङ्गितम् ॥")

यमदग्निः, पुं, ( यमन् हुतभक्षणशीलः प्रज्वलितो ऽग्निरिव । पृषोदरादित्वात् अस्य यः । ) जमदग्निमुनिः । स तु परशुरामपिता । इति भरतद्विरूपकोषः । ( विवृतिरस्य जमदग्निशब्दे द्रष्टव्या । )

यमदूतः, पुं, ( यमस्य दूतः । ) यमस्य चरः । यथा,—
"यमदूतपिपासाद्यैर्येन परासुरपास्यति ।
सन्निरोधधवीर्याभि तस्मात्तं परिवर्ज्जयेत् ॥"
इति वाग्भटे शरीरस्थाने पञ्चमेऽध्याये ।)
धर्म्मेण उवाच ।
"के यूयं विकृताकाराः पाशमुद्गरपाणयः ।
दंष्ट्राकरालवदना अङ्गारसदृशप्रभाः ॥
यूयं सर्व्वे महावीराः ज्वलत्पावकलोचनाः ।
ज्ञात्वा तथापि युष्माकमियं केन सुदुर्गतिः ॥"
यमदूता ऊचुः ।
यमदूता वयं सर्व्वे यमाज्ञाकारिणः सदा ।
तद्दूतोऽयं विनाशाकं सुमहान् कुक्कलो-दयः ॥"
इति पद्मपुराणे क्रियायोगसारे ६ अध्यायः ॥

यमदूतकः, पुं, (यमस्य दूत इवेति कन् ।) काकः । इति शब्दरत्नावली ॥ (यमदूत + स्वार्थे कन् । ) यमदूतश्च ॥

यमदूतिका, स्त्री, ( यमस्य दूतिकेव । ) तिन्तिडी-वृक्षः । ( यथा,—
"जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः ।
किमाश्चर्य्यं चारभूमौ प्राणदा यमदूतिका ॥"
इत्युद्भटः ॥)

यमदेवता, स्त्री, (यमो देवता अधिष्ठात्री यस्याः ।) भरणीनक्षत्रम् । इति हेमचन्द्रः । २ । २२ ॥

यमद्रुमः, पुं, (यम इव भयावहो द्रुमः ।) शाल्मलि-वृक्षः । इति राजनिर्घण्टः ॥ ( विवरणमस्य शाल्मलिशब्दे ज्ञातव्यम् ॥ )

यमद्वितीया, स्त्री, (यमप्रिया द्वितीया इति मध्य-पदलोपिकर्म्मधारयः ।) कार्त्तिकशुक्लद्वितीया । भ्रातृद्वितीया इति ख्याता । तत्कृत्यं यथा । लिङ्गपुराणे ।
"कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।
या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मनि ॥"
तस्या इति शेषः । महाभारते ।
"कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ! ।
यमो यमुनया पूर्व्वं भोजितः स्वगृहे स्वयम् ।
तस्माज्जनार्द्दने पार्थे ! न भोक्तव्यमतो बुधैः ॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ॥"
तथा ।
"यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ।
अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः ॥"
सहजद्वयैर्भगिनीभ्रातृभिः । अर्घ्यमन्त्रः ।
"एह्येहि मार्त्तण्डज पाशहस्त
यमान्तकालोकधरामरेश ।
भ्रातृद्वितीयाकृतदेवपूजां
गृहाण चार्घ्यं भगवन्नमस्ते ॥
धर्म्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्त्र नमोऽस्तु ते ॥"
यमुनाञ्च संपूज्य नमस्कुर्य्यात् ।
"यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते ।
वरदा भव मे नित्यं सूर्य्यपुत्त्रि नमोऽस्तु ते ॥"
अन्नं दत्त्वा पठेत् ।
"भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥"
ज्येष्ठा चेत् तदाग्रजाताहमिति पठेत् ॥ अत्र भोक्तव्यं पुष्टिवर्द्धनं इति विधिश्रवणमित्याकृत-पक्षस्तथा भोजननियमस्य प्राधान्यात्तस्य मुख्य-कालोऽद्धाविभक्तदिनपञ्चमांशो ग्राह्यः । यथा दक्षः ।
"पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ।
इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् ॥"
संविभागो विभज्यास्य प्रतिपादनम् । देवोऽत्र वैश्वदेवसम्बन्धी । पञ्चमांशकालमाह तु ।
"न भुक्तौतोऽनुत्तिष्ठेत् नातिसौहित्यमाचरेत् ।
नातिप्रगे नातिसायं नातिसन्ध्यासमीपतः ॥"
इति मनुः । पूर्व्वाह्नसायाह्नयोर्दत्तान्तरकालोऽपि ग्राह्यः । सौहित्यं तृप्तिः । अत्र भोजनस्य राग-प्राप्तत्वेऽपि तत्कालस्य ।
"मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्त्यवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥"
इति कात्यायनीयेन नियमितत्वाद्भोजनकालस्य वैधत्वेन ग्राह्यत्वात् न सामान्यशास्त्रप्राप्तप-ञ्चविधयमुदाहरणकृतिः । अत्रापराह्णव्यापिनी ग्राह्या-नाम् । प्रेतपक्षोत्तरद्वितीयायां तत्सन्निधानात् । यथा च राजमार्त्तण्डे ।
"प्रे कोषे चा द्वितीयास्ताः प्रेतपक्षे गते तु याः ।
या तु कोजागरे याति चैत्रावल्याः परेऽपि च ॥
चातुर्मास्ये महाप्रे च द्वितीया या भवेत्तिथिः ।
मराखेताखनध्यायः पुराणैः परिकीर्त्तितः ॥"
ज्योतिषे । तथा यमद्वितीयायां यात्रायां मरणं भवेत् । इति तिथ्यादितत्त्वम् ॥ *॥ अस्या व्रत-विधानं यथा,—
नारद उवाच ।
"भगवन् ! प्रष्टुमिच्छामि त्वामहं विनया-न्वितः ।
तद्व्रतं ब्रूहि मे स्वामिन् ! व्रतं येन न पश्यति ।
सम्पदोऽयं महत्पुण्यं शोभनं व्रतमुत्तमम् ।
प्रसादं कुरु मे स्वामिन् ! यथाहं तत् करोमि भोः ॥"
ब्रह्मोवाच ।
यदि पृच्छसि विप्रेन्द्र व्रतानां व्रतमुत्तमम् ।
व्रतं यमद्वितीयाख्यं प्रवक्ष्ये कलुषापहम् ॥
कार्त्तिके मासि शुक्लायां द्वितीयायां मुनीश्वर ।
कर्त्तव्यं तद्विधानेन सुखसम्पत्तिदायकम् ॥
ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
प्रातः स्नात्वा द्विजः स्नानं दन्तधावनपूर्व्वकम् ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
कृतनित्यक्रियो दक्षः कुण्डलाङ्गदभूषितः ॥
विधिं विज्ञाय यत्नेन संस्थाप्यौडम्बरे शुभे ।
पद्मं सम्यक् कृत्वा पूजयेत् सुसमाहितः ॥
गन्धागुरुकर्पूरकुङ्कुमैर्द्विजसत्तम ! ।
पुष्पैर्धूपैश्च नैवेद्यैर्नारिकेलादिभिः फलैः ॥
सरस्वतीञ्च वरदां वीणापुस्तकधारिणीम् ।
ध्यायेत् शुक्लाम्बरधरां हंसवाहनसंस्थिताम् ।
ततो मृत्युविनाशार्थं बालहारां पयस्विनीम् ।
विप्राय वेदविदुषे गाञ्च दद्यात् सवत्सकाम् ।
अपमृत्युविनाशाय संसारार्णवतारिकाम् ।
विप्र तुभ्यमिमां रौद्रीं धेनुं सम्प्रददे शुभम् ।
इति वाक्यमुच्चार्य्य धेनुं दद्याद्द्विजातये ।
कुलीनाय सुशान्ताय रोगहीनाय वै ।
तदभावे चोदकुम्भं सवस्त्रं सहिरण्यकम् ।
औडुम्बरविधानेन सम्प्रदद्याद्द्विजातये ॥
तस्याप्यलाभे विप्रेन्द्र ! विप्राय वटुपानहौ ।
दद्यात् कार्त्तिकशुक्लायां द्वितीयायां विशेषतः ।
ज्ञातिश्रेष्ठान् तथा वृद्धान् संपूज्य चाभिवाद्य ।
नारिकेलादिदानेन तोषयेत् स्वजनानपि ॥
ततः सोदरसम्पन्ना भगिनी याभवन्मुने ! ।
तस्या गृहं समागत्य सहधामोऽभिराजयेत् ।
भद्रे भगिनि ! शुभगे त्वदङ्घ्रिसरसीरुहे ।
श्रेयसेऽद्य नमस्कर्त्तुमागतोऽहं तवालयम् ॥
इति श्रुत्वा भगिन्यादिः सोदरं विनयान्वितः ।
मधुवाक्यैस्ततस्तस्य पूजनं क्रियते महत् ॥
अद्य भ्रातृमती भ्रातस्त्वं मो वयसि बान्धव ।
भोक्तव्यं भोऽद्य मद्गेहे त्वायुषे कुलदीपक ! ।
कार्त्तिके शुक्लपक्षस्य द्वितीयायां सहोदरः ।
यमो यमुनया पूर्व्वं भोजितः स्वगृहेऽर्च्चितः ।
अस्मिन् दिने यमेनापि पूजिता भगिनी शु
सहोदरो वेश्मनि यो न भुङ्क्ते
यमद्वितीयादिनमेव लब्ध्वा ।
तं पापिनं सर्व्वसुराः प्रबुध्य
संसारमार्गे रटयन्ति विप्र ! ॥
तस्माद्भ्राता स्वसृगृहे भोक्तव्यं मासि कार्त्ति
शुक्लायाञ्च द्वितीयायां सर्व्वैर्धर्म्माय भो द्विज ।
वर्षे वर्षे च कर्त्तव्यं यशसे आयुषे श्रिये ।
ततः सम्प्राप्य सुमतिं भगिन्यै सुविधानतः ।
सर्व्वालङ्कारवस्त्रादिदानसत्कारमादरात् ।
प्रदद्यान्मुनिशार्द्दूल प्रसन्नमनसः सुधीः ॥
स आशीषं प्रयच्छन्ती नमस्कृत्य क्षमापये
सर्व्वा भगिन्यः सन्तोष्या ज्येष्ठाद्यास्तमहृत्तदा
वस्त्रान्नपानसत्कारैर्भोजनैः पुष्टिवर्द्धनैः ।
करोत्येवं नरो विद्वान् याति यमसदनात् ॥

अपमृत्युं न चाप्नोति सत्यं सत्यं हि नान्यथा ॥
येभ्योऽपि गम्यः सुवाकिन्यो ब्रह्मालङ्कारतोषिताः ।
न तेषां वत्सरं यावत् सङ्कटो न रिपोर्भयम् ॥
व्रतस्यास्य प्रभावेन भूताः प्रेताश्च राक्षसाः ।
दूरादेव पलायन्ते धर्म्मराजेन ताडिताः ॥
यो देवो महिषारूढ़ो दण्डमुद्गरधारकः ।
वेष्टितः किङ्करैर्दण्डैस्तस्मै कालात्मने नमः ॥
इत्थं त्वं द्विजशार्दूल ! कुरुष्व तद्व्रतं शुभम् ।
रम्यं यमद्वितीयाख्यमपमृत्युनिवारणम् ॥
व्रतस्यास्य प्रभावेन पुत्त्रपौत्त्रसमन्वितः ।
सत्यं वदामि ते विप्र ! सुखस्थः स्यात् सदैव हि ॥
नाहस्येन समो धर्म्मो न भूतो न भविष्यति ।
सन्देहोऽत्र न कर्त्तव्य इह लोके परत्र च ॥
ये वै यमद्वितीयाख्यं व्रतं कुर्व्वन्ति मानवाः ।
जन्मजन्मकृतं पापं तत्क्षणादेव नश्यति ॥
अपुत्त्रो लभते पुत्त्रं धनहीनो लभेद्धनम् ।
भार्य्याहीनो लभेद्भार्य्यां सुरूपां कुलसम्भवाम् ॥
यस्यां तिथौ यमुनया यमराजदेवः
संभोजितः सकललोकनिपातदक्षः ।
तस्यां भुनक्ति सुतिथौ च गृहे भगिन्याः
प्राप्नोति वित्तमतुलं स चिरायुरेव ॥”
इति पाद्मे उत्तरखण्डे १२५ अध्यायः ॥

यमधारः, पुं, ( यमा युग्मीभूता धारास्य । यद्वा, यमवत् विनाशिका धारा यत्र । ) पार्श्वद्वय-धारायुक्तास्त्रविशेषः । किरीच कटार इत्यादि भाषा ॥

यमनं, क्ली, ( यम् + भावे ल्युट् । ) बन्धनम् । उपरतिः । इति मेदिनी । ने, १११ ॥ (संयमः । यथा, हरिवंशे भविष्यपर्व्वणि । १६ । ४८ ।
“अशुवांमनवामाहि यतस्त्वं वामनाख्यया ।
मननान्मुनिरेवासि यमनाद्द यतिरुच्यसे ॥” )

यमनः, पुं, (यमयति नियमयतीति । यम् + ल्युः ।) यमः । इति मेदिनी । ने, १११ ॥ ( यमयति वशमानयतीन्द्रियग्राममिति । संयमकर्त्तरि, त्रि । यथा, वाजसनेयसंहितायाम् । ६ । २२ ।
“यन्तासि यमनो ध्रुवोऽसि धरुणः ।”
“यमनः स्वयं संयमनकर्त्ता भवसि ।” इति तद्भाष्ये महीधरः ॥ नियमकारिणि च त्रि । यथा, तत्रैव । १४ । २२ ।
“यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ।”
“यमनी सर्व्वेषां नियमकारिण्यसि ।” इति तद्भाष्ये महीधरः ॥ )

यमनिका, स्त्री, ( यच्छति आच्छादयतीति । यम् + ल्युः । कन् । टाप् । ) यवनिका । इत्यमर-टीकायां रामाश्रमः ॥ कानात् इति भाषा ॥

यमपत्नी, स्त्री, ( यमस्य पत्नी । ) यमस्य भार्य्या । यमस्य द्वे भार्य्ये । धूमोर्णा १ विजया २ । इति जटाधरः ॥

यमप्रियः, पुं, ( प्रीणातीति । प्री + कः । यमस्य प्रियः । ) वटवृक्षः । इति शब्दरत्नावली ॥

यमभगिनी, स्त्री, (यमस्य भगिनी स्वसा ।) यमुना । इति हेमचन्द्रः । ४ । १४६ ॥

यमराजः, पुं, (यमश्चासौ राजा चेति ।“राजाहः सखिभ्यष्टच् ।” ५।४।९१ । इति टच् । ) यमः । इति हेमचन्द्रः । २।९८ ॥ अस्य पुर्य्यादि यथा,
“पुरी संयमनी तस्य चित्रगुप्तस्तु लेखकः ।
भार्य्यौ चण्डमहाचण्डौ धूमोर्णाविजये प्रिये ।
विचारभूमिका नीचिः सहायाः कालपूरुषाः ॥”
इति जटाधरः ॥ * ॥
स च विमातृ छायया शप्तः । ( यथा, मार्कण्डेये । ७७ । २५—२६ ।
“छायासंज्ञा त्वपत्येषु यथा स्वेष्वतिवत्सला ।
तथा न संज्ञाकन्यायां पुत्त्रयोश्चान्ववर्त्तत ॥
लालनाद्युपभोगैश्च विशेषमनुवासरम् ।
मनुस्तत्क्षान्तवानस्या यमस्तस्या न चक्षमे ॥
ताड़नाय च वै कोपात् पादस्तेन समुद्यतः ।
तस्याः पुनः क्षान्तिमता न तु देहे निपातितः ॥
ततः शशाप तं कोपात् छायासंज्ञा यमं द्विज ।
किञ्चित् प्रस्फुरमाणोष्ठी विचलत्पाणिपल्लवा ॥
पितुः पत्नीममर्य्यादं यन्मां तर्ज्जयसे पदा ।
भुवि तस्मादयं पादस्तवाद्यैव पतिष्यति ॥”)
तच्छापान्तं यथा,—
“स्वरूपधारिणीं चैमामानिनाय निजाश्रमम् ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ॥
ततः पूर्व्वसुतो योऽस्याः सोऽभूद्वैवस्वतो मनुः ।
द्वितीयस्तु यमः शापाद्धर्म्मदृष्टिरभूत् सुतः ॥
कृमयो मांसमादाय पादतस्ते महीतलम् ।
पतिष्यन्तीति शापान्तं तस्य चक्रे पिता स्वयम् ॥
धर्म्मदृष्टिर्यतश्चासौ समो मित्रे तथाहिते ।
ततो नियोगं तं याम्ये चकार तिमिरापहः ॥
यमुना च नदी जज्ञे कलिन्दान्तरवाहिनी ॥”
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे । ७८ । २५—२६ ॥

यमराट्, [ज्] पुं, ( प्राणिसंयमनात् यमप्रभृतयः किङ्करास्तेषु राजते यमेन संयमेन राजते इति वा । राज् + क्विप् । इत्यमरटीकायां रघुनाथः ।) यमः । इत्यमरः । १ । १ । ६६ ॥

यमलं, क्ली, (यमं लातीति । ला + कः ।) युग्मम् । इति हेमचन्द्रः । ६ । ६० ॥ ( त्रि, यमजः । यथा, देवीभागवते । ३ । २८ । ५ ।
“सुमित्रातनयौ जातौ यमलौ द्वौ मनोहरौ ।
ते जाता वै किशोराश्च धनुर्व्वाणधराः किल ॥”)

यमलच्छदः, पुं, (यमलं यमलं छदमस्य । बहुव्रीहौ कः ।) अश्मन्तकवृक्षः । कोविदारवृक्षः । इति राजनिर्घण्टः ॥

यमलार्ज्जुनहा, [न्] पुं, ( यमलार्ज्जुनौ हतवान् इति । हन् + क्विप् । ) श्रीकृष्णः । इति हेमचन्द्रः ॥

यमलार्ज्जुनौ, पुं, ( यमलौ च तावर्ज्जुनौ चेति कर्म्मधारयः । ) गोकुलस्थार्ज्जुनवृक्षद्वयम् । तौ कुवेरपुत्त्रौ नलकूवरमणिग्रीवौ । नारदशापात् वृक्षतां प्राप्तौ श्रीकृष्णेन उद्धारितौ । यथा,—
“इहैमौ लोकपालस्य पुत्त्रौ भूत्वा तमःप्लुतौ ।
न विवाससमात्मानं विजानीतः सुदुर्म्मदौ ॥
अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ।
स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ।
वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥
श्रीशुक उवाच ।
स एवमुक्त्वा देवर्षिर्गतो नारायणाश्रमम् ।
नलकूवरमणिग्रीवावासतुर्यमलार्ज्जुनौ ॥
ऋषेर्भागवतमुख्यस्य सत्यं कर्त्तुं वचो हरिः ।
जगाम शनकैस्तत्र यत्रास्तां यमलार्ज्जुनौ ॥
देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ।
तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥
इत्यन्तरेणार्ज्जुनयोः कृष्णस्तु यमयोर्ययौ ।
आत्मनिर्व्वेशमात्रेण तीर्य्यगातमुदूखलम् ॥
बालेन निष्कर्षतान्वगुदूखलं तत्
दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।
निष्पेततुः परमविक्रमितातिवेप-
स्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥
तत्र श्रिया परमया ककुभः स्फुरन्तौ
सिद्धावुपेत्य कुजयोरिव जातवेदाः ।
कृष्णं प्रणम्य शिरसाखिललोकनाथं
बद्धाञ्जली विरजसाविदमूचतुः स्म ॥
वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्म्मसु मनस्तव पादयोर्नः ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥
श्रीभगवानुवाच ।
तद्गच्छतं मत्परमौ नलकूवरसादनम् ।
संजातो मयि भावो वामीप्सितः परमोऽभवः ॥
श्रीशुक उवाच ।
इत्युक्तौ तं परिक्रम्य प्रणम्य च पुनः पुनः ।
बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥”
इति श्रीभागवते १० स्कन्धे १० अध्यायः ॥

यमली, स्त्री, ( यमल + स्त्रियां ङीष् । ) चोटिकायुग्मम् । इति मेदिनी । ले, १२६ ॥ चोटी शाटीपर्य्याये हेमचन्द्रेण गणिता सैव चोटिका ॥

यमवाहनः, पुं, (यमस्य वाहनः ।) महिषः । इति हेमचन्द्रः । ४ । ३४७ ॥ ( तथास्य पर्य्यायः ।
“महिषो घोटकारिः स्यात् कासरश्च रजस्वलः ।
पीनस्कन्धः कृष्णकायो लुलापो यमवाहनः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

यमव्रतं, क्ली, ( यमस्य धर्म्मराजस्येव व्रतम् । ) राजधर्म्मविशेषः । स तु पक्षपातं विना प्राणिनां शासनरूपः । इति पुराणम् ॥

यमस्वसा, [ऋ] स्त्री, ( यमस्य स्वसा भगिनी । ) यमुना । दुर्गा । इति मेदिनी । से, ६० ॥ (यदुक्तं हरिवंशे आर्य्यास्तवप्रकरणे । ५८ । ४ ।
“जया च विजया चैव तुष्टिः पुष्टिः क्षमा दया ।
ज्येष्ठा यमस्य भगिनी नीलकौशेयवासिनी ॥”)

यमानिका, स्त्री, ( यमानी + स्वार्थे कन् । ) यमानी । तत्पर्य्यायः । अजमोदा २ उग्रगन्धा ३ ब्रह्मदर्भा ४ । इत्यमरः । २ । ४ । १४५ ॥
“यमानि यमान्याम् । यमानी द्विविधा एका

चीनयमानी सा अजमोदा इत्येव ख्याता। अपरा यमानी इत्येव ख्याता तद्विशेषात् हरोरपीति सुभूतिः। केचित्तु अजमोदादिद्वयं वनयमान्यां ब्रह्मदर्भादिद्वयं यमान्यामित्याहुः। उग्रगन्धाजमोदाख्या ख्याता चीनयमानिका इति। 'यमानी दीपनी दीप्यो भूतिकश्च यमानिका।' इति च रत्नः। यच्छति विरमति निवर्त्तते अग्निमान्द्यमनया यमानी। यमौ उ विरतौ मान्तीति अगट् ङीप् यमानी स्वार्थे के यमानिका यमानी "पञ्चमवर्गेपञ्चममध्या। यवानीति अन्तःस्थचतुर्थमध्या इति केचित्।" इति भरतः॥ *॥ अस्या गुणाः। शूलशूलनाशित्वम्। हृद्यत्वम्। पित्ताग्निकारित्वम्। वायुकफशमित्वाग्नित्वञ्च। इति राजवल्लभः॥

यमानी, स्त्री, (यच्छति विरमति निवर्त्तते अग्निमान्द्यमनयेति। यम+करणे ल्युट्। ङीप्। पृषोदरादित्वात् साधुः।) यमानिका। इति शब्दरत्नावली॥ (यथास्याः पर्य्यायः।
"यमानी दीपनी दीप्यो भूतिकश्च यमानिका॥"
इति वैद्यकरत्नमालायाम्॥)

यमान्तकः, पुं, (यमस्यान्तकः। मृत्युञ्जयत्वादेवास्य तथात्वम्।) शिवः। इति शब्दरत्नावली॥ (यमश्च अन्तकश्च तौ इति विग्रहे। वैवस्वत-कालौ। यथा, महाभारते। २। १०। १५।
"तेजसा सूर्य्यसङ्काशः क्षमया पृथिवीसमः।
यमान्तकसमः क्रोधे श्रिया वैश्रवणोपमः॥"
"यमो वैवस्वतः अन्तकः कालः।" इति तट्टी-कायां नीलकण्ठः॥)

यमी, स्त्री, यमुनानदी। इति त्रिकाण्डशेषः॥ (यथा, श्रीमद्भागवते। ८। १३। ९।
"छायायां वडवायाञ्च तस्याः संज्ञासुतात्मजः।
यमो यमी श्राद्धदेवश्छायायाञ्च सुतान् शृणु॥")

यमुना, स्त्री, (यमयतीति। यमि+"अजियमि शीङ्भ्यश्च।" उणा० ३। ६१। इति उनन्। टाप्।) दुर्गा। यथा,—
"सर्व्वाणि हृदयस्थानि मङ्गलानि शुभानि च।
ददाति चेप्सितान् लोके तेन सा सर्व्वमङ्गला॥
सङ्गमात् गमनाद्गङ्गा लोके देवी विभाव्यते।
यमस्य भगिनी जाता यमुना तेन सा मता॥"
इति देवीपुराणे ४५ अध्यायः॥ *॥
(यच्छति विरमति गङ्गायामिति। नदी-विशेषः। सा तु हिमालयदक्षिणदेशान्नि-र्गत्य प्रयागे गङ्गायां मिलिता। तत्पर्य्यायः। कालिन्दी २ सूर्य्यतनया ३ शमनस्वसा ४। इत्यमरः। १। १०। ३२॥ तपनतनूजा ५ कलिन्द-कन्या ६ यमस्वसा ७ श्यामा ८ तापी ९ कलिन्द-नन्दिनी १० यमनी ११ यमी १२। इति शब्दरत्नावली॥ कलिन्दशैलजा १३ सूर्य्य-सुता १४। इति जटाधरः॥ (यथा,—
"गङ्गा सरस्वती शोणयमुना सरयूः शची।
शिवा इरावती नीला उत्तरात् पूर्व्ववाहिनी॥"
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये॥)

अस्या जलगुणाः। पित्तदाहवमनश्रमापहत्वम्। स्वादुत्वम्। वातजननत्वम्। पावनत्वम्। वह्नि-दीपनकरत्वम्। रोचनत्वम्। बलप्रदत्वञ्च। इति राजनिर्घण्टः॥ *॥ सा यमस्य भगिनी। यथा,—
"सावर्णिर्मेरुपृष्ठे तु तपो घोरं चचार ह।
अद्यापि भविता लोके मनुः सावर्णिकेऽन्तरे॥
भ्राता शनैश्चरश्चास्य ग्रहत्वं स तु लब्धवान्।
तयोर्यवीयसी या तु यमस्वसा यशस्विनी।
अभवत् सा सरिच्छ्रेष्ठा यमुना लोकपावनी॥"
इति वह्निपुराणे सावर्णोपाख्यानम्॥ *॥
सा च वृन्दावने सुषुम्नाख्या परा शक्तिः। यथा,
श्रीभगवानुवाच।
"इदं वृन्दावनं रम्यं मम धामैव केवलम्।
तत्र ये पशवः सपक्षिवृक्षाः कीटा नराधमाः।
ये वसन्ति ममाधिष्ण्ये मृता यान्ति ममालयम्॥
तत्र या गोपपत्न्यश्च निवसन्ति ममालये।
योगिन्यस्तास्तु एवं हि मम सेवापरायणाः॥
पञ्चयोजनमेवं हि वनं मे देहरूपकम्।
कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी॥"
इति पाद्मे पातालखण्डे ७ अध्यायः॥ *॥
अस्या जलस्य कृष्णवर्णत्वकारणं यथा,—
पुलस्त्य उवाच।
"यदा दक्षसुता ब्रह्मन्! सती याता यमक्षयम्।
विनाश्य दक्षयज्ञं तं विचचार त्रिलोचनः॥
ततो वृषध्वजं दृष्ट्वा कन्दर्पः कुसुमायुधः।
अपत्नीकं तदास्त्रेण उन्मादेनाभ्यताडयत्॥
ततो हरः शरेणाथ उन्मादेनाभिताडितः।
विचचार ततोन्मत्तः काननानि सरांसि च॥
स्मरन् सतीं महादेवस्तथोन्मादेन ताडितः।
न शर्म्म लेभे देवर्षे वाणविद्ध इव द्विपः॥
ततः पपात देवेशः कालिन्दीसरिते मुने।
निमग्ने शङ्करे चापे दग्धा कृष्णत्वमागता॥
तदाप्रभृति कालिन्द्या भृङ्गाञ्जननिभं जलम्॥"
इति वामने ६ अध्यायः॥ *॥
ज्यैष्ठशुक्लद्वादश्यादिष्वस्यां स्नानपिण्डदानफलं यथा,—
"ज्यैष्ठेऽस्मत्कुलद्वादश्यां स्नात्वा वै यमुनाजले।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम्॥
यमुनासलिले स्नातः पुरुषो मुनिसत्तम!।
ज्यैष्ठामूलामले पक्षे द्वादश्यामुपवासकृत्॥
समभ्यर्च्याच्युतं सम्यक् मथुरायां समाहितः।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम्॥
ज्यैष्ठामूले सिते पक्षे समभ्यर्च्य जनार्द्दनम्।
धन्यो नः पिण्डनिर्व्वापं यमुनायां प्रदास्यति॥"
इति विष्णुपुराणे ६ अंशे ८ अध्यायः॥

यमुनाजनकः, पुं, (यमुनाया जनकः।) सूर्य्यः। इति हेमचन्द्रः। २। ९॥

यमुनाभित्, [द्] पुं, (यमुनां भिनत्तीति। भिद्+क्विप्।) बलदेवः। इति हेमचन्द्रः। २। १३८॥ (एतद्वृत्तान्तस्तु यथा, हरिवंशे। १०२। २३—२६।
"स वेगेनागतायैव कृष्टे यस्य महात्मनः।
चकर्ष यमुनां रामो व्युत्थितां वनितामिव॥
सा विह्वलजलस्रोता हृदप्रस्थितसञ्चया।
व्यावर्त्तत नदी भीता हलमार्गानुसारिणी॥
लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिनी।
सङ्कर्षणभयत्रस्ता योषिवाकुलतां गता॥")

यमुनाभ्राता, [ऋ] पुं, (यमुनाया भ्राता।) यमः। इत्यमरः। १। १। ६१॥

यमेरुका, स्त्री, (यमं ईरयति प्रेरयतीति। ईरि+बाहुलकात् उकः। टाप्।) दक्कढक्का। इति त्रिकाण्डशेषः॥

ययातिः, पुं, नहुषराजपुत्रः। तत्पर्य्यायः। नाहुषिः २। इति त्रिकाण्डशेषः॥ नाहुषः ३। इति जटाधरः॥ तस्योपाख्यानं यथा,—
"नहुषस्य प्रवक्ष्यामि पुत्रान् सप्तैव धार्म्मिकान्।
यतिर्ययातिः संयातिरुद्भवः पञ्चमस्तथा॥
स्वर्य्यातिर्मेघयातिश्च सप्तैते वंशवर्द्धकाः।
ययातिरकरोद्राज्यं धर्म्मैकशरणस्तदा॥
शर्म्मिष्ठा तस्य भार्य्याभूत् दुहिता वृषपर्व्वणः।
भार्गवस्यात्मजा तद्वद्देवयानी च सुव्रता॥
ययातिर्द्देवयान्यान्तु पुत्रावजनयन्नृपः।
यदुञ्च तुर्व्वसुञ्चैव शक्रविष्णू इवापरौ॥
तस्मादेव तु राजर्षेः शर्म्मिष्ठा वार्षपर्व्वणी।
द्रुह्युञ्चानुञ्च पूरुञ्च त्रीन् कुमारानजीजनत्॥
ततः काले च कस्मिंश्चिद्देवयानी शुचिस्मिता।
ययातिसहिता राजन् जगाम रहितं वनम्॥
ददर्श च तदा तत्र कुमारान् देवरूपिणः।
क्रीडमानान् सुविश्रब्धान् विस्मिता चेदमब्रवीत्॥
किन्नामधेयं गोत्रं वः पुत्रकाः! ब्राह्मणः पिता।
विब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम्॥
तेऽदर्शयन् प्रदेशिन्या तमेव नृपसत्तमम्॥
श्रुत्वा च तत्त्वतो देवी शर्म्मिष्ठामिदमब्रवीत्।
मदधीना सती कस्मादकार्षीर्व्विप्रियं मम॥
शर्म्मिष्ठोवाच।
यदा तथा वृतो राजा वृत एव तदा मया।
भर्त्ता हि मे पूज्यतमो राजर्षिः किं न वेत्थ तत्॥
शौनक उवाच।
श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम्।
राजन्नाद्येह वत्स्यामि विप्रियं मे त्वया कृतम्॥
अविमृश्यन्ती किञ्चिच्च राजानं सास्रुलोचना।
अचिरादेव संप्राप्ता काव्यस्योशनसोऽन्तिके॥
देवयान्युवाच।
शर्म्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्व्वणः।
त्रयोऽस्यां जनिताः पुत्रा राज्ञानेन ययातिना।
दुर्भगाया मम द्वौ तु पुत्रौ तात! ब्रवीमि वः॥
शुक्र उवाच।
धर्म्मज्ञः सन् महाराज! योऽधर्म्ममकृथाः प्रियम्।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्ज्जया॥
ययातिरुवाच।
ऋतुकामां स्त्रियं यस्तु गम्यां रहसि याचितः।
नोपैति स च धर्म्मेषु भ्रूणहेत्युच्यते बुधैः॥

यवकः, पुं (यवप्रकारः। यव+"स्थूलादिभ्यः प्रकारवचने कन्।" ५।४।३। इति कन्।) यवः। इत्यमरटीकायां रामाश्रमः॥ (यथा,—
"यवका हायनाः पांशुवाप्यनैषधकादयः।
शालीनं शालयः कुर्व्वन्त्यनुकारं गुणा गुणैः॥"
इति चरके सूत्रस्थाने २७ अध्याये॥)

यवक्यं, त्रि, (यवकानां भवनं क्षेत्रमिति। यवक+"यवयवकषष्टिकाद् यत्।" ५।२।३। इति यत्।) यवभवनोचितक्षेत्रम्। इत्यमरः। २। ९। ७॥

यवक्षारः, पुं, (यवजातः क्षारः। शाकपार्थिववत् समासः।) क्षारविशेषः। यथा,—
"नरसारयवक्षारस्फटिकारित एव काचवक-
यन्त्रैः।
बहुशः पाकं यस्य तद्धि महाद्रावकनाम॥"
इति रत्नावली॥

तत्पर्य्यायः। यवाग्रजः २ पाक्यम् ३। इत्यमरः। २।९।१०८॥ यवलासः ४ यवसूकः ५ सारकः ६ रेचकः ७ यवनालकः ८। इति शब्दरत्नावली॥ यावसूकः ९ क्षारः १० तर्ष्पः ११ तीक्ष्णरसः १२ यवनालजः १३ इति रत्नमाला॥ यवजः १४ यवसूकजः १५ यवाह्वः १६ यवापत्यम् १७। अस्य गुणाः। कटुत्वम्। उष्णत्वम्। कफवातोदराग्निमान्द्यनाशित्वम्। आमशूलाश्मकृत्कृच्छ्रविषदोषहरत्वम्। सरत्वञ्च। इति राजनिर्घण्टः॥ अर्शःश्वासगुल्माग्रहणीपाण्डुशोफानाहगलामयनाशित्वञ्च। इति राजवल्लभः॥ (तथा च।
"पाक्यः क्षारो यवक्षारो यवसूको यवाग्रजः।
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः॥
निहन्ति शूलवातामश्लेष्मश्वासगलामयान्।
पाण्डुर्शोग्रहणीगुल्मानाहप्लीहहृदामयान्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

यवक्षोदः, पुं, (यवानां क्षोदः।) यवचूर्णम्। तत्पर्य्यायः। चिक्कसः २। इति हेमचन्द्रः॥

यवगण्डः, पुं, (यूनो गण्डः स्फोटकः। पृषोदरादित्वात् यवादेशः।) युवगण्डः। इति शब्दरत्नावली॥ ययस्फोड़ा इति भाषा॥

यवजः, पुं, (यवाज्जायते इति। जन्+डः।) यवक्षारः। इति रत्नमाला॥ (यथास्य पर्य्यायः।
"यावसूको यवक्षारो यवसूको यवाग्रजः।
क्षारश्चोष्णश्चोष्णरसो यवजो यवनालजः॥"
इति वैद्यकरत्नमालायाम्॥)
यवानी। इति राजनिर्घण्टः॥

यवजोद्भवं, क्ली, (यवजादुद्भवोऽस्य।) तवक्षीरम्। इति राजनिर्घण्टः॥

यवतिक्ता, स्त्री, लताभेदः। शङ्खिनीति यवेची इति च ख्याता। (यथा, सुश्रुते सूत्रस्थाने ४५ अः।
"यवतिक्तातैलं सर्व्वदोषप्रशमनमीषत्तिक्तम्।
अग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च॥")
तत्पर्य्यायः। महातिक्ता २ हृत्पादविसर्पिणी ३ नाकुली ४ नेत्रमीना ५ शङ्खिनी ६ पत्रतण्डुली ७ तण्डुली ८ अक्षपीड़ा ९ कण्वपुष्पी १० पद्मशङ्खिनी ११ माहेश्वरी १२ तिक्तपत्रा १३ यावी १४ तिक्ता १५। अस्या गुणाः। सतिक्तात्वम्। दीपनत्वम्। रुचिकारित्वम्। कृमिकुष्ठविषार्शःसदोषनाशित्वम्। रेचनत्वञ्च। इति राजनिर्घण्टः॥

यवतैलं, क्ली, (यवनिर्म्मितं तैलम्।) यवचूर्णादियुक्तपक्वतैलविशेषः। तत्प्रकारं गुणश्चाह।
"यवचूर्णार्द्धकुड़वं मञ्जिष्ठार्द्धपलेन तु।
तैलप्रस्थः शृतगुणे काञ्जिके साधितो जयेत्।
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षणम्॥"
इति सुखबोधः॥

यवद्वीपः, पुं, (यवनामा द्वीपः इति मध्यपदलोपिकर्म्मधारयः।) उपद्वीपविशेषः। यावा इति भाषा। यथा,—
"यत्नवन्तो यवद्वीपं सप्तराज्योपशोभितम्।
सुवर्णरूप्यकं द्वीपं सुवर्णाकरमण्डितम्॥"
इति वाल्मीकीये रामायणे किष्किन्ध्याकाण्डे ४० सर्गः॥ * ॥ "अतः परं यत्नवन्तो भूत्वा सप्तराज्योपशोभितं यवद्वीपं तथा सुवर्णद्वीपं विचेतव्यमिति शेषः। सुवर्णाकरमण्डितमिति सुवर्णं कुर्व्वन्ति ये तैः शोभितम्।" इति रामायणतिलकनामतट्टीका॥

यवनः, पुं, देशविशेषः। (यथा, मात्स्ये। १२०। ४३।
"तान् देशान् प्लावयन्ति स्म म्लेच्छप्रायांश्च सर्व्वशः।
सशैलान् कुकुरान् रौध्रान् वर्व्वरान् यवनान्
खसान्॥")
वेगः। वेगाधिकाश्वः। इति मेदिनी॥ गोधूमः। गर्जरलवम्। तुरुष्कः। इति राजनिर्घण्टः॥ (यौति मिश्रीभवतीति। यु+"सुयुरुहृभ्यो युच्।" उणा० २। ७४। इति युच्।) जातिविशेषः। इति शब्दरत्नावली॥ स तु यदुवंशोद्भवययातिराजपुत्रतुर्व्वसुवंशः। यथा,—
"यदोस्तु जाता यदवस्तुर्व्वसोर्यवनाः सुताः।
द्रुह्योस्तु तनया भोजा अनोस्तु म्लेच्छजातयः।
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव!॥"
इति मात्स्ये ३४ अध्यायः॥ * ॥
सगरराजेनैषां सर्व्वशिरोमुण्डनं सर्व्वधर्म्मराहित्यञ्च कृतं ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं ययुरिति विष्णुपुराणोक्तत्वात् यवनः शौचमाने क्षत्रियेणोभयजातिवाचकः। यवनशब्दश्चवर्गतृतीयादिरिति रघुनन्दनभट्टाचार्य्येण लिखितम्॥ यवनादीनान्तु सर्व्वधर्म्मराहित्यमुक्तं हरिवंशे। यथा,—
"सगरस्तां प्रतिज्ञाञ्च गुरोर्व्वाक्यं निशम्य च।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत्।
यवनानां शिरः सर्व्वं काम्बोजानान्तथैव च॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना॥
शका यवनकाम्बोजाः पारदाः पह्लवास्तथा।
कोलिसर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः॥
वशिष्ठवचनाद्राजन्! सगरेण महात्मना।
शकानां शकदेशोद्भवानां क्षत्रियाणां एव
नादीनामिति। अत्र यवनशब्दस्तद्देश
वाची चवर्गतृतीयादिः। यवनो देशभे
दिति त्रिकाण्डशेषाभिधानदर्शनात्।
म्लेच्छत्वमप्युक्तं विष्णुपुराणे। तथा ह
जवनादीनुपक्रम्य। ते चात्मधर्म्मपरित्या
म्लेच्छत्वं ययुरिति। बौधायनः।
"गोमांसखादको यश्च विरुद्धं बहु भाषते।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते॥"
इति प्रायश्चित्ततत्त्वम्॥
यवनादीनां राज्यकालो यथा,—
"सप्त गर्द्दभिनश्चापि शकाश्चाष्टादश स्मृता
यवनाष्टौ भविष्यन्ति तुषारश्च भविष्यति॥
अष्टौ ते यवना राज्यं वर्षाणां परिसङ्ख्यया
भोक्ष्यन्त्यशीतिं तच्च येऽपि गर्द्दभिनः स्मृत
शतानि त्रीणि वर्षाणां दशशीतीनि शतानि
शकानां राज्यकालः स्यात्त्रिषष्टि त्रिषष्टयो
गतः
शतस्त्वार्द्धं चतुर्णां च वर्षाणां राज्यभागिनः
मरुत्तानां सुताः काले भविष्यं भोक्ष्यन्ति
महीम्
मरुता वत्से वाई तथान्ये म्लेच्छसम्भवाः
भोक्ष्यन्ति राज्यं प्राच्येषु भविष्ये तद्विधारि
शतानि त्रीणि वर्षाणां पौण्ड्रा राज्यभुजः
स्मृता
अमन्ति पार्व्वतीयास्तु द्वे शते परिसङ्ख्यया।
शताद्धमन्यच्च तथा राज्यं भोक्ष्यन्ति ते नृपा
सप्तषष्टिस्तु वर्षाणि दशातीवाप्यतः स्मृताः।
तेषु च्छन्नेषु कालेषु ततः किलकिला नराः
भविष्यन्तीह यवना धर्म्मतः कामतोऽर्थतः
तैर्विमिश्रा जनपदा आर्य्या म्लेच्छाश्च सर्व्व
विपर्य्ययेण वर्त्तन्ते जनयिष्यन्ति वै प्रजाः॥
लुब्धानिष्टतरश्चैव भवितारस्तदा नृपाः।
तेषां व्यतीते पर्य्याये बहुवर्षगुणोत्तरा॥
राजानः संप्रणश्यन्ति कालेन महता ततः
कल्किना ताड़िताः सर्व्वे आर्य्या म्लेच्छाश्च
सर्व्वशः
अधार्म्मिकाश्च ये सर्व्वे पापकाश्चैव सर्व्वशः
कृते नृपतिशब्दे वै सन्ध्यांशे च वै कलौ।
इति ब्रह्माण्डपुराणे ३९ अध्याय
मुनिविशेषः। यथा,—
"जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम्।
जन्माख्यमासं किल भागुरिश्च
शते विवाहे सुरकर्म्मणीव॥"
इति तिथ्यादितत्त्वम्॥
कालयवनोत्पत्तिर्यथा,—
श्रीपराशर उवाच।
"गार्ग्यं गोष्ठे द्विजं श्यालः षण्ढ इत्युक्तवान् द्वि
यदूनां सन्निधौ सर्व्वे जहसुर्यादवास्ततः।
ततः कोपसमाविष्टो दक्षिणापथमेत्य सः।
सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम्॥

ाराधयन्महादेवं सोऽयचूर्णमभक्षयत् ।
ो वरञ्च तुष्टोऽस्मै वर्षे द्वादशमे हरः ॥
भावयामास च तं यवनेशो ह्यनात्मजः ।
द्योषित्सङ्गमाचास्य पुत्रोऽभूदलिसन्निभः ॥
कालयवनं नाम राज्ये स्वे यवनेश्वरः ।
भिषिच्य वनं यातो वज्राग्रकठिनोरसम् ॥
स च वीर्य्यमदोन्मत्तः पृथिव्यां बलिनो नृपान् ।
पप्रच्छ नारदश्चास्मै कथयामास यादवान् ॥
कोटिसहस्राणां सहस्रैः सोऽभिसंवृतः ।
ाम्बरथसम्पन्नैश्चकार परमोद्यमम् ॥
ययौ चाव्यवच्छिन्नं छिन्नयानो दिने दिने ।
ादवान् प्रति सामर्षो मैत्रेय मथुरां पुरीम् ॥
कृष्णोऽपि चिन्तयामास क्षपितं यादवं बलम् ।
यवनेन रणे गम्यं मागधस्य भविष्यति ॥
ागधस्य बलं क्षीणं स कालयवनो बली ।
हन्ता तदिदमायातं यदूनां व्यसनं द्विधा ॥
ादुर्गं करिष्यामि यदूनामतिदुर्जयम् ।
स्त्रियोऽपि यत्र युध्येयुः किं पुनर्वृष्णिपुङ्गवाः ॥"
ति सञ्चिन्त्य गोविन्दो योजनानि महोदधिम् ।
याचे द्वादशपुरीं द्वारकां तत्र निर्म्ममे ॥
ुरावासिनो लोकांस्तत्रानीय जनार्द्दनः ।
ासन्ने कालयवने मथुरां च स्वयं ययौ ॥
हिरावासिते सैन्ये मथुराया निरायुधः ।
र्जगाम स गोविन्दो ददर्श यवनश्च तम् ॥
ज्ञात्वा वासुदेवं तं बाहुप्रहरणो नृपः ।
ुयातो महायोगिचेतोभिः प्राप्यते न यः ॥
ानुयातः कृष्णोऽपि प्रविवेश महागुहाम् ।
त्र शेते महावीर्य्यो मुचुकुन्दो नरेश्वरः ॥
ऽपि प्रविष्टो यवनो दृष्ट्वा शय्यागतं नरम् ।
ादेन ताड़यामास कृष्णं मत्वा सुदुर्म्मतिः ॥
ोत्थाय तेनासौ जज्वाल यवनोऽग्निना ।
क्रोधजेन मैत्रेय ! भस्मीभूतश्च तत्क्षणात् ॥"
इति विष्णुपुराणे ५ अंशे २३ अध्यायः ॥
, त्रि, ( यौतीति । यु + "नन्दिग्रहीति ।" ३ ।
१३४ । इति ल्युः । ) वेगी । इति मेदिनी ।
१११ ॥ ( यथा, नैषधचरिते । १ । ६५ ।
"तमश्ववारा यवनाश्वयायिनं
प्रकामकृपा मधुपेशमन्वयुः ॥" )
ष्टः, पुं, ( यवनेष्टः । निम्बप्रियत्वात्
ात्वम् । ) गुग्गुलुः । इति राजनिर्घण्टः ॥
प्रियं, क्ली, ( यवनानां प्रियम् । ) मरिचम् ।
हेमचन्द्रः । ३ । ४८ ॥ ( विवरणमस्य
चशब्दे ज्ञातव्यम् ॥ )
ाचार्य्यः, पुं, ( यवनो नामाचार्य्यः । ) ज्योतिः-
शास्त्रकर्त्तृमुनिविशेषः । इति वराहमिहिरौ ॥
ी, स्त्री, ( यवनानां लिपिः । "यवनाल्लि-
।" ४ । १ । ४९ । इति कात्यायनोक्त्या
ानुगागमश्च । ) यवनस्य लिपिः । इति
सिद्धान्तकौमुद्यां दुर्गादासः ॥
ः, पुं, ( यवनानामरिः । यवनः कालयवनो-
ऽस्येति वा । ) श्रीकृष्णः । इति त्रिकाण्ड-
॥

यवनालः, पुं, ( यवानां नाला इव नाला यस्य । )
धान्यविशेषः । देधान् इति भाषा । तत्पर्य्यायः ।
योनालः २ जूर्णाह्वयः ३ देवधान्यम् ४
जोन्नाला ५ बीजपुष्पिका ६ । इति हेम-
चन्द्रः । ४ । २४४ ॥ ( यथा, सुश्रुते उत्तरतन्त्रे
१५ अध्याये ।
"यवनालस्य चूर्णेन त्रिकटोर्लवणस्य च ।
छेदयित्वा ततः पश्चाद्भोयात् कुशलो भिषक् ॥")
यवनालजः, पुं, ( यवनालेभ्यो जायते इति ।
जन् + डः । ) यवक्षारः । इति हेमचन्द्रः । ४ ।
१० ॥ ( यथा, वैद्यकरत्नमालायाम् ।
"क्षारश्लेष्मश्लेष्मरसो यवजो यवनालजः ॥")
यवनिका, स्त्री, ( युनात्याच्छादयत्यनया । यु + ल्युट् ।
ङीष् । स्वार्थे कन् । टाप् । ) जवनिका । इत्य-
मरटीका ॥ कानात् इति भाषा । ( यथा,
भागवते । १ । ८ । १९ ।
"मायायवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ।
न लक्ष्यसे मूढ़दृशा नटो नाट्यधरो यथा ॥")
यवनी, स्त्री, ( यूयते पच्यते भक्तमनया । यु +
ल्युट् । ङीप् । ) यवानीनामकौषधिभेदः ।
इति मेदिनी । ने, ११२ ॥ ( यवनस्य स्त्रीति ।
यवन + ङीष् । ) यवनभार्य्या ॥ ( यथा, रघुः । ४ । ६१ ।
"यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ॥")
यवनेष्टं, क्ली, ( यवनानां इष्टम् । ) सीसकम् ।
इति हेमचन्द्रः । ४ । १०७ ॥ मरीचम् ।
गृञ्जनम् । इति राजनिर्घण्टः ॥
यवनेष्टः, पुं, ( यवनानामिष्टः । ) लशुनः । राज-
पलाण्डुः । निम्बः । पलाण्डुः । इति राजनिर्घण्टः ॥
( तथास्य पर्य्यायः ।
"पलाण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
यवप्रख्या, स्त्री, ( यव इति प्रख्या यस्याः । )
क्षुद्ररोगविशेषः । तल्लक्षणं यथा, भावप्रकाशे ।
"यवाकारा सुकठिना ग्रथिता मांससंश्रिता ।
पीड़का श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥"
यवाकारा मध्ये स्थूला प्रान्ते सूक्ष्मा ॥ तच्चि-
कित्सा यथा,—
"यवाभजर्जीं यवप्रख्यां पूर्व्वं स्वेदैरुपाचरेत् ।
मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत् ।
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥"
यवफलः, पुं, ( यववत् फलमस्य । ) वंशः । इत्य-
मरः । २ । ४ । १६१ ॥ जटामांसी । कुटजः ।
इति मेदिनी । ले, १६२ ॥ ( अस्य पर्य्यायो यथा,
"कुटजः कुटजः कौटो वत्सको गिरिमल्लिका ।
कालिङ्गः शक्रशाखी च मल्लिकापुष्प इत्यपि ।
इन्द्रो यवफलः प्रोक्तो वृक्षकः पाण्डुरद्रुमः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमभागे ॥ )
प्लक्षवृक्षः । इति शब्दरत्नावली ॥
यवमध्यं, क्ली, ( यववत् मध्यं यस्य । ) चान्द्रायण-
भेदः । यथा,—

"शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ।
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(पुं, यज्ञभेदः । यथा, शतपथब्राह्मणे । १२ । ६ ।
१ । ९ ।
"यवमध्यः पञ्चरात्रो भवति ॥"
यवाकारमध्ये, त्रि । यथा, सुश्रुते चिकित्सा-
स्थाने १ अध्याये ।
"शरावनिम्नमध्याश्च यवमध्यास्तथापरे ।
एवंप्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥")
यवमयः, त्रि, (यवस्य विकारोऽवयवो वा । यव +
"असंज्ञायां तिलयवाभ्याम् ।" ४ । ३ । १४९ । इति
मयट् । ) यवनिर्म्मितः । यवशब्दात् मयट्-
प्रत्ययेन निष्पन्नः ॥ ( यथा, शतपथब्राह्मणे । २ ।
२ । ३ । ११ ।
"अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यथा-
हवनीयमाधास्य न भवति तन्निदधाति ॥" )
यवलासः, पुं, ( यवात् लासो यस्य । ) यवक्षारः ।
इति शब्दरत्नावली ॥ ( विशेषोऽस्य यवक्षार-
शब्दे ज्ञातव्यः ॥ )
यवशूकः, पुं, ( यवानां शूकः क्षारत्वेनास्त्यस्य ।
अर्श आद्यच् । ) यवक्षारः । इति त्रिकाण्ड-
शेषः ॥ ( यथास्य पर्य्यायः ।
"यावशूको यवक्षारो यवशूको यवाग्रजः ।
क्षारश्लेष्मश्लेष्मरसो यवजो यवनालजः ॥"
इति वैद्यकरत्नमालायाम् ॥ )
यवशूकजः, पुं, ( यवशूकात् जायते इति । जन् +
डः । ) यवक्षारः । इति राजनिर्घण्टः ॥
( विवरणमस्य यवक्षारशब्दे ज्ञातव्यम् ॥ )
यवसं, क्ली, ( यौतीति । यु + "वहियुभ्यां णित् ।"
उणा० ३ । ११९ । इत्यसच् । संज्ञापूर्व्वकत्वान्न
वृद्धिः । ) तृणम् । घासः । इत्यमरः । २ । ४ । १६७ ॥
( यथा, मनौ । ७ । ७५ ।
"तत्स्यादायुधसम्पन्नं धनधान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥" )
यवसुरं, क्ली, ( यवनिर्म्मिता सुरा । "सुराशैला-
च्छायाशालानिशा विभाषा ।" लिङ्गानुशासने
नपुंसकाधिकारे १२ । इति क्लीवत्वम् । ) यव-
जातसुरा । इति सिद्धान्तकौमुदी ॥
यवागूः, स्त्री, ( यूयते मिश्र्यते इति । यु + "अञ्जि-
यवशिभ्योऽनुवाग्वालच्च ।" उणा० ३ । ८१ । इति
आगूच् । ) बहुजलपक्वतण्डुलद्रवविशेषः ।
याउ इति भाषा ॥ तत्पर्य्यायः । उष्णिका २
श्राणा ३ विलेपी ४ तरला ५ । इत्यमरः । २ ।
९ । ५० ॥ "यूयते मिश्र्यते यावागूः यु च मिश्रणे
नाम्नीति आगूः गुणः । ओषति दहति
ज्वरादिरोगं उष्णिका उषू ष दाहे दहि पूर्व्ववत्
णिच् । श्रायते पच्यते सा श्राणा श्रा च पाके क्तः
मुच्छायोरिति नः । विलिम्पति विलेपी लि
लिपी शप च लेपे पचादित्वादच् । नदादित्वात्
ङीप् । तरति प्लवति तरला त तरेऽभिभवे
मुखे नाम्नीति अलः ।

'अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥'
इति वैद्यकोक्तो भेद इह नादृतः ॥" इति तट्टी-
कायां भरतः ॥ अस्या गुणाः ।
"यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ।
अतीसारे ज्वरे दाहे हिता वह्निप्रदीपनी ॥"
इति राजवल्लभः ॥
(अथास्या गुणा अवगुणाश्च ।
"सन्दीपनी स्वेदकरी यवागूः
सन्धापनी दोषमलामयानाम् ।
सन्तर्पणी धातु बलेन्द्रियाणां
युक्त्या भवेत् सा ज्वररोगिणाञ्च ॥
भागैकञ्च भवेत्तत्र द्विभागेन जलं क्षिपेत् ।
त्रिफलं पिप्पलीमूलं पिप्पलीचव्यनागरम् ॥
धान्यकस्य वमीग्राणि पिष्ट्वा चैतांश्च तण्डुलान् ।
संयुक्ता सिद्धिका किञ्चित् सा यवागूर्निगद्यते ॥
यवागूसुपयुञ्जानो जनो नावश्यमाचरेत् ।
शाकमांसफलैर्युक्ता यवागूः स्याच्च दुर्ज्जरा ॥"
इति हारीते प्रथमस्थाने १२ अध्याये ॥
"यवागूः षड्गुणजले सिद्धा स्यात् शघरा घना ।
यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ॥"
इति मध्यखण्डे द्वितीयेऽध्याये शार्ङ्गधरेणोक्तम् ॥)
यवाग्रजः, पुं, (यवाग्रात् जायते इति । जन् + डः ।)
यवक्षारः । इत्यमरः । २ । ९ । १०८ ॥
(यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"पाक्यः क्षारो यवक्षारो यावशूको यवा-
ग्रजः ॥")
यवाग्री । इति राजनिर्घण्टः ॥
यवानः, त्रि, (यवेन वेगेन अनिति जीवतीति ।
अन् + अच् ।) वेगी । इति मेदिनी । ने, १११ ॥
यवानिका, } स्त्री, (दुष्टो यवः । "यवाद्दोषे ।"
यवानी, } ४ । १ । ४९ । इत्यस्य वार्त्तिकोक्त्या
ङीष् आनुगागमश्च । पक्षे स्वार्थे कन् ।)
ओषधिभेदः । योयानि इति भाषा । तत्पर्य्यायः ।
दीप्यकः २ दीप्यः ३ यवसाह्वः ४ यवाग्रजः ५
दीपनी ६ उग्रगन्धा ७ वातारिः ८ भूकद-
म्बकः ९ यवजः १० दीपनीयः ११ शूलहन्त्री १२
यवानिका १३ उग्रा १४ तीव्रगन्धा १५ ।
अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्ण-
त्वम् । वातार्त्तिश्लेष्मशूलाध्मानकृमिच्छर्द्दिनाशि-
त्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ अपि
च । अथ यवान्या नामगुणाः ।
"यवानिकोग्रगन्धा च ब्रह्मदर्भाजमोदिका ।
सैवोक्ता दीप्यका दीप्या तथा स्याद्यवसाह्वया ॥
यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः ।
दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत् ।
वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत् ॥
अथ अजमोदाया नामानि गुणाश्च ।
अजमोदा खराश्वा च मायूरी दीप्यकस्तथा ।
तथा ब्रह्मकुशा प्रोक्ता कारवी लोचमस्तका ॥
अजमोदा कटुस्तीक्ष्णा दीपनी कफवातहृत् ।
उष्णा विदाहिनी हृद्या वृष्या बलकरी लघुः ॥
नेत्रामयकृमिच्छर्द्दिहिक्कावस्तिरुजो हरेत् ।
अथ खुरासानीयवानीनामगुणाः ।
पारसीकयवानी तु यवानीसदृशी गुणैः ।
विशेषात् पाचनी रुच्या ग्राहिणी मादिनी
गुरुः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
यवापत्यं, क्ली, (यवस्यापत्यम् । तज्जातत्वात्तथा-
त्वम् ।) यवक्षारः । इति राजनिर्घण्टः ॥
यवाम्लजं, क्ली, (यवाम्लाभ्यां जायते इति । जन् +
डः ।) सौवीरम् । इति राजनिर्घण्टः ॥
यवासः, पुं, (यौतीति । यु + "अतस्यश्चीति ।"
उणा० ४।२। इत्यादिना आसः ।) दुरालभा ।
यथा,—
"यासो यवासो दुःस्पर्शो धन्वयासो दुरालभा ॥"
इति रत्नमाला ॥
खदिरभेदः । यथा,—
"कण्टकी वासपत्रश्च यवासः खदिरस्तथा ॥"
इति शब्दमाला ॥
यवासा इति ख्याता कण्टकीक्षुपविशेषः । तत्-
पर्य्यायः । यासः २ मधुकण्टकः ३ अल्पकः ४
समुद्रान्ता ५ रोदनिका ६ कच्छुरा ७ बाल-
पत्रः ८ विशल्यः ९ कण्टकालुकः १० सिंह-
पिण्डिका ११ गान्धारी १२ अनन्ता १३ । अस्य
गुणाः । मधुरतिक्तत्वम् । शीतत्वम् । पित्तार्त्ति-
दाहनाशित्वम् । बलदीपनकारित्वम् । तृष्णा-
कफच्छर्द्दिविसर्पजित्त्वञ्च । इति राजनिर्घण्टः ॥
यवासकः, पुं, (यवास + स्वार्थे कन् ।) दुरालभा ।
इति शब्दरत्नावली ॥ (यथा, सुश्रुते उत्तर-
तन्त्रे ३९ अध्याये ।
"यवकासं यवन्तायं पार्श्वमूलानपाहरेति ।
मुद्गसौगिरिपलावावाम्यममायवासकैः ॥")
यवासशर्करा, स्त्री, (यवासेन तद्रसेन कृता शर्करा ।
शाकपार्थिववत् समासः ।) यवासरसघटित-
शर्करा । तत्पर्य्यायः । सुधामोदकः २ मोदकः ३
तवराजः ४ खण्डवरः ५ खण्डजः ६ खण्ड-
मोदकः ७ । अस्या गुणाः । अतिमधुरत्वम् ।
पित्तश्रमतृषापहत्वम् । हृद्यत्वम् । विदाह-
मूर्च्छार्त्तिभ्रान्तिशान्तिकरत्वम् । सरत्वञ्च । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने ४६
अध्याये ।
"यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्म-
हरी सरा चेति ॥")
यवासा, स्त्री, (यवास + टाप् ।) गुण्डासिनीतृणम् ।
इति राजनिर्घण्टः ॥
यवाह्वः, पुं, (यवमाह्वयति सकारसत्वादिति । आ
+ ह्वे + कः ।) यवक्षारः । इति राजनिर्घण्टः ॥
(यथा, सुश्रुते चिकित्सितस्थाने २० अध्याये ।
"यवाह्वगौरिकोद्भिन्नैः पादलेपः प्रशस्यते ॥"
गुणादिविशेषोऽस्य यवक्षारशब्दे विज्ञेयः ॥)
यविष्ठः, त्रि, (अयमेषामतिशयेन युवा इति ।
युवन् + इष्ठन् । "स्थूलदूरेति ।" यणादिलोपगुणौ ।)
अतिशययुवा । (यथा, ऋग्वेदे । १ । १४७ । २ ।
"बोधा मे अस्य वचसो यविष्ठ ।")
कनिष्ठभ्रातरि, पुं । इति हेमचन्द्रः । ३।१।
(त्रिष्वपि । यथा, आश्वलायने । ३ । १ । ५ ।
"भ्रातुर्यविष्ठस्य सुताम् विवक्ष्यन्
प्रवेश्य सार्धाभवने इदाह ॥")
यवीयान्, [स्] त्रि, (अयमनयोरतिशयेन यु
युवन् + "द्विवचनविभज्योपपदे तरबीयसुनौ
५।३।५७ । इति ईयसुन् ।) कनिष्ठः । (य
मनौ । २ । १२८ ।
"अवाच्यो दीक्षितो नाम्ना यवीयानपि यो
भवेत्
अतिशय युवा । इति मेदिनी । से, ६१ ॥
यवोत्थं, क्ली, (यवेभ्य उत्तिष्ठतीति । उद् +
कः ।) सौवीरकम् । इति राजनिर्घण्टः ॥
यव्यं, त्रि, (यवानां भवनं क्षेत्रम् । यव + "
यवकयषष्टिकाद् यत् ।" ५।२।३ । इति यत्
यवादिभवनोचितक्षेत्रम् । तत्पर्य्यायः ।
यव्यम् २ षष्टिक्यम् ३ । इत्यमरः । २ । ९ ।
यवोचितम् ४ यवकोचितम् ५ । इति श
रत्नावली ॥ (यवेभ्यो हितम् । यव + "
यवमाषतिलवृषब्रह्मणश्च ।" ५ । १ । ७ ।
यत् । यवहितः । इति व्याकरणम् ॥)
यव्यः, पुं, (यवेभ्यो हितः । यव + यत् ।) मा
यथा,—
"यव्यद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः
इति प्रायश्चित्ततत्त्वे मत्स्यामात्स्यम
(स्त्री, नदीभेदः । यथा, ऋग्वेदे । ८।९८।८
"यार्वत्या यव्याभिर्व्वर्द्धन्ति शूरब्रह्माणि ।"
"यव्याभिः नदीभिः ।' अवनयः यव्याः
नदीनामसु पाठात् ।" इति तद्भाष्ये सायन
यशः, [स्] क्ली, (अश्नुते व्याप्नोतीति । अश
"अशेर्देवने युट् च ।" उणा० ४ । १९० । ।
असुन् युट् च ।) सुख्यातिः । तत्पर्य्यायः । की
२ समज्ञा ३ । इत्यमरः ।१।६।११॥ समाख्या
कीर्त्तना ५ अभिख्यानम् ६ आज्ञा ७ सम
८ । इति शब्दरत्नावली ॥
"दानादिप्रभवा कीर्त्तिः शौर्य्यादिप्रभवं यशः
इति माधवी
अतएव यशःकीर्त्त्योर्भेदस्यापि दर्शनात् य
कीर्त्तिपरिभ्रष्टो जीवन्नपि न जीवति ।
कस्यचित् प्रयोगः । जीवतः ख्यातिर्यशो म
ख्यातिः कीर्त्तिरिति केचित् । तन्न साधु कीर्त्ति
नृप कूतिकेति प्रयोगदर्शनात् ।" इत्यमरटीका
भरतः ॥ कीर्त्तिनाशे दोषो यथा,—
"हन्ति यः परकीर्त्तिञ्च स्वकीर्त्तिं मानवाध
स सतम इति ख्यातस्तमपश्च निश्चामय ।
अन्धकूपे वसेत् सोऽपि यावदिन्द्राश्चतुर्दश ।
कीटेनंकुलमानेन भक्षितः सततं नृप ! ।
तप्तक्षारोदके पापी नित्यं पिबति कामतः ।
ततः सर्पो जन्म सप्त काकः पञ्च ततः शृगि
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४९ अध्या

अन्नम्। यथा, ऋग्वेदे। ४।५२।११।
"वयं स्याम यशसो जनेषु।"
"यशसः कीर्त्तेरन्नस्य वा।" इति तद्भाष्ये सायनः॥ त्रि, यशस्वी। यथा, ऋग्वेदे। ८। ७८।५।
"त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः।"
"त्वं यशाः यशस्व्यसि भवसि।" इति तद्भाष्ये सायनः॥)

यशःपटहः, पुं, (यशःख्यापकः पटहः। शाकपार्थिववत् समासः।) ढक्का। इत्यमरः। १।७।६॥

यशःशेषः, त्रि, (यश एव शेषोऽस्य।) मृतः। इति हेमचन्द्रः। ३।१८॥ (यथा, कथासरित्सागरे। ६१।४४।
"ततः क्रमेण तेनैव ज्वरज्वरभरोग्रया। प्रपन्नोऽथदेहः प्रययौ स यशःशेषतां नृपः॥")
मरणे, पुं॥

यशदं, क्ली, धातुविशेषः। दस्ता इति भाषा। यथा,
"यशदं रङ्गसदृशं रीतिहेतुश्च तन्मतम्।
यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्।
चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत्॥"
इति भावप्रकाशः॥

यशस्करः, त्रि, कीर्त्तिकारकः। सुख्यातिजनकः। यशस्करोति य इत्यर्थे ("कृञो हेतुताच्छील्यानुलोम्येषु।" ३।२।२०।) इति टप्रत्ययेन निष्पन्नः। यशस्करी विद्या इति व्याकरणम्॥ (यथा, मनौ। ८।३८३।
"एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके।
साम्राज्यकृत् सजात्येषु लोके चैव यशस्करः॥"
विष्णुक्षेत्रविशेषे, क्ली। यथा, नारसिंहे ६२ अः।
"विरजं पुष्पभद्रायां बालग्रामोत्करे विदुः।
यशस्करं विपाशायां माहिष्मत्यां हुताशनम्॥"
शोभावतीपुर्य्यां जाते ब्राह्मणविशेषे, पुं। यथा, कथासरित्सागरे। १०४।१६।
"तस्यां यशस्करो नाम विद्यावाद्धो बहुक्रतुः।
ब्राह्मणोऽभूदभूत्तस्य सत्पत्नी मेखलेति च॥")

यशस्या, स्त्री, (यशसे हिता। यशस्+यत्।) जीवन्ती। ऋद्धिनामौषधिः। इति राजनिर्घण्टः॥

यशस्वान्, [त्] त्रि, (यशोऽस्त्यस्य। यशस्+मतुप्। मस्य वः।) कीर्त्तिविशिष्टः। इति व्याकरणम्॥ (यथा, अथर्व्ववेदे। ६।५८।२।
"यथेन्द्रो द्यावापृथिव्योर्यशस्वान्
यथाप ओषधीषु यशस्वतीः॥")

यशस्विनी, स्त्री, (यशस्विन्+ङीप्।) वनकार्पासी। इति शब्दरत्नावली॥ यवतिक्ता। महाज्योतिष्मती। इति राजनिर्घण्टः॥ (सत्यव्रतस्य पत्नी। यथा, कथासरित्सागरे। ७३।२५७।
"अहं यशस्वती नाम राजसेवानुजीविनः।
भार्य्या सत्यव्रताख्यस्य विप्रस्येहागतान्वया॥"
गङ्गा। यथा, काशीखण्डे गङ्गासहस्रनामस्तवने। २९।१४१।
"यशस्विनी यशोदा च योग्या युक्तात्मसेविता॥")

यशस्वी, [न्] त्रि, (यशोऽस्त्यस्येति। यशस्+"अस्मायामेधास्रजो विनिः।" ५।२।१२१। इति विनिः।) यशोविशिष्टः। कीर्त्तिमान्। इति व्याकरणम्॥ (यथा, मनौ। ९।३३४।
"विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्।
शुश्रूषैव तु शूद्रस्य धर्म्मो नैःश्रेयसः परः॥")

यशोदः, पुं, (यशो ददातीति। दा+कः।) पारदः। इति राजनिर्घण्टः॥ (धातुरूपोऽपि दृश्यते। यथा, वाराहे।
"सुवर्णं रजतं ताम्रं रङ्गं यशोदमेव च।
शीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः॥")
यशोदातरि, त्रि॥

यशोदा, स्त्री, (यशो ददातीति। दा+कः। टाप्।) नन्दपत्नी। यथा, श्रीभागवते १० स्कन्धे।
"नन्दः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम्।
यशोदा वा महाभागा पपौ यस्याः स्तनं हरिः॥"
(दिलीपमाता। यथा, हरिवंशे। १८। ६०।
"तेषान्तु मानसी कन्या यशोदा नाम विश्रुता।
पत्नी सा विश्वमहतः स्नुषा वै हरिवर्म्मणः।
राजर्षेर्जननी चापि दिलीपस्य महात्मनः॥"
यशोदातरि, त्रि। यथा, तैत्तिरीयसंहितायाम्। ४।४।६।२।
"यशोदां त्वा यशसि तेजोदां त्वा तेजसीति॥")

यष्टा, [ष्टृ] पुं, (यजते इति। यज्+तृच्।) यागकर्त्ता। तत्पर्य्यायः। यजमानः २। इत्यमरः। २। ७। ८॥ (यथा, मार्कण्डेये। १२०। २।
"स दानशीलो यष्टा च यज्वानामवनीपतिः॥")

यष्टिः, पुं, (इज्यते इति। यज्+बाहुलकात् तिः। इति उणादिवृत्तौ उज्ज्वलदत्तः। ४।१७९।) ध्वजदण्डः। इति विश्वशब्दरत्नावल्यौ॥ भुजदण्डः। इति मेदिनी। टे, २६॥

यष्टिः, पुं, स्त्री, (यजति सङ्गच्छते। यज्+तिः।) तन्तुः। इति शब्दमाला॥ हारलता। (हारावलिः। यथा, रघौ। १३। ५४।
"क्वचित्प्रभालेपिभिरिन्द्रनीलैर्-
मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपङ्कजानाम्
इन्दीवरैरुत्खचितान्तरेव॥"
"यष्टिः हारावलिः।" इति मल्लिनाथः॥ *॥)
भार्गी। मधुका। शस्त्रभेदः। इति मेदिनी। टे, २६॥ शेषस्य पर्य्यायः। दण्डः २। लगुडः ३ इति हेमचन्द्रः। ३। ४४९॥ तद्दानफलं यथा, वह्निपुराणे।
"यष्टिं ये तु प्रयच्छन्ति नेत्रहीने सुदुर्म्मदे।
तेषान्तु विपुलः पुंसां सन्तानो मोहवर्ज्जितः॥"
(स्त्री, शाखा। यथा, कुमारे। ६। २।
"चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी॥"
"चूतयष्टिः चूतशाखा इव।" इति तत्र मल्लिनाथः॥ यष्टिमधु। तत्पर्य्यायः। यथा,
"यष्ट्याह्वं मधुकं यष्टिः क्लीतकं मधुयष्टिका।
यष्टिमधु स्थलेजाता जलजातिरसा पुरा॥"
इति वैद्यकरत्नमालायाम्॥)

यष्टिकः, पुं, (यष्टिरिव। कन्।) जलकुक्कुटः इति शब्दरत्नावली॥ (यष्टि+स्वार्थे कन्।) दण्डश्च॥

यष्टिका, स्त्री, (यष्टि+स्वार्थे कन्। टाप्।) हारभेदः। यथा,—
"यष्टिका रश्मिका चैव तिलका नारिकेल्यपि॥"
इति जटाधरः॥
वापी। यथा,—
"प्रवर्त्तं दीर्घिका वापी यष्टिका भीमभोगिका॥"
इति त्रिकाण्डशेषः॥
यष्टिमधुका। यथा,—
"अथ यष्टीमधुकं स्यान्मधुयष्टी तु यष्टिका।"
इति शब्दरत्नावली॥
लगुडः। यथा,—
"अथ शक्तिश्च शक्ती च यष्टिर्यष्टी च यष्टिका।
दण्डः काष्ठोऽपि लगुडः पशुघ्नो दण्डकोऽपि च॥"
इति शब्दरत्नावली॥

यष्टिग्रहः, पुं, (यष्टिं गृह्णातीति। यष्टि+ग्रह+"शक्तिलाङ्गलाङ्कुशयष्टितोमरेति।" ३।२।९। इत्यस्य वार्त्ति० अच्।) यष्टिधारकः। लगुडग्राही। इति मुग्धबोधटीकायां दुर्गादासः॥

यष्टिमधु, क्ली, (यष्ट्यां मधु माधुर्य्यमस्य।) यष्टिमधुका। इति हलायुधः॥ (यथास्य पर्य्यायः।
"यष्ट्याह्वं मधुकं यष्टिः क्लीतकं मधुयष्टिका।
यष्टिमधु स्थलेजाता जलजातिरसा पुरा॥"
इति वैद्यकरत्नमालायाम्॥)

यष्टिमधुका, स्त्री, (यष्टिमधुवत् कायतीति। कै+कः।) यष्टिमधु। तत्पर्य्यायः। क्लीतकम् २ मधुकम् ३ मधुयष्टिका ४। इत्यमरः। २।४।१०९॥ यष्ट्याह्वम् ५ यष्टिः ६ स्थलेजातं चेत् यष्टिमधु ७ जलजा चेत् अतिरसा ८। इति रत्नमाला॥ अपि च।
"यष्टीमधु तथा यष्टीमधुकं क्लीतकं तथा।
अन्यत्क्लीतनकं तत्तु भवेत्तोये मधूलिका॥"
अस्या गुणाः।
"यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलवर्णकृत्।
सुस्निग्धा शुक्रला केश्या स्वर्य्या पित्तानिलास्रजित्।
व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा॥"
इति भावप्रकाशः॥

यष्टी, स्त्री, (यष्टि+"कृदिकारादक्तिनः।" इति ङीष्।) यष्टिमधु। इति भावप्रकाशः॥ (यथास्याः पर्य्यायः।
"यष्टी यष्ट्याह्वयं प्रोक्तं मधुकं मधुयष्टिका।"
इति गारुडे २०८ अध्यायः॥
तथास्या गुणाः। भावप्रकाशस्य पूर्व्वखण्डे १।
"यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलवर्णकृत्।

*सुस्निग्धा शुक्ला केश्या चर्म्या पित्तानिला-*
*स्रजित्।*
"स्त्रग्रोयविवर्ज्जहिक्काश्वासानिलापहा ।"
( हारभेद: । तत्पर्य्यायं यथा, हस्तसंहिता-
याम् । ८१ । ३६ ।
"संयोजिता या मणिना तु मध्ये
यष्टीति सा भूषणविद्भिरुक्ता ।")
यष्टीकं, स्त्री, ( यष्टी+कन् । ) यष्टिमधु । इति
राजनिर्घण्टः ॥
यष्टीपुष्पः, पुं, ( यष्टीपुष्पमिव पुष्पं यस्य । ) पुत्र
जीववृक्षः । इति भावप्रकाशः ॥
यष्टीमधु, स्त्री, (यष्ट्यां मधु माधुर्य्यमस्य ।) मिष्ट-
मूलविशेषः । जेठीमधु इति मूलहटी इति च
हिन्दी भाषा । तत्पर्य्यायः । मधुयष्टी २ मधु-
वल्ली ३ मधुस्रवा ४ मधूकम् ५ मधु ६ यष्टी-
कम् ७ यष्ट्याह्वम् ८ ॥ ( तथा च ।
"यष्टीमधु तथा यष्टी मधुकं क्लीतकन्तथा ।
अन्यत् क्लीतनकन्तत्तु भवेत्तोये मधूलिका ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
अस्य गुणाः । मधुरत्वम् । किञ्चित्तिक्तत्वम् ।
शीतलत्वम् । चक्षुष्यत्वम् । पित्तहरत्वम् । वण्य-
त्वम् । शोषतृष्णाव्रणापहत्वञ्च । इति राज-
निर्घण्टः ॥ ( यथा, सुश्रुते चिकित्सास्थाने
२७ अध्याये । "तत्र विड्ङ्गतण्डुलचूर्णमाहृत्य
यष्टीमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत ।")
यष्ट्याह्वं, स्त्री, ( यष्ट्याह्वा यस्य । ) यष्टिमधु ।
इति राजनिर्घण्टः ॥ ( यथा, सुश्रुते सूत्रस्थाने
१६ अध्याये ।
"यवाश्वगन्धा यष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं
हितम् ॥")
यस, इर् य उ यतने । इति कविकल्पद्रुमः ॥
( दिवा०-पर०-अक०-सेट् । क्त्वावेट् । ) इर्,
अयसत् अयासीत् अयसीत् । अस्मात् पुषा-
दित्वान्नित्यं ङ इत्यन्ये । य, प्रेयस्यति । क्लम
क्लम इत्यादिना केवलात् संपूर्व्वाच्च अस्मात्
श्यन् विकल्पात् यसति यस्यति संयस्यति
संयसति । उ, यसित्वा यस्त्वा । यतनं यत्नः ।
इति दुर्गादासः ॥
यस्कः, पुं, ( यसति मोक्षायेति । यस्+क्विप् ।
संज्ञायां कन् । ) मुनिविशेषः । इति मुग्धबोध-
व्याकरणम् ॥ (यथा, आश्वलायनश्रौतसूत्रे उत्त-
रार्द्धे । ६।१०।१०। "यस्कवाधौलमौनमौकश्राक-
राक्षिवार्ष्टिवार्षिंग्राजन्तायनजैमिनिदेवन्तायन-
ानां भार्गववैतहव्यसावेतसेति ।")
यह्वः, पुं, ( यजतीति । यज+"शेवायह्वजिह्वा-
ग्रीवाप्वामीवाः ।" उणा० १ । १५४ । इति
वन्प्रत्ययेन निपातितः । ) यजमानः । इत्यु-
णादिकोषः ॥ ( त्रि, महान् । यथा, ऋग्वेदे ।
३ । १ । १२ ।
"उदुस्रिया जनिता यो जजानापां गर्भो नृतमो
यह्वो अग्निः ।"
"यह्वो महान् ।" इति तद्भाष्ये सायनः ॥ )

*या, ल गतौ । इति कविकल्पद्रुमः ॥ ( अदा०-*
*पर०-सक०-अनिट् ।) ल, याति । इति दुर्गा-*
दासः ॥
यागः, पुं, (इज्यते इति । यज्+घञ् । ) यज्ञः ।
इत्यमरः । २ । ७ । १३ ॥ तत्र श्रौताग्निसाध्य-
हविर्यज्ञाः सप्त । यथा । अग्न्याधानं तदे-
वाग्निहोत्रम् १ दर्शपौर्णमासौ २ पिण्डपितृ-
यज्ञः ३ आग्रयणम् ४ चातुर्म्मास्यः ५ निरूढ-
पशुबन्धः ६ सौत्रामणिः ७ । स्मार्त्ताग्निसाध्य-
पाकयज्ञाः सप्त । यथा । औपासनम् १ वैश्व-
देवः २ स्थालीपाकः ३ आग्रयणम् ४ सर्प-
बलिः ५ ईशानबलिः ६ अष्टकाष्टका ७ ।
श्रौताग्निसप्तसंस्थाः । यथा । सोमयागः स
एवाग्निष्टोमः १ अत्यग्निष्टोमः २ उक्थ्यः ३
षोडशी ४ वाजपेयः ५ स द्विविधः संस्था
क्रतुश्च । अतिरात्रः ६ अप्तोर्य्यामः ७ । उत्तर-
क्रतवो बहवः । यथा । महाव्रतम् १ सर्व्वतो-
मुखम् २ राजसूयः ३ पौण्डरीकम् ४ अभि-
जित् ५ विश्वजित् ६ अश्वमेधः ७ इष्टप्रसवः
८ आङ्गिरसः ९ चयनान्यष्टादश २७ । इत्यादि
श्रौतसूत्रम् ॥ * ॥ सर्व्वदेवानां यागकालो यथा,
शुक्र उवाच ।
"स्वल्पेनैव तु द्रव्येण महापुण्यं यथा भवेत् ।
तदहं श्रोतुमिच्छामि ग्रहयागं सुरेश्वर ! ॥
ब्रह्मोवाच ।
शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
अल्पकेन महापुण्यं यद्वर्त्तितिथियौगिकम् ॥
भृगुपूर्व्वाष्टमीयोगं शिवयागेषु चोत्तमम् ।
मृदुवर्गश्च भाग्यश्च उमाया भृगुवासरे ॥
दैवयोगात् यदा षष्ठी पुष्यर्क्षं रविवासरम् ।
स्कन्दयागस्तदा कार्य्यः सर्व्वकामप्रसाधकः ॥
वारेण वा यदा सूर्य्यः सप्तमी विजया मता ।
तदा तु भवति भानोर्य्यागः सर्व्वगुणावहः ॥
शशिरिक्तानुसंयोगे अर्क्केन्द्वे सोत्तरासु च ।
नवम्यां मङ्गलायोगो भानुमूलदिनं यदा ॥
अष्टम्यां वाथ चन्द्राहे श्रवणेन शुभावहम् ।
अहिर्बुध्न्यं कृष्णाहे तु गणेशे तस्य वाहनि ॥
पुनर्व्वसौ गुरोर्व्वारे द्वादश्यां श्रवणेन वा ।
सोमपक्षं यदा योगं विष्णोः सर्व्वार्थसाधकम् ॥
द्वितीयायां यदा सौम्ये कृत्तिकर्क्षं भवेत् क्वचित् ।
ग्रहयागस्तदा कार्य्यः सर्व्वशान्तिप्रदायकः ॥
स्वातीसौमी चतुर्थी च उमायागे वरा स्मृता ॥
उत्तरासु च सर्व्वासु भानुपौर्णाष्टमीषु च ।
शान्त्यभिषेकयागेषु सर्व्वकामार्थदाष्टमी ॥
गुरावेकादशी पुष्ये रोहिण्या वा यदा शनिः ।
सुतसौभाग्यकामाय यागो वक्रविनायके ॥
पूर्णिमासु च सर्व्वासु अष्टमीद्वादशीषु च ।
चतुर्द्दश्यां तृतीयासु ग्रह भानौ शुभेषु च ।
सर्व्वेषां भवति यागो भक्तिपूर्व्वो महामुने ! ॥
मन्त्रसाधनद्रव्याणां रत्नयामादवाप्यते ।
श्रीमेधाज्ञानवाक्सत्त्वसमायामाश्वशासने ॥
योगज्ञानवशः सिद्धिं महादेवादवाप्नुयात् ।

*आरोग्यं वप्रतापत्वं भास्करात् प्राप्यते ध्रुवम्*
*गतिमिष्टां यथाकामं प्रयच्छति त्रिविक्रमः ।*
विघ्नो न भवती तस्य यस्तु पश्येद्विनायकम् ॥
विगतारिर्भवेत् यष्ट्वा दृष्ट्वा स्कन्दं मखे च यात् ।
मातृयागाच्छवासिद्धिः सर्व्वेषामपि जायते ॥
भवति धनवान् पुंसः प्रथमादि कृताश्रयात् ।
स्वर्गापवर्गसंसिद्धिर्दुर्गायागात् प्रजायते ॥
मायाद्यैर्मङ्गलाशीत्या च्यैष्ठाद्यैश्च जायते ।
ईशाद्यैः कालिकाद्यास्तु यष्ट्वा विधिना मुने ।"
इत्याद्यं दैत्यवतारे उदयतिथ्यर्क्षयोगकालाश्रा-
कीर्त्तनम् ॥ * ॥
अथ ग्रहयागविधिः ।
"प्रणम्य नव रथादीन् शुभाशुभफलप्रदान् ।
ग्रहयागविधिं सम्यक् वक्ति श्रीरघुनन्दनः ॥
अथ ग्रहयागप्रयोगः ।
तत्र रविसोमबुधगुरुशुक्रवारेषु चित्रानुराधा-
मृगशिरोरेवतीपुष्याश्विनीहस्तारोहिण्युत्तरा-
त्रयेषु चन्द्रताराशुद्धौ शुभकर्म्म वासुः कार्य्यः ।
अत्र वालयष्टभूतग्रहप्रबलतरनराधिपग्रह-
दुःस्वप्नरोगाभिभवाद्भूतदुःस्वप्नावलोकनग्रहदो-
षाद्यादिनिमित्तकं शान्तिकं मलमासादावपि
कर्त्तव्यम् । अथग्रहं विना केवलहृष्टायुःपुष्टिपुत्र-
श्रीकामादिपौष्टिकन्तु मलमासादीतरकाल एव
कार्य्यम् ॥ * ॥ तत्र यजमानः कृतस्नानादिः
गोमयोपलिप्ते देशे सदर्भासनोपविष्ट उदङ्मुखः
स्वस्तिवाच्यः सूर्य्यः सोम इति पठित्वा फलपुष्प-
तिलदर्भयवसहितजलपूर्णताम्रपात्रं गृहीत्वा,
ॐ तद्विष्णोरिति विष्णुं संस्मृत्य ॐ तत् सवि-
तुर्वार्य्य ॐ अद्येतादि अमुकगोत्रः श्रीअमुक-
देवशर्म्मा अमुककामो ग्रहयज्ञमहं करिष्ये
इति सङ्कल्प्य तज्जलमैशान्यां निःक्षिपेत् ।
अन्यार्थत्वे गोत्रनाम्नोः षष्ठ्यन्तता । करिष्ये
इत्यत्र करिष्यामीति विशेषः । ततः श्वेतसर्षपा-
नादाय ।
ॐ वेतालाश्च पिशाचाश्च राक्षसाश्च सरी-
सृपाः ।
अपसर्पन्तु ते सर्व्वे ये चान्ये विघ्नकारकाः ॥
ॐ विनायका विघ्नकरा महोग्रा
यज्ञद्विषो ये पिशिताशनाश्च ।
सिद्धार्थकैर्वज्रसमानकल्पै-
र्मया निरस्ता विदिशः प्रयान्तु ॥
इत्येताभ्यां मन्त्राभ्यां श्वेतसर्षपप्रक्षेपैर्विघ्नका-
रकानपसारयेत् । ततः गणाधिपगौरी-
मातृकापूजा वसोर्धारा आयुष्यजपं वृद्धि-
गायत्रीजपं वृद्धिश्राद्धञ्च कृत्वा तदन्ते भोज्य-
मुत्सृज्य ब्राह्मणान् परितोष्य ततः अन-
मस्यतो कर्त्ता प्राङ्मुखं गुरुम् ॐ साधु भवा-
नास्तामिति वदेत् ॐ साध्वहमासे इति प्रति-
वचनम् । ततो गन्धपुष्पवस्त्राङ्गुरीयकादिना
गुरुमलङ्कृत्य दक्षिणं जानु स्पृष्ट्वा ॐ अद्ये-
त्यादि सुखहृषितयग्रहयागकर्म्मणि कृतपूजा-
होमकर्म्मकरत्वेन अमुकगोत्रं अमुकदेव

शुभ्रोऽयं गन्धादिभिरभ्यर्च्य भवन्तमहं वृणे । ॐ
वृतोऽस्मीति प्रतिवचनम् । ॐ यथाविहितं
पूजादिकर्म्म कुरु । ॐ यथाज्ञानं करवाणीति
प्रतिवचनम् ॥ * ॥ ततो मण्डपोत्तरपूर्व्वभागे
वितस्तिद्वयविस्तृतायां वितस्त्युच्छ्रितायां उदक्-
प्रवायां वेद्यां गोमयेनोपलिप्तायां रक्तचन्दना-
दिना मध्ये वर्त्तुलं सूर्य्यम् । आग्नेय्यां श्वेतमर्द्ध-
चन्द्राकारं सोमम् । दक्षिणस्यां त्रिकोणं रक्तं
मङ्गलम् । ऐशान्यां पीतं धनुराकारं बुधम् ।
उत्तरस्यां पीतं पद्माकारं बृहस्पतिम् । प्राच्यां
श्वेतं चतुष्कोणं शुक्रम् । प्रतीच्यां श्यामं सर्पा-
कारं शनिम् । नैर्ऋत्यां श्यामं मकराकारं
राहुम् । वायव्यां धूम्रवर्णान् खड्गाकारान्
केतून् विलिख्य स्वगृह्योक्तविधिना अग्निस्थाप-
नादिग्रहस्थापनपर्य्यन्तं कर्म्म कृत्वा मण्डपे
ग्रहानावाहयेत् ॥ * ॥ तत्र क्रमः । मध्ये ।
ॐ क्षत्रियं काश्यपं रक्तं कालिङ्गं द्वादशा-
ङ्गुलम् ।
पद्महस्तद्वयं पूर्व्वाननं सप्ताश्ववाहनम् ।
शिवाधिदेवतं ध्यायेद्वह्निप्रत्यधिदेवतम् ॥
...म्यां जायमानं विशाखानक्षत्रं रक्तमाल्या-
...म्बरधरम् । इति ध्यात्वा ॐ भूर्भुवः स्वः सूर्य्यग्रह
इहागच्छ इहागच्छ इह तिष्ठ इह तिष्ठ इति
शुक्लतण्डुलैरावाह्य स्थापयेत् ॥ १ ॥ आग्नेये ।
ॐ सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् ।
...तं द्विबाहुं वरदं दक्षिणं सगदेतरम् ॥
...श्वेतपद्मस्थं विचिन्त्योमाधिदेवतम् ।
...जलप्रत्यधिदेवञ्च सूर्य्यास्यमाकर्षयेत्तथा ॥
...चतुर्द्दश्यां जातं कृत्तिकानक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः सोमग्रह इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ २ ॥ दक्षिणस्याम् ।
ॐ आवन्त्यं क्षत्रियं रक्तं मेषस्थं चतुरङ्गुलम् ।
...रक्तमाल्यवसनं भारद्वाजं चतुर्भुजम् ॥
...दक्षिणोर्द्ध्वक्रमात् शक्तिवराभयगदाकरम् ।
...आदित्याभिमुखं देवं तद्वदेव समाकर्षयेत् ।
स्कन्दाधिदेवतं भौमं क्षितिप्रत्यधिदेवतम् ॥
...म्यां जातं पूर्व्वाषाढानक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः मङ्गलग्रह इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ ३ ॥ ऐशान्याम् ।
ॐ मागधं बुधमात्रेयं वैश्यं पीतं चतुर्भुजम् ।
...मोर्द्ध्वक्रमतश्चर्म्मगदावरदखड्गिनम् ॥
...ध्यस्थं सिंहगं सौम्यं पीतवस्त्रं तथाकर्षयेत् ।
...नारायणाधिदेवञ्च विष्णुप्रत्यधिदेवतम् ॥
...म्यां जातं धनिष्ठानक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः बुधग्रह इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ ४ ॥ उत्तरस्याम् ।
...चमाङ्गिरसं पीतं सैन्धवञ्च षडङ्गुलम् ।
...त्वा पीताम्बरं जीवं सरोजस्थं चतुर्भुजम् ॥
...द्धदक्षवरदकरकाद्यमाकर्षयेत् ।

ब्रह्माधिदेवं सूर्य्यास्यमिन्द्रप्रत्यधिदेवतम् ॥
एकादश्यां जातं उत्तरफल्गुनीनक्षत्रमिति-
ध्यात्वा ॐ भूर्भुवः स्वः बृहस्पते इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ इति शुक्ल-
तण्डुलैरावाह्य स्थापयेत् ॥ ५ ॥ ततः प्राच्याम् ।
ॐ शुक्रं भोजकटं विप्रं भार्गवञ्च नवाङ्गुलम् ।
पद्मस्थमाकर्षयेत् सूर्य्यमुखं श्वेतं चतुर्भुजम् ॥
सदाक्षवरकरकादण्डहस्तं सिताम्बरम् ।
शक्राधिदेवतं ध्यायेत् शचीप्रत्यधिदेवतम् ॥
नवम्यां जातं पुष्यनक्षत्रमिति ध्यात्वा ॐ भूर्भुवः
स्वः शुक्र इहागच्छ इहागच्छ इह तिष्ठ इह
तिष्ठ इति शुक्लतण्डुलैरावाह्य स्थापयेत् ॥ ६ ॥
पश्चिमायाम् ।
सौराष्ट्रं काश्यपं शूद्रं सूर्य्यास्यं चतुरङ्गुलम् ।
कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम् ॥
तद्वद्वाणवरशूलधनुर्हस्तं समाकर्षयेत् ।
यमाधिदेवतं प्रजापतिप्रत्यधिदेवतम् ॥
कृष्णचतुर्द्दश्यां जातं रोहिणीनक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः शनैश्चर इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ ७ ॥ नैर्ऋत्याम् ।
राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम् ।
कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तथाकर्षयेत् ॥
चतुर्ब्बाहुं खड्गवरशूलचर्म्मकरं तथा ।
कालाधिदेवं सूर्य्यास्यं सर्पप्रत्यधिदेवतम् ॥
पौर्णमास्यां जातं भरणीनक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः भगवन् राहो इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलै-
रावाह्य स्थापयेत् ॥ ८ ॥ वायव्याम् ।
कौशद्वीपं केतुगणं जैमिनीयं षडङ्गुलम् ।
धूम्रं गृध्रगतं शूद्रमाकर्षयेत् विकृताननम् ॥
सूर्य्यास्यं धूम्रवसनं वरदं ग[illegible]ं तथा ।
चित्रगुप्ताधिदेवञ्च ब्रह्मप्रत्यधिदेवतम् ॥
अमावास्यायां जातं अश्लेषानक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः भगवन्तः केतव इहागच्छत
इहागच्छत इह तिष्ठत इह तिष्ठत इति
शुक्लतण्डुलैरावाह्य स्थापयेत् ॥ ९ ॥ अधिदेवत-
प्रत्यधिदेवतपूजनञ्च अयुतहोमादौ । तत-
त्तद्वर्णवस्त्रतत्तद्वर्णगन्धतत्तद्वर्णपुष्पं दद्यात् ॥
धूपे विशेषः । रवये गुग्गुलुधूपम् । सोमाय
सरलम् । मङ्गलाय देवदारुम् । बुधाय घृत-
मिश्रितदेवदारुम् । बृहस्पतये दशाङ्गम् ।
शुक्राय अगुरु । शनैश्चराय कालागुरु । राहवे
गुड़त्वचम् । केतुभ्यो मधुमिश्रितगुड़त्वचम् ।
अभावे षोड़शाङ्गं वा ॥ * ॥ गन्धे विशेषः ।
सूर्य्याय रक्तचन्दनम् । सोमाय श्वेतचन्दनम् ।
मङ्गलाय कुङ्कुमम् । बुधाय सरलम् । गुरवे
रक्तचन्दनश्वेतचन्दनकुङ्कुमसरलं मिश्रितसम-
भागत्वेन दद्यात् । शनैश्चराय कस्तूरीम् ।
राहवे पद्मकाष्ठम् । केतुभ्यश्च पद्मकाष्ठम् ।
अधिदेवताप्रत्यधिदेवताः पूजयेत् ॥ * ॥ अधि-
देवता प्रत्यधिदेवता यथा । सूर्य्यस्य शिववह्नी ।

सोमस्य उमा जलम् । मङ्गलस्य स्कन्दः क्षितिः ।
बुधस्य नारायणविष्णू । बृहस्पतेः ब्रह्मा
इन्द्रश्च । शुक्रस्य शक्रः शची । शनैश्चरस्य यमः
प्रजापतिश्च । राहोः कालः सर्पश्च । केतूनां
चित्रगुप्तः ब्रह्मा च । एतत्तु अयुतादिहोमे
ज्ञेयम् ॥ * ॥ सूर्य्याय गुड़ौदनबलिः । एवं
सोमादीनामपि । सति सामर्थ्ये षोड़शोपचारा-
दिना । बलौ तु । सूर्य्याय गुड़ौदनम् । सोमाय
घृतपायसम् । मङ्गलाय यवकचूर्णात्मकयाव-
कम् । बुधाय क्षीरान्नम् । गुरवे दध्योदनम् ।
शुक्राय घृतौदनम् । शनैश्चराय कृशरम् ।
राहवे छागमांसम् । केतुभ्यः अजाक्षीर-
साधिताजकर्णरक्तमिश्रित-यव-तिल-तण्डुलरूपं
चित्रौदनम् तत्तद्द्रव्यालाभे भक्ष्यान्तरं
दद्यात् ॥ * ॥ ततश्चरुं श्रपयेत् । तत्र साम-
गानां क्रमः । अग्नेः पश्चिमायां दिशि प्राग-
ग्रान् कुशानास्तीर्य्य तदुपरि प्रक्षालितवारुण-
मुदूखलं वैणवञ्च सूर्पं वारणचमसस्थजल-
प्रोक्षितं संस्थाप्य व्रीहीन् यवान् वा अप्रक्तौ
प्रालिततण्डुलान् सूर्पे निधाय ॐ सूर्य्याय त्वा
जुष्टं निर्व्वपामि इति गृहीत्वा उदूखले
स्थापयेत् । एवं सोमाय । एवं मङ्गलादीनामपि
निर्व्वपणं कृत्वा उदूखले स्थापयेत् । त्रिस्तूष्णीम् ।
ततो दक्षिणहस्तमुपरि कृत्वा सव्येनावहत्य
सूर्पेण प्रस्फोटयेत् । इत्थमेव वारत्रयम् । तत-
श्चरुस्थाल्याममन्त्रकं कृतोत्तराग्रं पवित्रं
निःक्षिप्य तत्र प्रक्षालिततण्डुलान् निधाय
तदुपरि दुग्धं दत्त्वा यथा पायसश्चरुर्भवति
तथा स्तोकं स्तोकमुदकं दत्त्वा तन्मध्ये खदिर-
पलाशोडुम्बराणामन्यतमस्य प्रादेशप्रमाणं
उभयथा सार्द्धाङ्गुष्ठप्रमाणं चतुष्कोणपुष्कलं
मेक्षणं दक्षिणावर्त्तेन भ्रामयित्वा तथा पचेत्
यथा अन्तरोष्मणा सम्यक् पाको भवति मण्ड-
गालनं दाहश्च न भवति । सम्यक्पाके भूते
चरुमध्ये घृतस्रुवं दत्त्वा प्रागादिदिक्चिह्नितं
कृत्वा चरुमवतार्य्य अग्नेरुत्तरतः कुशोपरि
स्थापयित्वा पुनर्मध्ये घृतस्रुवं दद्यात् । ततो
भूमिजपादिस्रुवसंस्कारपर्य्यन्तं कर्म्म कृत्वा
अग्नेः पश्चिमतः स्तरणकुशोपरि पूर्व्वमाज्यं
पश्चाच्चरुं निधाय उदकाञ्जलिसेकं कृत्वा
विरूपाक्षजपान्तां कुशण्डिकां समापयेत् ॥ * ॥
यजुर्व्वेदिनान्तु आज्यस्थाल्यामाज्यनिर्व्वपणा-
नन्तरं सूर्पं पुरतो दक्षिणभागे संस्थाप्य तत्रो-
दूखलं विन्यस्य व्रीह्याद्यन्यतमं तत्र निधाय
ॐ सूर्य्याय त्वा जुष्टं गृह्णामि इत्येकां मुष्टिं
गृहीत्वा ॐ सूर्य्याय त्वा जुष्टं निर्व्वपामीति
उदूखले स्थापयित्वा ॐ सूर्य्याय त्वा जुष्टं
प्रोक्षामीति प्रोक्षणीजलेन प्रोक्षयेत् । एवं
सोमाय त्वा इत्यादि । तत ॐ अग्नये स्विष्ट-
कृते त्वा इत्यादिना ग्रहणनिर्व्वपणप्रोक्षणानि
कृत्वा त्रिस्तूष्णीं कुर्य्यात् । ततः पूर्व्ववत्
श्रपणम् । पक्वं ज्ञात्वा स्विष्टकृदर्थं गृहीत्वा

चरुमध्ये दक्षिणावर्त्तेन भ्रामयित्वा तमग्निं तत्रैवाग्नौ क्षिपेत्। तत आघाराज्यभागान्तं कर्म्म कुर्य्यात् ॥ * ॥ ऋग्वेदिनान्तु प्रोक्षणी-पात्रस्थापनानन्तरं पवित्रान्तर्हिते ॐ सूर्य्याय त्वा जुष्टं निर्व्वपामीति व्रीह्याद्यन्यतममुष्टिं प्रक्षिप्य ॐ सूर्य्याय त्वा जुष्टं प्रोक्षामीति प्रणीताजलेन प्रोक्षयेत्। एवं सोमाय त्वा इत्यादि। ततः खिद्यद्दर्पैकिञ्चिदधिकं तूष्णीं तथा कृत्वा पवित्रान्तर्हितं कृत्वा पूर्व्वग्रीवोर्द्ध-लोमकृष्णाजिने उदूखलं निधाय तत्र सूर्पस्थ-व्रीह्याद्यन्यतमं प्रक्षिप्य मुषलेनावहत्य सूर्पेण वितुषीकृत्य प्रक्षाल्य त्रिः प्रक्षाल्य पवित्रं चरुस्थाल्यां प्रक्षिप्य तथैव श्रापयित्वा उदीच्यां दक्षिणभागे ॐ सोमाय स्वाहेति होमपर्य्यन्तं कुर्य्यात्। ततः शान्तिकर्म्मणि अग्ने त्वं वरद-नामासीति नाम कृत्वा।

ॐ पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः।
छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधा-
रकः ॥

इत्यादिपुराणीयं ध्यात्वा ॐ वरदनामन्नग्ने इहागच्छ इहागच्छ इह तिष्ठ इह तिष्ठ इत्यावाह्य पाद्यादिना पूजयेत् ॥ * ॥ पौष्टिक-कर्म्मणि तु बलदनामाग्निः। ग्रहहोमे अग्नी-नाह गोभिलः। 52778

आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते।
धूमकेतुस्तथा भौमे जठरोऽग्निर्बुधे स्मृतः ॥
वृहस्पतौ शिखी नाम शुक्रे भवति हाटकः।
शनैश्चरे महातेजा राहौ चैव हुताशनः।
केतुषु लोहितोऽग्निः स्यादिति वह्निविनिर्णयः ॥

ततः स्वगृह्योक्तविधिनानेन चरुणा सूर्य्यादि-ग्रहेभ्यः प्रत्येकाहुतिं दद्यात् ॥*॥ अत्र मन्त्राः। सूर्य्यस्य आकृष्णेनेतिमन्त्रस्य हिरण्यस्तूपाङ्गिरा ऋषिस्त्रिष्टुप् छन्दः सविता देवता आदित्यस्य पूजाहोमकर्म्मणि विनियोगः। ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा। इदं सूर्य्याय इति देवतोद्देशः सामगेतरैः कार्य्यः ॥ १ ॥ सोमस्य इमन्देवेति-मन्त्रस्य वरुण ऋषिरग्निर्देवता सोमस्य पूजा-होमकर्म्मणि विनियोगः। ॐ इमन्देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय। इममस्य पुत्रममुष्ये पुत्रमस्यै विशे स्वाहा। इदं सोमाय ॥ २ ॥ मङ्गलस्य अग्निर्मूर्द्धेति-मन्त्रस्य अपाङ्गिरा ऋषिर्गायत्री छन्दोऽग्नि-र्देवता मङ्गलस्य पूजाहोमकर्म्मणि विनि-योगः। ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वति स्वाहा। इदं मङ्गलाय ॥ ३ ॥ बुधस्य उद्बुध्यस्वेतिमन्त्रस्य पर-मेष्ठिऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता बुधस्य पूजा-होमकर्म्मणि विनियोगः। ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्चास्मिन् सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत स्वाहा। इदं बुधाय ॥४॥ वृहस्पतेः वृह-स्पते अतीतिमन्त्रस्य गृत्समद ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता जीवस्य पूजाहोमकर्म्मणि विनि-योगः। ॐ वृहस्पते अतियदर्य्योऽर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतु प्रजात तद-स्मासु द्रविणं धेहि चित्रं स्वाहा। इदं वृह-स्पतये ॥५॥ शुक्रस्य अन्नात् परिस्रुत इति मन्त्रस्य प्रजापतिर्ऋषिरतिजगती छन्दोऽग्निसरस्वतीन्द्रा देवताः शुक्रस्य पूजाहोमकर्म्मणि विनियोगः। ॐ अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु स्वाहा। इदं शुक्राय ॥ ६ ॥ शनैश्चरस्य शन्नो देवीतिमन्त्रस्य दध्यङ्ङाथर्व्वण ऋषिर्गायत्री छन्द आपो देवता शनैश्चरस्य पूजाहोम-कर्म्मणि विनियोगः। ॐ शन्नो देवीरभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः स्वाहा। इदं शनैश्चराय ॥७॥ राहोः काण्डात् काण्डा-दिति मन्त्रस्य अग्निर्ऋषिर्गायत्री छन्दो दूर्व्वे-ष्टका देवता राहोः पूजाहोमकर्म्मणि विनि-योगः। ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषः परि एवानो दूर्व्वे प्रतनु सहस्रेण शतेन च स्वाहा। इदं राहवे ॥ ८ ॥ केतूनां केतुं कृण्वन्नितिमन्त्रस्य मधुच्छन्द ऋषिरनिवृद्गायत्री-छन्दोऽग्निर्देवता केतूनां पूजाहोमकर्म्मणि विनियोगः। ॐ केतुं कृण्वन् केतवे पेशो मर्य्या अपेशसे। समुषद्भिरजायथा स्वाहा। इदं केतुभ्यः ॥ ९ ॥ ततो मधुघृताक्तां घृताक्तां क्षीराक्तां वा प्रादेशप्रमाणां सार्द्रामर्कसमिध-मादाय ॐ आकृष्णेन इत्यादिमन्त्रेण सूर्य्याया-ष्टोत्तरशतं अष्टाविंशतिमष्टौ वा अशक्या। शक्या ग्रहस्यातिपीडाकरत्वाद्वा अष्टोत्तर-सहस्रं जुहुयात् ॥ * ॥ समिधमाह याज्ञ-वल्क्यः।

अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः।
उडुम्बरः शमी दूर्व्वा कुशाश्च समिधः क्रमात् ॥
होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत्।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते।
अतिपीडाकरो यस्तु तन्तु यत्नेन पूजयेत् ॥

ततो होमानन्तरं उदीच्यं कर्म्म कुर्य्यात्। ततो गुडौदनादीन् ऋत्विजो भोजयेत्। तत्तद्द्रव्या-लाभे भोज्यान्तराणि वा दद्यात्। भोजना-सामर्थ्ये तत्तद्द्रव्याणि पात्रेणा प्रतिपादयेत्। ततो मत्स्यपुराणोक्तैर्मन्त्रैर्दक्षिणां दद्यात्।

धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा।
कृष्णा गौरायसं छाग एता वै दक्षिणाः
क्रमात् ॥

तत्र।

कपिले सर्व्वदेवानां पूजनीयासि रोहिणी।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा ॐ अद्येत्यादि कृतैतत्सूर्य्यग्रह-यज्ञकर्म्मणः प्रतिष्ठार्थं दक्षिणां कपिलां धेनुं रुद्रदैवताकां अमुकगोत्राय अमुकदेवशर्म्म ब्राह्मणाय ऋत्विजे तुभ्यमहं संप्रददे। अन्य चेत् ददानीति ब्रूयात्। कपिलाभावे गोम वा। तदभावे काञ्चनम्। तदभावे रजता वा दद्यात्। काञ्चनादिकन्तु शङ्खादि दक्षि भावेऽपि दद्यात् ॥ १ ॥ एवम्।

पुण्यस्त्वं शङ्खपुण्यानां मङ्गलानाञ्च मङ्गलम्।
विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे
इत्युच्चार्य्य पूर्व्वोक्तक्रमेण सोमग्रहयज्ञे
दद्यात् ॥ २ ॥

ॐ धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य मङ्गलयज्ञे वृषं दद्यात् ॥ ३ ॥

ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य बुधयज्ञे काञ्चनं दद्यात् ॥ ४ ॥

ॐ पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम्।
वरप्रदानाद्धरिणोरतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य गुरुयज्ञे पीतवस्त्रयुगं दद्यात् त भावेऽन्यवर्णवासोयुगमपि दद्यात् ॥ ५ ॥

ॐ विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः।
चन्द्रार्कवाहनस्त्वं वै अतः शान्तिं प्रयच्छ मे
इत्युच्चार्य्य शुक्रयज्ञे अश्वं दद्यात् ॥ ६ ॥

ॐ यस्मात्त्वं पृथिवी सर्व्वा धेनुः केशवसम्भवा
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य शनैश्चरयज्ञे कृष्णां धेनुं अन्यवर्णां दद्यात् ॥ ७ ॥

ॐ यस्मादायसकर्म्माणि त्वदधीनानि सर्व्वदा
लाङ्गलाद्यायुधादीनि ततः शान्तिं प्रयच्छ मे
इत्युच्चार्य्य राहुयज्ञे लौहं दद्यात् ॥ ८ ॥

ॐ यस्मात्त्वं सर्व्वभूतानां मङ्गलाय व्यव-
स्थितः
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे।
इत्युच्चार्य्य केतुयज्ञे छागं दद्यात् ॥९॥ दक्षिणान शान्तिकुम्भजलेन संसिच्य शान्तिं कुर्य्यात् ततः कृताञ्जलिः।

ॐ गच्छध्वममराः सर्व्वे गृहीत्वार्घ्यं स्वमा-
लयम्।
सन्तुष्टा वरमस्माकं दत्त्वेदानीं सुपूजिताः ॥

इति विष्णुधर्म्मोत्तरीयं पठित्वा ग्रहान् वि र्जयेत्। दक्षिणा च प्रदातव्या ग्रहाणाञ्च वि र्जनमिति वशिष्ठवचनात्।” इति रघुनन्द भट्टाचार्य्यविरचितग्रहयागप्रयोगः समाप्तः।

याच, टु डु ऋ ञ याचने। इति कविकल्पद्रुमः। (भ्वा०-उभ०-द्विक०-सेट्।) याचनमा दानार्थं प्रेरणम्। टु, याचथुः। डु, याचि त्रिमम्। ऋ, अययाचत्। ञ, याचति याच नृपं विप्रः। यस्यार्थं प्रेरणेऽपि याचति वि गुरवे शिष्यः। इति दुर्गादासः ॥

याचकः, त्रि, (याचत इति। याच्+ण्वुल्।) याच्ञाकर्त्ता। तत्पर्य्यायः। वनीपकः २ याचनकः ३ मार्गणः ४ अर्थी ५। इत्यमरः।

३ । १ । १९ । यमोपके: ६ भिक्षुक: ७ भिक्षा-कर: ८ । इति शब्दरत्नावली ॥ तस्य लघुत्वं यथा,—

"तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ किञ्चित्प्रार्थनशङ्कया ॥"
इति प्राचीनाः ॥

अपि च ।

"कुक्षस्य कीटखातस्य वाताग्निव्याधितस्य च ।
शिखरे वसतस्तस्य वरं जन्म न याचितम् ॥
अतत्त्वतिर्हि याचित्वा विश्ववर्णामतां गतः ।
कोऽन्योऽधिकतरस्तस्य योऽर्थी याति न लाघवम् ॥"
इति गारुडे नीतिसारे ११५ अध्यायः ॥

याचन, [त्] त्रि, (याचतीति । याच् + शतृ । ) याचकः । यथा,—

"मुखभङ्गः स्वरो दीनो गात्रस्वेदो महद्भयम् ।
मरणे यानि चिह्नानि तानि चिह्नानि याचन: ॥"
इति गारुडे नीतिसारे ११५ अध्यायः ॥

याचनं, क्ली, ( याच् + भावे ल्युट् । ) याच्ञा । ( यथा, नैषधे । ५ । ११२ ।

"भीमजार्थयाचनवाचे
यूयमेव गुरवः करणीयाः ॥")

याचनकः, त्रि, (याचन + स्वार्थे कन् ।) याचकः । इत्यमरः । ३।१।४९ ॥ ( यथा, मनौ । ३।१६५ ।
प्राणारथीन: क्लीवश्च नित्यं याचनकस्तथा ॥")

याचना, स्त्री, ( याच् + स्वार्थे णिच् + युच् । टाप् । ) याच्ञा । इत्यमरः । २ । ७ । ३२ ॥ यथा, रामायणे । २ । २७ । २३ ।
"नयस्व मां साधु कुरुष्व याचनाम् ॥")

याचमान:, त्रि, (याचते इति । याच् + शानच् ।) याचकः । यथा,—

"नवीनदीनभावस्य याचमानस्य मानिनः ।
चोत्तीवितयोरासीत् पुरोनिःसरणे रणः ॥"
इति वररुचिः ॥

अपि च ।

द्विजेभ्यो याचमानेभ्यो यजमानः प्रयच्छति ।
याति चाप्ययान् लोकान् येभ्यो नावर्त्तते पुनः ॥
दिवर्षसहस्राणां सहस्राणि वसेद्दिवि ।
ऽशुमन्तापि भवति निरये प्रतिषेधकः ॥"
ति वह्निपुराणे वामनप्रादुर्भावो नामाध्यायः ॥

याचितं, क्ली, ( याच् + क्तः । ) याचनवृत्तिः । पर्यायः । मृतम् २ । यथा,—
े याचितायाचितयोर्यथासंख्यं मृतामृते ॥"
इत्यमरः । २ । ९ । ३२ ॥

े । याचनवृत्तिर्मरणमिव दुःखजनकत्वात् तम् । अयाचितं अमृतमिव अमृतम् ।
चितायाचितयोर्भावे कर्मणि वा क्तः ।" इति रतः ॥ प्रार्थितवस्तुनि, त्रि ॥ ( यथा, देवी-भागवते । ३ । २८ । ६७ ।
पेता ते याचितः पूर्व्वं यथा वै लब्धकते-ऽनघे ! ॥")

याचितकं, क्ली, (याचितेन निर्वृत्तम् । याचित + "अपमित्यायाचिताभ्यां कक्कनौ ।" ४ । ४ । २१ । इति कन् ।) याच्ञाप्राप्तम् । इत्यमरः ।२।९।४॥
"याच्ञया । प्रसन्नपैकीयत्वेन याच्ञया यत् प्राप्तमलङ्कारादिवस्तु तत् याचितकम् । कार्यानन्तरं वस्तुस्वामी यत् पुनर्नयति तदित्यर्थः । याचितेन प्राप्तमिति ठणे कादिति कः ।" इति भरतः ॥

याच्ञा, स्त्री, (याचनमिति । याच् + "यजयाच-यतविच्छप्रच्छरक्षो नङ् ।" ३ । ३ । ९० । इति नङ् । ) याचनम् । तत्पर्य्यायः । अभिशस्तिः २ याचना ३ अर्थना ४ भिक्षा ५ अर्दना ६ । इत्यमरः । २ । ७ । ३२ ॥ लालसा ७ । इति जटाधरः ॥ (यथा, भागवते । २ । ७ । १७ ।
"ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां
लोकान् विचक्रम इमान् यदथाधियज्ञः ।
क्ष्मां वामनेन जगृहे त्रिपदच्छलेन
याच्ञामृते पथि चरन् प्रभुभिर्न चाल्यः ॥")
तद्वैदिकपर्य्यायः । ईमहे १ यामि २ मन्महे ३ दद्धि ४ शग्धि ५ पूर्द्धि ६ मिमिड्ढि ७ मिमीढि ८ रिरिड्ढि ९ रिरीहि १० पीपरत् ११ यन्तारः १२ यन्धि १३ इषुध्यति १४ मदेमहि १५ मनामहे १६ मायते १७ । इति याच्ञाकर्म्माणः । इति वेदनिघण्टौ ३ अः ॥

याजः, पुं, अन्नम् । इति हेमचन्द्रः । ३ । ५९ ॥ ( ऋषिभेदः । यथा, महाभारते ।१।१६८।७।
"याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ ।
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ॥")

याजकः, पुं, (यजतीति । यज् + ण्वुल् ।) याज्ञिकः । राज्ञो गजः । इति मेदिनी । के, १४२ ॥ मत्तहस्ती । इति जटाधरः ॥ ऋत्विक् । यथा,
"अग्नीध्रौद्गा धनैर्म्मार्गा ऋत्विजो याजकाश्च ते ॥"
इत्यमरः । २ । ७ । १७ ॥
"यजमानेन धनैर्म्मार्गाः धनानि दत्त्वा इष्टसम्पादनाय व्रियन्ते प्रार्थ्यन्ते ये अग्नीध्रप्रभृतयस्ते ऋत्विजो याजकाश्च कथ्यन्ते । अग्निं इन्धयन्ति दीपयन्ति अग्नीध्राः इन्धी ञि ध ढ द्युतौ ञिः नाम्नीति रः मनीषादित्वान्नलोपः । आदिना ब्रह्मोद्गातृहोत्रध्वर्य्युब्राह्मणाच्छंसिप्रभृतयः षोडश गृह्यन्ते । मार्गा इति वृङ्यणोरिति घ्यण् इम्भुवियादौ ट न इति आनुबन्धनिर्द्देशात् अन्यधातोर्न स्यप् ऋतौ यजन्ति ऋत्विजः क्विप् । यजन्ति याचकाः यकः ।" इति भरतः ॥ * ॥ बहुयाजकग्रामयाजकयोर्निन्दा यथा,—

"अब्राह्मणास्तु षट् प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमाम् ।

नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥"
इत्याह्निकतत्त्वे सन्ध्योपासनम् ॥

अपि च ।

"शूद्रस्यप्रेषितश्चैवो ग्रामयाजीति कीर्त्तितः ।
शूद्रपाकोपजीवी यः सूपकारः प्रकीर्त्तितः ॥
सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ।
एते महापातकिनः कुम्भीपाकं प्रयान्ति ते ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥

याजनं, क्ली,(याज्यते इति । यज् + णिच् + ल्युट् ।) यागक्रियाकारणा । याग कराया इति भाषा । तत्तु ब्राह्मणस्य षट्कर्म्मान्तर्गतकर्म्मविशेषः । यथा,—

"अध्यापनमध्ययनं यजनं याजनन्तथा ।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥"
इति मानवे १ अध्यायः ॥

याजिः, पुं, ( यज् + "वसिवपियजिराजीति ।" उणा० ४ । १२४ । इति इञ् । ) यज्ञः । इति संज्ञिप्तसारोणादिवृत्तिः ॥ यागकर्त्ता । इत्युणादिकोषः ॥

याजुषं, त्रि, ( यजुष इदमिति । यजुष् + अण् । ) यजुर्व्वेदसम्बन्धि । इति सिद्धान्तकौमुदी ॥

याज्ञवल्क्यः, पुं, ( वल्कयतीति । वल्क + अच् । यज्ञस्य वल्को वक्ता । तस्य गोत्रापत्यम् । यज्ञवल्क + "गर्गादिभ्यो यञ् ।" ४ । १ । १०५ । इति यञ् । ) धर्म्मशास्त्रप्रयोजकमुनिविशेषः । तत्पर्य्यायः । ब्रह्मराशिः २ योगेशः ३ । इति हेमचन्द्रः ॥ योगीश्वरः ४ । इति मिताक्षरा ॥ ( महर्षिरयं याज्ञवल्क्यः सूर्य्यात् शुक्लयजुर्व्वेदं प्राप्तवान् । तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तेषु कृपापरः चतुर्धा व्यस्य ऋग्यजुःसामाथर्व्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश ते च स्वशिष्येभ्यः । तत्र वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्व्वेदमध्यापयत् । तत्र दैवात् केनापि हेतुना क्रुद्धो गुरुः शिष्यं याज्ञवल्क्यं अधीतवेदपरित्यागार्थमादिष्टवान् । याज्ञवल्क्योऽपि योगबलेन अधीतयजुर्व्विद्यां मूर्त्तिमतीं विधायोद्वाम । वान्तानि यजूंषि गृह्णीतेति गुरूक्त्या अन्ये शिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन् । तान्येव यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि । ततो वेदहीनोऽतिदुःखितो याज्ञवल्क्यः सूर्य्यमाराध्य शुक्लानि यजूंषि प्राप्तवान् तानि च जावालगौधेयकाण्वमाध्यन्दिनादीन् पञ्चदशशिष्यानध्यापयामास । तथाहि भागवते द्वादशस्कन्धे ६ अध्याये ।

"तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान् सोङ्कारांश्चातुर्होत्रविवक्षया ॥
पुत्रानध्यापयत् तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान् ।
ते तु धर्म्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ।

चतुर्युगेष्वथ यस्मा द्वापरादौ महर्षिभिः ।
चौथायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः ।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ॥
अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्म्मगुप्तये ॥
पराशरात् सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्व्विधम् ॥
ऋगथर्व्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥
तासां स चतुरः शिष्यानुपाहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ।
अथर्व्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥"
"वैशम्पायनशिष्या वै चरकाध्वर्य्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्
कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥
देवरातसुतः सोऽपि छर्द्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥
यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥
याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दांस्यधि गवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥"
"एवं स्तुतः स भगवान् वाजिरूपधरो रविः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥
यजुर्भिरकरोच्छाखा दश पञ्च शतैर्विभुः ।
जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥"
अयमेव महर्षिर्मिथिलाख्य एव वामवत्प्रभृतिभिः ऋषिभिर्वर्णाश्रमेतरधर्म्मज्ञानार्थमादिष्ट आचारव्यवहारप्रायश्चित्ताख्यकाण्डत्रयात्मकं धर्म्मशास्त्रं प्रणीय तेभ्यः आविलवान् । यदुक्तं याज्ञवल्क्यसंहितायां ग्रन्थारम्भे ।
"योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ।
मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन् ॥")
स्त्री, उपनिषद्विशेषः । यथा, मुक्तिकोपनिषदि ।
"गोपालतापनं कृष्णं याज्ञवल्क्यं वराहकम् ।")
याज्ञसेनी, स्त्री, यज्ञसेनस्य अपत्यम् ॥ (यज्ञसेन+अण् । ङीप् ।) सा च द्रौपदी । इति हेमचन्द्रः । ३ । १७५ ॥ (यथा, महाभारते । ४ । ४ । ५६ ।
"याज्ञसेनीं पुरस्कृत्य षड्‌वाय प्रवव्रजुः ।"
अस्या विवरणं द्रौपदीशब्दे द्रष्टव्यम् ।)
याज्ञिकः, पुं, (यज्ञमर्हतीति यज्ञाय हितो वा । यज्ञ+ठक् ।) दर्भभेदः ॥ (यज्ञं यज्ञविद्यामधीते वेद वा । यज्ञ+ठक् ।) याजकः । यज्ञकर्त्ता । इति शब्दरत्नावली ॥ (यथा, भागवते । ११ । १० । २३ ।
"इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ॥")
रक्तखदिरः । पलाशः । अश्वत्थः । इति राजनिर्घण्टः ॥
याज्ञिक्यं, क्ली, (याज्ञिकानां धर्म्म आम्नायो वा । याज्ञिक+"छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।" ४ । ३ । १२९ । इति ञ्यः ।) यज्ञः । इति सिद्धान्तकौमुदी ॥
याज्यं, क्ली, (इज्यत इति । यज्+ण्यत् । "यजयाचरुचप्रवचर्चश्च ।" ७ । ३ । ६६ । इति कुत्वनिषेधः ।) यागलब्धधनादि । इति सिद्धान्तकौमुदी ॥ यजनीये, त्रि । (यथा, मनौ । ८ । ३१७ ।
"अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥"
शिष्यः । प्रायश्चार्थः । यथा, देवीभागवते । ८१ । १८ । ८ ।
"याज्योऽस्ति जनकस्तत्र जीवन्मुक्तो नराधिपः ।
विदेहो लोकविदितः पाति राज्यमकण्टकम् ॥")
याज्या, स्त्री, (यजन्त्यनया । यज्+ण्यत्+टाप् ।) ऋक् । इति मुग्धबोधव्याकरणम् ॥ (गङ्गा । यथा, काशीखण्डे गङ्गासहस्रनामकीर्त्तने । २९ । १४२ ।
"योगसिद्धिप्रदा याज्या यज्ञेशपरिपूजिता ॥")
यात्,व्य, आख्यातप्रत्ययविशेषः । स च विधिलिङाशीर्लिङोः परस्मैपदप्रथमपुरुषैकवचनम् । स तु विध्याद्यर्थक आशीर्व्वादार्थकश्च । इति व्याकरणम् ॥ मुग्धबोधमते विध्याद्यर्थे अस्य स्त्रीसंज्ञा । आशीरर्थे टीसंज्ञा ॥
यातं, क्ली, (या+क्तः ।) निषादिनां पादकर्म्म । इति हेमचन्द्रः । ४ । १६७ ॥ पुस्तकान्तरे यतमिति पाठः । यथा,—
"अपरक्तकृशस्याग्रं वातमङ्कुशवारणम् ।
निषादिनां पादकर्म्म या(य)तं तीक्ष्णं तद्वयम् ॥"
यातः त्रि, गतः । याधातोः क्तप्रत्ययेन निष्पन्नः ॥ (यथा, मनुः । ४ । १७८ ।
"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति ॥")
यातना, स्त्री, (यत्+णिच्+"ण्यासश्रन्थो युच् ।" ३।३।१०७ । इति युच् । टाप् ।) गाढ़वेदना । तत्पर्य्यायः । कारणा २ तीव्रवेदना ३ । इत्यमरः । २ । ८ । ३ ॥ अतियथा ४ । इति शब्दरत्नावली ॥ (यथा, भागवते । ७ । १ । ४१ ।
"हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् ।
जिघांसुरकरोन्नानायातना मृत्युहेतवे ॥")
नरकवधा । इति केचिदिति भरतः ॥
यातयामं, त्रि, (यातो गतो याम उपभोगकालो यौर्म्मं वा यस्य ।) जीर्णम् । (यथा, भट्टिकाव्ये । ५ । ३६ ।
"तं भीतस्रारमाकृष्य रावणः प्रत्यभावत ।
यातयामं विचितवान् स रामं यदि किमतः ॥")
परिभुक्तम् । इत्यमरः । ३।१।१४५ ॥ उच्छिष्टम् । इति मेदिनी । मे, ६२ ॥ (प्रायशः शीतम् । यथा, गीतायाम् । १७ । १० ।
"यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥")
गतरसः । यथा, ताण्ड्यमहाब्राह्मणे । ४।३।
"ब्रह्मवादिनो वदन्ति यातयामाः संवत्सरा अयातयामा इति ते यातयामेति वक्तव्याः ।"
"यातयामः गतरसः ।" इति सायणः ॥)
याता, [ऋ] स्त्री, (यतते ऽन्योन्यमिच्छायेति । यत्+"ऋन् ।" उणा० २ । ९८ । इति ऋन् ।) पतिभ्रातृपत्नी । इत्यमरः । २ । ६ । ३० ॥ इति भाषा । (यथा, साहित्यदर्पणे । ३ ।
"स्वामी निःश्वसितेऽप्यसूयति मनो जिघ्रः सपत्नीजनः ।"
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः ॥")
या+तृच् । गमनकर्त्तरि, त्रि ॥ (यथा, ऋक्संहितायाम् । ११ । १३ । [यातु:
"उल्का शुभदा पुरतो दिवाकरविनिःसृता"
सारथ्यादिः । यथा, मनौ । ८ । २९० ।
"यानस्य चैव यातुश्च यानस्वामिन एव च ।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥"
"यातुः सारथ्यादेः ।" इति कुल्लूकः ॥ हन्ता । यथा, ऋग्वेदे । १।३२।१४ ।
"अहेर्यातारं कमपश्य इन्द्र ।"
"यातारं हन्तारम् ।" इति तद्भाष्ये सायणः ॥)
यातायातं, क्ली, गमनागमनम् । यथा,—
"पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।
यत्संस्कारकलानुवर्त्तनवशाद्वेलानिभेनाम्भसां
यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥"
इति श्रीभागवते १२ स्कन्धे १३ अध्यायः ॥)
यात्रिकः, पुं, (यातं गमनं प्राप्तत्वेनास्त्यस्येति । यात+ठन् ।) पान्थः । इति शब्दरत्नावली ॥
यातु, क्ली, (सर्व्वेषामन्तं यातीति । या+"कमिमनिजनि ।" उणा० १ । ७३ । इति तुः ।) राक्षसः । इत्यमरः । १ । १ । ६३ ॥ (यथा, "यातु यातुप्रवीराणां प्रययौ चरकाग्रणीः ।"
इत्यमरटीकायां रघुनाथचक्रवर्त्ती ।
(पुंलिङ्गेऽपि दृश्यते । यथा, ऋग्वेदे । ७।२१।
"न यातव इन्द्र जूजुवुर्नो न ।"
"यातवो राक्षसाः ।" इति तद्भाष्ये सायणः ॥)
यातुः, पुं, (सर्व्वान् याति गच्छतीति । या+"कमिमनिजनिगाभायाहिभ्यश्च ।" उणा० १ । ७३ । इति तुः ।) कालः । अध्वगः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ वायुः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (क्ली, यातना । यथा, ऋग्वेदे । ८ । ४६ । २० ।
"मा नो दच आवीर्वीदाप्नुयाद्यो मा यातुर्मा भावताम् ।"

"यातुर्यातना पीडा।" इति सायणः॥ कर्म्म-नाशकरी हिंसा। यथा, तत्रैव।५।१२।२।
"नाहं यातुं सहसा न द्वयेन ऋतं सपाम्य-
रुषस्य वृष्णः।"
"यातुं कर्म्मणां नाशकरीं हिंसाम्।" इति तद्भाष्ये सायणः॥)

यातु, त्रि, यातीति। या+"कमिमनीति।" उणा० १।७३। इति तुः।) गन्ता। इत्युणादिकोषः॥ क्रियापदं चेत् गच्छतु॥

यातुघ्नः, पुं, (यातु हन्तीति। हन्+"अमनुष्य-कर्त्तृके च।"३।२।५३। इति टक्।) गुग्गुलुः। इति राजनिर्घण्टः॥

यातुधानः, पुं, (यातूनि रक्षांसि दधाति पुष्णातीति। धा+बहुलमन्यत्रापीति युच्। स्वजाति-पोषकत्वात्तथात्वम्।) राक्षसः। इत्यमरः।१।१।६३॥ (यथा, भट्टिकाव्ये। २। २९।
"दक्षिणदिष्टां क्षतमालिजीने-
रुद्यातुधानैश्चिचिते प्रवर्पत्॥")

यातृकः, पुं, (यातेवेति। यातृ+स्वार्थे कन्।) पान्थः। इति शब्दरत्नावली॥

यात्यं, त्रि, यतितव्यम्। यतनीयम्। यतधातोः कर्म्मणि ण्यत्प्रत्ययेन निष्पन्नम्॥

यात्रा, स्त्री, (या+"हुयामाश्रुभसिभ्यस्त्रन्।" उणा० ४।१६७। इति त्रन्। टाप्।) विजिगीषोः प्रयाणम्। तत्पर्य्यायः। व्रज्या १ अभिनिर्य्याणम् ३ प्रस्थानम् ४ गमनम् ५ गमः ६। इत्यमरः।२।८।९५॥ प्रस्थितिः ७ यानम् ८ प्रावजनम् ९। इति शब्दरत्नावली॥ यापनम्॥ (यथा, भागवते। १०।८६।१५।
"यात्रामात्रं त्वहरहर्दैवादुपनमत्युत॥")
उत्सवः। इति मेदिनी। रे, ७८॥ (यथा, कथासरित्सागरे। १०। ८७।
"यात्रासुपवने द्रष्टुं जगाम सखिभिः सह॥"
व्यवहारः। यथा, गीतायाम्। ३। ८।
"शरीरयात्रापि च ते न प्रसिद्ध्येदकर्म्मणः॥"
"शरीरयात्रा देहव्यवहारः।" इति तत्र नीलकण्ठः॥) उपायः। इति विश्वः॥*॥ अथ यात्रादिनम्। भाद्रपौषचैत्रेतरमासेषु दूरयात्रा कर्त्तव्या। पूर्व्वस्यां दिशि रविशुक्रवारस्य प्राशस्त्यम्। दक्षिणस्यां मङ्गलवारस्य प्राशस्त्यम्। पश्चिमायां सोमशनिवारस्य प्राशस्त्यम्। उत्तरस्यां वृहस्पतिवारस्य प्राशस्त्यम्। पूर्व्वस्यां दिशि सोमशनिवारे न गन्तव्यम्। दक्षिणस्यां वृहस्पतिवारे कैश्चिन्मते बुधवारे च न गन्तव्यम्। पश्चिमायां रविशुक्रवारे। एवं उत्तरस्यां बुधमङ्गलवारे न गन्तव्यम्। द्वितीया तृतीया सप्तमी पञ्चमी दशमी एकादशी त्रयोदशी च तिथयो यात्रायां प्रशस्ताः। अथोत्तमनक्षत्राणि। अश्विनी अनुराधा रेवती मृगशिरा मूला पुनर्व्वसु पुष्या हस्ता ज्येष्ठा। मध्यमनक्षत्राणि। रोहिणी पूर्व्वात्रयं विना स्वाती शतभिषा श्रवणा धनिष्ठा। अधमनक्षत्राणि। उत्तरात्रयं विशाखा मघा आर्द्रा भरणी कृत्तिका अश्लेषा। तत्र नक्षत्रशूलकथनम्। स्वात्यां ज्येष्ठायाञ्च पूर्व्वदिग्गमनं निषिद्धम्। एवं पूर्व्वभाद्रपदे अश्विन्याञ्च दक्षिणदिग्गमनं पुष्ये रोहिण्याञ्च पश्चिमदिग्गमनं उत्तरफल्गुन्यां हस्तायाञ्च उत्तरदिग्गमनं निषिद्धम्। तत्राशुभकरणानि। नागं वणिजं विष्टिः। नागमपि केचिच्छुभं मन्यते। अथ उत्तमलग्नानि। सिंहवृषकुम्भकन्यामिथुनानि। तत्र योगिनीनिर्णयः। प्रतिपदि नवम्याञ्च प्राच्यां योगिनी। तृतीयायां एकादश्याञ्चाग्निकोणे। पञ्चम्यां त्रयोदश्याञ्च दक्षिणे। द्वादश्यां चतुर्थ्याञ्च नैरृतकोणे। षष्ठ्यां चतुर्द्दश्याञ्च पश्चिमे। सप्तम्यां पूर्णिमायाञ्च वायुकोणे। द्वितीयायां दशम्याञ्च उत्तरदिशि। अष्टम्याममावास्यायाञ्च ईशानकोणे। तां दक्षिणे सम्मुखे च कृत्वा न गन्तव्यम्। पापयोगव्यहस्पर्शमासदग्धादिषु यात्रा न कर्त्तव्या। वारवेलाकालवेलाकुलिकवेलाविष्टिभद्रादिषु च यात्रा न कर्त्तव्या। द्विरागमनदिनं नववधूशब्दे द्रष्टव्यम्॥*॥ अथ नौयात्राप्रवेशविक्रयाः। तत्र तिथयः। अमावस्याष्टमीचतुर्द्दशीविष्टिभिन्नाः। तत्र नक्षत्राणि। रोहिणी पूर्व्वफल्गुनी पूर्व्वाषाढ़ा पूर्व्वभाद्रपत् उत्तरफल्गुनी उत्तराषाढ़ा उत्तरभाद्रपत् श्रवणा भरणी चित्रा एतद्व्यतिरिक्तानि। योगाः। व्यतीपातभिन्नाः। वाराः। क्रूरभिन्नाः॥*॥ अथ नौकायात्रा। तत्र विहितनक्षत्राणि। अश्विनीहस्तापुष्यमृगशिरःपूर्व्वफल्गुनी-पूर्व्वाषाढ़ा-पूर्व्वभाद्रपदनुराधाधनिष्ठा-श्रवणाः। वाराः शुभग्रहाणाम्। तत्र लग्नं शोभनम्। तत्र शोभनचन्द्रः। तारा च शोभना विहिता। इति ज्योतिस्तत्त्वम्॥*॥

अथ यात्रायां शुभजनकद्रव्यदर्शनादि यथा,—
"धेनुर्व्वत्सप्रयुक्ता वृषगजतुरगा दक्षिणावर्त्तवह्निर्दिव्यस्त्रीपूर्णकुम्भा द्विजनृपगणिकाः पुष्पमाला पताका।
सद्योमांसं घृतं वा दधि मधु रजतं काञ्चनं शुक्लधान्यं
दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो गन्तुकामः॥"
इति समयप्रदीपः॥

तत्राशुभजनकदर्शनं यथा,—
"सम्मुखे रजकं पश्चात् क्षुरिकं यदि पश्यति।
न गन्तव्यं तदा तस्मात् तैलवाप्यगतोऽशुभः॥
अग्नो क्षुत्कृति गौः काशी क्षुतं वा कुरुते नरः।
पश्यन् यात्रा न कर्त्तव्या क्लीवं पश्यति वाग्रतः॥"
इति ज्योतिराकरः॥

यात्राकाले विशेषदर्शनफलं यथा,—
"मृगाहिकपिमार्ज्जारश्वानः शूकरपक्षिणः।
नकुलो मूषिकश्चैव यात्रायां दक्षिणे शुभाः॥
विप्रकन्या शवो वन्ध्यस्त्रीरोदनस्वराः।
जम्बुकोष्ट्रखराश्चैव यात्रायां वामके शुभाः॥
वेश्यास्त्रीपूर्णकुम्भानां यात्रायां दर्शनं शुभम्"
यात्राकाले अशुभलक्षणं यथा,—
"कार्पासौषधतैलञ्च पङ्काङ्गारभुजङ्गमाः।
मुक्तकेशी रक्तमाल्यं नग्नाद्यशुभलक्षणम्॥"
यात्राकाले हिक्कायाः फलं यथा,—
"हिक्काया लक्षणं वक्ष्ये लभेत् पूर्व्वे महाफलम्।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात्।
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत्।
ईशाने मरणं प्रोक्तं प्रोक्तं हिक्काफलाफलम्॥"
अथ यात्रायां दिग्विशेषे विशेषनक्षत्राणि।
"कृत्तिकादौ तु पूर्व्वेण सप्त ऋक्षाणि वै व्रजेत्।
मघादौ दक्षिणे गच्छेदनुराधादि पश्चिमे॥
प्रशस्ता चोत्तरे यात्रा धनिष्ठादिषु सप्तसु।
अश्विनीरेवतीचित्राधनिष्ठाः सदलङ्कृताः।
मृगाश्विचित्रापुष्याश्च मूलहस्तौ शुभौ सदा॥"
यात्रादौ लग्नादिषु ग्रहस्थितिफलं यथा,—
"कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्म्मसु।
शुक्रचन्द्रौ च जन्मस्थौ शुभदौ च द्वितीयगौ
शशिशुक्रजीवाश्च रागौ चाय तृतीयके।
भौममन्दशशाङ्कार्का बुधः श्रेष्ठश्चतुर्थके॥
शुक्रजीवौ पञ्चमौ च श्रेष्ठौ सन्निवदाकृतौ।
मन्दार्केन्दुकुजाः षष्ठे गुरुचन्द्रौ च सप्तमे॥
शुक्रश्चाष्टमे श्रेष्ठौ नवमस्थौ गुरुः शुभः।
अर्कार्किचन्द्रा दशमे एकादशेऽखिला ग्रहाः
बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत्॥"
इति गारुडे ६०।६१ अध्यायौ॥*॥

अथ राजयात्रा।
"इदानीं सर्व्वधर्म्मज्ञ धर्म्मशास्त्रविशारद!।
यात्राकालविधानं मे कथयस्व महीक्षिताम्
यदा मन्येत नृपतिराक्रन्देन बलीयसा।
पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत्
योधाज्ञात्वा प्रभूतांश्च प्रभूतञ्च बलं मम।
मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत्।
अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत्।
पार्ष्णिग्राहाधिकं सैन्यं मूले निःक्षिप्य वा व्रजेत्
चैत्रं वा मार्गशीर्षं वा यात्रां यायान्नराधिप
चैत्री पश्यति नैदाघं हन्ति पुष्टिञ्च शारदी।
एतदेव विपर्य्यस्तं मार्गशीर्षं नराधिपः।
शत्रोर्व्वा व्यसने यायात् कालः स तु सुदुर्लभः
दिव्यान्तरीक्षक्षितिजैरुत्पातैः पीड़ितं परम्
षड्ऋक्षपीड़ासन्तप्तं पीड़ितञ्च तथा ग्रहैः॥
ज्वलन्तीव तथैवोल्का दिशं यस्य प्रपद्यते।
भूकम्पोल्का दिशं यान्ति याञ्च केतुः प्रधूपयेत्
निर्घातश्च पतेद्यत्र तं यायाद्वसुधाधिपः।
स्वबलव्यसनोपेतं तथा दुर्भिक्षपीड़ितम्॥
सम्भूतान्तरकोपञ्च क्षिप्रं यायादरिं नृपः।
यूकामाक्षीकबहुलं बहुपङ्कं तथाविलम्॥
नास्तिकं भिन्नमर्य्यादं तथामङ्गलवादिनम्।
अपेतप्रकृतिञ्चैव निरापञ्च तथा जयेत्॥
विविक्तनायका सेना तथा भिन्ना परस्परम्।
व्यसनासक्तनृपतिं बलं राजाभियोजयेत्॥

सैनिकानामशस्त्राणि स्फुरन्त्यङ्गानि यत्र च ।
दुःस्वप्नान्यपि पश्यन्ति बलात्तदभियोजयेत् ॥
उत्साहबलसम्पन्नश्चानुरक्तबलस्तथा ।
तुष्टपुष्टबलो राजा परानभिमुखो व्रजेत् ॥
शरीरस्फुरणे धन्ये तथा दुःस्वप्ननाशने ।
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ॥
ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुगुणेषु च ।
प्रश्नकाले शुभे जाते परान् यायान्नराधिपः ॥
एवन्तु दैवसम्पन्नस्तथा पौरुषसंयुतः ।
देशकालोपपन्नान्तु यात्रां यायान्नराधिपः ॥
उलूकस्य निशि ध्वाङ्क्षः स च तस्य दिवा बली ।
एवं देशञ्च कालञ्च ज्ञात्वा यात्रां प्रयोजयेत् ॥
पदातिनागबहुलां सेनां प्रावृषि योजयेत् ।
हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम् ॥
खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिपः ।
चतुरङ्गबलोपेतां वसन्ते वा शरद्यथ ॥
सेना पदातिबहुला यस्य स्यात् पृथिवीपतेः ।
अभियोज्यो भवेत्तेन शत्रुर्विषममाश्रितः ॥
गम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च ।
किञ्चित्पङ्के तथा यायाद्बहुनागो नराधिपः ॥
रथाश्वबहुलो यायात् शत्रुं समपथाश्रितम् ।
तदाश्रयन्तो बहुलास्तथा राजाभिपूजयेत् ॥
खरोष्ट्रबहुलो राजा शत्रुं बन्धनसंस्थितम् ।
बन्धनस्थोऽपि योज्योऽरिस्तदा प्रावृषि भूभुजा ॥
हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत् ।
शरद्वसन्तौ धर्म्मज्ञ कालौ साधारणौ स्मृतौ ॥

विज्ञाय राजा द्विजदेशकालौ
दैवं त्रिकालञ्च तथैव बुद्ध्वा ।
यायात् परं कालविदां मतेन
सञ्चिन्त्य सार्द्धं द्विजमन्त्रविद्भिः ॥"

इति मात्स्ये २१४ अध्यायः ॥ * ॥

यात्राकाले माङ्गल्यद्रव्याणि यथा,—
"पौर्व्वापर्य्यं स्ववृत्तान्तं तांश्चाक्त्वा च शुभक्षणे ।
तैरेव सार्द्धं बलवान् बभूव गमनोन्मुखः ॥
ददर्श मङ्गलं रामः शुश्राव जयसूचकम् ।
बुबुधे मनसा सर्व्वं विजयं वैरिसंक्षयम् ॥
यात्राकाले च पुरतः शुश्राव सहसा मुनिः ।
हरिशब्दं शङ्खरवं घण्टादुन्दुभिवादनम् ॥
आकाशवाणीं सङ्गीतां जयस्ते भवितेति च ।
नरोक्तां तत्र कल्याणीं मेघशब्दं जयावहम् ॥
चकार यात्रां भगवान् श्रुत्वैवंविधं शुभम् ।
ददर्श पुरतो विप्रवह्निदेवाश्च भिक्षुकान् ॥
ज्वलत्प्रदीपं बिभ्रन्तीं पतिपुत्रवतीं सतीम् ।
पुरो ददर्श स्मेरास्यां नानाभूषणभूषिताम् ॥
शिवं शिवां पूर्णकुम्भं चाषञ्च नकुलन्तथा ।
गच्छन् ददर्श रामेशो यात्रामङ्गलसूचकम् ॥
क्षत्रधारं गजं सिंहं तुरगं गण्डकं द्विपम् ।
चमरीं राजहंसञ्च चक्रवाकं शुकं पिकम् ॥
मयूरं खञ्जनञ्चैव शङ्खचिल्लचकोरकम् ।
पारावतं बलाकाञ्च कारण्डं चातकं चटम् ॥
सौदामिनीं शक्रचापं स्वर्णं स्वर्णसभां शुभाम् ।
सद्योमांसं सजीवञ्च मत्स्यं शङ्खं सुवर्णकम् ॥
माणिक्यं रजतं मुक्तां मणीन्द्रञ्च प्रवालकम् ।
दधि लाजं शुक्लधान्यं शुक्लपुष्पञ्च कुङ्कुमम् ॥
शुक्लच्छत्रं पताकाञ्च दर्पणं श्वेतचामरम् ।
धेनुं वत्सप्रयुक्ताञ्च रथस्थं भूमिपं तथा ॥
दुग्धञ्च रोचनामाज्यममृतं पायसं तथा ।
शालग्रामं पक्वफलं स्वस्तिकं शर्करां मधु ॥
मार्ज्जारञ्च वृषेन्द्रञ्च मेघपर्व्वतमूषिकम् ।
मेघाच्छन्नस्य च रवेरुदयं चन्द्रमण्डलम् ॥
कस्तूरीं कज्जलं तोयं हरिद्रां तीर्थमृत्तिकाम् ।
सिद्धार्थं सर्षपं दूर्व्वां विप्रबालञ्च बालिकाम् ॥
न्यग्रां वेश्याञ्च भ्रमरं कर्पूरं पीतवाससम् ।
गोमूत्रं गोपुरीषञ्च गोधूलिं गोपदाङ्कितम् ॥
गोष्ठं गवां वर्त्म रम्यं गोशालां गोरतिं शुभाम् ।
भूषणं देवप्रतिमां ज्वलदग्निं महोत्सवम् ॥
ताम्रं स्फटिकं रैत्यञ्च सिन्दूरं माल्यचन्दनम् ।
गन्धञ्च हीरकं रत्नं ददर्श दक्षिणे शुभम् ॥
सुगन्धि वायोराघ्राणं प्राप विप्राशिषं शुभम् ।
इत्येवं मङ्गलं ज्ञात्वा प्रययौ स मुदान्वितः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३३ अध्यायः ॥ * ॥

यात्राकाले अमङ्गलसूचकानि यथा,—
"राजा जगाम समरं हृदयेन विदूयता ।
सार्द्धं सैन्यसमूहैश्च वाद्यभाण्डैरसंख्यकैः ॥
ददर्शामङ्गलं राजा पुरो वर्त्मनि वर्त्मनि ।
ययौ तथापि समरं न जगाम गृहं पुनः ॥
मुक्तकेशीं छिन्ननासां रुदन्तीञ्च दिगम्बरीम् ।
कृष्णवस्त्रपरीधानामपरां विधवामपि ॥
मुखदुष्टां योनिदुष्टां व्याधियुक्ताञ्च कुट्टनीम् ।
पतिपुत्रविहीनाञ्च डाकिनीं पुंश्चलीमहो ॥
कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम् ।
कुचेलमपि रूक्षाङ्गं नग्नं काषायवासिनम् ॥
वस्त्रविक्रयिणञ्चैव कन्याविक्रयिणं तथा ।
चितां दग्धशवं भस्म निर्व्वाणाङ्गारमेव च ॥
सर्पघ्नतनरं सर्पं गोधाञ्च शशकं विषम् ।
श्राद्धपाकञ्च पिण्डञ्च मोदकञ्च तिलांस्तथा ॥
देवलं वृषवाहञ्च शूद्रश्राद्धान्नभोजिनम् ।
शूद्रान्नपाचकं शूद्रयाजकं ग्रामयाजकम् ॥
कुशपुत्तलिकाञ्चैव शवदाहनकारिणम् ।
शून्यकुम्भं चूर्णकुम्भं तैलं लवणमस्थि च ॥
कार्पासं कच्छपं चूर्णं कुक्कुरं शब्दकारिणम् ।
दक्षिणे च शृगालञ्च कुर्व्वन्तं भैरवं रवम् ॥
कपर्द्दकञ्च चौरञ्च छिन्नकेशं नखं मलम् ।
कलहञ्च विलापञ्च विलापकारिणं जनम् ॥
अमङ्गलं वदन्तञ्च रुदन्तं शोककारिणम् ।
मिथ्यासाक्षिप्रदातारं चौरञ्च नरघातिनम् ॥
पुंश्चलीपतिपुत्रौ च पुंश्चल्योदनभोजिनम् ।
देवतागुरुविप्राणां वस्तुवित्तापहारिणम् ॥
दत्तापहारिणं दस्युं हिंसकं सूचकं खलम् ।
पितृमातृविरक्तञ्च द्विजाश्वत्थविघातिनम् ॥
सत्यघ्नञ्च कृतघ्नञ्च स्थाप्यापहारिणं जनम् ।
मित्रद्रुहं मित्रघ्नञ्च चतं विश्वासघातिनम् ॥
गुरुदेवद्विजानाञ्च निन्दकं स्वाङ्गघातकम् ।
जीवानां घातकञ्चैव स्वाङ्गहीनञ्च निर्द्दयम् ॥
व्रतोपवासहीनञ्च दीक्षाहीनं नपुंसकम् ।
गलितव्याधिगात्रञ्च गुरुलङ्घनमेव च ॥
पुष्करं छिन्नलिङ्गञ्च सुरामत्तं सुरां तथा ।
चिप्रं वमन्तं रुधिरं महिषं गर्द्दभं तथा ॥
मूत्रं पुरीषं श्लेष्माणं कास्थिनं कृकपालिनम् ।
भक्ष्यावर्द्धं रक्तवृष्टिं वाद्यञ्च शूलधातकम् ॥
वृद्धञ्च शूकरं शृङ्गं श्येनं कङ्कञ्च भल्लुकम् ।
पाशञ्च शुष्ककाष्ठञ्च वायसं मन्थकं तथा ॥
अग्रदानिब्राह्मणञ्च तन्त्रमन्त्रोपजीविनम् ।
वैद्यञ्च रक्तपुष्पञ्चैवौषधञ्च्युषमेव च ॥
कुवार्त्तां मृतवार्त्ताञ्च विप्रशापञ्च दारुणम् ।
दुर्गन्धवातं दुःशब्दं राजा संप्राप वर्त्मनि ॥
मनश्च कुत्सितं प्राणाः क्षुभिताश्च निरन्तरम् ।
वामाङ्गस्पन्दनं देहजाड्यं राज्ञो बभूव ह ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः ॥

श्रीकृष्णस्य मथुरायात्रा यथा,—
"राधिकायाश्च सुप्तायां सुप्तासु गोपिकासु च ।
पुष्पचन्दनतल्पे च वायुना सुरभीकृते ॥
तृतीयप्रहरेऽतीते निशायाश्च शुभक्षणे ।
शुभचन्द्रस्य योगे चामृतयोगसमन्विते ॥
सौम्यस्वामियुते लग्ने सौम्यग्रहविलोकने ।
पापग्रहसमासक्तदृष्टिदोषादिवर्ज्जिते ॥
यशोदां बोधयामास कारयामास मङ्गलम् ।
नन्दं गमयामास समुत्थाय हरिः स्वयम् ॥
वाद्यं निषेधयामास राधिकाभयभीतवत् ।
स्वतन्त्रो विश्वकर्त्ता च पाता भर्त्ता स्वतन्त्रवत् ॥
प्रक्षाल्य पादयुगलं धृत्वा धौते च वाससी ।
उवास संस्कृते स्थाने विलिप्ते चन्दनादिना ॥
फलपक्वसंयुक्तं संस्कृतं चन्दनादिभिः ।
वामे कृत्वा पूर्णकुम्भं वह्निं विप्रं स्वदक्षिणे ।
पतिपुत्रवतीं दीपं दर्पणं पुरतस्तथा ॥
दूर्व्वाकाण्डञ्च सुस्निग्धं पुष्पं धान्यं सितं शुभम् ।
गुरुदत्तं गृहीत्वा च प्रददौ मस्तकोपरि ॥
घृतं ददर्श माध्वीकं रजतं काञ्चनं दधि ।
चन्दनं लेपनं कृत्वा पुष्पमालां गले ददौ ॥
गुरुवर्गं ब्राह्मणञ्च वन्दयामास भक्तितः ।
शङ्खध्वनिं वेदपाठं सङ्गीतं मङ्गलाष्टकम् ॥
विप्राशीर्व्वचनं रम्यं शुश्राव परमादरम् ।
ध्यात्वा मङ्गलरूपञ्च सर्व्वत्र मङ्गलप्रदम् ॥
चिक्षेप दक्षिणं पादं सुन्दरं स्वात्मविग्रहम् ।
विधृत्य नासिकावामभागं मध्यमया विभुः ॥
निरुध्य वायुमिष्टञ्च नासादक्षिणरन्ध्रतः ।
ततो ययौ नन्दनन्दो नन्दस्य प्राङ्गणं वरम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७१ अध्यायः ।

अथ यात्रायुक्तिः । तत्र समयः ।
"यात्रायां द्विविधः कालो वैकारः सहजस्तथा ।
प्रोक्त आत्ययिके कार्य्ये विकारो नात्र निर्णयः ।
सहजः स्वेच्छया राज्ञां तस्य निर्णय उच्यते ।
यात्रानसिंहमध्या शनैश्चरबुधोशनसां यदेव
भानौ कुलीरवृषवृश्चिकगोभिर्दीर्घा
शस्तास्तु देवजमतेऽश्वनि पुष्यतोऽर्कैः ॥
अश्विनी रेवती ज्येष्ठा तथा पुष्यपुनर्वसू ।

मैत्रं मृगशिरो हस्ता यात्रायामुत्तमाः स्मृताः ॥
भरणी कृत्तिकाश्लेषा विशाखा चोत्तरात्रयम् ।
मघा पशुपतिश्चैव यात्रायां मरणप्रदाः ॥
पूर्व्वे कुवेरे दहने निशाटे
यमे जलेशे पवने महेशे ।
त्वाष्ट्रं नरस्य प्रतिपत्क्रमेण
युग्मं तिथीनां प्रवदन्ति तज्ज्ञाः ।
स्यात् संमुखे यानमसुक्षयाय
पश्चाद्भवेत् सर्व्वशुभाय पुंसाम् ॥
सूर्य्यः शुक्रः कुजो राहुर्मन्दश्चन्द्रो गुरुर्बुधः ।
प्रयतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥
पूर्व्वेण ज्ये(ष्ठा) दक्षिणे यानपादं
रोहिण्ये तत्राप्येमाश्लेषा मूलम् ।
कामं यायात् साम्परायेषु कार्य्ये-
ष्वन्यदापि प्रेक्ष्य मूलानि भानि ॥”
च दिक्शूलम् ।
षष्ठाष्टमी चतुर्थी च नवमी द्वादशी तथा ।
चतुर्द्दशी कुहूस्त्वाख्या यात्रायामशुभप्रदाः ॥
प्रायो जगुः सहजशत्रुदशाय संस्थाः
पापाः शुभाः सविलग्नं परिमुच्य खस्थम् ।
सर्व्वगाः शुभफलं जनयन्ति सौम्याः
स्यस्तारिसंस्थममरारिगुरुं जिगीषोः ॥
कालवर्षविद्युत्स्तनितेष्विष्टं कथञ्चिदपि यानम् ।
सप्ताहात् दिव्यान्तरीक्षभौमैस्तथोत्पातैः ॥”
क्रमः ।
राज्ञां यात्राविधिं वक्ष्ये जिगीषूणां परावनीम् ।
राजनाविधिं कृत्वा सैनिकांश्चानयेत्ततः ।
...जानन्यान् मृगानन्यानिति यात्राक्रमो मतः ॥”
तत्र नीराजनाविधिः ।
“वर्षान्तेऽभ्युदिते शुक्रे चन्द्रे पूर्णे शुभग्रहे ।
अश्वनीराजनं कुर्य्यात् यथोक्तन्हविसत्तमैः ॥
उदीच्यां प्रस्थिते भानौ संक्रान्त्यां वा शुभे दिने ।
गजनीराजनं कुर्य्यात् महीपालो जिगीषुवान् ॥
वृश्चिकस्थे रवौ कुर्य्यात् पत्तिनीराजनाविधिम् ।
नौकानीराजनं कुर्य्यात् दक्षिणाशां प्रतिष्ठति ॥
अयेषाञ्चैव यानानां विजयादशमीतिथिम् ।
ध्वजादीनाञ्च सर्व्वेषां शक्रोत्थाने नीराजनम् ॥
छत्रस्य नवदण्डस्य तथा सिंहासनस्य च ।
गृहस्य नगरस्यापि महाविषुवसंक्रमे ॥
आत्मनो युवराजस्य महिष्या मन्त्रिणान्तथा ।
स्वजन्मदिवसे राजा कुर्य्यान्नीराजनाविधिम् ॥
अभिषेकदिनं प्रोक्तमेषां जन्मदिनं मया ॥”
तद्यथा,—
“अश्वानां भास्करो देवो रेवन्तमिति संज्ञया ।
गजानां देवता शक्रः पत्तीनां कालिका मता ॥
नौकानां वरुणो देवो यानानाञ्च जयन्तकः ।
पताका देवता रामो यमः खड्गस्य पूज्यते ॥
अस्त्राणां हनुमान् पूज्यो हवस्पतिरिति क्रमात् ।
तान् पूजयित्वा विधिवद्देवान्नीराजयेन्नृपः ॥
...दशमहिषैः पुष्टैश्चामरघण्टास्त्रजादिभूषाढ्यैः ।
...गलैर्महिषहिरण्यैः पुष्पैस्तद्गुणैश्चावदीपि-
काभिः ॥
भर्य्यं वा सहस्रं ... ने नीराजयेन्नाणा ।
दशघ्नवाह्यैः रुधिरैः साङ्गोपाङ्गैरतोऽर्हतश्चोर्द्धैः ॥
तस्याहितो वाग्नेर्गजशतनीराजनं सम्भवति ।
छागशतं वृषभशतं शतञ्च मेषाणाम् ॥
तुरगा दश द्वादश वाजाः पञ्च द्विपश्चैकः ।
भल्लुका हि कुक्कुराश्चैकैकाः पत्तिनश्चास्य ॥
नौकाशतकं साङ्गं नवदशकं काञ्चनादिभि-
र्घटितम् ।
वस्त्रशतमपि जन्तूनां नौकानीराजने राज्ञाम् ॥
यद्वा द्विपदं यानं सर्व्वेषामिष्यते तुरगैः ।
सुदशावत्सरवयितैर्योग्याङ्गैर्योग्यवर्णैश्च ॥
अष्टाभिर्धातुभिः कुर्य्यादश्वनीराजनाविधिम् ।
गजाश्वनरनौकाभिर्हिरण्याभिर्यथोत्तरम् ।
रत्नैर्नानाविधैर्वस्त्रैर्धातुभिर्वसनैस्तथा ॥
सिंहासनैश्च योग्यैश्च कुर्य्यान्नीराजनाविधिम् ।
गृहनीराजनाप्येवं नरस्याथ निगद्यते ॥
अजैः खरैः शृगालैश्च व्याघ्रैरश्वैस्तथोष्ट्रैः ।
पुरं नीराजयेद्राजा चिरसम्पत्तिहेतवे ॥
श्वा दशाश्वस्तदर्द्धेन नरश्चैव तदर्द्धतः ।
व्याघ्रादीनां तथैवैकं रत्नं नानाविधन्तथा ॥
शस्त्राणि धातवश्चैव वस्त्राणि च फलानि च ।
वरुणाः स्थलजाश्चैव जलजाश्चैव जन्तवः ॥
नवग्रहाश्च सूर्य्याद्याः शोणाः सप्त घटास्तथा ।
योग्यधातुसमुद्भूता नौकास्तवचयन्तथा ॥
निजदेहमितं स्वर्णं रजतं ताम्रमेव वा ।
आत्मनीराजने दद्याद्दयदिष्टैश्चिरसंस्थितिम् ॥
अस्त्रैर्नानाविधैः कुर्य्याद्युवराजनीराजनम् ।
अलङ्कारैश्च विविधैर्देवीनीराजनं मतम् ॥
मन्त्रिनीराजनं राजा ह्यथैनैव समाचरेत् ।
अमात्यानां सैनिकानां विप्राणां वनिनान्तथा ।
वस्त्रैर्नीराजनं कुर्य्यादिति भोजस्य सम्मतम् ॥
नीराजनाया वस्तूनि न पश्येत पुनः स्पृशेत् ।
सप्ताहं परिभ्राम्य कुर्य्यान्नीराजनाविधिम् ॥
न्यसेद्वा परराष्ट्रेषु गहने वा जलेऽपि वा ।
देवब्राह्मणवैद्यादीनेभ्यः प्रयच्छेद्वा यथायथम् ॥
इति संक्षेपतः प्रोक्तो मया नीराजनाविधिः ।
अनेन विधिना राजा सुचिरं सुखमश्नुते ॥”
तथा हि गर्गः ।
“नीराजना महीन्द्राणां निघ्नन्ति विपदोऽखिलाः ।
सैव सन्नहनं राज्ञां कञ्चुकेनेव संयतः ॥
नीराजनावन्दितानां न भयं विद्यते क्वचित् ।
नीराजनाविहीनानां नश्येयुः सर्व्वसम्पदः ॥”
तथा च वात्स्यः ।
“ये भूमिपालाः प्रतिवत्सरान्तं
कुर्व्वन्ति नीराजनकर्म्म सम्यक् ।
तेषां न लक्ष्मीः क्षयतामुपैति
साम्राज्यलक्ष्मीः करगैव तेषाम् ॥
एवं नीराजनं कृत्वा राजा प्रस्थानमाचरेत् ॥”
इति नीराजनाविधिः ॥ * ॥
अथ यात्रा ।
“गुणातिशयसम्पन्नः प्रभुं यायाज्जिगीषया ।
यदि पश्चात् प्रकोपो न यदि राष्ट्रे न कण्टकाः ॥
संग्रामायाथ यायाद्वा पार्ष्णिग्राहेण प्रभुणा ॥
राजात्मुलूको विनिहन्ति काकान्
काकोऽप्युलूकान् रजनीव्यपाये ।
इति स्वकालं समुदीक्ष्य यायात्
कार्य्ये फलन्तीह समीहितानि ॥
प्रबलव्यसनोपेतं दुर्भिक्षादिप्रपीड़ितम् ।
सम्भूतान्तरकोपेतं न यायात् पृथिवीपतिः ॥
निजदैवानुकूल्ये हि प्रातिकूल्ये परस्य च ।
यायान्नृपो यतो दैवं बलमेतत् परं मतम् ॥”
अन्यच्च तु ।
“निरातङ्के निरुत्पाते निरुद्विग्ने निरामये ।
विपक्षे जयमिच्छन्ति राजानो विजिगीषवः ॥”
इति युक्तिकल्पतरुः ॥
युद्धयात्रायाममङ्गलदर्शनं यथा,—
“तस्य निर्गच्छतो गेहात् श्वानोऽस्य सुखतो-
ऽभवत् ।
ध्वजे वरोह कापोतः शिवा श्यामा च
दक्षिणा ॥
पिङ्गला चञ्चुगोधा च शूकरी कैवली तथा ।
गजवानरसेनाजशिखिच्छिकाश्च वामतः ॥
पथं विभिन्दति सर्पः कुम्भोदकं च्युतीर्य्यत ।
रराव वानरो जम्भो मार्ज्जारो हस्तिभैरवम् ॥
तैलतक्रलवणकेशयुक्ताभ्यक्तादिदर्शनम् ।
वाम्तोश्च तजडमूकस्तु(त्)यामनक्रजं रवम् ॥
तुषकार्पासलवणानां निन्दितानाञ्च दर्शनम् ।
रक्ताम्बरधरो मुण्डः पञ्चामिषं नया वसा ॥
ललाटं शक्रचापं उल्कापातध्वजादयः ।
दिशां दाहमहीकम्पाः सरजः कलुषं नभः ॥
निस्तेजस्तपती भानुर्नद्यः प्रतिमुखावहाः ।
उष्णोदकं महाकूपं दरयं दीर्घिकासु च ॥
अकालविक्रतिः पुष्पफलानामन्वभूत्तदा ।
शीत उष्णविपर्य्यासा मेघनादाश्च दारुणाः ॥
आरण्यसत्त्वा ग्रामेषु ग्रामजारण्यवासिनः ।
क्रोष्टृसर्पसमूहाश्च शशश्वानः पिपीलिकाः ॥
न्यायां महती सेना मृगाश्च तथैव च ।
एते च पुरप्राकारे निपतन्त्युत्पतन्ति च ॥
दुर्गन्धः शार्करो वायुर्दीना योधा हतप्रभाः ।
शङ्कनूश्वाश्रुपातानि गजा अश्वाः प्रचक्रिरे ।
ध्वजच्छत्रपताकानां स्फुटनं दण्डभिन्दनम् ।
कलङ्कमपि चक्रे च हता दुन्दुभिरेव च ॥
व्याससाकूटनश्चापि नाराचानाञ्च कुण्ठता ।
गदानां मुद्गराणाञ्च शीर्य्यता स्तम्भभिन्दता ॥
शुष्कप्ररोहश्चार्कसार्द्रपातस्तथैव च ।
प्रतिमारुदितं स्वेदो मृतकानाञ्च जल्पनम् ॥
गवां रासभमारोहः स्त्रीणाञ्च नक्रपत्नता ।
स्त्रीकृते अपिच्छागादि हनावि शिशुशोभनम् ।
बालानां घातनं युद्धे निश्चिन्ताः सकलाः प्रजाः ।
मक्षिकादंशमच्छूकबहुगोनासदर्शनम् ॥
निस्तेजा न वह्निः सधूमः स्फुटते मुहुः ॥
एवंविधान् तथोत्पातान् दृष्टान् घोरेण वासव ।
पप्रच्छ नारदं सोऽथ किमेतद्धितं द्विज ! ॥”
इत्याद्ये देवावतारे घोरवधाध्यायः ॥

अथ द्वादश यात्रा।

"प्रणम्य जगतां नाथं कलिकल्मषनाशनम्।

द्वादशयात्रातत्त्वानि वक्ति श्रीरघुनन्दनः॥"

तत्रादौ द्वादशयात्राकालस्य सुखोपादेयत्वात् आदौ स एव निरूप्यते। तद्यथा स्कन्दपुराणे।

इन्द्रद्युम्न उवाच।

"वैशाखादिषु मासेषु यात्रापूजाविधिं मुने!।

श्रोतुमिच्छामि देवेशे यथावद्वक्तुमर्हसि॥

जैमिनिरुवाच।

वैशाखादिषु मासेषु देवदेवस्य शार्ङ्गिणः।

या या द्वादश यात्राः स्युस्ता हि वक्ष्यामि ते शृणु॥

वैशाखे चान्दनी यात्रा ज्यैष्ठे स्नापन्युदीरिता।

आषाढ़े रथयात्रा स्यात् श्रावणे शयनी तथा॥

भाद्रे दक्षिणपार्श्वीया आश्विने वामपार्श्विका।

उत्थानी कार्त्तिके मासि छादनी मार्गशीर्षके॥

पौषे पुष्याभिषेकः स्यान्माघे शाल्योदनी तथा।

फाल्गुने दोलयात्रा स्याच्चैत्रे मदनभञ्जिका॥

एकैका मुक्तिदा सर्व्वा धर्म्मकामार्थसाधनाः॥"

अथ यात्राविधिः। स्कान्दे।

"वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता।

तत्र मां लेपयेद्गन्धलेपनैरतिशोभनैः॥

वैशाखस्यामले पक्षे तृतीया पापनाशिनी।

अयमाविष्कृता चैषा प्राजापत्यर्क्षसंयुता॥

यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम्।

वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम्॥

वैष्णवा जयशब्देन पूजयित्वा तदा हरिम्।

नानासूक्तोपनिषदैर्व्विशेषं संस्तुवन्ति च॥

वेणुवीणादिवाद्यैश्च तथा नानोपचारकैः।

सन्तोषयन् जगन्नाथं तृतीयादौ विलेपयेत्॥

वैशाखस्य तृतीयायां जलमध्ये विशेषतः।

लेपनं सर्व्वपि कुर्य्यात्सङ्के वा इष्टदने॥

चन्दनागुरुह्रीवेरं कुष्ठकुङ्कुमरोचनाः।

जटामांसी मुरा चैव विष्णोर्गन्धाष्टकं विदुः॥

एतैर्गन्धैस्तथान्यैश्च विष्णोर्गात्राणि लेपयेत्।

इतश्च तुलसीकाष्ठं कुर्य्याल्लेपनकर्म्मणि॥"१॥

अथ स्नानयात्रा। स्कन्दपुराणे।

"ज्यैष्ठामहावतीर्णस्तत् पूर्व्वं जन्मवासरम्।

तस्याश्च स्नापनं कार्य्यं महास्नानविधानतः।

तस्यां प्रातःस्नानकाले ब्रह्मणा सहितश्च माम्।

रामं सुभद्रां सुस्नाप्य मम लोकमवाप्नुयात्॥"

तथा।

"मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते।

पौर्णमास्यां हरेः स्नानं सर्व्वकामफलप्रदम्॥

सर्व्वतीर्थमयः कूपस्तदास्ते निर्म्मलः शुचिः।

तदा भोगवती तत्र प्रत्यक्षं भवति द्विजाः॥

तस्मात् ज्यैष्ठ्यां समुद्धृत्य होमाद्यैः कलसैर्ज्जलैः।

स्नापयन्ति तदा कृष्णं सततं तं हलायुधम्॥

ज्येष्ठाहनि हरेः स्नानमुत्सवं परमाद्भुतम्।

उत्सवो वै न हीयेत तस्मात्तद्यत्नतश्चरेत्॥

अनन्ता चयकारित्वाज्ज्यैष्ठयात्रा प्रतिष्ठिता।

ज्येष्ठस्नानं भगवतो वै पश्यन्ति सुराज्विताः॥

न ते भवाब्धौ मज्जन्ति [illegible]यां यतमानसाः।

ज्येष्ठे च स्नपनं कुर्य्यात् श्रीविष्णोर्जन्मवासरे॥

दैनन्दिनन्तु दुरितं पक्षमासर्त्तुवर्षजम्।

ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च॥

स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च।

कोटिकोटिसहस्राणि क्षुद्रपापानि यानि च॥

सर्व्वाण्येव प्रणश्यन्ति पौर्णमास्यान्तु वासरे।

पुरुषसूक्तमन्त्रेण पावमान्या तथैव च॥

नारिकेलोदकेनाथ तथा तालफलाम्बुना।

पञ्चामृतैः शीततोयैर्दूर्व्वाकर्पूरवासितैः॥

यवोदकेन शुद्धेन तथा पुष्पोदकेन च।

स्नापयित्वा जगन्नाथं पूजयेत् परमेश्वरम्॥

ॐ घं घण्टायै नमः इति घण्टावाद्यं निवेदयेत्।

य एवं कुरुते विद्वान् ब्राह्मणः क्षत्रियः शुचिः।

सर्व्वपापैः प्रमुच्येत विष्णुलोकं स गच्छति।

चतुर्द्दश्यां दृढं मञ्चं कारयित्वा सुशोभनम्॥

सुगन्धिधूपसुरभिं चन्दनाम्भःसमुक्षितम्।

एवं मञ्चं प्रतिष्ठाप्य कलसानधिवासयेत्॥

सुवासितं जलपूर्णं पावकं कलसं न्यसेत्।

जयशब्देन स्तुतिभिर्नीयते जगदीश्वरः॥

जयस्व राम कृष्णेति जयभद्रेति चोदिते।

नीयते मञ्चदेशन्तु निशीथे ब्राह्मणादिभिः॥"

अथ रथयात्रा। स्कन्दपुराणे।

"गुण्डिकाख्यां महायात्रां प्रकुर्व्वीयाः क्षितीश्वर!।

आषाढ़स्य सिते पक्षे द्वितीया पुष्यसंयुता॥

तस्यां रथे समारोप्य रामं मां भद्रया सह।

यात्रोत्सवं प्रवर्त्त्याथ प्रीणयेच्च द्विजान् बहून्॥

ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम।

सप्ताहं सरित्तीरे मम यात्रा भविष्यति॥

अष्टमे दिवसे सर्व्वान् रथान् मार्त्त्यैर्व्विभूषयेत्।

नवम्यामानयेद्देवांस्तेषु प्रीतः सन्हृदाम्॥

दक्षिणाभिमुखी यात्रा विष्णोरेषा सुदुर्लभा।

यथा पूर्व्वा तथा चेयं ते द्वे मुक्तिप्रदायिके॥

अष्टाहे विश्वणेच्छक्रं तदर्द्धेन तु पार्व्वतीम्॥"

इतिवत् तिथिना एकाहो बोद्धव्यः।

"तिथिनैकेन दिवसश्चान्द्रमानेन कीर्त्तितः॥"

इति विष्णुधर्म्मोत्तरात्॥

यत्तु।

"आषाढ़स्य सिते पक्षे भद्रा सा पुष्यसंयुता।

यात्रोत्सवं प्रकुर्व्वीयात्तदभावे पुष्य एव हि॥"

इति ईश्वरसंहितायां वचनान्तरम्॥

तद्वैकल्पिकप्रयोगान्तरविधायकम्। पाद्मे।

"आषाढ़स्य द्वितीयायां रथं कुर्य्याद्विशेषतः।

आषाढ़शुक्लैकादश्यां जपहोममहोत्सवम्॥

नातः परं हि तत्त्वस्य यात्रान्तरमपेक्षते।

अत्र स्वयं त्रिलोकेशः स्यन्दनेन कुतूहलात्॥

नाशयन् सर्व्वपापानि वर्षे वर्षे व्रजेदसौ।

रथस्थितं व्रजन्तं तं महावेदीमहोत्सवे॥

ये पश्यन्ति सदा भक्त्या वासस्तेषां हरेः पदे।

सत्यं सत्यं पुनः सत्यं प्रतिज्ञातं द्विजोत्तमाः॥

नातः श्रेयःपदो विष्णोरुत्सवः शास्त्रसम्मतः।

रथयात्रैव यात्रायां मुख्येत्याह प्रजापतिः।

महावेदीं व्रजन्तं तं रथस्थं पुरुषोत्तमम्।

बलभद्रं सुभद्राञ्च दृष्ट्वा मुक्तिर्न चान्यथा॥

आषाढ़स्य सिते पक्षे दिने विष्णोः शुभप्रदे

प्रतिष्ठाप्य सन्दृढेन विधिना पूर्व्वसद्विजाः॥

रथं नरो हरेः कुर्य्यात् स्नापनं सुपरिष्कृतम्

भूषयेद्विविधैर्भक्त्या वस्त्रालङ्कारमाल्यकैः॥

म्रदङ्गपणवाद्यैश्च भेरीढक्कादयस्तथा।

नटनर्त्तकमुख्याश्च गायका बहवस्तथा॥

वेश्या यौवनदर्पाढ्या रूपालङ्कारभूषिताः।

ध्वजाश्च बर्हवस्त्राश्च पताकाधिष्ठिताम्बराः।

गरुड़ञ्च ध्वजं कुर्य्यात् रक्तचन्दनमिश्रितम्

दीर्घनासं पीतदेहं कुण्डलाभ्यां विभूषितम्।

चतुर्दंष्ट्रभुजगं सर्व्वालङ्कारभूषितम्।

देव्याः पद्मध्वजं कुर्य्यात् पद्मकाष्ठविनिर्म्मित

सप्तच्छदमयं कुर्य्याच्छौरिणो लाङ्गलध्वजम्

सारथिं वाजिनश्चैव बलं बलसुदान्वितम्।

क्षीरकैर्मङ्गलैर्दाम्नैर्व्वलिवर्गैः सुशोभनम्।

इत्थं सुघटितं तन्तु रथं देवत्रयस्य च॥

अरुणोदयवेलायां देवं तस्मात् प्रपूजयेत्।

आचार्य्यैर्व्वैष्णवैः सार्द्धं यतिभिश्च तपस्विभिः।

विज्ञापयेद्देवदेवं यात्रायै स कृताञ्जलिः।

ततः कर्पूरपर्य्यैश्च सुमनोभिरवाकिरत्॥

पथि शोभनसूक्तानि प्रपठन्ति द्विजातयः।

केचिन्मङ्गलगाथाश्च केचिज्जय जयेति च।

जितन्तु इति मन्त्रं वै केचित् पुण्यं जपन्ति च

सूतमागधमुख्याश्च कीर्त्तिं कार्ष्णीं सदा ज

चर्च्चरीभर्झरीवेणुवीणामाधुरिकादयः।

शब्दायन्ते सुमधुरं गोविन्दविजयान्तरे।

एवं प्रवृत्ते समये कृष्णं रामपुरःसरम्।

नयन्ति विप्रा भद्राश्च क्षत्रियाश्च विशस्तथा

करे धृत्वा जगन्नाथं भ्रामयित्वा रथत्रयम्।

रामं भद्राञ्च कृष्णञ्च रथमध्ये निवेशयेत्।

पूजयेदुपचारैस्तैः श्रद्धाभक्तिसुसंयतः।

रथच्छायां समाक्रम्य ब्रह्महत्यां व्यपोहति।

तद्देशसंसक्तनुरजोदैर्वे पापसंहतिम्।

घनाम्बुवृष्टिसिक्तेन स्वर्गङ्गास्नानजं फलम्।

ये प्रणामं प्रकुर्व्वन्ति तेऽपि मोक्षमवाप्नुयुः।

अनुगच्छन्ति ये कृष्णं ते देवतुल्यविग्रहाः।

वेदैः स्तुवन्ति वेदानां वक्तारो मोक्षभागिनः

इतिहासपुराणाद्यैः श्लोकैर्व्वापि सुसंस्कृतैः।

स्तुवन्ति पुण्डरीकाक्षं ये वै विगतकल्मषाः।

ते वै जयन्ति पापानि जयशब्दैः स्तुवन्ति वै

नर्त्तनं कुरुते वापि गायन्त्यथ नरोत्तमाः।

वैष्णवोत्तमसंसर्गान्मुक्तिं प्राप्नोत्यसंशयम्।

नामानि कीर्त्तयिष्यन्ति न ते यान्ति यमालय

जयस्व रामकृष्णेति जयभद्रेति यो वदेत्।

न मातृगर्भे वासोऽस्य स च देवत्वमाप्नुयात्।

चामरैर्व्यजनैः पुण्यैः स्तवकैश्चीनचेलकैः।

रथस्थाग्रे स्थितो यो वै वीजयेत् पुरुषोत्तम

संवीज्यमानोऽप्सरोभिर्देवगन्धर्व्वयोषिताम्।

सहक्ते तु भोगानखिलान् यावदाभूतसंप्लवम्।

प्रातः परतरो लोके महावेदीमहोत्सवात् ।
सर्व्वपापहरो योगः सर्व्वतीर्थफलप्रदः ॥
रथस्थमुद्दिश्य ये तत्र दानं ददति वै नराः ।
यत्किञ्चिद्द्रव्यपदं मेरुदानेन संमितम् ॥
गुण्डिचामण्डपे यान्तं भद्रासक्तं बलाग्रजम् ।
तथातपत्रान्नाथं दर्पणैर्व्याभिषेचयेत् ॥
पश्चात्तैः शीततोयैः पुष्पकर्पूरवासितैः ।
नारिकेलजलेनाथ तथा तालफलाम्बुना ॥
रत्नोदकेन शुद्धेन तथा पुष्पोदकेन च ।
सर्व्वाङ्गमनुलिम्पेच्च चन्दनेन्दुमदद्रवैः ॥
सुगन्धिमाल्याभरणैश्चौलपट्टैः सुशोभनैः ।
चामरैश्च जलाभैश्च शीतलैर्व्यजनैस्तथा ॥
वीजयेत् पुण्डरीकाक्षं सुभद्रां बलमेव च ।
सिताभिः पानकैश्चैवं तैस्तथा इक्षुविकारकैः ॥
खर्ज्जूरैर्नारिकेलैश्च नानारम्भाफलादिभिः ।
तथा क्षीरविकारैश्च पनसैरिक्षुभिस्तथा ॥
वासितैः शीततोयैश्च गन्धताम्बूलपत्रकैः ।
सकर्पूरजपक्राद्यैः पूजयेत् परमेश्वरम् ॥
रथत्रयस्थितं देवत्रयं ये पुरुषर्षभाः ।
प्रदक्षिणं प्रकुर्व्वन्ति त्रिचतुःसप्त एव च ॥
ततोऽपराह्णे देवेशं दक्षिणानिलवीजितम् ।
शनैः शनैर्नयेद्विष्णुं मण्डपस्यैव मध्यमे ॥
एवं व्रजति देवेशे सूर्य्यश्चास्तं गतोऽभवत् ।
दीपकानां सहस्राणि ज्वालितानि नरैस्तदा ॥
मण्डपे वासयेद्देवान् गुण्डिकाख्ये मनोहरे ।
चारुचन्द्रातपे चारुमाल्यचामरभूषिते ॥
पूजयित्वा जगन्नाथं तोषयेत् गीतनृत्यकैः ।
उपहारादिभिस्तत्र सप्ताहानि जनार्द्दनम् ॥
सप्ताहं ये प्रपश्यन्ति गुण्डिकामण्डपे स्थितम् ।
मां च रामं सुभद्रां च विष्णुसायुज्यमाप्नुयात् ॥
दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत् ।
यत्किञ्चित् कुरुते कर्म्म कोटिकोटिगुणं भवेत् ॥
सर्व्वं मेरुसमं दानं सर्व्वे व्याससमा द्विजाः ।
महावेद्यां व्रते लब्धे योगोऽयं खलु दुर्लभः ॥
महोदयाद्यो योगाः स्कन्देन परिभाविताः ।
महावेद्याख्ययोगस्य कलां नार्हन्ति षोडशीम् ॥
अष्टाहे च पुनः कृत्वा दक्षिणाभिमुखाच्युतम् ।
दक्षिणाभिमुखी यात्रा विष्णोरेषा प्रकीर्त्तिता ॥
कार्य्या प्रयत्नतः सा हि भुक्तिमुक्तिप्रदा भवेत् ।
दक्षिणाभिमुखं यान्तं कृष्णं पश्यन्ति ये नराः ॥
न तेषां पुनरावृत्तिः सत्यमेतन्न संशयः ।
पुराविदो वदन्त्येतां यात्रां नवदिनात्मिकाम् ॥
तस्याः संकीर्त्तनादेव निर्म्मलो जायते नरः ।
तावतीयं महायात्रा यो यथा कर्त्तुमिच्छति ॥
सोऽपि विष्णुप्रभावेन वैकुण्ठभवनं व्रजेत् ।
उद्धृत्य सप्तपुरुषान् पापाचलसमन्वितान् ॥"४॥
अथ शयनयात्रा । स्कान्दे ।
"आषाढ़े शुक्लदशम्यां कुर्य्यात् शयनमहोत्सवम्।
मण्डपे दक्षिणे तत्र शयनागारमुत्तमम् ॥
देवस्य पुरतः शय्यां रत्नादिनिर्म्मितोपरि ।
आस्तीर्य्य मृदुवस्त्रादि मृदुतूलोपधानकाम् ॥
कर्पूरधूपविन्यस्तां चारुचन्द्रातपां शुभाम् ।
पुष्पगन्धयुतां सुताररञ्जितां चन्दनाङ्किताम् ॥
चारुद्वारां शुभां स्निग्धां नानाचित्रोपशोभिताम्।
एवं शयनगृहं कृत्वा निशीथे स्थापयेद्विभुम् ॥
संपूज्य भावनैर्देवं तैर्वा लक्ष्म्यादिभिः सह ।
स्वपिहीति च संप्रार्थ्य स्वापार्थं परमेश्वरम् ॥
नयेच्छय्यागृहद्वारं वासयेत् घटिकाद्वयम् ।
पश्चात्तैः स्नापयेत्तान् पृथक्पञ्चामृताधिकैः ॥
सुगन्धिचन्दनैर्लिप्तान् वस्त्रालङ्करणादिभिः ।
पूजयित्वा यथान्यायं प्राञ्जलिर्मन्त्रमुच्चरेत् ॥"
जगद्वन्द्य इत्यादि ।
"सुदृढ़ं कारयेद्द्वारं विष्णोः शयनवेश्मनः ।
स्वापयित्वा जगन्नाथं लभते सुखमुत्तमम् ॥"५॥
अथ पार्श्वपरिवर्त्तनयात्रा ।
"अथ ते संप्रवक्ष्यामि पार्श्वस्य परिवर्त्तनम् ।
नभस्यसितपक्षे च संप्राप्ते हरिवासरे ॥
विष्णोः स्वापगृहद्वारं शनैर्गत्वा प्रविश्य च ।
नमस्कृत्य जगन्नाथं पर्य्यङ्कशयितं मुदा ॥
अवधार्य्य शनैर्द्वारं पूजयेदुपचारकैः ।
प्रणम्य भक्त्या तत्पादौ स्वापयेदुत्तरामुखम् ॥"
मन्त्रश्चेमं पठेत् ।
"ॐ देवदेव ! जगन्नाथ ! कल्याणं परिकल्पय ।
परिवृत्तमिदं सर्व्वं यथा स्थावरजङ्गमम् ॥
यत् दृष्ट्वा पीडितैरेव जाग्रत्स्वप्नसुषुप्तिभिः ।
जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्त्तय ॥
परिवर्त्तनकालोऽयं जगतः पालनाय ते ।
त्वदग्रजोऽयं शक्रोऽपि क्षणे तिष्ठेत् समुत्सुकः ।
इदं त्वत्पादकमलं विसृज मह्निं तज्जलम् ।
मह्यां जलं प्लावयति प्रजापालनहेतुकम् ॥
इति संप्रार्थ्य देवेशं विनयात्तोषयेत्ततः ।
व्यजनैश्चामरैश्चैव वीजयेत् परमेश्वरम् ॥
सुगन्धिचन्दनैरस्य सर्व्वाङ्गं परिलेपयेत् ।
स्वादूनि भक्ष्यभोज्यानि पायसादीनि दापयेत् ॥
शय्यागृहद्वारि विभोः शनैर्भक्त्या निवेदयेत् ।
देवमुद्दिश्य यत् कुर्य्यात् सर्व्वमक्षयतां व्रजेत् ॥
पार्श्वे च जन्मदिवसे उपवासपरो भवेत् ॥"
एवं आश्विनशुक्लैकादश्यां पूर्व्वोक्तविधानेन
श्रीकृष्णस्य वामपार्श्वपरिवर्त्तनं कार्य्यम् ॥
मतान्तरे ।
"शुभे चैवाश्विने मासि महामायां प्रपूजयेत् ।
कौशकीं राजतीं मार्त्तीं विष्णुमायां महेश्वरीम्।
हिंसा चैव न कर्त्तव्या कदाचिद्विष्णुपूजकैः ॥"६॥
अथोत्थानयात्रा ।
"एकादश्यान्तु कार्त्तिक्यां शुक्लायां पृथिवीपते ।
कृष्णमुत्थापयेत्तत्र पूजयित्वा जगद्गुरुम् ।
पूर्व्ववत् पूजयित्वा तु प्रातर्मन्त्रं समुच्चरेत् ॥"
मन्त्रस्तु ।
"ॐ उत्तिष्ठ देवदेवेश ! तेजोराशे जगत्पते ! ।
वीक्षेतत् सकलं देव ! प्रसुप्तं तव मायया ॥
प्रफुल्लपुण्डरीकाक्ष ! श्रीहरे ! शयनेन वै ।
त्वया हृष्टं जगदिदं परमं सुखमेष्यति ॥
ये ते स्वार्त्ताः क्रियाः सर्व्वाः प्रवर्त्तन्तां ततो ध्रुवम्।
इत्युत्थाप्य जगन्नाथं वेणुवीणादिनिःस्वनैः ॥
जयशब्दैस्तथा दैवं नयेदुत्सवमण्डपम् ॥
तैलेनाभ्यज्य तोयेन स्नापयेत् पुरुषोत्तमम् ।
पश्चात्तैर्नारिकेलरसैः मधुरैस्तथा ॥
सुगन्ध्यामलकेनाथ यवकल्केन लेपयेत् ।
घर्षयेत्तुलसीचूर्णैर्लेपयेद्गन्धचन्दनैः ॥
पुष्पवासिततोयैश्च कुङ्कुमोदकैस्तथा ।
स्नापयित्वा क्षयेत् पापं बहुजन्मोपपादितम् ॥
महोपचारैः संपूज्य विष्णुं नीराजयेत्ततः ।
कृताञ्जलिपुटो भूत्वा प्रार्थयेत् परया मुदा ॥"७
अथ प्रावरणयात्रा ।
"मार्गशीर्षे सिते पक्षे कुर्य्यात् प्रावरणोत्सवम्
कृत्वा दृष्ट्वा नरो भक्त्या वैष्णवं लोकमाप्नुयात् ॥
षष्ठ्योऽधिवासं कुर्व्वीत पञ्चम्यां विधिवत् कर्म्म-
वित् ।
प्रभाते मण्डलं कुर्य्यात् पद्ममष्टदलान्वितम् ॥
दिक्पालान् पूजयेद्दिक्षु क्षेत्रपालं गणाधिपम् ।
चक्रप्रचक्रौ च बहिश्चतुर्द्दिक्षु प्रपूजयेत् ॥
तन्मध्ये स्थापयेद्वस्त्रं क्षालयेद्दुग्धवारिणा ।
पूजयित्वा जगन्नाथं गन्धतैलेन दीपकम् ॥
दत्त्वा कृष्णाय भक्त्या तु गीतवाद्यैर्नयेन्निशाम् ।
प्रातः प्रपूजयेद्देवं नानाद्रव्यैः सुशोभनैः ॥
सप्तभिः सप्तभिर्द्देवान् वासोभिः परिवेष्टयेत् ।
सूक्ष्मवस्त्रैश्च सर्व्वाङ्गे शीतप्रावरणैर्द्विजाः ॥
दूर्व्वाक्षतैः प्रपूज्याथ कुर्य्यान्नीराजनां विभोः ।
भगवन्तं समुद्दिश्य ब्राह्मणेभ्यः प्रदापयेत् ॥
गुरुभ्यश्चान्यदेवेभ्यो दीनानाथेभ्य एव च ।
शीतप्रावरणं दद्यात् यत्नात् परमया मुदा ॥
ददाति भगवान् प्रीतस्तस्मै वरमनुत्तमम् ॥"८॥
अथ पुष्पस्नानयात्रा ।
"पुष्पस्नानोत्सवं वक्ष्ये यथोक्तं ब्रह्मणा पुरा ।
पुष्यर्क्षेण च संयुक्ता पौर्णमासी यदा भवेत् ।
पौषे मासि तु तत् कुर्य्यात् पुष्पस्नानोत्सवं हरेः ॥
चतुर्द्दश्यां निशायान्तु कुम्भानामधिवासनम् ।
रात्रौ जागरणं कृत्वा प्रातर्वह्निं प्रकीरयेत् ॥
ब्रह्मविष्णुशिवेभ्यश्च प्रत्येकं समिधं क्रमात् ।
जुहुयात् पूजयित्वा तु तदन्ते पुरुषोत्तमम् ॥
पूजयेदुपचारैस्तु आदर्शे प्रतिबिम्बितम् ।
ततः पुरुषसूक्तेन कुम्भांस्तानभिमन्त्रयेत् ।
क्रमात् देवस्य शिरसि स्नापयेद्विधिवत्ततः ॥"
स्कन्दपुरम् ।
"ततः पश्चात्तेनैव वासुदेवश्च चालयेत् ।
जप्त्वा सूक्तं पुनर्विप्र उपचारैः प्रपूजयेत् ॥
दूर्व्वाङ्कुराद्यैः स्तुतिभिर्वाद्यैः संपूज्य केशवम् ।
समन्ताद्विकिरेद्देवं कर्पूराद्यैः सुतण्डुलान् ॥
नीराजयेज्जगन्नाथं कर्पूरयुतवर्त्तिभिः ।
ततः प्रदक्षिणं कृत्वा दण्डवत् प्रणमेत् क्षितौ ॥
पुष्पस्नानोत्सवं पुण्यं ये पश्यन्ति मुदान्विताः ।
सर्व्वसम्पत्सकामास्ते व्रजेयुर्वैष्णवं परम् ॥"९॥
अथ नवशस्ययात्रा ।
"कुर्य्यादयनसंक्रान्त्यां नवशस्यमहोत्सवम् ।
संक्रान्तेः पूर्व्वदिवसे नवं शालिं समाहृतम् ।
प्रासादपूर्व्वदेशे तु स्थापयित्वाधिवासयेत् ॥"

तथा च पाद्मे ।
"संक्रान्त्यां माघमासस्य साधिवासिततण्डुलान् ।
निवेद्य विष्णवे भक्त्या इमं मन्त्रमुदीरयेत् ॥
त्वयि तुष्टे जगत् सर्व्वमन्नेन प्रभविष्यति ।
रक्ष सर्व्वं जगन्नाथ ! प्रयातां पिट्कं शुभम् ॥
ब्राह्मणान् भोजयेत् भक्त्या देवदेवपुरःस्थितान् ।"
अभ्यर्च्य भगवद्भक्तानित्यादि ॥
"नवेन वाससाविष्टा दूर्व्वासर्षपपुष्पकैः ।
पूजयित्वाभिमन्त्र्याथ तण्डुलामभिरक्षतु ॥
पुनः प्रभाते देवेशं प्रतिपेत्रस्थचन्दनैः ।
वस्त्रालङ्कारमाल्यैश्च पूजयित्वा यथाविधि ॥
नीराजयित्वा देवेशं तण्डुलानधिवासितान् ।
स्थालीषु पाकपात्रेषु मधुखण्डाज्यमिश्रितान् ॥
पङ्क्तिशः स्थापयेदग्रे गन्धपुष्पाक्षतान्वितान् ।
सयूपं पायसं कृत्वा दद्यादै चक्रपाकये ।
दग्धवर्णकपिष्टञ्च विष्णोः प्रियतरं परम् ॥
ॐ जीवनं सर्व्वभूतानां जनकस्त्वं जगद्गुरो ! ।
तन्मयाः प्राणिनो ह्येते त्वयैव जनिताः प्रभो ! ॥
लोकानुग्रहकार्य्याय गृहीत्वा चिन्मविग्रहम् ।
तव प्रीत्यै कृतानेतान् गृहाण परमेश्वर ! ॥
त्वयि तुष्टे जगत् सर्व्वमन्नेन प्रभविष्यति ।
स्वाहाकारस्वधाकारवषट्कारा दिवौकसाम् ॥
आप्यायना भविष्यन्ति तेनैवाप्यायितं जगत् ।
रक्ष सर्व्वं जगन्नाथ ! तन्मयं सचराचरम् ॥
इति संप्रार्थ्य देवेशं प्रार्थितान् विनिवेदयेत् ॥"१०॥
अथ दोलयात्रा ।
"फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमम् ।
यत्र क्रीडति गोविन्दो लोकानुग्रहकाय वै ॥
प्रत्यर्थी देवदेवस्य गोविन्दाख्यान्तु कारयेत् ।
पञ्चमूलत्वं प्रकुर्व्वीत पञ्चाहानि त्र्यहानि वा ॥
फाल्गुन्याः पूर्व्वतो विप्राश्चतुर्द्दश्यां निशामुखे ।
वह्न्युत्सवं प्रकुर्व्वीत दोलमण्डपपूर्व्वतः ॥"
पाद्मे ।
"पौर्णमास्यां समारभ्य पञ्चम्याञ्च समाप-
येत् ॥"११॥
अथ मदनभञ्जिका यात्रा ।
"वासन्तिकां समासाद्य यात्रां मदनभञ्जि-
काम् ।
यस्यां लतायां दृष्टायां प्रीयाति पुरुषोत्तमः ॥
चैत्रशुक्लचयोदश्यामाहरेत्तत् समूलकम् ।
देवस्याग्रे विरचिते मण्डपे साधिवासितं ॥"१२॥
इति यात्रातत्त्वम् ॥
देव्याः षोडशप्रकारोत्सवः । यथा,—
"वैशाखे गन्धयात्रा च चन्दनागुरुकल्पना ।
ज्यैष्ठे महास्नानयात्रा अम्बुवाचीदिनत्रयम् ॥
आषाढ़े रथयात्रा च दिग्दिगन्तव्यापिनी परा ।
श्रावणे जलयात्रा च वस्त्रभूषणचामरैः ॥
भाद्रे यात्रा धूनवाख्या चण्डिकाया दिनत्रयम् ।
आश्विने च महापूजा यात्रा यज्ञबलिप्रिया ॥
कार्त्तिके दीपयात्रा च नवान्नमयहायणे ।
पौषे चाङ्करागयात्रा वस्त्रालङ्कारभूषणैः ॥
माघे मासि महादेवी रटन्ती च चतुर्द्दशी ।
दोलाकेलिः फाल्गुने च चैत्रे यात्रा चतुष्टयी ।
दूतीयात्रा रासयात्रा वासन्ती नीलयात्रिका ।
एवं यात्रा मया प्रोक्ता षोडशी भवमोचनी ॥"
इति वामकेश्वरतन्त्रे ५४ पटलः ॥
(रोगिदर्शनार्थं भिषजां यात्राविवरणम् । यथा,
"इदानीं निर्गमे पुत्त्र ! प्रवेशे वा गृहस्य च ।
शुभाशुभानि सर्व्वाणि वक्ष्यामि शकुनानि च ॥
राजा गजो द्विजमयूरकखञ्जरीटा-
श्चाषः शकुन्तरजकः सितवस्त्रयुक्तः ।
पुत्रान्विता च युवती मणिका च कन्या
श्रेयः सुखाय गृहिणां प्रतिदर्शयन्ति ॥
नटाश्चाषो भासहारीतचक्री
भारद्वाजोच्छिक्कारस्थागसंज्ञः ।
एते श्रेष्ठा दक्षिणे वाथ सव्ये
वेश्यावेशो निर्गमे श्रेयसे च ॥
सर्पोलूको वानरः शूकरश्च
गोधा कृष्णः शशकाश्चः शशश्च ।
एते रिक्तानिर्गमे वा प्रवेशे
कार्य्याघातो नोपकारेषु शस्ताः ॥
मृगो वा पिङ्गलो वापि प्रशस्ता दक्षिणे सदा ।
निर्गमे वा प्रवेशे च दक्षिणाः शुभदायकाः ॥
एको वा त्रीणि वा पञ्च सप्त वा नवसंख्यया ।
भाग्यकाले नराणान्तु मृगा यान्ति प्रदक्षिणाः ॥
शिखिहयगजगोधारासभो भृङ्गराजो
मुखरपिककपोतो पोतकी शूकरी वा ।
तदनुविहगराजो मङ्गलाशंसिनः स्यु-
र्वदति शकुनवेत्ता वामतो निर्गमे वः ॥
तित्तिरिः कुररः क्रौञ्चः सारसाभासशूकरः ।
वामे तु शुभशंसी च निर्गमे कार्य्यसिद्धये ॥
काको दक्षिणतः श्रेष्ठो निर्गमे शुभदायकः ।
प्रवेशे गदितः श्रेष्ठो वामतः सुखदायकः ॥
जालको हि शशकोऽपि कर्कटो-
कीर्त्तनञ्च गदितं न सुखाय ।
न शुभदर्शना अमी भवेयुः
सर्पगोधाशशकलाशविड़ालाः ॥
दर्शनं हितकरं प्रवदन्ति
खञ्जरीटमराजचिक्करायाम् ।
वामतः शुभकराः प्रवदन्ति
दार्व्वाघाटवराटकशुकाश्च ॥
इति शुभाशुभशकुनानि ॥"
इति हारीते द्वितीयस्थाने सप्तमेऽध्याये ॥ * ॥
तथा च ।
"शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ।
नेष्यन्ते पतितान्त्यस्थदीनान्धरिपवस्तथा ॥
मृदुशीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ।
ग्रन्थ्यर्व्वुदादिषु सदा छेदशब्दश्च पूजितः ।
विद्रधुदरगुल्मेषु भेदशब्दस्तथैव च ।
रक्तपित्तातिसारेषु वद्धशब्दः प्रशस्यते ।
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ।
छर्द्यां वातपुरीषाणां शब्दो वै गर्दभोष्ट्रयोः ॥
प्रतिषिद्धं तथा भग्नं क्षुतं स्खलितमाहतम्
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते ॥
इति सुश्रुते सूत्रस्थाने २९ अध्यायः
यादईशः, पुं, ( यादसां जलानां जलजन्तूनां
ईशः । ) समुद्रः । इति हेमचन्द्रः । ४ । १३
यादः, [स्] क्ली, (यान्ति वेगेनेति । या + असु
बाहुलकात् दागमश्च ।) जलजन्तुः । इत्यमर
१।१०।२० ॥ ( यथा, भगवद्गीतायाम् ।१०।
"अनन्तश्चास्मि नागानां वरुणो यादसा-
महम् ।"
जलम् । इति निघण्टुः । १ । १२ ॥ )
यादःपतिः, पुं, ( यादसां पतिः । ) समुद्रः । इ
मरः ।१।१८।२०॥ वरुणः । इत्यजयपालः ॥
यादवः, पुं, ( यदोरपत्यम् । यदु + अण्
श्रीकृष्णः । इति शब्दरत्नावली ॥ ( यथा, भ
वद्गीतायाम् । ११ । ४१ ।
"सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण ! हे यादव ! हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥")
ययातिर्ज्येष्ठपुत्त्रो यदुस्तस्य वंशः । यथा,—
"ययातिर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ! ।"
इत्युपक्रम्य ।
"माधवा वृष्णयो राजन् यादवाश्चेति संज्ञितम्
इति श्रीभागवते ९ स्कन्धे २३ अध्यायः
(यदुसम्बन्धिनि, त्रि । यथा, भागवते । ११।१।
"मन्येऽवनेर्नंनु गतोऽप्यगतं हि भारं
यद्यादवं कुलमहो अविसह्यमास्ते ॥")
यादवी, स्त्री, (यदोरियमिति । यदु + अण् । ङीप्
दुर्गा । इति त्रिकाण्डशेषः ॥ ( यदुवंशीयक
सामान्ये । यथा, महाभारते । १ । ९५ । १३
"प्राचीन्वान् खल्वश्मकीमुपयेमे यादवीं तस
मस्य जन्म संयातिः ॥")
यादसांनाथः, पुं, ( यादसां जलजन्तूनां नाथ
षष्ठ्या अलुक् । ) वरुणः । इति हलायुधः ॥
यादसांपतिः, पुं, ( यादसां जलजन्तूनां पतिः
षष्ठ्या अलुक् ।) समुद्रः । इत्यमरः । १।१।६४
वरुणः । इति मेदिनी । ते, २४२ ॥ ( यथ
देवीभागवते । ३ । ६ । ३५ ।
"अश्विनौ वसवस्त्वष्टा कुबेरो यादसांपतिः ।"
क्वचित् विशेषणमपि । यथा, मार्कण्डेये ।२२।
"यावदन्तर्णवे देवं वरुणं यादसांपतिम् ।")
यादृक्, [श्] त्रि, (य इव दृश्यते । दृश् + "त्यद
दिषु दृशोऽनालोचने कञ्च ।" ३।२।६० । इ
चकारात् क्विन् । "आ सर्व्वनाम्नः ।" ६।३।९१
इत्याकारादेशः । ) य इव दृश्यते सः । इ
मुग्धबोधव्याकरणम् ॥ येमन इति भाषा
( यथा, भागवते । ४ । २९ । ६४ ।
"नानुभूतं क्वचानेन देहेनादृष्टमश्रुतम् ।
कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥")
यादृशः, त्रि, ( य इव दृश्यते असिव पश्यति वा
दृश् + "दृशेः क्सश्च वक्तव्यः ।" ३।२।६० । इ

वार्त्तिकोक्तेः क्सः । "आसर्व्वनाम्नः ।" ६।३।९१। इत्यत्र "दृग्‌दृशवतुषु ।" इत्युक्तम् । इत्यात्वम् । ) य इव दृश्यते यः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा ॥

दृशः, त्रि, ( य इव दृश्यते । दृश् + "त्यदादिषु दृशः इति ।" ३।२।६० । इति कञ् । "आसर्व्वनाम्नः ।" ६।३।९१ । इत्याकारादेशः । ) य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा । ( यथा, मनुः । ४ । २५४ ।
'यादृशोऽस्य भवेदात्मा यादृशञ्च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥"
स्त्रियां यादृशी ॥ )

[यादो]नाथः, पुं, ( यादसां नाथः । ) समुद्रः । इति राजनिर्घण्टः ॥ ( वरुणः । इति यादसां-नाथशब्ददर्शनात् ॥ )

[याद]ोनिवासः, पुं, ( यादसां निवासः । ) जलम् । इति हेमचन्द्रः । ४ । १३५ ॥

[या]नं, क्ली, ( या + ल्युट् । अर्द्धर्चादित्वात् पुंलिङ्गमपि । ) राज्ञां सन्ध्यादिषड्गुणान्तर्गतगुणविशेषः । तत्तु उपचितशक्तेः हतमूलराष्ट्रस्य शत्रोराक्रन्दनाय यात्रा । इति भरतः ॥ ( यथा, देवीभागवते । ५ । ६ । ११ ।
"यानमप्यधुना नैव कर्त्तव्यं सहसा पुनः ॥" )
यात्यनेनेति । या + ल्युट् । ) रथयुग्यरथदोलादि । तत्पर्य्यायः । वाहनम् २ युग्यम् ३ पत्रम् ४ धोरणम् ५ । इत्यमरः ।२।८।५८॥ विमानम् ६ चक्रम् ७ यापनम् ८ गतिमित्रकम् ९ । इति शब्दरत्नावली ॥*॥ ( यथा, मनुः । ३ । ६४ ६५ ।
"शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥" )
अथ चतुष्पदयानोद्देशः ।
"ये मत्तनागादिविभेदतोऽमी
मया निरुक्ता इह वाजिमुख्याः ।
दिशानया सर्व्वचतुष्पदानां
भेदो विधेयो विदुषादरेण ॥
तथा यथाश्वादिकपोषणेन
यानेन वा दोषगुणौ भवेताम् ।
तथा तथैवान्यचतुष्पदानां
प्रकीर्त्तितौ दोषगुणौ बुधेन ॥
वरमयानमपोषणमेव वा
वरमिवान्यशरीरमपोषणम् ।
न खलु दोषयुतं च चतुष्पदं
स्पृशति पश्यति शोभनचेतनः ॥
[ध]राविन्दुदूषयति पयोघटशतं यथा ।
[तथ]ा सर्व्वं दूषयति दोषदुष्टश्चतुष्पदः ॥"
इति चतुष्पदयानोद्देशः ॥*॥
[अथ] द्विपदयानोद्देशः ।
[म]ानुषैः पक्षिभिर्व्वापि तथान्यैर्द्विपदैरपि ।
[या]नं स्याद्विपदं नाम तस्य भेदो ह्यनेकधा ॥
[स]ामान्यञ्च विशेषञ्च तस्य भेदो द्विधा भवेत् ॥"

तत्र सामान्यं यथा,—
"यानं द्विपदाभ्यां यत् तद्दोलादिकमुच्यते ।
चतुर्भिर्युक्तिसंयुक्तैरेकधातुगुणाम्बरैः ।
दोलेति कथ्यते तेषां नियमोऽयं प्रदश्यते ॥"
तत्र सन्दयः ।
"उपेन्द्रमूलादितिशिवाश्विवर्ज्जे
शशीन्दुताराधिपयोगलग्ने ।
दृढिचमापुष्यमाद्यवर्ज्जं
दोलादिकारोहणमाद्यमिष्टम् ॥
दण्डकाष्ठस्य नियमे नियमश्चन्दनादिवत् ।
कनकं रजतं ताम्रं लौहं धातुचतुष्टयम् ॥
चतुर्विधानामुद्दिष्टं ब्रह्मादीनां यथाक्रमम् ।
सुराणामसुराणाञ्च चातुर्व्वर्ण्यमुदाहृतम् ॥
त्रिहस्तसम्मितो मध्ये तदर्द्धं पार्श्वयोर्द्वयोः ।
विजया नाम दोलेयं विजयाय महीभुजाम् ॥
विजया मङ्गला क्रूरा शिवा क्षेमा शुभा क्रमात् ।
वितस्त्येकैकसंवृद्धा दोलाः षट् स्युः सुखप्रदाः ॥
भौमश्च पद्मकोषश्च शक्रः पर्व्वत एव च ।
चतुर्विधानां दोलासु कल्याणाय चतुष्टयम् ॥
हंसः केकी शुको भृङ्गश्चतुष्टयमिदं क्रमात् ।
कुम्भाद्यग्रे निधातव्यं चतुर्विधमहीभुजाम् ॥
अत्रापि वर्णविन्यासो विज्ञेयो नवदण्डवत् ॥"
भोजस्तु ।
"गजः प्रस्थानदोलायां रणदोलासु केशरी ।
मृगो भ्रमणदोलायां क्रीडादोलासु षट्पदः ॥
भुजङ्गमः शत्रुराज्ये वृषभो दानकर्म्मणि ।
दोलोपर्य्युपरि न्यस्तो बहुभिर्मुनिशासनम् ॥
यद्दण्डकं यानं स्यात् तत् पर्य्यङ्कमिति स्मृतम् ।
त्रिहस्तसम्मितो यानस्तदर्द्धपरिणाहवान् ।
पर्य्यङ्कः क्षेमनामायं भर्त्तुः सर्व्वार्थसाधकः ॥
क्षेमो न्यग्रोधो दुःखश्चत्वारस्ते यथाक्रमम् ।
वितस्त्येकैकसंवृद्धा यथा चाङ्गुलं सज्जिनः ।
मणिधातुगुणादीनां नियमः पूर्व्ववन्मतः ।
विशेषमथ वक्ष्यामि पर्य्यङ्कस्य यथाक्रमम् ॥
शुक्तिश्च गजदन्तश्च मृगशृङ्गस्तथैव च ।
अनूपादिकजातानां पर्य्यङ्केषु न्यसेत् क्रमात् ॥
पद्मशङ्खगजाश्वानि हंसकोकशुकान् क्रमात् ।
आदित्यादिदशानानां मणिरूपेण विन्यसेत् ॥
महीन्द्राणां विशेषेण सिंहमानेव शस्यते ।
निर्म्माणे शुक्तिदण्डाश्च राज्यभोगसुखप्रदाः ॥
तदेवावक्रदण्डन्तु खट्टायानमिति स्मृतम् ॥
अस्यापि पूर्व्ववन्मानमणिधात्वादिनिर्णयः ॥
विशेषचरणोच्छ्रायः परिणाहार्द्धसम्मितः ।
तदेव चेन्निचरणं पीठयानमिति स्मृतम् ॥
तस्य भेदो द्विधा दण्डवक्रावक्रप्रभेदतः ।
मानादिकं पूर्व्वतुल्यं विशेषाच्चतुरस्रता ॥
एवमन्यानि मिश्राणि यानानि विविधानि च ।
सामान्यार्थानि जानीयात् शिल्पिभिर्निर्म्मितानि वै ॥
मनोहरत्वं लघुता दृढतेति गुणत्रयम् ।
प्रोक्तं द्विपदयानानां सहजं भोजभूभुजा ॥
इति सामान्यद्विपदयानकथनम् ॥"

इति युक्तिकल्पतरुः ॥*॥ विशेषद्विपदयानन्तु चतुर्दोलशब्दे जलयानोद्देशस्तु नौकाशब्दे द्रष्टव्यम् ॥ (फलप्राप्तिहेतौ, त्रि । यथा, ऋग्वेदे । १० । ११० । २ ।
"तनूनपात् पथ ऋतस्य यानान्
मध्वा समञ्जन् स्वदयासुजिह्व ॥"
"यानान् फलप्राप्तिहेतून् पथो मार्गान् ।" इति तद्भाष्ये सायणः ॥ या + भावे ल्युट् । गतिः । यथा, वाभटे शारीरस्थाने षष्ठेऽध्याये ।
"यानं खरोष्ट्रमार्ज्जारकपिशार्द्दूलसूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्त्तते मुखे ॥" )

यानपात्रं, क्ली, (यानसाधनं पात्रम् । शाकपार्थिववत् समासः । ) जलयानविशेषः । जाहाज इति भाषा ॥ तत्पर्य्यायः । वहित्रकम् २ बोहित्थम् ३ वहनम् ४ पोतः ५ । इति हेमचन्द्रः । ३ । ५३९ ॥ समुद्रयानम् ६ । इति वराहपुराणम् ॥ ( यथा, हरिवंशे ।१४५।६२।
"समुच्छ्रितैः सितैः पोतैः यानपात्रैस्तथैव च ।
नौभिश्च शिल्पिकाभिश्च शुशुभे वरुणालयः ॥" )

यानमुखं, क्ली, ( यानस्य मुखम् पुरोभागः । ) रथादेः पुरोभागः । तत्पर्य्यायः । धूः २ । इत्यमरः । २ । ८ । ५५ ॥

यापनं, क्ली, ( या + णिच् + ल्युट् । ) वर्त्तनम् । कालक्षेपणम् ॥ ( यथा, कामन्दकीये ।१७।३१।
"पूर्व्वसेनापतिर्नीचः कालयापनमाश्रितः ॥" )
निरसनम् । इति मेदिनी । ने, ११२ ॥ ( यापयतीति । या + णिच् + ल्युः । प्रापके, त्रि । यथा, भागवते । ३ । २२ । ३३ ।
"अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ॥" )

यामा, स्त्री, जटा । इति भूरिप्रयोगः ॥

याप्यः, त्रि, (यापि + यत् ।) अधमः । निन्दितः । इत्यमरः ।३।१।५४ ॥ (यथा, बृहत्संहितायाम् । १९ । २२ ।
"यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः
शुभफलमपि चैवं याप्यमन्योऽन्यतायाम् ॥" )
यापनीयः । ( यथा, सुश्रुते निदानस्थाने प्रथमे अध्याये ।
"शोषितं तदसाध्यं स्यात् याप्यं संवत्सरोत्थितम् ॥" )
क्षेपणीयकालादिः । इति मेदिनी । ये, ४८ ॥ व्याधिविशेषः । यथा,—
"साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥
याप्यलक्षणमाह ।
यापनीयन्तु तं विद्यात् क्रियां धारयते स्थिताम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् ।
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥

अक्रियावतां चिकित्सारहितानाम् ।” इति भावप्रकाशः ॥

याप्ययानं, क्ली, (याप्यं अधमं यानम् ।) शिविका । इत्यमरः । २ । ८ । ५३ ॥

याभः, पुं, ( यभ्यते इति । यभ + घञ् । ) मैथुनम् । यथा । इवाश्वयोर्याभिऽर्थे सन् । इति जिधुपादे वोपदेवः । ८४६ ॥ ( यथा, भागवते । ६ । १८ । ६ ।

“पौलोमं स्मस्तुतं प्रेष्ठं मीढुषं याभकोविदम् ।
स एकोऽजनयत् तस्यां वडौनां रतिवर्द्धकः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥” )

यामः, पुं, ( याति यायते वा । या + “अर्त्तिस्तुसुहुस्रुक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।” उणा० १।१४० । इति मन् । यम् + घञ् वा ।) दिवारात्र्योश्चतुर्थभागैकभागः । तत्पर्य्यायः । प्रहरः २ । इत्यमरः । १।४।६ ॥ (यथा, मनौ । ७ । १४५ ।

“उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत् स शुभां सभाम् ॥” )

संयमः । इति मेदिनी । मे, २४ ॥ ( गमनम् । यथा, ऋग्वेदे । १ । ४८ । ४ ।

“उषो ये ते प्र यामेषु युञ्जते ।”

“यामेषु गमनेषु ।” इति तद्भाष्ये सायणः ॥ गमनसाधनः । यथा, ऋग्वेदे । ४ । ५१ । ४ ।

“कुविन्न देवीः सनयो नवो वा
यामो बभूयादुषसो वो अद्य ॥”

“यामो गमनसाधनः स रथः ।” इति सायणः ॥ देवगणभेदः । यथा, मार्कण्डेयपुराणे ।५३।१८।

“यज्ञस्य दक्षिणायान्तु पुत्रा द्वादश जज्ञिरे ।
यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे ॥”)

यामघोषः, पुं, ( यामे प्रतियामे घोषः रवोऽस्य । प्रतिप्रहरं रवकरणादेवास्य तथात्वम् । ) कुक्कुटः । इति शब्दमाला ॥

यामघोषा, स्त्री, (यामे यामे घोषोऽस्याः । यामान् प्रहरान् घोषति शब्दायते इति वा । घुष् + अच् । टाप् ।) घटीविशेषः । घडी इति भाषा । तत्पर्य्यायः । नाली २ घटी ३ यामनाली ४ समेरुका ५ दण्डढक्का ६ । इति त्रिकाण्डशेषः ॥

यामनाली,, स्त्री, ( यामस्य नालीव । ) यामघोषा । इति त्रिकाण्डशेषः ॥

यामनेमिः, पुं, इन्द्रः । इति त्रिकाण्डशेषः ॥

यामलं, क्ली, युगलम् । इति हेमचन्द्रः । ६ । ६० ॥ तन्त्रशास्त्रविशेषः । तस्य लक्षणं यथा,—

“सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम् ।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च ।
युगधर्म्मश्च संख्यातो यामलस्याष्टलक्षणम् ॥”

तत्तु षड्विधम् । आदियामलम् १ ब्रह्मयामलम् २ विष्णुयामलम् ३ रुद्रयामलम् ४ गणेशयामलम् ५ आदित्ययामलम् ६ । इति वाराहीतन्त्रम् ॥ एषां श्लोकसंख्या तन्त्रशब्दे द्रष्टव्या ॥

यामवती, स्त्री, ( यामः प्रहरः अस्त्यस्यामिति । याम + मतुप् । मस्य व ङीप् । ) रात्रिः । इति राजनिर्घण्टः ॥

यामाता, [ऋ] पुं, ( जामाता पृषोदरादित्वात् । जस्य यः ।) जामाता । दुहितुः पतिः । इत्यमरटीका शब्दरत्नावली च ॥ यामातुर्विष्णुतुल्यत्वं तस्य गृहे कन्यादातुर्नौलिकजनस्य प्राक् भोजननिषेधश्च यथा, कामधेनावादित्यपुराणम् ।

“विष्णुं यामातरं मन्ये तस्य मन्युं न कारयेत् ।
अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥”

इत्युद्वाहतत्त्वम् ॥

यामार्द्धं, क्ली, ( यामस्यार्द्धम् । ) प्रहरस्यार्द्धम् । तस्याधिपा यथा,—

“वारेशाद्दलयामेषु रात्र्यह्नोः पञ्च षट्क्रमात् ।
अधिपाः स्युर्ग्रहास्तत्र यथार्काद्दे भवन्ति हि ॥
रवीन्द्विन्दुभृगुज्ञाजशनिजरवयो निशि ।
रविशुक्रज्ञराजीवशनीन्द्वङ्गभास्कराः ॥
दिने तूह्याः परेष्वेवं तथाध्यायाश्चतुर्ग्रहाः ।
पापदले भवेन्निष्टिः शुभदले शुभं भवेत् ॥
शुभग्रहस्य दले तु कर्म्मारम्भाच्छुभं भवेत् ।
आरम्भात् पापदले तु कर्म्म निष्फलतां व्रजेत् ॥
यस्यार्द्धयामस्तस्यैव प्रागद्दलः समुदाहृतः ।
षट् षट् परीत्य दलयश्च अयो रात्रौ मतास्तथा ॥
यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धतः ।
तदर्द्धात्तु तृतीयः स्यात्तदर्द्धात्तु तुरीयकः ॥
अह्नाभावे तु राहुः स्यात्तदह्नो वसुसंख्यकः ।
भग्नाङ्कस्य परित्यागाद्दिवादलाधिपा यथा ॥”

इति ज्योतिषतत्त्वम् ॥

यामिः, स्त्री, ( याति कुलात् कुलान्तरमिति । या + बाहुलकात् मिः । ) स्वसा । कुलस्त्री । इत्यमरः । २ । ६ । १४२ ॥ “स्वसा भगिनी । कुलस्त्री कुलवधूः । प्रहरे संयमे यामो यामिः स्वसृकुलस्त्रियोरित्यन्तःस्थादौ रभसः ॥ जिमस्तु कुटिले निम्बे जामिः स्वसृकुलस्त्रियोरिति चवर्गतृतीयादावजयः इति भरतमल्लटौ ॥ यथा, जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ॥ इति स्वामी ॥ जे चये बाहुलकान्मिः । यद्वा जमु अदने बाहुलकादिञ् जामिरिति । अन्तःस्थादौ वा प्रापणे धातुर्बोध्यः ।” इति रामाश्रमः ॥ (यथा, मनौ । ४ । १८३ ।

“यामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः ॥”)

यामिनी । इति शब्दरत्नावली ॥ धर्म्मस्य पत्नी । तस्याः कन्या नागवीथी । यथा,—

“अरुन्धती वसुर्यामिर्लम्बा भानुर्मरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च नामतः ।
धर्म्मपत्न्यो दश त्वेतास्तास्वपत्यानि मे शृणु ।
यस्मायाश्चैव वीथीऽसौ नागवीथी तु यामिजा ॥”

इति वह्निपुराणे काश्यपीयप्रजासर्गः ॥

यामिकभटः, पुं, ( यामे यामे नियुक्तः । याम + ठक् । स चासौ भटश्चेति ।) प्रहरिकः । चौकीदार इति भाषा । यथा,—

“उन्मादाम्बुदवर्द्धितान्धतमसः प्रभ्रष्टदिङ्मण्डले काले यायदुदग्रयामिकभटप्रारब्धकोलाहले ।
मार्गस्थान् सुहृदं समाश्रयबलाद्यन्त्रं दलन्तः पुरा-
दायातासि यदम्बुजाक्षि ! तदहं मन्ये भवं योषिताम् ॥”

इति कर्णाटः ।

यामित्रं, क्ली, लग्नात् सप्तमराशिः । यथा,—

“धीस्थानं पञ्चमं श्रेयं यामित्रं सप्तमं स्मृतम् ।
तुर्यं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम् ॥”

यामित्रवेधो यथा,—

“पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथवा
यत्नेनाशु विवर्जयेन्मुनिमतो दोषोऽप्ययं कथ्यते ।
यात्रायां विपदो गृहे सुतवधः चौरेषु रोगोद्भवो-
ऽप्युद्वाहे विधवा व्रते तु मरणं शूलञ्च पुंस्कर्म्मणि ।
रविमन्दकुजाक्रान्तं लग्नात्सप्तमं त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥”

इति यामित्रवेधः ॥ * ।

अस्य प्रतिप्रसवो यथा ।

“लग्नत्रिकोणनिजमन्दिरगोऽथ पूर्णो
मित्रर्क्षसौम्यगृहगोऽथ सदीक्षितो वा ।
यामित्रवेधविहितानपहृत्य दोषान्
दोषाकरः सुखमनेकविधं विधत्ते ॥”

इति ज्योतिस्तत्त्वम् ।

यामिनी, स्त्री, (यामाः सन्त्यस्याम् । याम + इनि । ङीप् ।) रात्रिः ॥ (यथा, महाभारते ।१२।५३।

“ततः शयनमाविश्य प्रसुप्तो मधुसूदनः ।
याममात्रार्द्धशेषायां यामिन्यां प्रत्यबुध्यत ॥”)

हरिद्रा । इत्यमरः । १ । ४ । ४ ॥ (कश्यपपत्नी । यथा, भागवते । ६ । ६ । २१ ।

“तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनीति च ।
पतङ्ग्यसूत पतगान् यामिनी शलभानथ ।”

प्रह्लादस्य द्वितीया तनया । यथा, कथासरित्सागरे । ४६ । २२ ।

“प्रह्लादो यामिनीं नाम द्वितीयां तनयां ददौ ।”

यामिनीपतिः, पुं, ( यामिन्याः पतिः । ) चन्द्रः । इति शब्दरत्नावली ॥ ( यथा, भागवते । १० । ३५ । २५ ।

“यदुपतिर्द्विरदराजविहारो
यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं
मोचयन् व्रजगवां दिनतापम् ॥”)

कर्पूरम् । इत्यमरः ॥

यामी, स्त्री, ( यमस्येयम् । यमो देवतास्याः वा । यम + अण् । ङीप् ।) दक्षिणदिक् । इति राजनिर्घण्टः ॥ ( यथा, ज्योतिषे ।

“————याम्यां गुरौ न व्रजेत् ।”

यामि + ङीष् । ) कुलस्त्री । इति शब्दरत्नावली ॥ (यथा, मनौ । ४।१८० ।

“मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥”

सर्व्वनामयुष्मच्छब्दः। तस्य चिह्न भिन्नेषु समानि रूपाणि। ( एकविंशतिविभक्तिषु तस्य रूपाणि। ) यथा। त्वम् १ युवाम् २ यूयम् ३। त्वाम् ४ युवाम् ५ युष्मान् ६। त्वया ७ युवाभ्याम् ८ युष्माभिः ९। तुभ्यम् १० युवाभ्याम् ११ युष्मभ्यम् १२। त्वत् १३ युवाभ्याम् १४ युष्मत् १५। तव १६ युवयोः १७ युष्माकम् १८। त्वयि १९ युवयोः २० युष्मासु २१। ( द्वितीयाचतुर्थी-षष्ठीनामेकवचनद्विवचनबहुवचनविभक्तिषु तस्य रूपान्तराणि यथा। द्वितीयैकवचने त्वा। चतुर्थीषष्ठ्योरेकवचने ते। आसां द्विवचने वाम्। आसां बहुवचने वः। श्लोकपादे वाक्यादौ च-वा-हा-ह-एव-शब्दयोगे अदर्शनार्थकार्थ-धातुयोगे च न स्युः। ) इति व्याकरणम्॥ यथा,—

"युष्मन्नुतेति खञ्जनगञ्जनाक्षि!
शिरो मदीयं यदि याति यातु।
नीतानि नाशं जनकात्मजार्थं
दशाननेनापि दशाननानि॥"

इति सूक्तिवादे गदाधरः॥ )

., स्त्री, यूषः। इति हेमचन्द्रः। ३। ६८॥

कः, पुं, ( यौतीति। यु+"अजियुधूनीभ्यो दीर्घश्च।" उणा० ३। ४७। इति कन् दीर्घश्च। ) मत्कुणः। इति जटाधरः॥ ( यथा, सुश्रुते सूत्रस्थाने ३१ अध्याये।
"यूका ललाटमयान्ति बलिं नाश्नन्ति वायसाः।
येषां वापि रतिर्नास्ति यातारस्ते यमालयम्॥")

का, स्त्री, ( यूक+स्त्रियां टाप्। ) मत्कुणः। यूँ इति उकुण इति च भाषा। तत्पर्य्यायः। केशकीटः २ स्वेदजः ३ षट्पदः ४। इति राजनिर्घण्टः॥ पाली ५ बालकृमिः ६। इति जटाधरः॥ ( यथा, मनौ। १। ४५।
"स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम्।
ऊष्मणश्चोपजायन्ते यच्चान्यत् किञ्चिदीदृशम्॥"
कृमिविशेषः। तद्यथा,—
नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः।
तलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः॥
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः।
धा ते कोठपिडकाः कण्डूगण्डान् प्रकुर्व्वते॥"
इति माधवकरसंगृहीतरुग्विनिश्चये क्रिम्यधिकारे॥
क्रिमयो द्विविधाः प्रोक्ता बाह्याभ्यन्तरसम्भवाः।
बाह्या यूकाः प्रविज्ञाः स्युः किञ्चुलूकास्तथा-न्तराः॥
षधा हि भवेद्बाह्याः षड्धा चान्तःससम्भवाः।
षां वक्ष्यामि संभूतिं बाह्यानाभ्यन्तरे शृणाम्॥
:चादति बलात् स्वेदान्मलाथा शोचनादपि।
षधातुवसन्धूताख्लौख्या यूका भवन्ति हि॥
काः सन्याः परा: श्वेतास्तृतीयाश्चर्म्मणि स्थिताः।
:श्यातिविकटा रूपाश्चर्म्माभाश्चर्म्मयूकिकाः॥
तुर्थी बिन्दुकी नाम वर्तुला सूक्ष्मसम्भवा।

मत्कुणाख्याश्च पञ्चमो बाह्योपद्रवकारिणः॥
यूका मलकसंस्थाने श्वेता वस्त्रनिवासिनी।
चर्म्मयूका भेचवर्णा सूक्ष्मा रोमणि यट्टिका॥"
इति हारीते चिकित्सितस्थाने पञ्चमेऽध्याये॥
यूकानाशकौषधं यथा, कामरत्ने।
"विडङ्गमञ्जोत्पलकल्कयोगात्
गोमूत्रसिद्धं कटुतैलमेतत्।
अभ्यङ्गयोगेन शिरोरुहाणां
यूकादिलीक्षाप्रचयं निहन्ति॥
गोमूत्रेण वलान्मूललेपो यूकानिवारणः।
पारदं मर्द्दयेन्निष्कमधुस्तूरजद्रवैः॥
नागवल्लीद्रवैश्चाथ वस्त्रखण्डं प्रलेपयेत्।
तद्वस्त्रं वेष्टयेत्मौलौ धार्य्यं यामद्वयं तथा॥
यूका पतन्ति निःशेषाः सत्वनाशाय संशयः।
द्विनिशानवनीतेन लेपान्मौलौ प्रकण्डुरुत्॥
नीलोत्पलं तिलं यष्टि सर्षपं नागकेशरम्।
धात्रीफलं समं पिष्ट्वा लेपो यूकाविनाशनः॥
निशागन्धकगोमूत्रं विडङ्गकटुतैलकम्।
पारदेन समं मर्द्द्य लेपो यूकानिवारणः॥"
इति केशस्य यूकादिनिवारणम्॥
परिमाणभेदः। यथा, मार्कण्डेये। ४९। ३७।
"परमाणुः परं सूक्ष्मं त्रसरेणुर्म्महीरजः।
बालाग्रश्चैव लिक्षाश्च यूका चाथ यवोदरम्॥")

यूतिः, स्त्री, ( यु+"ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च।" ३।३।९७। इति क्तिन् निपातनाद्दीर्घ-त्वञ्च। ) मिश्रणम्। इति मुग्धबोधव्याकरणम्॥ ( यथा, भट्टिकाव्ये। ७। ६९।
"करोमि वो बहिर्यूतीन् पिबध्वं पाणिभि-र्हृशः॥" )

यूथं, क्ली, (यु मिश्रणे+"तिथपृष्ठगूथयूथप्रोथाः।" उणा० २। १२। इति थक्प्रत्ययेन निपातितम्।) सजातीयसमूहः। इत्यमरः।२।५।४१॥ (यथा, रामायणे। २। ५४। ४१।
"तत्र कुञ्जरयूथानि मृगयूथानि चैव हि।
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव!॥")

यूथनाथः, पुं, ( यूथस्य नाथः। ) वन्यकरिणां समूहस्य ईश्वरः। तत्पर्य्यायः। यूथपः २। इत्यमरः। २। ८। ३५॥

यूथपः, पुं, ( यूथं पातीति। पा+कः। ) अरण्य-हस्तिनां प्रधानम्। इति शब्दरत्नावली॥ ( यथा, श्रीमद्भागवते। ९। १५। २८।
"घोरमादाय परशुं सतूणं चर्म्मकार्म्मुकम्।
अन्वधावत दुर्म्मर्षो मृगेन्द्र इव यूथपम्॥"
प्रधानमात्रे च। यथा, महाभारते। १।११८।५।
"राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते।
चरन् मैथुनधर्म्मस्थं ददर्श मृगयूथपम्॥")

यूथभ्रष्टः, पुं, ( यूथाद्भ्रष्टश्चलितः। ) यूथात् पलायितहस्ती। इति शब्दमाला॥ ( यूथ-भ्रष्टमात्रे, त्रि। यथा, श्रीमद्भागवते। ४। २८। ४६।
"यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्च्चती।
आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा॥")

यूथिका, स्त्री, (यूथं पुष्पवृन्दमस्या अस्तीति। यूथ+ठन्। टाप्। ) पाठा। इति राजनिर्घण्टः॥ अम्बष्ठकः। इति मेदिनी। के, १४४॥ पुष्प-विशेषः। युँई फुल इति भाषा॥ ( यथा, मेघ-दूते। १। २८।
"विश्रान्तः सन् व्रज वननदीतीरजातानि सिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि॥")
तत्पर्य्यायः। गणिका २ अम्बष्ठा ३ मागधी ४। सा पीता चेत् हेमपुष्पिका। इत्यमरः। २। ४।७१॥ यूथी५ प्रहसन्ती६। इति त्रिकाण्ड-शेषः॥ शिखण्डिनी ७ बालन्ती ८। इति रत्नमाला॥ बालपुष्पिका ९ बहुगन्धा १० भृङ्गानन्दा ११। अस्या गुणाः। स्वादुत्वम्। शिशिरत्वम्। शर्करार्त्तिपित्तदाहव्रणनाना-त्वग्दोषनाशित्वञ्च। इति राजनिर्घण्टः॥ अपि च।
"यूथीयुगं हिमं तिक्तं कटुपाकं सरं लघु।
मधुरं तुवरं हृद्यं पित्तघ्नं कफवातजम्।
व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम्॥"
इति भावप्रकाशः॥
( तथा च सुश्रुते उत्तरतन्त्रे ४५ अध्यायः।
"पटोलशेलुसुनिषण्णयूथिका
घटातिमुक्ताङ्कुरमिन्दुवारजम्॥" )

यूथी, स्त्री, ( यूथ+अर्शआद्यच्। ततो ङीष्। ) यूथिका। इति शब्दरत्नावली॥

यूथीगः, पुं, ( यूथं पातीति। यूथ+कः। ) यूथपः। इति शब्दचन्द्रिका॥

यूनिः, स्त्री, योगम्। मिश्रणम्। इति सिद्धान्त-कौमुदी॥

यूनी, स्त्री, ( युवन्+ङीष्। "श्वयुवमघोनाम-तद्धिते।" ६। ४। १३३। इति वस्य उत्वम्। ) युवती। इति शब्दरत्नावली॥ ( यथा,—
"यूनी काममयी दुनोति हृदयं वैश्यस्य भावा-बधूः।"
इति कलापे श्वयुवमघोनामेतिसूत्रे कुलचन्द्रः॥)

यूपः, पुं क्ली, ( यौति मिश्रयतीति। यूयते युज्यते-ऽस्मिन्निति ऋग्भाष्ये सायणः। १। ५१। १४। यद्वा, यु+"कुयुभ्यां च। उणा० ३।२७। इति पः दीर्घत्वञ्च। ) यज्ञे पशुबन्धनकाष्ठम्। इत्य-मरः। २। ४। ४१॥ तस्य परिमाणादिर्यथा। स्मृतौ।
"चतुर्हस्तो भवेद्यूपो यज्ञदारुसमुद्भवः।
वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो हेममौलिकः॥"
भविष्ये।
"बिल्वस्य वकुलस्यैव कार्यो यूपः प्रशस्यते।"
इति सामवेदिवृषोत्सर्गतत्त्वम्॥

यूपः, पुं, (यु+पः। दीर्घश्च।) जयस्तम्भः। याग-स्तम्भः। इत्युणादिकोषः॥ (यथा, रघुवंशे।६।३८।
"संग्रामनिर्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्त्तवीर्य्यः॥")

यूपकटकः, पुं, ( यूपस्य कटक इव । ) यज्ञसमाप्ति-सूचकं पशुबन्धार्थं यज्ञभूमौ यत् काष्ठमारोप्यते स यूपः तस्य शिरसि वलयाकृतिर्लौहमयकाष्ठमयो वा यः काष्ठविकारः सः । यूपमध्ये निहितलौहवलय इति केचित् । इति भरतः ॥ तत्-पर्य्यायः । चषालः २ । इत्यमरः ।२।७।१८॥

यूपकर्णः, पुं, ( यूपस्य कर्ण इव । ) यूपैकदेशः । तत्पर्य्यायः । घृतावनिः २ । इति हेमचन्द्रः । ३ । ४८८ ॥

यूपद्रुः, पुं, ( यूपाय द्रुः । ) खदिरवृक्षः । इति त्रिकाण्डशेषः ॥

यूपद्रुमः, पुं, ( यूपाय द्रुमः । ) खदिरवृक्षः । इति शब्दरत्नावली ॥ रक्तखदिरः । इति राजनिर्घण्टः ॥

यूपध्वजः पुं, ( यूपो ध्वज उपवेशनार्थमस्य । ) यज्ञः । इति शब्दमाला ॥

यूपाग्रं, क्ली, ( यूपस्याग्रम् । ) यूपस्याग्रभागः । तत्पर्य्यायः । तर्म्म २ । इत्यमरः । २ । ७ । १९ ॥

यूष, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ) दन्त्यशरी । यूषति । इति दुर्गादासः ॥

यूषं, पुं, क्ली, ( यूष्+कः । ) मुद्गादिक्वाथरसः । इत्यमरः । ३ । ५ । ३५ ॥ यूषोऽन्तःस्थादिः । चवर्गादिश्चेति मुकुटः । इति भरतः ॥ * ॥
अथ मुद्गयूषगुणाः ।
"मुद्गयूषोऽमिदो हृद्यः शुद्धानां व्रणिनामपि ।
पथ्यो बलाशपित्तघ्नो ज्वरहा च क्षताक्षत: ॥
अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणाम्लेहकटुकैः संस्कृतं कृतम् ॥
स तु दाडिमभृद्वीकायुक्तः स्याद्रागषाड्वः ।
रुचिकृल्लघुपाकश्च दोषाणामविरोधकृत् ॥" * ॥
मकुष्टयूषगुणाः ।
"मकुष्टयूषः संग्राही हृद्यो स्वादुः प्रमेहजित् ।
पित्तश्लेष्मज्वरहरस्तथातीसारनाशनः ॥" * ॥
कुलत्थयूषगुणाः ।
"कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ।
तूणीप्रतूणीकासार्शोगुल्ममेदःकफापहः ॥" * ॥
अन्येन च माषयूषगुणाः ।
"अजमाषो गुरुर्भेदी वातघ्नो दीपनो मतः ॥"
अथ खडयूषः ।
"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः ।
सुपक्वं खडयूषोऽयमयं काम्बलिकोऽपरः ॥" * ॥
खडकाम्बलिकयूषगुणाः ।
"दध्यम्लो लवणस्नेहतिलमाषविपाचितः ।
खडकाम्बलिकौ यूषौ व्याधिवातकफापहौ ॥"
इति राजवल्लभः ॥ * ॥
अपि च । अथ यूषस्य विधिर्गुणाश्च ।
"अष्टादशगुणे नीरे शमीधान्यकृतो रसः ।
विरलाज्ञि घनः किञ्चित् पेयातो यूष उच्यते ।
उक्तः स एव निर्यूहो रसिकश्च विशेषतः ॥"
यूषस्य प्रकारान्तरमाह ।
"तण्डुलपञ्चकं शुण्ठी पिप्पलीचार्द्धकार्षिकीम् ।
वारिप्रस्थेन विपचेत्तद्वो यूष उच्यते ॥"
अयमर्थः । यूषार्थं पलमितं तत् शुष्कीकृतं शुण्ठी पिप्पली च समुदिताऽर्द्धकर्षमिता शुष्कीकृता उभयमपि प्रस्थमितेन वारिणा पचेत् । तद्भवो यूषः ।
"यूषो बल्यो लघुः पाके रुच्यः कण्ठ्यः कफापहः ॥"
अथ मुद्गयूषविधिः । हृद्यटीकायां तन्त्रान्तरे ।
"मुद्गानां क्षिपणं तोये घ्नतमष्टाढकोन्मिते ।
पादस्थं मर्द्दितं पूतं दाडिमस्य फलेन तत् ॥
युक्तं सैन्धवविम्बाद्यधान्यकैः पादकार्षिकैः ।
कणाजीरकयोश्चूर्णाच्छायकैकावचूर्णितम् ।
संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः ॥" * ॥
अथ मुद्गयूषगुणाः ।
"मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः ।
शोषोर्ध्वमुखगदाहकफपित्तज्वरामकृत् ॥" * ॥
अथ मुद्गामलकयूषगुणाः ।
"मुद्गामलकयूषस्तु भेदी पित्तानिलापहः ।
तृड्दाहशमनः शीतो मूर्च्छाभ्रममदापहः ॥"
मकुष्टयूषगुणाः पूर्ब्ववत् । इति भावप्रकाशः ॥
( तथा च ।
"कुलत्थयूषो मधुरः कषायः
कफं सपित्तं विनिहन्ति शीघ्रम् ।
मेहाश्मरी पीयुषमेदहन्ता
सन्दीपनो मूत्रविशोधनश्च ॥
आढक्ययूषं मधुरञ्च शीतं
विशेषतो वातनिवारणञ्च ।
श्लेष्मापहं पित्तहरं नराणां
कृमिं निहन्यादपि दारुणञ्च ॥
शीतलं मधुरं मौद्गं यूषं पित्तविकारजित् ।
वातदोषहरं प्रोक्तं ज्वराणां शमनं परम् ॥
माकुष्टो ग्राहको यूषो हृद्यो स्वादुः प्रमेहजित् ।
पित्तश्लेष्मज्वरघ्नः स्यात्तथातीसारनाशनः ॥
कषायं कटुकञ्चोष्णं वातघ्नं पुंस्त्वदोषकृत् ।
रक्तपित्तं निहन्त्याशु चणानां यूषमुच्यते ॥
यवं सवातं कफघ्नमाषयूषं स पित्तकृत् ।
अन्नं पर्य्युषितं तच्च शस्यते तैलपाचने ॥
अन्यानि चैव शस्तानि कौलत्थान्युषितानि च ।
मकुष्टाश्चिपुठा मद्याः कलायाद्याश्च वर्ज्जिताः ॥"
इति यूषविधिः ॥ * ॥
इति हारिते प्रथमस्थाने नवमेऽध्याये ॥
"श्रेयः पक्वतमञ्चापि मुद्गयूषः कृताकृतः ।
स तु दाडिमभृद्वीकायुक्तः स्याद्रागषाड्वः ॥"
"पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ।
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥
श्वासकासप्रतिश्याय प्रसेकारोचकज्वरान् ।
हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ।
तूणी प्रतूणी कासार्शोगुल्मोदावर्त्तनाशनः ॥
दाडिमामलकैर्यूषो हृद्यः संग्राहको लघुः ।
प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित् ॥
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ।
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्यायः । )

यूषः, पुं. (यूषतीति । यूष्+कः ।) ब्रह्मदारुवृक्षः । इति शब्दरत्नावली ॥

येष, ऋ ड यत्ने । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-अक०-सेट् । ) अन्तःस्थादिः । ऋ, अयियेषत् । ड, येषते विवेशे । इति दुर्गादासः ॥

योक्ता, [ ऋ ] त्रि, योगकर्त्ता । इति युजधातोः कर्त्तरि तृन्प्रत्ययेन निष्पन्नम् ॥ ( यथा, वाजसनेयसंहितायाम् । ३० । १४ ।
"मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारं शोकायाभिसर्त्तारम् ॥"
"योक्तारं योगकर्त्तारम् ।" इति तद्भाष्यम् ।)

योक्त्रं, क्ली, ( युज्यतेऽनेनेति । युज्+"दाम्नीशसयुयुजस्तुतुदेति ।" ३ । २ । १८२ । इति ष्ट्रन् ।) युगेन सह ईषादण्ड आवध्यते अनेन तत् । योत् दड़ि इति भाषा । तत्पर्य्यायः । आबन्धः २ योत्रम् ३ । इत्यमरः । २ । ९ । १३ ॥ ( यथा, ऋग्वेदे । ५ । ३३ । २ ।
"स त्वं न इन्द्र धियमानो अर्कैर्हरीणां वृषन् योक्त्रमश्रेः ।"
"योक्त्रं नियोजनरज्जुं अश्रः आश्रयसि ।" इति तद्भाष्ये सायणः ॥ मन्थनरज्जुः । यथा, रामायणे । १ । ४५ । १८ ।
"ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् ।
मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः ॥")

योगः, पुं, (युज समाधौ+भावादौ यथायथं घञ् ।) सन्नहनः । उपायः । ध्यानम् । सङ्गतिः । युक्तिः । इत्यमरः । ३ । ३ । २२ ॥ ( प्रेम । यथा, देवीभागवते । ३ । १५ । १३ ।
"क्षीणान् गुणान् प्रविततान् प्रवदंस्तदाणौ तां प्रेमदामगुणकार च योगयुक्तः ॥"
"योगयुक्तः प्रेमयुक्तः ।" इति तट्टीकायां नीलकण्ठः ॥ छलम् । इति मनुः । ८ । १६५ । अस्य प्रमाणं योगदानशब्दे द्रष्टव्यम् । ) अप्राप्तार्थसम्प्राप्तिः । वपुःस्थैर्य्यम् । प्रयोगः । विष्कम्भादिः । भेषजम् । विश्वस्तघातकः । द्रव्यकार्म्मणम् । इति मेदिनी ॥ नैयायिकः । धनम् । इति हेमचन्द्रः ॥ चारः । सूत्रम् । इति त्रिकाण्डशेषः ॥ * ॥ ( येन वाक्यं युज्यते योगः । यथा,—
"तैलं पिबेच्चामृतवल्लिनिम्ब-
हिंस्राभयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु
हिताय नित्यं गलगण्डरोगी ॥
सिद्धं पिबेदिति प्रथमं वक्तव्ये हलीवमादि सिद्धप्रयुक्तमेव दूरस्थानामपि पदानामेकीकरणं योगः ।" इत्युत्तरतन्त्रे पञ्चषष्टितमेऽध्याये सुश्रुतेनोक्तम् ॥ ) अथ अष्टविंशतियोगनामानि । यथा,—

"विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा।
अतिगण्डः सुकर्म्मा च धृतिः शूलस्तथैव च॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा।
वज्रं सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः।
सिद्धः साध्यः शुभः शुक्लो ब्रह्मैन्द्रो वैधृतिस्तथा॥"
तेषां वर्ज्जनीयभागा यथा,—
"परिघस्य त्यजेदर्द्धं शुभकर्म्म ततः परम्।
त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः॥
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत्॥
शेषा यथार्थनामानो योगाः कार्य्येषु शोभनाः॥"
अथ विष्कम्भादियोगानयनक्रमः।
"रवीन्दुयोगलिप्ताभ्यो योगा भभोगभाजिताः।
गतगम्याश्च षष्टिघ्ना नाड्यो भुक्त्यन्तरोद्धृताः॥"
इति सूर्य्यसिद्धान्तः॥
विष्कम्भादिसप्तविंशतिसंख्यात्मककालविशेषः। तत्साधनमाह।
"ग्रहकलाः सरवीन्दुकलाकृताः
खखगजैश्च भयोगमितौ क्रमात्।
अथ कृता खगतैष्यविलिप्तिका
निजजवेन गतागत नाडिकाः॥"
इति भास्करीयसिद्धान्तशिरोमणौ योगसिताध्यायः॥ * ॥ यस्य ग्रहस्य नक्षत्रं ज्ञातुमिष्यते तस्य कलाः कार्य्याः। तथा चन्द्रार्कयोर्योगस्य कलाः कार्य्याः। उभयत्र शताष्टकेन हृते प्रथमस्थाने गतभानि। द्वितीयस्थाने गतयोगाः। अथ यान्यवशिष्टानि गतानि खखहाराच्युतानि गन्तव्यानि स्युः तेषां गतानां सम्बन्धिन्यो विकलाः खखगतिभिर्भाज्याः। यल्लभ्यते ता गतनाडिका भवन्ति। यदैष्याणां विकला भक्तास्तदैष्या घटिका भवन्ति। इति मिताक्षराख्यौ तत्कृतटीका॥ आनन्दयोगो यथा। भौमपराक्रमे।
"अश्विनी सह सूर्य्येण सोमे मृगशिरस्तथा।
अश्लेषा भौमवारेण बुधे हस्तः प्रकीर्त्तितः॥
अनुराधा गुरोर्वारे विश्वदेवस्तु भार्गवे।
वारुणं शनिसंयुक्तमानन्दोऽयं प्रकीर्त्तितः॥"
योगवरा यथा। दीपिकायाम्।
"भूमिपुत्त्रार्कयोरह्नि नन्दा मघा-
द्यावयार्द्रान्त्यचित्राहिमूलाश्विभिः।
भार्गवेन्द्वयोरह्नि भद्रा
भवेत् फल्गुयुग्मोडुसंयुता॥
सोमपुत्त्रस्य वारे जया स्यान्मृगो-
पेन्द्रगुर्व्विभ्रयाम्याभिजिद्धातृभिः।
गीष्पतेरह्नि रिक्ता च युक्ता यदा
विश्वशक्राग्निशुक्पित्रादितिवसुभिः॥
सूर्य्यसुतस्य दिने यदि पूर्णा
भर्क्षदिनाधिपतिस्त्रविश्वैः स्यात्।
यामवराभिरेव समेताः
सर्व्वसमीहितसिद्धिनियुक्ताः॥"
अयमेव शाश्वतयोगः॥ * ॥ अथामृतयोगः।
"शुभगुरुकरमूलापौष्णभान्यर्कवारे
हरिगुरुविधियुग्मे फल्गुनी भाद्रयुग्मे।
दिवसकरतुरङ्गौ शर्व्वरीनाथवारे
गुरुयुगमनुराधाश्वपौष्णानि भौमे
दहनविधिश्रुताख्यामैत्रभं सौम्यवारे
मखदितिभपुष्यामैत्रभं जीववारे।
भगश्रुतिगजयुग्मौ विष्णुमैत्रे सिताह्ने
श्रवणकमलयोनी सौरिवारेऽमृतानि॥
यदि सिद्धिव्यतीपातौ दिनं वाप्यशुभं भवेत्।
हन्त्यतोऽमृतयोगेन भास्करेण तमो यथा॥
सर्व्वदेशाविशेषेण फलं स्याच्छुभयोगजम्॥
अमृतं सिद्धियोगश्च यद्येकस्मिन् दिने भवेत्।
तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्यथा विषम्॥" * ॥
अथ सिद्धिदग्धपापयमघण्टयोगाः। यथा,—
"नन्दाद्याः सिद्धियोगा भृगुजबुधकुजार्कौज्यवारैः प्रशस्ताः।
सूर्य्येशाशाम्बिषड्दहसुनिमिततिथयोऽर्कादिवारैः प्रदग्धाः॥"
राजमार्त्तण्डे।
"मासा वह्न्यादिशो रामा षट्पञ्चमुनयस्तथा।
दशाष्टौ तिथयः सप्त रव्यादिसप्तभिर्ग्रहैः॥"
अपि च।
"द्वादश्यर्कयुता भवेदशुभदा सोमेन चैकादशी
भौमे चापि युता तथैव दशमी नेष्टा तृतीया बुधे।
षष्ठी नेष्टफलप्रदा सुरगुरौ शुक्रे द्वितीया तथा।
सर्व्वारम्भविनाशविघ्नजननी सूर्य्यात्मजे सप्तमी॥
पापोऽर्काह्नि विशाखाश्च यमसुतपस्याह्नि चित्राचतुष्कं
सौम्ये विश्वाभिजिद्भं त्वथ कुजदिवसे स्वत्रयं विश्वदस्रौ।
ज्ञाह्नि मूला विशाखा यमधनतुरगाख्यानि जीवेऽह्नि पित्र्यं
रोहिण्यार्द्रा यमेन्दूत्तरभमथ भृगोरह्नि पुष्यामयेन्द्रौ॥
सौराह्नि हस्तयुग्मार्य्यमयमजलयुक्पौष्णपुष्याश्वनानि
घण्टोऽष्टकर्णयुक्तो यमघण्टतिदिने सौम्यवारेऽर्य्यमापि॥" * ॥
अथोत्पाटादियोगाः।
"रव्यादिदिवसैर्युक्ता विशाखादिचतुष्कतः।
उत्पाता मृत्यवः काणा अमृतानि यथाक्रमम्॥"
अथ करकचायोगः।
"वाणिचित्रोत्तराषाढा मूलपाशीन्द्यभान्तकाः।
सूर्य्यादिवारसंयुक्ता योगाः करकचाः स्मृताः॥"
अथ मृत्युयोगः।
"आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा॥"
अथ यमघण्टादीनां वर्ज्यकालनिर्णयः।
"यमघण्टे त्यजेदष्टौ मृत्यौ द्वादश नाडिकाः।
अन्येषां पापयोगानां मध्याह्नात् परतः शुभम्॥"
अथ शुभचन्द्रेण करकचादिशान्तिः।
"अयोगेषु च सर्व्वेषु पूर्व्वयामं परित्यजेत्।
अयोगाश्च विनश्यन्ति चन्द्रशुद्धिहता इमे॥
करकचा मृत्युयोगाश्च दिनं दग्धं तथा परे।
शुभे चन्द्रे प्रणश्यन्ति तृष्णा वज्रहता इव॥" * ॥
विरुद्धयोगानां देशविशेषे प्रतिप्रसवो यथा। श्रीपतिः।
"विरुद्धसंज्ञा इह ये च योगा
नक्षत्रवारप्रभवाश्च ये वै।
हूणाङ्गवङ्गेषु खशेषु वर्ज्याः
शेषेषु देशेषु न ते विरुद्धाः॥"
इति ज्योतिस्तत्त्वम्॥ * ॥
अथ क्रियायोगः। मुनय ऊचुः।
"दुःखानुमग्नाः पुरुषाः प्राप्य ब्रह्म महालयम्।
उत्तरेयुर्भवाम्भोधिं तथा त्वमनुचिन्तय॥
इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम्।
नराणामुपकाराय दुःखविच्छित्तिकारकम्॥
वह्निरुवाच।
आराधयध्वं विश्वेशं जगतां कारणं परम्।
केशवन्तन्निरापेक्षा इदमुक्तं प्रवाक्य च॥
इष्ट्वा पूजानमस्कारैः शुश्रूषाभिरहर्निशम्।
व्रतोपवासैर्विविधैर्ब्राह्मणानाञ्च तर्पणैः॥
तैस्तैश्चात्महितैः कामैर्यैः स्यात्तस्य तुष्टिदाः।
भवेयुरपरिच्छेदादाराधयत केशवम्॥
तन्निष्ठास्तद्गतधियस्तत्कर्म्माणस्तदाश्रयाः।
तद्रूपस्तन्मनसः सर्व्वस्मिन् स इति स्थितः॥
समस्तान्यथ कर्म्माणि तत्र सर्व्वात्मनात्मनि।
संन्यस्यध्वं स वः कर्त्ता समस्तावरणाश्रयः॥
परः पराणां परमः स एको
नरोत्तमो यस्य पदस्य भिन्नम्।
चराचरं विश्वमिदं समस्ता-
दचिन्त्यरूपस्य परिग्रहं यत्॥
तमाराध्य जगन्नाथं क्रियायोगेन वाडवाः।
अन्ये मोक्षं परं जग्मुस्तस्मात्तन्मोक्षकारणम्॥
संसारार्णवमग्नानां विषयाक्रान्तचेतसाम्।
विष्णुपोतं विना नान्यत् किञ्चिदस्ति परायणम्॥
उत्तिष्ठंश्चिन्तय हरिं व्रजंश्चिन्तय केशवम्।
भुञ्जंश्चिन्तय गोविन्दं स्वपंश्चिन्तय माधवम्॥
यूयमेकाग्रचित्ता हि संश्रिता मधुसूदनम्।
जन्ममृत्युजराग्राहं संसारं सन्तरिष्यथ॥
क्रियायोगपराश्चैव मुक्तिकामा ह्यनेकशः।
समाराध्य जगन्नाथं राजानो मोक्षमाप्नुयुः॥"
इति वह्निपुराणम्॥ * ॥
अथ योगसाधनम्। केशिध्वज उवाच।
"योगस्वरूपं खाण्डिक्य! श्रूयतां गदतो मम।
यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धस्य विषयासङ्गि मुक्तेर्निर्व्विषयं तथा॥
विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुने।
चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम्॥
आत्मभावं नयत्येवं तद्ब्रह्मध्यायिनं मुने।
विकार्य्यमात्मनः शक्त्या लोहमाकर्षको यथा॥

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥
एवमत्यन्तवैशिष्ट्ययुक्तधर्म्मोपलक्षणः ।
यस्य योगः स वै योगी मुमुक्षुरभिधीयते ॥
योगयुक् प्रथमं योगी युञ्जानः सोऽभिधीयते ।
विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिवान् ॥
यद्यन्तरायदोषेण दूष्यते चास्य मानसम् ।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्व्वस्य जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्म्मा च यो-ऽचिरात् ॥
ब्रह्मचर्य्यमहिंसाञ्च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां स्वं मनो नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् ।
कुर्व्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ॥
एकं भद्रासनादीनां समास्थाय गुणैर्युतः ।
यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥
प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥
परस्परेणाभिभवं प्राणापानौ यदानिलौ ।
कुरुतः सद्विधानेन तृतीयः संयमात्तयोः ॥
तस्य चालम्बनवतः स्थूलरूपं द्विजोत्तम ! ।
आलम्बनमनन्तस्य योगिनोऽभ्यसतः स्मृतम् ॥
शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ।
कुर्य्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥
वश्यता परमा तेन जायतेऽतिचलात्मनाम् ।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥
प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतैस्ततः कुर्य्यात् स्थितं चेतः शुभाश्रये ॥
श्रीखाण्डिक्य उवाच ।
कथ्यतां मे महाभाग ! चेतसो यः शुभाश्रयः ।
यदाधारमशेषं तद्धन्ति दोषमलोद्भवम् ॥
श्रीकेशिध्वज उवाच ।
आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः ।
भूप ! मूर्त्तममूर्त्तञ्च परञ्चापरमेव च ॥
त्रिविधा भावना विप्र विश्वमेतन्निबोध मे ।
ब्रह्माख्या कर्म्मसंज्ञा च यथा चैवोभयात्मिका ॥
ब्रह्मभावात्मिका ह्येका कर्म्मभावात्मिका परा ।
उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥
सनन्दनादयो ब्रह्मभावभावनया युताः ।
कर्म्मभावनया चान्ये देवाद्याः स्थावराश्चराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्म्मात्मिका द्विधा ।
बोधाधिकारयुक्तेषु विद्यते भावभावना ॥
अक्षीणेषु समस्तेषु विशेषज्ञानकर्म्मसु ।
विश्वमेतत् परं चान्यद्भेदभिन्नदृशां नृप ! ॥
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
तच्च विष्णोः परं रूपमरूपस्याजमक्षरम् ।
विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥

न तद्योगयुजा शक्यं नृप ! चिन्तयितुं यतः ।
ततः स्थूलं हरे रूपं चिन्त्यं यद्विश्वगोचरम् ॥
हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः ।
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ॥
गन्धर्व्वयक्षदैत्याद्याः सकला देवयोनयः ।
मनुष्याः पशवः शैलाः समुद्राः सरितो द्रुमाः ॥
भूप भूतान्यशेषाणि भूतानां ये च हेतवः ।
प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् ॥
एकपादं द्विपादञ्च बहुपादमपादकम् ।
मूर्त्तमेतद्धरे रूपं भावनात्रितयात्मकम् ॥
एतत् सर्व्वमिदं विश्वं जगदेतच्चराचरम् ।
परं ब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कर्म्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्व्वगा ।
संसारतापानखिलानवाप्नोत्यनुसन्ततान् ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्व्वभूतेषु भूपाल ! तारतम्येन लक्ष्यते ॥
अप्राणवत्सु स्वल्पाल्पा स्थावरेषु ततोऽधिका ।
सरीसृपेऽपि तेभ्योऽपि अतिशक्त्या पतत्त्रिषु ॥
पतत्त्रिभ्यो मृगास्तेभ्यः स्वशक्त्या पशवोऽधिकाः ।
पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ॥
एभ्योऽपि नागगन्धर्व्वा यक्षाद्या देवता नृप ! ।
शक्रः समस्तदेवेभ्यस्ततश्चापि प्रजापतिः ॥
हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः ।
एतान्यशेषरूपस्य तस्य रूपाणि पार्थिव ! ॥
यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते ॥
अमूर्त्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः ।
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥
तद्विश्वरूपरूपं वै रूपमन्यद्धरेर्महत् ।
समस्तशक्तिरूपाणि तत् करोति जनेश्वर ! ॥
देवतिर्य्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया ।
जगतामुपकाराय न सा कर्म्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥
तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ! ।
चिन्त्यमात्मविशुद्ध्यर्थं सर्व्वकिल्बिषनाशनम् ॥
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्ते स्थितो विष्णुर्योगिनां सर्व्वकिल्बिषम् ।
तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः ।
कुर्व्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥
शुभाश्रयः सचित्तस्य सर्व्वगस्य तथात्मनः ।
त्रिभावभावनातीतो मुक्तये योगिनां नृप ॥
अन्ये च पुरुषव्याघ्र ! चेतसो ये व्यपाश्रयाः ।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्म्मयोनयः ॥
मूर्त्तं भगवतो रूपं सर्व्वापाश्रयनिस्पृहम् ।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्य्यते ॥
तच्च मूर्त्तं हरे रूपं यादृक् चिन्त्यं नराधिप ! ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥
प्रसन्नचारुवदनं पद्मपत्रायतेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकर्णविभूषणम् ।

कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलीत्रिभङ्गिना मग्ननाभिना चोदरेण वै ।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥
समस्थितोरुजङ्घञ्च सुस्थिराङ्घ्रिकराम्बुजम् ।
चिन्तयेद्ब्रह्मभूतं तं पीतनिर्म्मलवाससम् ॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम् ॥
चिन्तयेत्तन्मयो योगी समाधायात्ममानसम् ।
तावद्यावद्दृढीभूता तत्रैव नृप धारणा ॥
व्रजतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म्म कुर्व्वतः ।
नापयाति यदा चित्तात् सिद्धां मन्येत तां तदा ।
ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः ।
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥
सा यदा धारणा तद्वदवस्थानवती ततः ।
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥
तदेकावयवं देवं चेतसापि पुनर्बुधः ।
कुर्य्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ॥
तद्रूपप्रत्यये चैकसन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ।
तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ।
विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ! ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥
क्षेत्रज्ञः करणी ज्ञानं करणं तेन तस्य तत् ।
निष्पाद्य मुक्तिकार्य्यं वै कृतकृत्यं निवर्त्तते ॥
तद्भावभावमापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
इत्युक्तस्ते मया योगः खाण्डिक्य ! परिपृच्छतः ।
इति विष्णुपुराणे ६ अंशे ७ अध्यायः ॥ * ।
ब्रह्मकृतयोगो यथा ।
"सुखं योगासनं कृत्वा बभूव संपुटाञ्जलिः ।
पुलकाङ्कितसर्व्वाङ्गः साश्रुनेत्रोऽतिदीनवत् ।
इडां सुषुम्नां मेध्याञ्च पिङ्गलां नलिनीं धुराम्
नाडीषट्कञ्च योगेन निरुध्य च प्रयत्नतः ।
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धं परमाज्ञाख्यं षट्चक्रञ्च निरुध्य च ।
लङ्घनं कारयित्वा च तं षट्चक्रं क्रमाद्विधिः ।
ब्रह्मरन्ध्रं समानीय वायुरुद्धं चकार ह ।
निरुध्य वायुं मेध्यान्तामानीय हृदयाम्बुजम् ।
तं वायुं भ्रामयित्वा च योजयामास मेध्यया ।
एवं कृत्वा तु निष्पन्दो यो दत्तो हरिणा पुरा
जजाप परमं मन्त्रं तं तस्यैकादशाक्षरम् ।
मुहूर्त्तञ्च जपं कृत्वा ध्यायं ध्यायं पदाम्बुजम्
ददर्श हृदयाम्भोजे सर्व्वं तेजोमयं मुने ।
तत्तेजसोऽन्तरे रूपमतीवसुमनोहरम् ।
द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ।
श्रुतिमूलस्थलम्बस्थस्वच्छमकरकुण्डलम् ।
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकातरम् ।
नवीनजलदाकारश्यामसुन्दरविग्रहम् ।
स्थितं जगत्सु सर्व्वेषु निर्लिप्तं साक्षिरूपिणम्

स्वात्मारामं पूर्णकामं जगद्धापि जगत्परम् ।
सर्व्वस्वरूपं सर्व्वेषां बीजरूपं सनातनम् ॥
सर्व्वाधारं सर्व्वपरं सर्व्वशक्तिसमन्वितम् ।
सर्व्वाराध्यं सर्व्वगुरुं सर्व्वमङ्गलकारणम् ॥
सर्व्वमन्त्रस्वरूपञ्च सर्व्वसम्पत्करं वरम् ।
यद्दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बहिरेव च ।
दृष्ट्वा च परमाश्चर्य्यं तुष्टाव परमेश्वरम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २० अध्यायः ॥*॥
अथ ध्यानयोगः । हरिरुवाच ।
“अथ योगं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ।
ध्यायिभिः प्रोच्यते ध्येयो ध्यानेन हरिरीश्वरः ॥
तत् शृणुष्व महेशान ! सर्व्वपापविनाशनम् ।
विष्णुः सर्व्वेश्वरोऽनन्तो षड्भूमिपरिवर्ज्जितः ॥
वासुदेवो जगन्नाथो ब्रह्मात्मा अहमेव तु ।
देहिदेहस्थितो नित्यः सर्व्वदेहविवर्ज्जितः ॥
देहधर्म्मविहीनश्च क्षराक्षरविवर्ज्जितः ।
षड्विधेषु स्थितो द्रष्टा श्रोता घ्राता ह्यतीन्द्रियः ॥
तद्धर्म्मरहितः स्रष्टा नामगोत्रविवर्ज्जितः ।
मन्ता मनःस्थितो देवो मनसा परिवर्ज्जितः ॥
मनोधर्म्मविहीनश्च विज्ञानाख्य एव च ।
बोद्धा बुद्धिस्थितः साक्षी सर्व्वबोधविवर्ज्जितः ॥
बुद्धिधर्म्मविहीनश्च सर्व्वः सर्व्वगतोऽमलः ।
सर्व्वप्राणविनिर्मुक्तः प्राणधर्म्मविवर्ज्जितः ॥
प्राणिप्राणो महाशान्तो भयेन परिवर्ज्जितः ।
अहङ्कारादिहीनश्च तद्धर्म्मपरिवर्ज्जितः ॥
तत्साक्षी तन्नियन्ता च परमानन्दरूपकः ।
जाग्रत्स्वप्नसुषुप्तिस्थस्तत्साक्षी तद्विवर्ज्जितः ॥
तुरीयः परमो धाता दृग्रूपो गुणवर्ज्जितः ।
मुक्तो बुद्धो जगद्व्यापी सत्य आत्मास्म्यहं शिवः ॥
एवं ये मानवा विप्रा ध्यायन्तीशपरं पदम् ।
प्राप्नुयुस्ते च तद्रूपं नात्र कार्य्या विचारणा ॥
इति ध्यानं मया ख्यातं तव शङ्कर ! सुव्रत ! ।
पठेद्य एतत् सततं विष्णुलोकं स गच्छति ॥”
इति गारुडे १४ अध्यायः ॥
अथाष्टाङ्गयोगः ।
“मुक्तिरष्टाङ्गविज्ञानात् संक्षेपात्तद्वदे शृणु ।
यमाः पञ्च त्वहिंसाद्या अहिंसा प्राण्यहिंस-
नम् ॥
सत्यं भूतहितं वाक्यमस्तेयं स्वाग्रहं परम् ।
अमैथुनं ब्रह्मचर्य्यं सर्व्वत्यागोऽपरिग्रहः ॥
नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा ।
शौचं तुष्टिश्च सन्तोषस्तपश्चेन्द्रियनिग्रहः ॥
स्वाध्यायः स्वाक्यजापः प्रणिधानं हरेर्यजिः ।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥
मन्त्रध्यानयुतो गर्भो विपरीतो ह्यगर्भकः ।
एकाभ्यां सगर्भस्थः प्राणायामस्ततोऽधिकः ॥
एवं द्विधा त्रिधाप्युक्तः पूरणात् पूरकः स च ।
कुम्भको निश्चलत्वात् स रेचकान्ते चकस्त्रिधा ॥
चतुर्द्दशप्रमाणः स्याच्चतुर्विंशतिकः परः ।
षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम् ।
भगवच्चिन्ता ध्यानं स्याद्धारणा मनसो धृतिः ।
अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः ॥
अहमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम् ।
विज्ञानमानन्दो ब्रह्म सत्तत्त्वमसि केवलम् ॥
अहं ब्रह्मास्म्यहं ब्रह्म अशरीरमनिन्द्रियम् ।
अहं मनो बुद्धिमहदहङ्कारादिवर्ज्जितम् ॥
जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं ज्योतिस्तुरीयकम् ।
नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् ॥
योऽसावादित्यपुरुषः सोऽसावहमखण्ड ॐ ।
इति ध्यायन् विमुच्येत ब्रह्मज्ञो भवबन्धनात् ॥”
इति गारुडे ४९ अध्यायः ॥ * ॥
अपि च ।
“एतत्ते कथितं ज्ञानं योगञ्चेमं निबोध मे ।
यं प्राप्य ब्रह्मणो योगी शाश्वतानन्यतां व्रजेत् ॥
प्राणात्मेवात्मना जेयो योगिनां स हि दुर्ज्जयः ।
कुर्व्वीत तज्जये यत्नं तस्योपायं शृणुष्व मे ॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्
गुणान् ॥
यथा पर्व्वतधातूनां ध्मातानां दह्यते मलम् ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥
प्रथमं साधनं कुर्य्यात् प्राणायामस्य योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥
लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क ! शृणुष्व मे ॥
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिश्च मात्राभिरुत्तरीय उदाहृतः ॥
निमेषोन्मेषणे मात्रा तालो लघ्वक्षरो मतः ।
प्राणायामस्य संख्यार्थं स्मृतो द्वादशमात्रकः ॥
प्रथमेन जयेत् स्वेदं मध्यमेन तु वेपथुम् ।
विषादं हि तृतीयेन जयेद्दोषाननुक्रमात् ॥
मृदुत्वं सेव्यमानास्तु सिंहशार्दूलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति योगिनः ॥
वश्यं मत्तं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी च्छन्देन प्राणं नयति साधितम् ॥
यथा हि साधितः सिंहो मृगान् हन्ति न
मानुषान् ।
तद्वन्निषिद्धः पवनः किल्विषं न नृणां तनुम् ॥
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
श्रूयतां मुक्तिफलदं तस्यावस्थाचतुष्टयम् ॥
ध्वस्तिः प्राप्तिस्तथा संवित् प्रसादश्च महीपते ।
स्वरूपं शृणु वै तेषां कथ्यमानमनुक्रमात् ॥
कर्म्मणामिष्टदुष्टानां जायते फलसंक्षयः ।
चेतसो विकषायत्वं यत्र सा ध्वस्तिरुच्यते ॥
ऐहिकामुष्मिकान् कामान् लोभमोहात्मकांश्च
यान् ।
निरुध्यास्ते सदा योगी प्राप्तिः सा सार्व्व-
कालिकी ॥
अतीतानागतानर्थान् विप्रकृष्टतिरोहितान् ।
विजानातीन्दुसूर्य्यर्क्षग्रहाणां ज्ञानसम्पदा ॥
तुल्यप्रभावस्तु यदा योगी प्राप्नोति संविदम् ।
तदा संविदिति ख्याता प्राणायामस्य सा
स्थितिः ॥
यान्ति प्रसादं येनास्य मनः पञ्च च वायवः ।
इन्द्रियाणीन्द्रियार्थांश्च स प्रसाद इति स्मृतः ।
शृणुष्व च महीपाल ! प्राणायामस्य लक्षणम् ।
युञ्जतश्च यथायोगं यादृग्विहितमासनम् ॥
पद्ममर्द्धासनं वापि तथा स्वस्तिकमासनम् ।
आस्थाय योगी युञ्जीत कृत्वा च प्रणवं हृदि ॥
समः समासनो भूत्वा संहृत्य चरणावुभौ ।
संवृतास्यस्तथा चोरू सम्यग्विष्टभ्य वाग्यतः ॥
पार्ष्णिभ्यां लिङ्गवृषणावस्पृशन् प्रयतः स्थितः ।
किञ्चिदुन्नामितशिरा दन्तैर्दन्तान्न संस्पृशेत् ।
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
रजसा तमसो वृत्तिं सत्त्वेन रजसस्तथा ।
संछाद्य निर्म्मले सत्त्वे स्थितो युञ्जीत योगवित् ॥
इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन् मन एव च ।
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ॥
यस्तु प्रत्याहरेत् कामान् कूर्म्मोऽङ्गानीव सर्व्वशः ।
स त्वात्मरतिरेकस्थः पश्यत्यात्मानमात्मनि ॥
सबाह्याभ्यन्तरं शौचं निष्पाद्याकण्ठनाभितः ।
पूरयित्वा बुधो देहं प्रत्याहारमुपक्रमेत् ॥
प्राणायामा दश द्वौ च धारणा साभिधीयते ।
द्विधारणा स्मृतो योगो योगिभिस्तत्त्वदर्शिभिः ॥
तथा वै योगयुक्तस्य योगिनो नियतात्मनः ।
सर्व्वे दोषाः प्रणश्यन्ति स्वस्थश्चैवोपजायते ॥
वीक्षते च परं ब्रह्म प्राकृतांश्च गुणान् पृथक् ।
व्योमादिपरमाणूंश्च तथात्मानमकल्मषम् ॥
इत्थं योगी जिताहारः प्राणायामपरायणः ।
जितां जितां शनैर्भूमिमारोहेत यथा गृहम् ॥
दोषान् व्याधिं तथा मोहमाक्रान्ता भूरनि-
र्जिता ।
विवर्द्धयति नारोहेत्तस्माद्भूमिमनिर्ज्जिताम् ॥
प्राणानामुपसंरोधात् प्राणायाम इति स्मृतः ।
धारणेत्युच्यते चेयं धार्य्यते यन्मनोऽनया ॥
शब्दादिभ्यः प्रवृत्तानि यदक्षाणि जितात्मभिः ।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥
उपायश्चात्र कथितो योगिभिः परमर्षिभिः ।
येन व्याध्यादयो दोषा न जायन्ते हि योगिनः ॥
यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः ।
आपिबेयुस्तथा वायुं पिबेद्योगी जितश्रमः ॥
प्राणाभ्यां हृदये वाथ तृतीये च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ॥
किञ्चित्तस्मात् परस्मिंश्च धारणा परमा स्मृता ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम् ॥
नाध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः ।
युञ्जीत योगं राजेन्द्र ! योगी सिद्ध्यर्थमात्मनः ॥
नातिशीते न चैवोष्णे न द्वन्द्वे नानिलात्मके ।
कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ॥
सशब्देऽग्निजलाभ्याशे जीर्णे गोष्ठे चतुष्पथे ।
शुष्कपर्णचये नद्यां श्मशाने ससरीसृपे ॥
सभये कूपतीरे वा चैत्यवल्मीकसञ्चये ।
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्ज्जयेत् ॥
सत्त्वस्यानुपपत्तौ च देशकालविवर्ज्जिते ।
नासतो दर्शनं योगी तस्मात्तं परिवर्ज्जयेत् ॥
दोषानेतानगाहत्य मूढत्वाद्यो युनक्ति वै ।

गम्य विषमज्वराख्ये नरके बहुदुःखं प्राप्य जन्मान्तरे भगन्दररोगेणाक्रान्ता भवन्ति ॥

२२। मूत्रकृच्छ्रम्। येन मूढ़ेन विधवागमनं मद्यपानं वा कृतम्। स मृतो नरकं प्राप्य कर्म्मान्ते शरीरनाशकारिणा अनेन रोगेणाक्रान्तो भवेत्।

२३। मृतभार्य्यता। यस्तु ज्येष्ठं भ्रातरमतिक्रम्य उद्वहेत् स मृतभार्य्यो जायेत। यस्तु सम्यक् जलं स्पृशति तस्य ज्येष्ठा भार्य्या विनश्यति ॥

२४। मेहः। यदुक्तं पुराणेषु

"मेहाश्च विंशतिः ख्याताः पृथक्कर्म्मप्रभावजाः।
तेषां नामान्यहं वक्ष्ये क्रमादुत्पद्यते यतः ॥
मधुमेहः सान्द्रमेहः सुरासुक्षोदकस्तथा।
इक्षुः सिकतसीधुश्च सितमेहस्तथैव च ॥
फेनः क्षीरश्च नीलश्च हारिद्रः कालसंज्ञकः।
रक्तसारश्च माञ्जिष्ठो मज्जाख्यारकथा गजः ॥
स्वदैवज्ञस्योपदेशेन ज्ञात्वा मेहान् पृथक् पृथक्।
गार्भानुसारतः पूर्ब्बं कर्म्म ज्ञात्वा विधिश्चरन्।
पूर्ब्बं मैथुनकृद्यस्तु शौकरीयोनिमाव्रजेत् ॥
तस्यान्ते मानुषीं प्राप्य जलमेहार्द्दितो भवेत् ॥
गाढगामी बलान्मोहात् मधुमेही भवेन्नरः।
रजकीगमनाच्चैव क्षारमेही प्रजायते ॥
सतीविपर्य्ययं कृत्वा सान्द्रमेहान्वितो भवेत्।
रोगिणीगमनान्मर्त्यो भवेन्माञ्जिष्ठमेहवान् ॥
मित्रस्त्री धर्षिता येन स भवेच्छुक्रमेहवान् ॥
चतुष्पदादिगमने भवेत् सिकतमेहवान् ॥
स्वर्णहर्त्ता क्षीरमेही सितमेही सुरारतः।
कालमेही भवेत्सोऽपि पुष्पवत्याश्च धर्षणात् ॥
रजस्वलायां रतिकृद्रक्तमेहार्द्दितो भवेत्।
मज्जमेहयुतः सोऽपि योऽन्त्यजागमनश्चरन् ॥
इक्षुमेह्यतिदुर्वृत्तो विधवागतिदोषतः।
ब्राह्मणीगमनाद्देही हस्तिमेहेन मेहति ॥
अस्तागमनासक्तो हरिद्राभश्च मेहति ॥
मातरं येऽभिगच्छन्ति भगिनीञ्चात्मनः सुताम् ॥
श्वश्रूञ्चैवाद्धतारक्तां भ्रातृभार्य्याञ्च मातुलीम्।
गुरुस्त्रीं राजपत्नीञ्च मित्रस्त्रीं वा कुटुम्बिनीम्।
मृता वैवस्वतपुरीं यान्ति भूतैः प्रपीड़िताः ॥
तांश्चान्ते तत्र दुर्वृत्ता भक्ष्य शृणु वदामि ते ॥
अङ्गारराशौ प्रक्षिप्य तान् दहन्ति यमाज्ञया।
दूतास्तु मद्वर्तीं घोरां ज्वलन्तीमायसीं शिलाम्।
खादयन्ति च तान् पश्चात् नरके च क्षिपन्ति वै ॥
नरकान्ते पुनस्तेऽपि मृताः स्युः शूकरा भुवम् ॥
शूकराः पञ्चवर्षाणि दशवर्षाणि कुक्कुराः।
पिपीलिकास्त्रयो मासा वृश्चिकाश्चाब्दमात्रकम्।
भूत्वा प्रयान्ति गोयोनौ सकला विफलेन्द्रियाः ॥
तत्राधर्म्मक्षयं कृत्वा ततो मानुषयोनिषु।
प्रमेहगदयन्तः स्युः प्राप्नुवन्ति मनोव्यथाम्" ॥

२५। यक्ष्मरोगः। विप्रहन्ता न्यासापहर्त्ता हस्तिच्छेदकारी प्रजापीड़को गुरुविद्रोही मूढ़ो यक्ष्मकासाक्रान्तो भवेत् ॥

२६। रक्तपित्तम्। अतिदुराचारी परद्रव्याभिलाषी मित्रवधूगन्ता अनेनैव रोगेण पीड़ितो भवेत् ॥

२७। वैश्यात्वम्। या नारी मृते भर्त्तरि परपत्यभिलाषिणी सा मृता यमलोके तप्तं आयसं पुरुषमालिङ्गन्ती अतिघोरं नरकदुःखमनुभूय जन्मान्तरे वेश्या भूत्वा अशेषपुरुषैः रममाणा अशेषक्लेशमधिगच्छेत् ॥

२८। वैधव्यम्। या खलु यौवनेनातिगर्व्विता रमणी विरूपत्वात्स्वप्रगं पतिं दिवा निन्दति रात्रौ शय्यां न भजते आज्ञया च वक्रा भवति सा जन्मान्तरं प्राप्य वैधव्ययन्त्रणया पीड़िता भवेत् ॥

२९। श्वासकासः। श्वासकासस्तु महोर्द्धच्छिन्नतमकक्षुद्रभेदात् पञ्चधा। १। यस्तु यज्ञमनसाद्य श्वासं निरुध्य पशुं हन्ति मोहात् तन्मांसादिकं भक्षयति स महाश्वासेन पीड्यते। २। पुराणकथासमये यस्तु अन्यवाक्यं वदेत् स ऊर्द्धश्वासेन निगद्यते। ३। निषिद्धदानग्रहणात् छिन्नश्वासयुतो भवेत्। ४। यो हि श्राद्धार्थं मृषा दूषयति स तमकश्वासैः पीड्यते। ५। पाकविघ्नतो हि जीवः क्षुद्रश्वासैर्गृह्यते ॥

३०। हृद्रोगः। यस्तु लोभात् द्वेषाद्वा परपीड़ाप्रदायको भवेत् यस्तु प्रजानां मर्म्मव्यथां जनयेत् स मृतो दर्व्वहं नरकमधिगम्य कर्म्मान्ते अतिदारुणैर्हृद्रोगैः पीड़ितो भवेदिति ॥ *॥)

कर्म्मशीलः, त्रि, (कर्म्म शीलं कर्म्मकरणरूपस्वभावो यस्य। कर्म्म शीलयतीति वा।) यः फलनिरपेक्षः स्वभावतः कर्म्म करोति सः। तत्पर्य्यायः। कार्म्मः २। इत्यमरः। ३। १। १८ ॥

कर्म्मशूरः, त्रि, (कर्म्मणि शूरः दक्षः।) कर्म्मठः। फलपर्य्यन्तकर्म्मसमापकः। इत्यमरः। ३।१।१८॥

कर्म्मसचिवः, पुं, (कर्म्मणि कर्म्मसु वा सचिवः सहायः।) कर्म्मोपयुक्तसचिवः। अक्षपटलाध्यक्षादिः। इत्यमरः। २। ८। ४ ॥

कर्म्मसन्न्यासिकः, पुं, (कर्म्मणां सन्न्यासः स अस्त्यस्य इति ठन्।) यतिः। सन्न्यासी। इति हलायुधः। २। २३९ ॥

कर्म्मसाक्षी, [ न् ] पुं, (कर्म्मणां साक्षी। यद्वा कर्म्म साक्षात् पश्यति प्रत्यक्षं करोतीति।) सूर्य्यः। इति हेमचन्द्रः ॥ (उक्तञ्च वैदिकक्रियापद्धतौ यथा,
"सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च।
एते शुभाशुभस्येह कर्म्मणो नव साक्षिणः" ॥
क्रियासाक्षात्कारिणि, त्रि। यथा,—महाभारते। १। ४७। २९।
"हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति" ॥)

कर्म्मक्षमः, त्रि, (कर्म्मणि कर्म्मसु वा क्षमः समर्थः।) कर्म्मकरणसमर्थः। तत्पर्य्यायः। अलंकर्म्मीणः २। इत्यमरः। ३। १। १८ ॥

कर्म्मान्तः, पुं, (कर्म्मणः जीवकृतसुकृतदुष्कृतक्रियायाः अन्तो यत्र। कर्म्मणः कृषिकार्य्यस्य तत्फलस्य धान्यादिसंग्रहरूपक्रियायाः अन्तो यत्र वा।) कर्म्मभूः। कृष्टभूमिः। इति हेमचन्द्रः ॥ ("अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च" ॥ इति मनुः। ८। ४१९ ॥)

कर्म्मारः, पुं, (कर्म्म लोहनिर्म्माणादिकार्य्यं ऋच्छति गच्छति प्राप्नोति वा। कर्म्म + ऋ + अण्।) कर्म्मकारः। कामार इतिभाषा ॥ (यथा, अथर्व्ववेदे। ३। ५। ६।
"ये धीवानो रथकाराः कर्म्मारा ये मनीषिणः" ॥
तथा, मनुः। ४। २१५।
"कर्म्मारस्य निषादस्य रङ्गावतारकस्य च" ॥)
वंशः। वाँश इति ख्यातः। कर्म्मरङ्गः। इति राजनिर्घण्टः। कामराङ्गा इति भाषा ॥

कर्म्मार्हः, पुं, (कर्म्म अर्हतीति। अर्ह + अण्।) पुरुषः। इति राजनिर्घण्टः। क्रियायोग्ये त्रि ॥

कर्म्मिष्ठः, त्रि, (अतिशयेन कर्म्म कर्त्तुं समर्थः कर्म्मी वा। कर्म्म + इष्ठन्। इनेर्लुक्।) क्रियावान्। अतिशयकर्म्मविशिष्टः। इति व्याकरणम् ॥

कर्म्मी, [ न् ] त्रि, (कर्म्मास्त्यस्य "व्रीह्यादिभ्यश्च"। ५। २। ११६ इति इनिः।) कर्म्मविशिष्टः। ("यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते" ॥ इति मुण्डकोपनिषदि। १। २। ९। यथा च, भागवते १। ३। ८।
"तृतीयमृषिसर्गञ्च देवर्षित्वमुपेत्य सः।
तन्त्रं सात्वतमाचष्टे नैष्कर्म्म्यं कर्म्मिणां यतः" ॥)

कर्म्मीरः, पुं, (कर्म्म + ईरन्।) किर्म्मीरवर्णः। इत्यमरटीका ॥

कर्म्मेन्द्रियं, क्ली, (कर्म्मणां गमनादिपञ्चविधक्रियाणां सम्पादनाय इन्द्रियं कर्म्मनिमित्तं इन्द्रियं वा।) कर्म्मनिष्पादकविषयिपञ्चकम्। यथा। वाक् १ पाणिः २ पादः ३ पायुः ४ उपस्थः ५। इति वेदान्तः ॥ (यथा च, मनुः। २। ९१।
"बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्ब्बशः।
कर्म्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते" ॥)

कर्ब्ब दर्पे। इति कविकल्पद्रुमः ॥ (भ्वां-पं-अकं-सेट्।)

कर्ब्बः, पुं, (किरति विक्षिपति चित्तं विषयेषु। कॄ + "कॄ-गॄ-शॄ-दॄभ्यो वः"। उणां। १। १५५ इति वः।) कामः। (कृणाति हिनस्तीति। कॄ + वः।) उन्दुरः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

कर्ब्बटं, क्ली, (कर्ब्बं सुन्दरत्वात् सर्व्वं अटति प्राप्नोतीति। शकन्ध्वादित्वात् अलोपे साधुः।) पुरम्। नगरम्। इति जटाधरः ॥

कर्ब्बटः, पुं क्ली, (कर्ब्ब + अटन्प्रत्ययः।) द्विशतग्राममध्ये मनोरमस्थानम्। ग्रामशतस्थजनाः क्रयविक्रयादिना सेवादिना वा येन ग्रामेण जीवन्ति सः। इति केचित् ॥ चतुःसमग्रामः। इत्येके ॥ चतुःसमं गृहस्थानम्। इत्यपरे। इत्यमरटीकायां भरतः ॥ चतुःशतग्रामसंग्रहस्थानम्। इति सारसुन्दरी ॥ (तथा हि याज्ञवल्क्यः। २। १६७।
"धनुः शतं परीणाहो ग्रामक्षेत्रान्तरं भवेत्।
द्वे शते कर्व्वटस्य स्यात् नगरस्य चतुःशतम्" ॥
देशभेदः। यथा, महाभारते। २। ३०। २२।
"ताम्रलिप्तं च राजानं कर्व्वटाधिपतिं तथा।
सुह्मानामधिपञ्चैव ये च सागरवासिनः" ॥)

कर्ब्बुरः, पुं, (कृणाति हिनस्ति प्राणिनः। किरति विक्षिपति जीवानिति वा। कॄ + "कृगृशृवृ-

"तिभ्यः ष्वरच्" । उणां । २ । १२३ । इति ष्वरच् ।)
राक्षसः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
व्याघ्रः । इति मेदिनी ॥ (यथा, उणादिटीका
"कर्व्वुरो व्याघ्ररक्षसोः" । २ । १२३ ॥)

**कर्व्वरी**, स्त्री, (कर्व्वर + षित्वात् ङीष् ।) शिवा ।
इति विश्वमेदिन्यौ ॥ हिङ्गुपत्री । इति जटाधरः ॥
(व्याघ्री । राक्षसी । इत्युणादिवृत्तिः । २ । १२३ ॥)

**कर्व्वुरः**, पुं, (कर्व्वति हिनस्ति सदर्पो भवति वा । कर्व्व दर्पे हिंसायाञ्च । "मद्गुरादयश्चेति" + उरच् ।)
राक्षसः । इति शब्दार्णवः ॥ चित्रवर्णः । इत्यमरः ।
२ । ६ । ६४ ॥ शटी । इति भरतः ॥

**कर्व्वूरः**, पुं, (कर्व्व + खर्ज्जूरादित्वात् ऊरः । उणां १ ।
८२ ।) राक्षसः । शटी । इत्यमरः । २ । ६ । ६४ ॥

**कर्श्यः**, पुं, (कृश् + यत् ।) कर्च्चूरः । इति राज-
निर्घण्टः । कचूर इति हिन्दीभाषा ॥

**कर्षः**, पुं स्त्री, (कृष विलेखने पचाद्यच् । कर्म्मणि करणे वा घञ् ।) षोड़शमाषकपरिमाणम् ।
अशीतिरक्तिकाः । तत्पर्य्यायः । अक्षः २ । इत्य-
मरः । २ । ६ । ८६ ॥ वैद्यकमते तोलकद्वयम् ।
तत्पर्य्यायः । सुवर्णम् २ अक्षः ३ विड़ालपदकम्
४ पिचुः ५ पाणितलम् ६ उडुम्बरम् ७ तिन्दुकम्
८ कवड़ग्रहः ९ । इति परिभाषा ॥ दशमाषकः ।
इति राजनिर्घण्टः ॥
("कोलद्वयञ्च कर्षः स्यात् स प्रोक्ता पाणिमानिका ।
अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम्" ॥
इति शार्ङ्गधरे पूर्व्वखण्डे । १ अध्याये ॥)

**कर्षः**, पुं, (कृष + भावे घञ् ।) कर्षणम् । इति
मेदिनी ॥ विभीतकवृक्षः । इति शब्दरत्नावली ॥

**कर्षकः**, त्रि, (कर्षति भूमिमिति । कृष + ण्वुल् ।)
कृषिजीवी । कृषाण इति भाषा ॥
("सुखमापतितं सेवेत् दुःखमापतितं सहेत् ।
कालप्राप्तमुपासीत शस्यानामिव कर्षकः" ॥
इति महाभारते । ३ । २५८ । १५ ॥)
तत्पर्य्यायः । क्षेत्राजीवः २ कृषिकः ३ कृषीवलः ४ ।
इत्यमरः । २ । ९ । ६ ॥ कार्षकः ५ । इति तट्टीका ॥
आकर्षणकर्त्ता च ॥

**कर्षणं**, स्त्री, (कृष + भावे ल्युट् ।) कृषिकर्म्म । लाङ्ग-
लादिना भूम्यादिखननम् । इति हेमचन्द्रः । चास
इति भाषा ॥ आकर्षणम् । टानन् इति भाषा ॥
(शोषणम् । पीड़नम् । यथा मनुः ७ । ११२ ।
"शरीकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्" ॥)

**कर्षणिः**, स्त्री, (कृष् + अनिः ।) असती । इत्युणादि-
कोषः ॥

**कर्षणी**, स्त्री, (कर्षण + गौरादित्वात् ङीष् ।) क्षी-
रिणीवृक्षः । इति राजनिर्घण्टः ॥

**कर्षफलः**, पुं, (कर्षः कर्षमात्रं फलं यस्य ।) विभी-
तकवृक्षः । इत्यमरः । २ । ४ । ५८ ॥ (अस्य
पर्य्यायाः यथा,—
"विभीतकस्त्रिलिङ्गः स्यादक्षः कर्षफलस्तु सः ।
कलिद्रुमो भूतवासस्तथा कलियुगालयः" ॥
गुणाश्चास्य विभीतकशब्दे ज्ञेयः । इति भावप्रका-
शस्य पूर्व्वखण्डे । १ भागे ॥)

**कर्षफला**, स्त्री, (कर्षफल + टाप् ।) आमलकीवृक्षः ।
इति रत्नमाला ॥ (आमलकीशब्देऽस्या गुणादिकं
ज्ञातव्यम् ॥)

**कर्षार्द्धं**, स्त्री, (कर्षस्य अर्द्धम् ।) तोलकपरिमाणम् ।
इति वैद्यकपरिभाषा ॥ ("कर्षार्द्धं वा कणाशुण्ठ्योः" ।
"कर्षः कर्षार्द्धमथो पलं पलद्वयमथाकर्षश्च" ॥
इति वैद्यकचक्रपाणिसंग्रहज्वराधिकारकासाधि-
कारयोः ॥)

**कर्षिणी**, स्त्री, (कर्षति इति । कृष + णिनिस्ततो
ङीप् ।) क्षीरिणीवृक्षः । अश्वमुखबन्धनरज्जुस्थित-
लौहम् । तत्पर्य्यायः । खलीनः २ कवीयम् ३
कविका ४ । इति जटाधरः ॥ (त्रि । मनोहारी ।
यथा रघुः १९ । ११ ।
"प्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः" ॥)

**कर्षूः**, पुं, (कृष् + "कृषिचमितनिधनिसर्जिखर्जिभ्य
ऊः" । उणां १ । ८२ । इति ऊः ।) वार्त्ता । करी-
षाग्निः । इत्यमरः । ३ । ३ । २२१ ॥ वार्त्ता अत्र
कृषिः । इति रमानाथः ॥ जीविका । इति भरतः ॥

**कर्षूः**, स्त्री, (कृष विलेखने + "कृषिचमितनीति"
ऊः उणां १ । ८२ ।) कुल्या । अल्पा कृत्रिमा
सरित् । इत्यमरः । ३ । ३ । २२१ ॥ नदीमात्रम् ।
इति रत्नकोषः ॥ इष्टखातः । इति मेदिनी ॥
तद्यथा । चतुरङ्गुलपृथ्वीस्तावदन्त रास्तथाधः खाता
वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात् कर्षूसमीपे
अग्नित्रयमुपसमाधाय परिस्तीर्य्य तत्रैकैकस्मिन्ना-
हुतित्रयं जुहुयात् । इति श्राद्धविवेकधृतविष्णु-
सूत्रम् ॥

**कर्हि**, व्य, (किम् + "अनद्यतने र्हिलन्यतरस्याम्" ।
५ । ३ । २१ इति । र्हिल् कादेशः ।) कदा । कस्मिन्
काले । इति व्याकरणम् ॥ कखन कवे इति भाषा ॥
(यथा, ऋग्वेदे ६ । ३५ । २ ।
"कर्हिस्वित्तदिन्द्र यन्नृभिर्नृन्वी-
रैर्वीरान् नीलयासे जयाजीन्" ॥)

**कर्हिचित्**, व्य, (कर्हि च चिच्चेति विग्रहः । पाणिनि-
मतानुसारेण भिन्नपदद्वयम् मुग्धबोधमते तु
"किमः क्वयन्ताच्चिच्चनौ" । इति चित् ।) कस्मिं-
श्चित् काले । कोनकाले इति भाषा । तत्पर्य्यायः ।
जातु २ कदाचित् ३ । इति हेमचन्द्रः ॥ (यथा,
भागवते १० । ८४ । १३ ।
"यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिः सलिले न कर्हिचित्
जनेष्वभिज्ञेषु स एव गोखरः" ॥)

**कल**, त् क गतौ । सङ्ख्यायाम् । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-परं-सकं-सेट् ।) अन्त्यस्थवती-
योपधः । कलयति कालं धीरः । इति दुर्गादासः ॥

**कल**, ङ सङ्ख्यानतोः । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-अकं च-सेट् ।) ङ कलते दिवसं वृद्धः
गणयतीत्यर्थः । शत् शब्दः । इति दुर्गादासः ॥

**कल**, क नुदौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क कालयति । नुदिरिति नुद क्षौत्
प्रेरणे इत्यस्य औणादिकक्विप्रत्यये रूपम् । इति
दुर्गादासः ॥

**कलं**, स्त्री, (कड़ति माद्यति अनेन । कड़ मदे + "हल-
श्च" । ३ । ३ । १२१ । इति घञ् । संज्ञापूर्व्वकत्वात्
वृद्ध्यभावः । डलयोरेकत्वम् ।) शुक्रम् । इति
मेदिनी ॥ कोलिवृक्षः । इति शब्दचन्द्रिका ॥

**कलः**, पुं, (कल + भावे घञ् वृद्ध्यभावः ।) मधुरास्फुट-
ध्वनिः । इत्यमरः । १ । ७ । २ ॥
("जगौ कलं वामदृशां मनोहरम्" ॥ इति
भागवतम् । १० । २९ । ३ ॥) सालवृक्षः । इति
राजनिर्घण्टः ॥

**कलः**, त्रि, (कलयति मान्द्यं नयति जाठराग्निम् । कल
+ णिच् + अच् । धातूनामनेकार्थत्वात् विशेषतः
कलिहलिरित्युक्तेश्च तथात्वम् ।) अजीर्णः । इति
मेदिनी ॥ (अव्यक्तमधुरध्वनिः । यथा रघुः । १ । ४१ ।
"सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ" ॥)

**कलकः**, पुं, (कलते इति । कल + ण्वुल् । स्वार्थे कन्
वा ।) शकुलमत्स्यः । इति हेमचन्द्रः ॥ (शकुल-
शब्देऽस्य गुणादयोऽवगन्तव्याः ॥)

**कलकण्ठः**, पुं, (कलप्रधानः कण्ठो यस्य ।) कलध्वनिः ।
हंसः । पारावतः । पिकः । इति मेदिनी ॥ (यथा,
राजेन्द्रकर्णपूरे ३ । "युष्माकं रतिकान्तकार्म्मुक-
लताझङ्कारकान्ते गते, सोत्कण्ठं कलकण्ठकण्ठ-
कुहरोद्भूतेऽपि माभून्मनः" ॥)

**कलकलः**, पुं, (कलादपि कलः । युगपत्समुत्थित-
बहुलशब्दानामेकीभूततया तुमुलत्वात्तथात्वम् ।
कलशब्दे + घञ् । वृद्ध्यभावः । यद्वा कलः प्रकारः
गुणवचनत्वात् प्रकारे द्वित्वम् ॥)
कोलाहलः । (यथा, गीतगोविन्दे । १ । ३८ ।
"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीड़त्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः" ॥)
सालनिर्य्यासः । इति मेदिनी ॥

**कलघोषः**, पुं, (कलो मधुरो घोषो ध्वनिर्यस्य ।)
कोकिलः । इति शब्दरत्नावली ॥

**कलङ्कः**, पुं, (कलयति इति । कल + क्विप् । कल्
चासौ अङ्कश्चेति ।) चिह्नम् । अपवादः ।
("उत्तमस्य विशेषेण कलङ्कोत्पादको जनः" ॥
इति कथासरित्सागरे । २४ । २०४ ॥) लौह-
मलम् । इति मेदिनी ॥

**कलङ्कषः**, पुं, (करेण कषति हिनस्ति नाशयति वा ।
बाहुलकात् खच् मुम् च रस्य लः कलेन गर्ज्जनेन
कषति वा ।) सिंहः । इति शब्दमाला ॥

**कलङ्कषा**, स्त्री, (कलङ्कष + टाप् ।) करताली । इति
शब्दरत्नावली ॥

**कलङ्की**, [न्] त्रि, (कलङ्कोऽस्त्यस्य । इनिः ।) अप-
वादग्रस्तः । यथा,—तिथ्यादितत्त्वे ।
"कलङ्की जायते बिल्वे तिर्य्यग्योनिश्च निम्बके" ।
चिह्नयुक्तः । लौहमलविशिष्टः ॥ चन्द्रः ॥

**कलङ्कुरः**, पुं, (कं जलं लङ्कयति गमयति भ्रामय-
तीत्यर्थः । लकि गतौ + णिच् + उरच् ।) आवर्त्तः ।
जलभ्रमः । इति त्रिकाण्डशेषः ॥

कलङ्कः, पुं, (कं लङ्कयति । लङ्कि + अण् ।) विषाङ्क-ञ्छनमर्पञ्छियौ । इति त्रिकाण्डशेषः ॥ ताम्र-कूटः । दोक्ता तामाक् इति भाषा । यथा । विश्व-सिद्धान्तसारावल्यां वैद्यके । अथ धूमपर्य्यायधूम-पानगुणाः ।

"कलञ्जसंवेष्टनधूमपानात्
स्यादन्नशुद्धिर्मुखरोगहानिः ।
कफप्रणामाम्बरहानिकृत्व
गान्धर्व्वविद्याप्रवणीकसेयम्" ॥

कलटं, क्ली, (कं जलं लटति आच्छादयति । आच्छा-दयतीति वा । क + लट् + अच् ।) गृहाच्छादनम् । इति शब्दरत्नावली । चाल इति भाषा ॥ कुटल-मिति च पाठः ॥

कलतूलिका, स्त्री, (कं सुखं विषयत्वेन लाति गृह्णा-तीति कलः । कलं कामं तूलयति निष्कर्षति पूरयति वा या । कल + तूल निष्कर्षे पूरणे वा ण्वुल् । टापि अत इत्वम् ।) इच्छावती । का-मुका । तत्पर्य्यायः । वाञ्छिनी २ लञ्जिका ३ । इति त्रिकाण्डशेषः ॥

कलत्रं, क्ली, (गड़ सेचने + "गडेरादेश्च कः" । उणां । ३ । १०६ । अत्रन् गकारस्य ककारश्च । डलयो रैकत्वस्मरणात् डस्य लः । यद्वा कलं चायते । त्रै + कः । यद्वा कड्यते ग्रियते इति ।) कड्–ग्रासने बाहुलकात् अत्रन् । श्रोणिः । भार्य्या । इत्यमरः । ३ । ३ । १७८ ॥ (यथा मेघदूते । ४० । "तां कस्याञ्चिद् भवनवलभौ सुप्तपारावतायां नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः" ॥) राज्ञां दुर्गस्थानम् । इति हेमचन्द्रः ॥

कलधूतं, क्ली, (कलेन अवयवेन धूतं शुद्धम् ।) रूप्यम् । इति राजनिर्घण्टः ॥

कलधौतं, क्ली, (कलेन अवयवेन धौतम् ।) स्वर्णम् । ("कन्येयं कलधौतकोमलरुचिः कीर्त्तिस्तु नातः परा" । इति महानाटकम् ॥
महाभारते च ४ । गोहरणे ४० । ६ ।
"इमे च कस्य नाराचाः सहस्रं लोमवाहिनः ।
समन्तात्कलधौताग्रा उपासङ्गे हिरण्मये" ॥)
रजतम् । इति मेदिनी ॥ कलध्वनिः । इति विश्वः ॥

कलध्वनिः, पुं, (कलः अस्फुटमधुरः ध्वनिर्यस्य ।) पारावतः । कोकिलः । मयूरः । इति मेदिनी ॥ मधुरास्फुटशब्दः । इति कलशब्दार्थे अमरः । १ । ७ । २ ॥ (यथा महानिर्व्वाणतन्त्रे । १ । ३ ।
"अप्सरोगणसङ्गीतकलध्वनिनिनादिते" ॥)

कललं, क्ली, (कल्यते लक्ष्यते दुष्यते वा । कल + क्ल्युट् ।) चिह्नम् । दोषः । इति हलायुधः ॥ (कल्यते शुक्रशोणिताभ्यामन्योन्यं मिश्र्यते ।) गर्भे मिश्रितं शुक्रशोणितम् ॥ यथा, भागवते । ३ । ३१ । २ ।
"कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्क्कन्धूः पेश्यण्डं वा ततः परम्" ॥
क्वचित् कललं इत्यपि पाठो दृश्यते । कलयति ज्ञापयत्यनेन । कल गतौ गत्यर्थो ज्ञानार्थश्च । कल + करणे ल्युट् । ज्ञानम् ॥)

कलमः, पुं, (कं जलं लाति । तथा सन् नमति ।

क + ला + कः ।) वेतसवृक्षः । इति राजनिर्घण्टः ॥

कलमा, स्त्री, (कल + भावे युच् । टाप् च ।) वशी-भूतत्वम् । वश्यता । यथा,—आनन्दलहर्य्याम् ।२९।
"करारं यत् त्वेड़ं कवलितवतः कालकलना" ।
अवधना च ॥

कलन्दरः, पुं, (कलं शास्त्रविहितवाक्यं शिष्टाचारं वा दृणाति । कल + दृ + खच् । मुम् च ।) वर्ण-सङ्करजातिविशेषः । स तु लेटात् तीवरकन्यायां जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥

कलन्दिका, स्त्री, (कं सुखं लाति विषयत्वेन इति । कलं कामं सर्व्वाभीष्टं ददाति । कल + दा + कः । संज्ञायां कन् । ततष्टाप् अत इत्वं पृषोदरा-दित्वात् मुम् च ।) सर्व्वविद्या । इति हेमचन्द्रः ॥

कलम्बुः, स्त्री, (कलायाः मात्रायाः अम्बुरिव । शक-न्ध्वादित्वात् अलोपे साधुः ।) घोलीशाकः । इति राजनिर्घण्टः ॥

कलभः, पुं, (कलेन करेण शुण्डेनेति यावत् भाति । कल + भा + कः । यद्वा + कल् गतौ "कृशृशलि-कलिगर्द्दिभ्योऽभच्" । उणां । ३ । १२२ । इति । अभच् ।) करभः । हातिर् छा इति भाषा । स तु पञ्चवर्षपर्य्यन्तम् । इति सुभूतिः ॥ तत्पर्य्यायः । करिशावकः २ । इत्यमरः । २ । ८ । ३५ ॥ दुर्द्दान्तः ३ बालः ४ । (यथा रघौ । ३ । ३२ ।
"महोन्नतं वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव" ॥)
धुस्तूरवृक्षः । इति राजनिर्घण्टः ॥

कलभवल्लभः, पुं, (कलभस्य हस्तिशावकस्य वल्लभः प्रियः ।) पीलुवृक्षः । इति राजनिर्घण्टः ॥

कलभी, स्त्री, (कं जलं आश्रयतया लभते । लभ + अच् । गौरादित्वात् ङीष् ।) चञ्चुवृक्षः । इति राजनिर्घण्टः ॥

कलमः, पुं, (कलते कलयति वा अक्षरं प्रकाशयति जनयति वा । कल + "कलिकर्द्दीरमः" । उणां । ४ । ८४ इति अमः ।) स्वनामख्यातलिपिसाधनवस्तु । तत्पर्य्यायः । लेखनी २ वर्णतूली ३ अक्षरतूलिका ४ । इति जटाधरः ॥ स्वनामख्यातशालिधान्य-विशेषः । (यथा, रघुः । ४ । ३७ ।
"आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः" ॥)
अस्य गुणाः । रक्तदोषत्रिदोषनाशित्वम् । चक्षु-र्हितकारित्वम् । कषायत्वञ्च । इति राजवल्लभः ॥
"रक्तशालिर्महाशालिः कलमः षष्टिकोऽपरः" ।
इति हारीते प्रथमस्थाने १० अध्याये ॥
("शूकजेषु वरस्तत्र रक्तटष्णाघ्नोदोषहा ॥
महांस्तस्यानुकलमस्तञ्चाप्यनु ततः परे" ॥
इति वाभटे सूत्रस्थाने ६ अध्याये ॥) चौरः । इति मेदिनी ॥

कलमोत्तमः, पुं, (कलमेभ्यः कलमेषु वा उत्तमः ।) गन्धशालिः । इति राजनिर्घण्टः ॥

कलम्बः, पुं, (कल्यते क्षिप्यते शत्रुं प्रति । कलक्षेपे + अम्बच् ।) शरः । शाकनाड़िका । इत्यमरः ॥ २ । ८ । ८७ । कदम्बः । इति विश्वः ॥

("कलम्बनालिका मार्षकुटिञ्जरकुतुम्बकम्" । इत्यादीनां समष्टिगुणा यथा,—
"शाकं गुरु च रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति ।
मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम्" ॥
इति चरके सूत्रस्थाने २७ अध्याये ॥)

कलम्बकः, पुं, (कलम्ब + संज्ञायां कन् ।) धारा-कदम्बः । इति राजनिर्घण्टः ॥

कलम्बिका, स्त्री, (कलम्बी एव स्वार्थे कन् टाप् अत इत्वम् ।) कलम्बीशाकः । इति शब्दरत्ना-वली ॥ (यथा चक्रपाणिदत्तकृतद्रव्यगुणे शाकवर्गे । "कलम्बिका गुरुर्हन्या कषायांस्तन्यवर्द्धिनी" ॥ कलम्बीव कायते प्रकाशते निधीयते वा । क लम्बी + कै + कः । टाप् इत्वञ्च । संज्ञा हेतुत्वा पृषोदरादित्वात् । ह्रस्वः ।) ग्रीवापश्चान्नाड़ी तत्पर्य्यायः । मन्या २ । इति हेमचन्द्रः ॥

कलम्बी, स्त्री, (के जले लम्बते । लबि स्रंसने + अ ङीष् ।) जलजलताशाकविशेषः । कलमी इ भाषा । तत्पर्य्यायः । कड़म्बी २ कलम्बूः ३ कल म्बिका ४ । इति शब्दरत्नावली ॥ अस्या गुणाः स्तन्यदुग्धशुक्रश्लेष्मकारित्वम् । मधुरत्वम् । वृष्यत्वम् । गुरुतरत्वञ्च । इति राजवल्लभः ॥

कलम्बुटं, क्ली, (के जले लम्बते भासते । क + लम्ब + बाहुलकात् उटन् ।) हैयङ्गवीनम् । नवनीतम् इति हारावली ॥

कलम्बूः, स्त्री, (के जले लम्बते । लम्ब + बाहुलका ऊङ् ।) कलम्बीशाकः । इति शब्दरत्नावली ॥

कलरवः, पुं, (कलः मधुरास्फुटो रवः ध्वनिर्यस्य) कपोतः । पायरा इति भाषा । इत्यमरः । २ । ५ । १४ ॥ (यथा आर्य्यासप्तशती ५६७ ।
"श्रीगीर्णप्रासादोपरि जिगीषुरिव कलरवः क्वणति" कोकिलः । इति राजनिर्घण्टः ॥ (यथा, ब्रह्म पुराणे ५२ । ३४ । "कोकिलैः कलरवैश्च" मधुरास्फुटध्वनिः । इति कलशब्दार्थे अमरः (कलश्च रवः । कर्म्मधारयः ॥ यथा कलावि लासे १ । ६ ।
"नवविसकिसलयकवलन-
कषायकलहंसकलरवो यत्र" ॥)

कललः, पुं क्ली, (कल्यते वेष्ट्यतेऽनेन । कल + वृष दिभ्यः कलच् ।) जरायुः । गर्भवेष्टनचर्म्म । इत मरः । २ । ६ । ३८ ॥
("ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् । आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥ मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम् । कललं जायते तस्या वर्ज्जितं पैतृकैर्गुणैः" ॥ इति सुश्रुते शारीरस्थाने २ अध्याये ॥)

कललजः, पुं, (कललमिव जायते । जन + ड राजः । इति राजनिर्घण्टः ॥ धुना इति भाषा ॥

कललजोद्भवः, पुं, (उद्भवत्यस्मात् उद्भवः । कलल जस्य उद्भवः ।) सालवृक्षः । इति राजनिर्घण्टः ॥

कलविङ्कः, पुं, (कलं मधुरास्फुटं वङ्कते रौति । वा वा गतौ + अच् पृषोदरादित्वात् अत इ साधुः ।) चटकः । इत्यमरः । २ । ५ । १८

"नागकेशरवाकरदारुवल्ली-
त्रिफलाव्योषचव्यग्रन्थिकैः।
चर्णैः कृता कुष्ठचित्रकैश्च वार्त्ती
कुष्ठीरपिष्टा व्रणे विषमैश्च ॥
नाड़ाः प्रक्षेप्य वदनं तद्वत् कृत्वा प्रवेशयेत् ।
कुष्ठादौ शल्यविधिना तैलं चापाटिचाक्षिकम् ॥
हंसपादच व्रतैश्च कृतं वा चारकं तथा ॥
व्रतैश्च बद्धवद्धं पङ्कं चारकं वा तथैव च ॥"
इति वा पाठः ॥
"नाड़ां चाभ्यन्तरे वैद्यो लघुवक्त्रः प्रवेशयेत् ।
तद्दूरवत्त्रेणैव विदार्यैकभर्गं भिषक् ।
दद्यात् चिन्द्रकतैलेन नाड़ीद्रवणनाशनम् ॥
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितम् ।
अक्षप्रमाणां गुटिकां खादेच्छीताम्बुना नरः ॥
नाड़ीदुष्टव्रणं शूलभगन्दरमसन्दरम् ।
दुष्टच गुदजान् दम्भात् पचिराट् पन्नगानिव ॥"
नाम्नो गुग्गुलुः । इति नाड़ीव्रणाधिकारः ॥*॥
भगन्दरस्य निदानं चिकित्सा च भगन्दरशब्दे
द्रष्टव्यम् । उपदंशस्य निदानाद्युपदंशशब्दे
द्रष्टव्यम् । * । अथोपदंशस्य चिकित्सा ।
"उपदंशेषु सर्व्वेषु स्निग्धस्विन्नस्य देहिनः ।
मेढ्रमध्ये शिरां विध्येत् पातयेद्वा जलौकसः ॥
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः ।
पाको निवार्य्यो यत्नेन शिश्नक्षयकरः स यत् ॥
वटप्ररोहार्ज्जुनजम्बुलोध्र-
पथ्याहरिद्रारचितः प्रलेपः ।
क्षतं तथा शोथमपाकरोति
सर्व्वोपदंशेषु ततो हितोऽयम् ॥
उपदंशेषु पक्वेषु व्रणप्रक्षालनं हितम् ।
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ॥
नीलोत्पलं सकुमुदं पद्मं सौगन्धिकं तथा ।
एष पूर्वं धूपनार्थं प्रलेपश्चात्र प्रशस्यते ॥
जम्बूदलचूर्णेन रजसा दाड़िमत्वचः ।
गुह्यनामद्रवे कुर्य्याल्लेपं पूगफलेन वा ॥
दहेत् कटाहे त्रिफला तन्मषी मधुसंयुता ।
प्रलेपेनोपदंशस्य व्रणः सद्यः प्ररोहयेत् ॥
पटोलनिम्बत्रिफलाकिरात-
क्वाथं पिबेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्व्वोपदंशोपहरः प्रयोगः ॥
भूनिम्बनिम्बत्रिफलापटोल-
करञ्जजातीखदिरासनानाम् ।
कषायकल्कैः सतमाशु चाज्यं
सर्व्वोपदंशापहरं प्रसिद्धम् ॥
इति भूनिम्बादिघृतम् ॥
"इत्यादि यानि प्रोक्तानि कुष्ठे नाड़ीव्रणे व्रणे ।
उपदंशे प्रयोज्यानि तैलान्यव्रणभीषणे ॥
पीतसर्पिर्वा लङ्घित विरूक्षस्निग्धस्य ।
रक्तं शस्त्रतस्त्वा चिकित्सा व्रणवच्चरेत् ॥"
इत्युपदंशाधिकारः ॥ * ॥
शूकदोषाधिकारः शूकदोषशब्दे द्रष्टव्यः । इति
भावप्रकाशः ॥ * ॥ अथ व्रणस्यापद्वर्तनम् ।
"उदुम्बरं कदम्बं च अर्जुनमार्जुनम् ।
पिप्पलं च वटं च पलाशं लोध्रतिन्दुकम् ॥
मधूकमाम्रवृक्षं च वरं पद्मकेशरम् ।
शिरीषवीर्यं कतकमेतत् क्वाथेन वाचितम् ।
तैलं हन्ति व्रणान् सर्वान् चिरकालभवानपि ॥"
इति गारुड़े १६८ अध्यायः ॥

व्रणकृत्, पुं, (व्रणं करोतीति । कृ + क्विप् । तुगागमश्च ।) भल्लातकः । इति रत्नमाला ॥ व्रणकारके, त्रि ॥

व्रणकेतुघ्नी, स्त्री, (व्रणकेतुं हन्तीति । हन + टक् । ङीप् ।) दुग्धफेनीक्षुपः । इति राजनिर्घण्टः ॥

व्रणद्विट्, [ष्] पुं, (व्रणस्य द्विट् शत्रुः ।) नागबलाख्यिका । इति शब्दचन्द्रिका ॥ व्रणवैरिके, त्रि ॥

व्रणहः, पुं, (व्रणं हन्तीति । हन + डः ।) एरण्डवृक्षः । इति शब्दचन्द्रिका ॥ व्रणघातके, त्रि ॥

व्रणहा, स्त्री, (व्रणं हन्तीति । हन + डः । स्त्रियां टाप् ।) गुडूची । इति शब्दचन्द्रिका ॥

व्रणहृत्, पुं, (व्रणं हरतीति । हृ + क्विप् । तुक् च ।) कपिकारीवृक्षः । इति राजनिर्घण्टः ॥

व्रणारिः, पुं, (व्रणस्य अरिः शत्रुः ।) बोलम् । अगस्त्यवृक्षः । इति राजनिर्घण्टः ॥

व्रतं, क्ली पुं, भक्षणम् । इत्युणादिकोषः ॥ (व्रियते इति । वृञ् वरणे + बाहुलकात् अतच् । स च कित् ।) पुण्यजनकोपवासादि । तत्पर्य्यायः । नियमः २ पुण्यकम् ३ । इत्यमरः ॥ नियामः ४ संयमः ५ । इति शब्दरत्नावली ॥ अथ व्रतविधिः । तदारम्भप्रतिष्ठयोर्मध्यकालमाह ज्योतिषे । गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ इति । इह्रो बालो दिनत्रयमित्यन्तम् । मठप्रतिष्ठातड़ागादावप्यन्वेयम् ॥*॥ बुधाष्टमीव्रते विशेषो राजमार्त्तण्डोक्तो यथा,—
"द्विजेन्द्रसुतसंयुक्ता पूर्व्वा वा च सिताष्टमी ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥
पतङ्गे मकरे याते दैवे जाग्रति माधवे ।
बुधाष्टमीं प्रकुर्व्वीत वर्जयित्वा तु चैत्रकीम् ॥
प्रसुप्ते च जगन्नाथे सन्ध्याकाले मघौ तथा ।
बुधाष्टमीं न कुर्व्वीत कृता हन्ति पुराकृतम् ॥"
अथ व्रतानुष्ठानम् । तत्र देवलः ।
"अभुक्त्वा प्रातराहारं स्नात्वा चैव समाहितः ।
सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥
ब्रह्मचर्य्यं तथा शौचं सत्यमामिषवर्ज्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥"
अत्र प्रातरित्यस्याभुक्त्वेत्यन्वयः । किन्तु व्रतमित्यनेनान्वयोऽध्याहितत्वात् ।
"प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् ।
नापराह्णे न मध्याह्ने पित्र्यकालो हि तौ स्मृतौ ॥"
इति वराहपुराणैकवाक्यत्वाच्च । अत्राप्यभुक्त्वा प्रातराहारमिति ।
"मुनिभिर्दिवरात्रे प्रोक्तं विप्राणां मर्त्त्यवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां षार्द्धप्रहरकालात् ॥"
इति छन्दोगपरिशिष्टादिवाक्याच्च पूर्व्वदिने सायाह्ने परदिने स्नात्वाचम्य सूर्य्यादिदेवेभ्यो निवेद्य ।
ॐ सूर्य्यः सोमो यम इत्यादिमन्त्रेण साक्षिभ्यं प्रार्थ्य व्रतमाचरेत् । ततः सङ्कल्पयेत् । यद्वा सूर्य्यादिदेवेभ्यो निवेद्य पूजनीयमवादि दत्वा व्रतमाचरेत् व्रतं कुर्य्यात् । तद्विधानञ्च प्रातिपर्व्वणि ।
"गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत् ॥"*॥
व्रतारम्भे सूर्य्यपूजामाह ब्रह्मपुराणम् ।
"यावन्न दीयते चार्घ्यं भास्कराय महात्मने ।
तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥"
नवग्रहपूजामाह मत्स्यपुराणम् ।
"नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ॥"
आदित्यादिपूजामाह पद्मपुराणम् ।
"आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यं अन्ते च कुलदेवताम् ॥"
यत्तु ।
"देवतादौ यदा मोहात् गणेशश्च न पूज्यते ।
तदा पूजाफलं हन्ति विघ्नराजो गणाधिपः ॥"
इत्यनेन गणेशपूजनस्यादित्वमुक्तं तत् सूर्य्यपूजेतरपरम् । कुलदेवतेत्यत्र कुलाद्युपलक्षणम् ।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥"
तत्र विशेषयति मत्स्यपुराणम् ।
"गर्भिणी सूतिका नक्तं कुमारी च रजस्वला ।
यदाशुद्धा तदान्येन कारयेत् क्रियते सदा ॥
उपवासाप्रसक्तौ तु नक्तं भोजनं कुर्व्वीत ।
"उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।"
इति वचनान्तरात् अशुद्धा चेत् पूजां कारयेत् । कायिकञ्चोपवासादिकं सदा शुद्धया अशुद्धया वा स्वयं क्रियते । अत्यन्तासामर्थ्ये पुत्रादिप्रतिनिधिद्वारा उपवासः कार्य्यः । तदभावेऽन्यजनः । गरुड़पुराणम् ।
"भार्य्या भर्त्तृव्रतं कुर्य्यात् जायायास्तु पतिस्तथा ।
असामर्थ्यात् द्वयोस्ताभ्यां व्रतभङ्गो न जायते ॥
पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥"
आरब्धव्रतस्यासमाप्तौ मरणेऽपि तत्फलप्राप्तिमाहाङ्गिराः ।
"यो यदर्थं चरेद्धर्म्मं न समाप्य मृतो भवेत् ।
स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत् ॥"
प्रेत्य परलोके । ब्राह्मपुराणम् ।
"लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत् ।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम् ॥"
मोहो भ्रमः । प्रमादोऽनवधानता । वाशब्दः समुच्चये तेन मुण्डनञ्च कार्य्यं मुण्डनाकरणे त्रिगुणं प्रायश्चित्तम् । उपवासस्याशक्तौ चतुर्विंशतिपणा देयाः । पद्मपुराणम् ।

"वपनं नैव नारीणां नानुव्रज्याजपादिकम् ।
न गोष्ठे शयनं तासां न च दध्यात् वाजिनम् ॥
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
एवमेव तु नारीणां शुक्लमुण्डनमादिशेत् ॥"
इति गोवधप्रकरणे विवेचितम् ।
"प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ।
पूर्व्वं गृहीत्वा सङ्कल्पं प्रमादान्नाचरेद्यदि ।
जीवन् भवति चण्डालो मृतः श्वा चाभि-
जायते ॥"
इति प्रायश्चित्तविवेकधृतवचनम् ॥
देवलः ।
"सर्व्वभूतभयं व्याधिः प्रमादो गुरुशासनम् ।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः ॥"
भर्त्तुरनुज्ञया स्त्रीणां व्रतकरणे न दोषः । यथा
भर्त्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यासः
स्त्रीधर्म्म इति संवत्सरप्रदीपधृतशङ्खवचनात् ॥
अथ कथाश्रवणमाह देवीपुराणम् ।
"तद्दानं तज्जपः ध्यानं तत्कथाश्रवणादिकम् ।
उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः ॥"
अथ व्रतप्रतिष्ठाविधिः ।

श्रीभगवानुवाच ।

"गोपथारामसेतूनां मठसंक्रमवेश्मनाम् ।
नियमव्रतलक्षाणां प्रतिष्ठां शृणु सत्तम ॥
शास्त्रीय विधिना वह्निं समाधाय विचक्षणः ।
शिलां पूर्णघटं कांस्यं सम्भवे स्थापयेद्बुधः ॥
ब्रह्मन् सर्व्वं समासाद्य श्रपयेद्यवमयं चरुम् ।
क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः ॥
प्रणवेनाभिघार्य्याथ दर्व्वां संघट्टयेत् ततः ।
साधयित्वावतार्य्याथ तद्विष्णोरिति होमयेत् ॥
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् ।
विश्वतश्चक्षुरित्युक्त्वा वेदाद्यैर्होमयेत्तथा ॥
ॐ भूरग्नये स्वाहा । ॐ सूर्य्याय स्वाहा । ॐ
प्रजापतये स्वाहा । ॐ अन्तरीक्षाय स्वाहा ।
ॐ द्यौः स्वाहा । ॐ ब्रह्मणे स्वाहा । ॐ
पृथिव्यै स्वाहा । ॐ महाराजाय स्वाहा ।
ॐ सोमं राजानमिति जुहुयात् । ॐ लोक-
पालेभ्यः स्वाहा । स्वस्वमन्त्रैर्जुहुयाद्ग्रहेभ्यश्च ।
एवं हुत्वा चरोर्भागं दद्यात् दशदिशां बलिम् ।
ततः पलाशसमिधा जुहेदष्टोत्तरं शतम् ॥
आज्यञ्च जुहुयात् पश्चादेभिर्मन्त्रैर्द्विजोत्तमः ।
ततः पुरुषसूक्तेन मन्त्रैराज्यञ्च होमयेत् ॥
इरावतीति जुहुयात् तिलान् घृतपरिप्लुतान् ।
हुत्वा च ब्रह्मविष्ण्वीशदेवानामनुयायिनम् ॥
ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ।
पर्व्वतानां नदीनाञ्च समुद्राणां तथैव च ॥
हुत्वा व्याहृतिभिर्दद्यात् स्रुचा पूर्णाहुतित्रयम् ।
वौषडन्तेन मन्त्रेण वैष्णवेन सुरोत्तम ॥
पञ्चगव्यञ्च संप्राश्य दद्यादाचार्य्यदक्षिणाम् ।
तिलपात्रं हेमयुक्तं सवत्सां गामलङ्कृताम् ।
प्रीयतां भगवान् विष्णुरित्युत्सृजेद्व्रतं नरः ॥*॥
आरामं कारयेद्यस्तु नन्दने स चिरं वसेत् ।
मठप्रदानात् स्वर्लोकं प्राप्नोति पुरुषः सदा ॥
सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः ॥
प्रपादानाद्वारुणस्य लोकमाप्नोत्यसंशयम् ॥
संक्रमाणाञ्च यः कर्त्ता दुर्गतिं तरते नरः ।
स्वर्गलोके च निवसेत् इष्टकाचितुसत्तया ॥
गोमार्गस्य तथा कर्त्ता गोलोके क्रीडते चिरम् ।
नियमव्रतकृद्गच्छति विष्णुलोकं नरोत्तमः ॥
लक्षकृत् स्वर्गमाप्नोति सर्व्वपापविवर्ज्जितः ।
अनेन विधिना मर्त्यः संपूर्णं फलमाप्नुयात् ॥*॥
इयं प्रतिष्ठा सामान्या सर्व्वसाधारणा च ।
कर्त्तव्या देवविप्रैस्तु प्रतिष्ठां यत्र विद्यते ॥
इति संक्षेपतः प्रोक्तः समुदायविधिस्तव ।
सर्व्वेषामेव वर्णानां सर्व्वकामफलप्रदः ॥
सर्व्ववृक्षेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः ।
फलार्थिभिश्चप्रतिष्ठं यस्मान्निष्फलमुच्यते ॥"
इति हयशीर्षे समुदायप्रतिष्ठापटलः ॥ * ॥
शास्त्रीय वैदिकेन स्वगृह्योक्तविधिनेति यावत् ।
शिलेति उदूखलोपलक्षणम् । कांस्यं अग्निप्रण-
यनार्थम् । कांस्येन अग्निप्रणयनमाह । गृह्या-
संग्रहे ।
"शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्-
बुधः ॥
तस्याभावे शरावेण नवेनाभिमुखञ्च तम् ।
सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्व्वकर्म्मसु ॥"
एवञ्चाग्निप्रणयनानन्तरं सर्व्वत इत्यस्य पाठो
युक्तः । प्रणीत इति मन्त्रलिङ्गात् । अन्यथा
स्थापनानन्तरं एतद्विधानं व्यर्थं स्यात् ॥ * ॥
अत्र च पाकाङ्गत्वात् साहसनामानमग्निमाह
गृह्यासंग्रहः ।
"प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा ।
आहूय चैव होतव्यं यत्र यो विहितोऽनलः ॥"
प्रायश्चित्ते होमकर्म्मवैगुण्यसमाधानार्थं प्राय-
श्चित्तात्मकमहाव्याहृतिहोमादौ । तथा च
छन्दोगपरिशिष्टम् ।
"यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः
स्मृतः ॥"
अत्र त्रिविकल्प इत्यभिधानात् सामगानां भव-
देवभट्टोक्तशाट्यायनहोमो निष्प्रामाणिकः ।
अथासम्भवे इत्यागच्छागच्छ इत्युच्चार्य्य यथा-
भावि नीवारादिभिरपि होमः ।
"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्व्वाभावे विवर्ज्जयेत् ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"
इति छन्दोगपरिशिष्टात् ॥
तत्र गोभिलेन अथ हविर्यज्ञीयानां व्रीहीन्
यवान् वा कांस्ये चरुस्थाल्यां वा अवहत्य त्रा
कृष्टं निर्व्वपामीति देवताभ्योद्देशः । मध्य-
मेन वा ज्ञिहामेति मिलनेन निर्व्वापमन्त्र-
स्तामेव तस्मात् कर्त्तव्यम् । अत्र च [illegible]
त्वा जुष्टं निर्व्वपामीत्यनेन मन्त्रेण यवं [illegible]
ग्रहणात् [illegible]
कर्त्तव्या । तत्र छन्दोगपरिशिष्टम् ।
"देवतासंख्यया ग्राह्या निर्व्वापास्तु पृथक् पृथक्
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक् ।
अत्र देवतासंख्यया पृथक् पृथक् निर्व्वाप
अनुनिर्व्वापस्तन्त्रेणैव । होमोऽपि पृथक् पृथ
गेवेति । आवश्यादिपुरुषदोषेण गृहीत
येनापि मन्त्रेण निर्व्वापादिकं समाचर
याज्ञिकाः ।
"धाते न्यूने तथा च्छिन्ने सान्नाय्ये मान्त्रिके
तथा ।
यत्रे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥"
इत्युक्तेः । मान्त्रिके मन्त्रमाध्ये अवघातादौ
तत्काले मन्त्रपाठाभावे मन्त्राः प्रयोक्तव्याः ।
कपिलाया अभावे अन्यधेनोरपि क्षीरेण
तद्विष्णोरित्यनेनाभिघार्य्य दर्व्वा दधिकाव्णो
संमिश्रयेत् । दर्व्वी च प्रादेशप्रमाणा द्व्यङ्गु
विस्तारा ग्राह्या ।
"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं चाङ्गुष्ठ पृथ्वग्रमवदानक्रियाक्षमम् ।
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे ।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनञ्च मेक्षणम् ॥"
इति छन्दोगपरिशिष्टात्
इध्मार्द्धप्रमाणं प्रादेशमात्रम् । प्रादेशद्वयमिध्म
प्रमाणं परिकीर्त्तितम् । इति छन्दोगप
रिशिष्टोक्तेः । अथेत्यनेन स्वगृह्योक्तशेषकर्म्मसा
पनानन्तरं प्रकृतहोमः । अत्र बहुदेवता
चरुहोमादुपघातहोमः ।
"चरौ तु बहुदैवत्ये होमः स्यादुपघातवत् ।"
इति छन्दोगपरिशिष्टधृतवचनात्
उपघातलक्षणमाह गृह्यासंग्रहः ।
"पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते ।
यत्नुपघातं जुहुयाच्चराज्यं समापयेत् ।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्
अनुपस्तीर्य्य इत्यनेन सुचि चतुरवत्तं प
वत्तं वा घृतोपस्तरणादिकं तदत्र नास्ति
मेक्षणादिना सकृत् गृहीत्वा होतव्यम् ।
प्रकृतहोमात् प्राक् वह्निपूजनमाह मार्क
पुराणम् ।
"पूजयेच्च ततो वह्निं दद्याच्चाप्याहुतीः क्रमात्
तत इति वह्निर्नामकरणाचारात्
होमाङ्गत्वाने स्मृतिः ।
"मन्त्रोङ्कारपूर्व्वेण स्वाहान्तेन विचक्षणः ।
स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम्
ततस्तद्विष्णोरितिमन्त्रेण चरुणा होमयेत् ।
व्याहृत्या प्रत्येकं भूरग्न्यादिना । गाय
त्र्यादिना । तद्विप्रासेति तद्विप्रासो विप्र
न्यासश्चैव इत्यादिना । विश्वत [illegible]

चाभ्युक्ष गणेशादीन् नवग्रहांश्चैव पूजयेत्।
ततो व्रतदेवताः पूजयेत्। इति व्रततत्त्वम् ॥*॥
अथ व्रतलक्षणम्। दीर्घकालानुपालनीयसङ्कल्पो
व्रतमिति नारायणोपाध्यायानां चरणः।
स्वकर्त्तव्यविषयो नियतः सङ्कल्पो व्रतमिति
श्रीदत्तहरिनाथवर्द्धमानप्रभृतयः॥ सङ्कल्पश्च
भावि मयैतत् कर्त्तव्यमेव निषिद्धं न कर्त्तव्यमिति
ज्ञानविशेषः। अतएव सङ्कल्पः कर्म्ममानस-
मित्यभिधानिकाः। वस्तुतस्तु पूर्व्वोक्तवराह-
पुराणवचनेनैकादश्युपवासस्य व्रतत्वाभिधानात्।
"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः॥"
इत्यादि याज्ञवल्क्याद्युक्तेषु एकभक्तनक्तायाचित-
भोजनोपवासादिषु पादकृच्छ्रादित्वाभिधानाच्च
न सङ्कल्पो व्रतम्। किन्तु सङ्कल्पविषयतत्तत्-
कर्म्मैव व्रतमिति। अतएव व्रतानां सङ्कल्पसम्भव-
त्वमाह मनुः।
"सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः।
व्रता नियमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः॥"
अनेन कर्म्मणा इदमिष्टं फलं साध्यते इत्येवं
विषया बुद्धिः सङ्कल्पस्तदनन्तरमिष्टसाधनतया
अवगते तस्मिन् इच्छा जायते ततस्तदर्थं प्रयत्नं
कुर्व्वीत इत्येवं यज्ञाः सङ्कल्पसम्भवाः। व्रता
नियमरूपा धर्म्माश्चतुर्थाध्याये वक्ष्यमाणाः।
सर्व्वे इत्यनेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव
जायन्ते इति कुल्लूकभट्टः॥ * ॥ सङ्कल्पमाह
वराहपुराणम्।
"प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम्।
नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ
स्मृतौ॥"
सङ्कल्पे व्रतस्यारम्भ इत्युक्तं राघवभट्टो विष्णुः।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥
आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया।
निमन्त्रणन्तु वा श्राद्धे आरम्भः स्यादिति
श्रुतिः॥"
पाकपरिष्क्रियेति वाजसनेयिश्राद्धविषयम्। तत्रैव
तस्यानुग्रहरणविधानेन तदग्निपाकस्यावाधा-
रणत्वात्॥*॥ सङ्कल्पविधानन्तु संवत्सरप्रदीपे।
"प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्।"
शान्तिपर्व्वणि।
"गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः।
उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः॥
देवतास्तस्य तुष्यन्ति कामिकं तस्य सिध्यति।
अन्यथा तु वृथा मर्त्त्याः क्लिश्यन्ति स्वल्प-
बुद्धयः॥"
वन्द्वेति पक्षान्तरम्। तेन ताम्रपात्राभावे
सङ्कल्पमात्रं करणीयम्॥ * ॥ गृहीतव्रताकरणे
दोषमाह छागलेयः।
"पूर्व्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः।
जीवन् भवति चाण्डालो मृतः श्वा चैव जायते॥

द्वादशीव्रतमादाय व्रतभङ्गं करोति यः।
द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते॥"
इति नारदीयवचनात् द्वादश्यां विशेषोऽपि॥*॥
प्रायश्चित्तमाह पद्मपुराणम्।
"क्रोधात्मोहात् प्रमादाद्वा व्रतभङ्गो यदा
भवेत्।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम्।
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्॥"
वाशब्दः समुच्चये तेन मुण्डनञ्च कर्त्तव्यमिति
प्रायश्चित्तविवेकः॥ प्रमादादस्य व्रतलुप्तत्वे
प्रतिप्रसूते देवलः।
"सर्व्वभूतभयं व्याधिः प्रमादो गुरुशासनम्।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः॥"
इत्येकादशीतत्त्वम्॥*॥
पुण्यजनकव्रतानि यथा। वैशाखस्य शुक्लतृती-
यायां अक्षयतृतीयाव्रतम् १ तस्य शुक्ला द्वादशी
पिपीतकी २ तच्चतुर्द्दशी नृसिंहचतुर्द्दशी ३
तस्य कृष्णाष्टमी त्रिलोचनाष्टमी ४ तस्य कृष्ण-
चतुर्द्दशी सावित्री ५ ज्यैष्ठशुक्लतृतीया रम्भा-
तृतीया ६ तस्य शुक्ला चतुर्थी उमाचतुर्थी ७
तस्य शुक्ला षष्ठी अरण्यषष्ठी ८ तच्चतुर्द्दशी
चम्पकचतुर्द्दशी ९ आषाढी शुक्लैकादशी शयने-
कादशी १० श्रावणी कृष्णाष्टमी श्रीकृष्णजन्मा-
ष्टमी ११ भाद्रशुक्ला चतुर्थी शिवा चतुर्थी १२
तस्य शुक्ला षष्ठी चपेटा षष्ठी १३ तस्य शुक्ला
सप्तमी ललिता सप्तमी तत्र कुक्कुटीव्रतम् १४
तस्य शुक्लाष्टमी दूर्व्वाष्टमी १५ राधाष्टमी च
१६ तस्य शुक्ला नवमी तालनवमी १७ तस्य
शुक्लैकादश्यां पार्श्वपरिवर्त्तनव्रतम् १८ तस्य
शुक्ला द्वादशी श्रवणद्वादशी १९ तस्य शुक्ला
चतुर्द्दशी अनन्तचतुर्द्दशी २० तस्य कृष्णा
चतुर्थी गणेशचतुर्थी २१ आश्विनशुक्लाष्टमी
महाष्टमी २२ कार्त्तिकशुक्ला नवमी दुर्गानवमी
२३ तस्य शुक्लैकादशी उत्थानैकादशी २४ तस्य
शुक्ला चतुर्द्दशी पाषाणचतुर्द्दशी २५ तत्राश्वी-
येकादश्यादिपञ्चतिथ्यात्मकं बकपञ्चकम् २६
वृश्चिकसंक्रान्त्यां सर्व्वजयाव्रतम् २७ कार्त्ति-
केयव्रतञ्च २८ अग्रहायणस्य शुक्ला षष्ठी गुह-
षष्ठी २९ तस्य शुक्ला सप्तमी मित्रसप्तमी ३०
तस्य शुक्ला द्वादशी अखण्डा द्वादशी ३१ माघ-
शुक्ला चतुर्थी वरदा चतुर्थी ३२ तस्य शुक्ल-
पञ्चम्यां श्रीपञ्चमीव्रतं सरस्वतीपूजाद्यम् ३३
तस्य शुक्ला षष्ठी शीतला षष्ठी ३४ तस्य शुक्ला
सप्तमी आरोग्यसप्तमी ३५ तस्य शुक्लैकादशी
भीमैकादशी ३६ तद्द्वादशी वराहद्वादशी ३७
तस्य कृष्णा चतुर्द्दशी शिवरात्रिः ३८ फाल्-
गुनशुक्ला द्वादशी गोविन्दद्वादशी ३९ चैत्र-
शुक्ला षष्ठी स्कन्दषष्ठी ४० चैत्रशुक्लाष्टमी
अशोकाष्टमी ४१ तस्य शुक्ला नवमी श्रीराम-
नवमी ४२ तस्य शुक्ला चयोदशी मदनत्रयो-
दशी ४३। इति स्मृतिः॥ * ॥ अयाचितव्रतं
नक्तव्रतं उमामाहेश्वरव्रतं मङ्गलचण्डिकाव्रतं

देवीपुराणे कृष्णाष्टमीव्रतनामाध्याये ...
...जन्मनामाध्याये च द्रष्टव्यम्॥*॥ शिवा...
व्रतं मात्स्ये ११६ अध्याये ...
मात्स्ये ११९ अध्याये चातुर्मास्यव्रतानि मात्...
१२१ अध्याये भीष्मपञ्चकादिव्रतं मात्स्ये ११...
अध्याये द्रष्टव्यम्॥ * ॥ कार्त्तिकव्रतम...
कार्त्तिकव्रतं कार्त्तिकप्रदीपदानव्रतञ्च मार्कण्डे...
खण्डे १४० अध्याये द्रष्टव्यम्॥ * ॥ प्रतिपत्कृ...
त्यव्रतम्। द्वितीयाकल्पे पुष्पद्वितीयाव्रतं ...
द्वितीयाव्रतञ्च। तृतीयाकल्पे गौरीव्रत...
चतुर्थीकल्पे गणेशचतुर्थी। पञ्चमीकल्पे मा...
शुक्ला पञ्चमी नागपञ्चमी। षष्ठीकल्पे मा...
शुक्ला षष्ठी गुहषष्ठी। सप्तमीकल्पे माघशु...
सप्तमी रथसप्तमी। शुक्लपक्षे रविवारे सप्त...
रोहिणीनक्षत्रयोगे विजयासप्तमी। रवि...
संक्रान्तौ, आदित्यहृदयव्रतम्। शुक्लपक्ष...
सप्तम्यां पञ्चतारकनक्षत्रयोगे जया सप्तमी
माघशुक्लसप्तमी जयन्ती। भाद्रशुक्लसप्त...
अपराजिता सप्तमी। शुक्लपक्षे सप्तम्यां र...
संक्रमणे महाजया सप्तमी। मार्गशीर्ष...
शुक्ला सप्तमी नन्दा सप्तमी। शुक्लसप्तम्यां ह...
नक्षत्रयोगे भद्रासप्तमीव्रतम्। फाल्गुनस्य शु...
सप्तमी कामदा सप्तमी। पापनाशिनी सप्तमी
व्रतम्। भानुपदव्रतम्। सर्व्वप्राप्तिसप्तमीव्रतम्
मार्त्तण्डसप्तमीव्रतम्। भाद्रशुक्लसप्तमी फ...
सप्तमी। श्रावणशुक्लसप्तमी अव्यङ्गसप्तमी
मार्गशीर्षस्य सितसप्तम्यां कल्याणसप्तमी...
सितपक्षप्रदाव्रतम्। इति भविष्यपुराणम्॥*
उत्तरायणे शुक्लपक्षे बुधवारे अष्टमी बुधाष्टमी
अमावस्याव्रतम्। वैशाखीपूर्णिमा सिद्धपूर्णिमा
मेषसंक्रान्तौ मधुसंक्रान्तिः। जलसंक्रान्तिः
फलसंक्रान्तिः। अन्नसंक्रान्तिः। दधिसंक्रान्ति
व्रतञ्च॥ * ॥ अथ व्रतविधिः। तत्र व्रतधर्म्माः
तत्र विष्णुहारीतौ।
"दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत्
भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितम्।
मलापकर्षणं कार्य्यं बाह्यशौचापविद्धये।
दन्तधावनपूर्व्वेण पञ्चगव्येन संयुतम्।
व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने॥"
तेन प्रायश्चित्तव्रतारम्भे पूर्व्वदिने पञ्चग...
प्राशन दन्तधावनं कृत्वा सायं समये व्रतग्रहण
कर्त्तव्यः। वशिष्ठः। श्मश्रुकेशनखान् वापयेदपि
लोमशिखावर्ज्जम्। केशधारणेच्छानां द्विगुण
व्रतमाह हारीतः।
"राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्।
केशानां धारणार्थन्तु द्विगुणं व्रतमाचरेत्।
द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत्।"
स्त्रियाः केशवपनं न कार्य्यमित्याह बौधायनः
तच्छे शिखावपनस्वकोणकर्म्म नमनः ...
केशश्मश्रुनखरोमवापनं ... स्त्रियाः ...
वपनवर्ज्जम्। ...

तथा शङ्खलिखितौ ।
"वाप्य केशनखान् पूर्व्वं कृतं प्राश्य बहिर्विधि ।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ।
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिषवनं स्पृशेत् ।
एकवासार्द्रवासा वा लघ्वाशी स्थण्डिलेशयः ॥
जापी वीरासनी मौनी मौञ्जी दण्डकमण्डलुम् ।
भैक्षचर्य्याग्निकार्य्यञ्च कूष्माण्डैर्जुहुयाद्घृतम् ॥"
प्रत्येकं नियतं कालमिति व्रतसंख्या वक्ष्यमाणे उल्लेखनीया इत्यर्थः । वीरासनी भित्त्याद्यनाश्रितः । दण्डकमण्डलु आर्षत्वात् मतुपो लोपेन तेनैतद्युक्त इत्यर्थः । कूष्माण्डैर्यद्देवा देवहेलनमित्यादिमन्त्रैः । मनुः ।
"महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम् ।
अहिंसासत्यमक्रोधमार्ज्जवञ्च समाचरेत् ।
त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत् ॥"
त्रिरह्नस्त्रिर्निशायाञ्च इति षट्स्नानविषयमिदम् । पिपीलिकामध्यचान्द्रायणादिमहाकृच्छ्रवर्ज्जं पक्षातिप्रयार्थं अन्येषु त्रिषवनविधानात् । तथा ।
"स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ।
स्थानासनाभ्यां विहरेदशक्तोऽधःशयी भवेत् ॥
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः ।
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्व्वेषु च व्रतेष्वेवं प्रायश्चित्तार्थमादृतः ॥"
ब्रह्मचारी मैथुनवर्ज्जं व्रती छत्रोपानहमाल्याञ्जनगन्धादिवर्ज्जम् । शूद्रेण सावित्रीजपस्थाने नारायणादिमन्त्रजपः कार्य्यः । अन्यद्वारा वा कारयितव्यः । एवमन्यत्रापि । यथा वराहपुराणम् ।
"अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥"
जावालः ।
"आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥
श्राद्धं कुर्य्याद्व्रतान्ते च गोहिरण्यादिदक्षिणाम् ।
पदे पदे यजन् कुर्व्वन् ब्रह्मलोके महीयते ॥
स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यन्तथैव च ।
शूद्राणां पापिनाञ्चैव संवादं न च कारयेत् ॥
संवादस्तु न कर्त्तव्यस्त्रिवर्णैश्च कदाचन ।
ब्राह्मणेनैव वक्तव्य उत्पन्ने प्रायसंशये ॥"
श्राद्धमिति शुद्ध्यर्थं श्राद्धं दर्शितम् । स्त्रीभिर्होमो न कर्त्तव्यः पञ्चगव्यपानञ्च तासां कर्त्तरि वेति षष्ठी । प्रायश्चित्तपीडया प्रायसंशये । अन्ये वर्णा न प्रवक्तारः ब्राह्मण एव प्रवक्ता । व्रतं मौनं पूर्व्वोक्तं । तत्र विशेषमाह आपस्तम्बः । तत्र मौनयुक्तं चेदियादृहेमैर्गिभिरुक्षेराग्निमिन्धेकृपुतैरेमोहन्नान् सन्ध्यायामन्तमेव यावद्यावदर्थं भाषते न मन्त्रलोपो भवतीति विज्ञायते । मन्त्रलोपो व्रतलोपः । तावद्धादिभिरत्राहीनमपि व्रतं कार्य्यमित्याह बृहद्विष्णुः ।

"अर्द्धकृतो निवत्स्वादी रोगी भवति चौषधः ।
यथाशक्ति प्रकुर्व्वीत व्रतं स्नेह न लुप्यते ॥"
अशक्तावन्यद्वारापि कार्य्यमित्युक्तञ्च ब्रह्मपुराणे ।
"रोगी हरस्तु पौगण्डः कुर्य्यादन्येन तं सदा ।
चतुर्थाद्वत्सरादूर्द्ध्वमष्टमं यावदेव हि ॥
शिशोर्व्रतं प्रकुर्व्वीरन् गुरवस्त्वथ बान्धवाः ।
गुर्व्विणी बालवत्सा च रोगी द्रव्यपरायणः ॥
एते नक्तेषु भुञ्जन्ति बाला मध्याह्न एव च ।
व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत् ॥
फलमूले तथा क्षीरं यज्ञशिष्टं तथा हविः ।
व्रतमध्ये तु रोगार्त्तो वैद्यप्रोक्तमथौषधम् ॥
करोति च गुरोर्व्वाक्यं व्रतस्थस्तृष्णयादपि ।
ब्राह्मणस्याभिलषितं साधयेदविचारयन् ॥
एतान्यष्टौ व्रतस्थानामव्रतघ्नानि कुत्रचित् ।
व्रतेष्वेतेषु देवांस्तान् व्रतस्थस्तु प्रपूजयेत् ॥"
पौगण्डो बालः । द्रव्यपरायणः कुटुम्बी द्रव्यार्जनपालनपरः सन्नित्यर्थः । बौधायनः ।
"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्व्वचनमौषधम् ॥"
हारीतयमौ ।
"बलयश्चोपहारश्च हवींषि चरवस्तथा ।
निर्व्विशङ्केन भोक्तव्यं व्रतमस्य न लुप्यते ॥"
बलिर्वैश्वदेवादिदेवताभ्यो दत्तः । उपहारो नैवेद्यम् । चरुः पार्व्वणस्थालीपाकादि । अत्र चैषां दत्तावशिष्टं भक्षणीयमिति । देवलः ।
"उपवासो विनश्येत दिवास्वप्नाच्च मैथुनैः ।
अत्यये जलपानेन नोपवासः प्रणश्यति ॥"
वृद्धशातातपः ।
"गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥"
अलङ्कारवस्त्रसिन्दूरादि उपवासिन वितुना इत्यर्थः । तथा ।
"स्त्रीणां सम्प्रेक्षणात् स्पर्शात् ताभिः संकथनादपि ।
ब्रह्मचर्य्यं विपद्येत न दारसङ्गमादपि ॥"
संप्रेक्षणात् संकथनात् इति अत्र सरागत्वं संप्रश्नस्यार्थः । इति प्रायश्चित्तविवेकः ॥ * ॥
प्रायश्चित्तात्मकव्रतानि यथा । विश्वामित्रः ।
"कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम् ।
प्रकाशे च रहस्ये च संशयेऽशुक्लेऽस्फुटे ॥
प्राजापत्यः सान्तपनः शिशुकृच्छ्रः पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः ॥
महासान्तपनः शुद्धो तप्तकृच्छ्रस्तु पावनः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्च्चस्तु शोधकः ॥
एते व्रताः समस्ता वा प्रत्येकमेकशोऽपि वा ।
पातकादिषु सर्व्वेषु पापकेषु प्रयत्नतः ॥
चान्द्राचान्द्रायणैर्युक्ताः केवला वा विशुद्धये ।
शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ॥
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति ।
उपवासस्त्रिरात्रन्तु मासः पञ्चदशैकम् ॥
षड्वर्षद्वादशाब्दादि कार्य्यं शुद्धिमभीप्सिना ।

उपपातकयुक्तानामनादिष्टेषु चैव हि ॥
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया ।
जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा ।
अनुबन्धादिकं दृष्ट्वा सर्व्वं कार्य्यं यथाक्रमम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
द्वादशवार्षिकादिव्रतं प्रायश्चित्तविवेकादौ द्रष्टव्यम् ॥

**व्रततिः**, स्त्री, (प्र+तन विस्तारे+क्तिच् । पृषोदरादित्वात् पस्य वः ।) विस्तारः । लता । इत्यमरः ॥ (यथा, ऋग्वेदे । ८ । ४० । ६ ।
"अपि वृश्च पुराणवद्व्रततेरिव
गुष्पितमोजो दासस्य दम्भय ॥"
"व्रततेरिव यथा लतायाः गुष्पितं निर्गतां शाखां वृश्चति ।" इति तद्भाष्ये सायणः ॥)

**व्रतती**, स्त्री, (व्रतति+पक्षे ङीष् ।) विस्तारः । लता । इति भरतद्विरूपकोषः ॥ (यथा, रघुः । १४ । १ ।
"अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥")

**व्रतभिक्षा**, स्त्री, (व्रते उपनयनकाले भिक्षा ।) उपनयनकालीनभिक्षा । तस्या विधिर्यथा । अथ भैक्ष्यं चरति । अथ शब्दस्तूष्णीमादित्योपस्थानमग्निप्रदक्षिणञ्च शंसति ।
"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि ॥"
इति मनुवचनात् ॥
भिक्षासमूहं भैक्ष्यं तच्चरति आचरति इत्यर्थः । मातरमेवाग्रे ये चान्ये सुहृदो यावन्तो वा सन्निहिताः स्युः । याचते इत्यध्याहार्य्यम् । सुहृदे स्निग्धहृदये स्वसादि । तथा च मनुः ।
"मातरं वा स्वसारं वा मातुर्व्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत् ॥"
सन्निहितास्तद्गृहस्थाः न तु प्रतिगृहं गत्वा । भवति भिक्षां देहीति ब्राह्मणभिक्षाप्रयोगः । तथा च मनुः ।
"भवत्पूर्व्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्ष्यचर्य्या यथाक्रमम् ॥"
इति याज्ञवल्क्यवचनाच्च ॥ इति संस्कारतत्त्वम् ॥

**व्रतसंग्रहः**, पुं, (व्रतस्य संग्रहः ।) दीक्षा । इति हेमचन्द्रः ॥

**व्रतादेशः**, पुं, (व्रतस्यादेशः ।) उपनयनम् । यथा,
"आदन्तजननात् सद्य आचूडान्नैशरात्रकम् ।
त्रिरात्रमाव्रतादेशात् दशरात्रमतः परम् ॥"
इति शुद्धितत्त्वम् ॥

**व्रती**, [न्] पुं, (व्रतमस्यास्तीति । व्रत+इनिः ।) यजमानः । इत्यमरः ॥ (ब्रह्मचारी । यथा, मनुः । २ । १८८ ।
"भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥")

व्रतविशिष्टे, त्रि । यथा,—
"तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्व्वीत पारणम् ॥"
इति तिथ्यादितत्त्वम् ॥

व्रश्च, श्र श छेदे । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-वेट् ।) दन्त्योपधः चयोगात् तालव्यः । तेन क्विपि शश्छलेति वत्रि निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् तालव्यस्य दन्त्यत्वे संयोगादेः सस्य लोपे वृट् इति । तथा च ।
"नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारः स्यात् चाटुवर्गस्तवर्गजः ॥"
इति वोपदेवः ॥
अस्यार्थः । धातुषु मध्ये झलि झसे परे अनुस्वारपञ्चमौ नकारजौ ज्ञेयौ तालव्यशकारश्च दन्त्यसकारजातः मूर्द्धन्यषकारात् परष्टवर्गोऽपि तवर्गजातो ज्ञेय इति । जिज्ञासाने इत्यादौ चाच यकारादिप्रकृतित्वे तस्मौ इत्यादिर्बोध्यम् । ञ, अव्रश्चीत् अव्राक्षीत् । श, वृश्चति । इति दुर्गादासः ॥

व्रश्चनं, क्ली, (व्रश्च + ल्युट् ।) छेदनम् । व्रश्चधातोरनट्प्रत्ययेन निष्पन्नम् ॥ (यथा, शतपथब्राह्मणे । ३ । ६ । ४ । ७ ।
"स दात्रमना वृश्चनाय भवति ॥")

वृश्चनः, पुं, (व्रश्चति छिनत्ति पतित्रतीरिति । वृश्च + ल्युः । यद्वा, वृश्चत्यनेनेति करणे ल्युट् ।) स्वर्णादिच्छेदिका । छेनी इति भाषा । तत्पर्य्यायः । पत्रपरशुः २ । इत्यमरः ॥ पत्रपर्शुः ३ । इति शब्दरत्नावली ॥ स्वर्णलोहादिभेदकः ४ । इति जटाधरः ॥ वृक्षच्छेदनजातनिर्यासः । यथा,—
"देवतार्थं हविः शिग्रुं लोहितान् वृश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च ॥"
इति याज्ञवल्क्यः ॥
व्रश्चनात् वृक्षच्छेदनजातान् लोहितानपि । यथा, मनुः ।
"लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा ।"
इति मिताक्षरायामाचाराध्यायः ॥
(करणे ल्युटि तस्य कुठारादिवाचकता विशेष्यनिघ्नता च । यथा, कातन्त्रे कृत्सु करणाधिकरणयोश्चेत्यत्र कलापचन्द्रः । "युड्न्तश्च शब्दः प्रायो विधेयलिङ्गभाक्ो यथा वृश्चनः कुठारो गोदोहनी घटी ढक्कः पानावदारश्च इति ॥")

व्राजिः, स्त्री, (व्रजति गच्छतीति । व्रज गतौ + "वसिवपियजीति ।" उणा० ४ । १२४ । इति इञ् ।) वायुः । व्रजधातोरौणादिकेन प्रत्ययेन निष्पन्नमेतत् ॥

व्रातः, पुं, समूहः । इत्यमरः ॥ (यथा, भागवते । ४ । २५ । १६ ।
"नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।
आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥")
व्राधादिः । इति शब्दकल्पद्रुमटीकायां भरतः ॥
(मनुष्यः । इति निघण्टुः । २ । ३ । "इन् वरणे 'ताततातलातसुपित' इत्यादिसूत्रेण औणादिकेन क्तप्रत्यये आड़ागमो निपात्यते । वृण्वन्ति स्वमभिमतं देवताभ्यः तपसाराधितेभ्यः प्रशियन्ते वा यज्ञादौ । यद्वा, व्रातो धान्यादिसञ्चयः । तद्वन्तो व्राता मत्वर्थीयोऽकारः । यद्वा, व्रतमिति कर्म्मनाम अन्नं वा । अन्नमपि व्रतायेतस्मादेवेत्युक्तिः तदीयाः 'तस्येदम्' इत्यण् । 'कर्म्मणा जायते जन्तुः कर्म्मणैव प्रलीयते' इत्युक्तेः कर्म्मणामधिकारित्वाच्च मनुष्याणां कर्म्मसम्बन्धित्वम् । 'अथो अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते' इति । अन्नात् रेतो रेतसः पुरुषः इति च श्रुतेः मनुष्याणामन्नसम्बन्धित्वम् ।" इति तट्टीकायां देवराजयज्वा ॥ अस्मिन्नर्थे प्रायशो बहुवचनप्रयोगो दृश्यते ॥ *॥, क्ली, शरीरायासजीविकर्म्म । इति काशिका । ५ । २ । २१ ॥)

व्रातीनः, पुं, (शरीरायासेन ये जीवन्ति तेषां कर्म्म व्रातं तेन जीवतीति । व्रात + "व्रातेन जीवति ।" ५ । २ । २१ । इति खञ् ।) संघजीवी । इति हेमचन्द्रः ॥ (यथा, भट्टिः । ४ । १२ ।
"व्रातीनव्यालदीप्रास्त्रैः सुत्वनः परिपूजयन् ॥")

व्रात्यः, पुं, (व्रातो व्रात्यादिः स इव । "शाखादिभ्यो यत् ।" ५ । ३ । १०३ । इति यत् ।) दशसंस्काररहितः । षोड़शवर्षादूर्द्धं असञ्जातसावित्रीको अष्टगायत्रीको वा । इति भरतः ॥ तत्पर्य्यायः । संस्कारहीनः २ । इत्यमरः ॥ सावित्रीपतितः ३ वाग्दुष्टः ४ पुरुषोक्तिकः ५ । इति जटाधरः ॥ तस्य प्रायश्चित्तादि यथा,—
"अथ व्रात्यविधिं देवि ! प्रायश्चित्तन्तु यद्भवेत् ।
तत् शृणुष्व महेशानि सर्व्ववर्णे विशेषतः ॥
दश वर्षाणि पञ्चैव ब्राह्मणस्योपनीयते ।
एकविंशतिवर्षाणि यावद्वैश्यमुपानयेत् ।
अत ऊर्द्ध्वं पतत्येव सर्व्वधर्म्मबहिष्कृतः ॥
गायत्रीपतिता व्रात्या व्रात्यस्तोमेन संस्कृतः ।
अशक्तौ चैव यस्तस्य चरेदौद्दालिकं व्रतम् ॥
द्वौ मासौ यावकाहारो मासमेकं पयः पिबेत् ।
दध्ना च पक्षमेकन्तु अष्टरात्रं घृतेन तु ॥
अयाचितेन षड़रात्रं त्रिरात्रं वर्त्तयेज्जलैः ।
अहोरात्रं न भुञ्जीत ततः संस्कारमर्हति ॥
पतिता यस्य गायत्री दश वर्षाणि पञ्च च ।
प्रायश्चित्तं भवेत्तस्य प्रोवाच भगवान् शिवः ॥
सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः ।
हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा ॥
एकविंशतिरात्रन्तु पिबेत् प्रसृतियावकम् ।
ततो यावकमुद्धृत्य तस्योपनयनं स्मृतम् ॥
व्रतस्याचरणाशक्तौ कुर्य्याच्चान्द्रायणत्रयम् ।
सावित्रीपतिता येषां देशकालादिविभ्रमात् ॥
चान्द्रायणं चरेद्यस्तु व्रतान्ते धेनुसत्यजेत् ।
चौरं वापि पिबेन्मासं दशाहं वत्सशाकिनीम् ॥"
इति मत्स्यसूक्ते प्रायश्चित्तप्रकरणे ६० पटलः ॥

व्रात्यस्तोमः, पुं, यज्ञविशेषः । यथा,—
"सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥"
इति मानवे १० अध्याये ॥ तथा, याज्ञवल्क्यः । १ । ३८ ॥

व्री, ग शि वृत्याम् । इति कविकल्पद्रुमः ॥ (क्र्या०-प्या०-पर०-सक०-अनिट् ।) रेफोपधः । शि, व्रिणाति । व्रीणः वीणिः । ग, यो व्रीणाति स श्रियं दृश्यसुखे । व्रीतः व्रीतिः । इति दुर्गादासः ॥

व्री, य ङ ओ गतौ । वृत्याम् । इति कविकल्पद्रुमः ॥ (दिवा०-आत्म०-सक०-अनिट् ।) रेफोपधः । य ङ, व्रीयते । ओ, व्रीणः । इति दुर्गादासः ॥

व्रीड़, य जि क्षिपि । लज्जे । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-सक०-लज्जे-अक०-सेट् ।) रेफयुक्तः । य, व्रीड्यति बाणं चापः । व्रीड्यति वधूः । जि, व्रीड़ितोऽस्ति । इति दुर्गादासः ॥

व्रीड़ः, पुं, (व्रीड़ + भावे घञ् ।) लज्जा । इत्यमरः ॥ (यथा, कुमारे । ७ । ६७ ।
"न नूनमारूढ़रुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
व्रीड़ादमुं देवमुदीक्ष्य मन्ये सन्न्यस्तदेहः स्वयमेव कामः ॥")

व्रीड़नं, क्ली, (व्रीड़ + ल्युट् ।) लज्जा । यथा,—
"अथ मन्दाक्षमन्दास्यं लज्जा लज्जा च त्रपा ।
व्रीड़ो व्रीड़ा व्रीड़नञ्च लज्जापर्य्याय ईरितः ॥"
इति शब्दरत्नावली ।

व्रीड़ा, स्त्री, (व्रीड़ + "गुरोश्च हलः ।" ३ । ३ । १०३ । इत्यः । टाप् ।) लज्जा । इत्यमरः ॥ (यथा आर्य्यासप्तशत्याम् । ३५७ ।
"प्रातरुपागत्य मृषा वदतः सखि नास्य विद्यते व्रीड़ा ।
मुखलग्नयापि योऽयं न लज्जते दग्धकालिकया ॥")

व्रीस, कि वधे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-सक०-सेट् ।) कि, व्रीसयति व्रीसति । इति दुर्गादासः ॥

व्रीहिः, पुं, (वर्द्धते वृद्धिं गच्छतीति । वृह वृद्धौ + "इगुपधात् कित् ।" उणा० ४ । ११९ । इति इन् । पृषोदरादित्वात् साधुः ।) धान्यमात्रम् । आशुधान्यम् । इत्यमरः ॥ अस्य नामान्तरनामगुणाश्च यथा,—
"धान्यं भोज्यञ्च भोगार्हमन्नाद्यं जीवसाधनम् ।
तच्च तावत्त्रिधा ज्ञेयं शूकशिम्बीद्वयात्मकम् ।
व्रीह्यादिकं यदि च शूकसमन्वितं स्यात्
तत् शूकधान्यमवदन्नमकुष्टकादि ।
शिम्बीनिगूढ़मिति तत्प्रवदन्ति शिम्बीधान्यं तथोक्तवतया बहुधान्यमन्यत् ।
तत्र त्रिदोषशमनं लघु शूकधान्यं तेजोबलातिशयवीर्य्यविवर्द्धनानि ।
शिम्बीभवं गुरु हिमञ्च विबन्धकारि वातावहञ्च ह्रियदं बहुधान्यमत्र ॥

देशे देशे शूकधान्येषु संज्ञा
ज्ञातुं शक्या नैव तद्दृष्टिवत्ता ।
ख्याता देशा येषु भोगोपभोगा-
स्तात्संज्ञाभिर्व्याक्रियन्ते क्रियन्ते ॥
...थः कलमा षष्टा व्रीहिश्रेष्ठा नृपप्रियाः ।
...तमाश्च विज्ञेयाः केदाराः सुकुमारकाः ॥
...राजान्नहरिकसितेतररक्तसुक-
...शालामन्यतिरियादिकशालिसंज्ञाः ।
व्रीहिस्त्वयेति दशधा भुवि शायनाः स्यु-
...तेषां क्रमेण गुणनामगणं ब्रवीमि ॥
...ईशौरो मधुरश्शिशिरः पित्तहारी कषायः
...ष्णो रुच्यः क्रिमिकफहरस्तापरक्तापहश्च ।
...दं इति श्रमशमनतदीर्य्यवृद्धिं विधत्ते
...श्चोऽन्नं जनयति मुदं वातकृन्नेषकोऽन्यः ॥”
इति राजनिर्घण्टः ॥
...पि च ।
...र्षिकाः काञ्चिताः शुक्ला व्रीहयश्चिर-
पाकिनः ।
...व्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
...तमुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ।
...व्रीहिः स विज्ञेयो यत्कृष्णातुषतण्डुलाः ॥
...टन पाटलापुष्पवर्णको व्रीहिरुच्यते ।
...कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
...तमुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
...शावर्णमुखं तस्य ज्ञेयो जतुमुखस्तु सः ॥
...हयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।
...ल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः ।
...व्रीहिर्व्वरस्तेषां तस्मादल्पगुणाः परे ॥”
इति भावप्रकाशः ॥
...स्य यज्ञीयत्वं यथा,—
...यज्ञार्थं तनु भूतानां भक्ष्यमित्येष वै श्रुतिः ।
...स्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ॥
...ते पञ्च महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ।
...जनानां हितार्थाय इतरेषां च तन्मुखाः ॥
...रेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।
...ं कृत्वा नरो भुक्त्वासाद्धरिन्नि ! विशुध्यति ॥
...यथा व्रीहयोऽप्येते एकैके न्यगपश्चिमाः ।
...था दारुभोक्तृणां महामांसं तु तत्
स्मृतम् ॥”
इति वाराहे आदित्यदृष्टान्ताध्यायः ॥
...प्रियैर्यथा । मनुः ।

“तिलैर्व्रीहियवैर्मांसैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥”
व्रीहिः शरत्पक्वधान्यम् । याज्ञवल्क्यः ।
“हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः ॥”
हविष्यान्नेन शालिव्रीह्यन्नेन । इति । अमा-
वास्याष्टकास्त्रोऽष्टका माघी प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयो-
दशी व्रीहियवपाकौ च ।
“एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥”
इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहि-
यवोभयप्राप्तिविषयकत्वेन विधायकं श्यामादि-
धान्यव्युदासाय । शालिधान्यस्य तु प्राप्तिः ।
“शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥”
इति छन्दोगपरिशिष्टे व्रीहिप्राप्त्या नवश्राद्धेऽष्टौ-
शालिविधानात् यज्ञतुल्यन्यायात् श्राद्धेऽपि तथा
कल्पनात् । इति च श्राद्धतत्त्वम् ॥ * ॥ नवान्न-
श्राद्धकालो यथा । विष्णुः । अमावस्यास्तिस्रो-
ऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्द्ध्वं कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
“एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन ॥”
इति मलमासतत्त्वम् ॥
तेन यागकरणं यथा,—
व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते ॥ तत्र
“व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः ।
अप्रतीतयवाप्रामाण्यकल्पनम् ।” इत्येकादशी-
तत्त्वम् ॥ * ॥ व्रीह्यप्राप्तौ शालिधान्येन कर्म्म-
करणं यथा,—
“यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥”
इति तिथ्यादितत्त्वम् ॥

व्रीहिकः, त्रि, ( व्रीहिरस्यास्तीति । व्रीहि+
“व्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति ठन् । )
धान्यविशिष्टः । इति सिद्धान्तकौमुदी ॥

व्रीहिकाञ्चनः, पुं, ( व्रीहिः काञ्चनमिव । अभि-
धानात् पुंस्त्वम् । ) मसूरः । इति त्रिकाण्डशेषः ॥
व्रीहिपर्णी, स्त्री, ( व्रीहेः पर्णमिव पर्णमस्याः ।
ङीष् । ) शालपर्णी । इति राजनिर्घण्टः ॥
व्रीहिभेदः, पुं, ( व्रीहेर्भेदः । ) धान्यविशेषः ।
चिना इति ख्यातः । तत्पर्य्यायः । अणुः २ ।
इत्यमरः ॥
व्रीहिमयः, पुं, (व्रीहेः पुरोडाशः । व्रीहि+“व्रीहेः
पुरोडाशे ।” ४ । ३ । १४८ । इति मयट् । )
व्रीहिनिर्म्मितपुरोडाशः । इति सिद्धान्तकौमुदी ॥
( व्रीह्यात्मके, त्रि । यथा, महाभारते । १३ ।
११५ । ५६ ।
“श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥”)
व्रीहिराजकः, पुं, (व्रीहीणां राजा । टच् समासे ।
ततः कन् । ) कङ्गुधान्यम् । चीनकधान्यम् ।
इति मेदिनी ॥
व्रीहिश्रेष्ठः, पुं, ( व्रीहिषु श्रेष्ठः ) शालिधान्यम् ।
इति राजनिर्घण्टः ॥
व्रीही, [ न् ] त्रि, (व्रीहिरस्यास्तीति । व्रीहि+
“व्रीह्यादिभ्यश्च ।” ५ । २ । ११६ इति इनिः । )
व्रीहियुक्तक्षेत्रादि । इति सिद्धान्तकौमुदी ॥
व्रीह्यगारं, क्ली, (व्रीहीणामगारम् । ) धान्यगृहम् ।
तत्पर्य्यायः । कुसूलः २ । इति त्रिकाण्डशेषः ॥
व्रुड, श संवृतिसंहत्योः । मज्जे । इति कविकल्प-
द्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-अकच-सेट् । )
रेफयुक्तः । श, व्रुडति अव्रुडीत् वुव्रोड ।
मज्जो मज्जनम् । इति दुर्गादासः ॥
व्रूस, कि वधे । इति कविकल्पद्रुमः ॥ ( चुरा०-पक्षे
भ्वा०-सक०-सेट् । ) रेफयुक्तो दीर्घो । कि,
व्रूसयति व्रूसति । इति दुर्गादासः ॥
व्रैहः, त्रि, ( व्रीहेरवयवो विकारो वा । व्रीहि+
“बिल्वादिभ्योऽण् ।” ४ । ३ । १३६ । इत्यण् । )
व्रीहिनिर्म्मितः । इति सिद्धान्तकौमुदी ॥
व्रैहेयः, त्रि, ( व्रीहीणां भवनं क्षेत्रम् । वीहि+
“व्रीहिशाल्योर्ढक् ।” ५ । २ । २ । इति ढक् । )
आशुधान्योपयुक्तभूम्यादिः । इत्यमरः ॥
व्ली, ग शि गतिवृत्योः । इति कविकल्पद्रुमः ॥
( क्र्या०-प्या०-पर०-सक०-अनिट् । ) अन्तःस्थ-
तृतीयोपधः । शि, व्लिनाति । व्लीनः व्लीनिः ।
इति दुर्गादासः ॥

# शब्दकल्पद्रुमः।

अर्थात्

एतद्देशस्थसमस्तकोषाशेषशास्त्रस्थ हलन्ताकारादिवर्णक्रमविन्यस्तशब्द-तल्लिङ्ग-नानार्थ-पर्याय-प्रमाण-प्रयोग-धातु-तदनुबन्धाभिधेय-सहित-तत्तच्छब्दप्रसङ्गोत्थित-वेद-वेदाङ्ग-वेदान्त-न्याय-पुराणेतिहास-सङ्गीत-शिल्प-सूपकारशास्त्र-ज्योतिष-तन्त्राख्यान-काव्यालङ्कार-छन्दःप्रभृति-नाम-लक्षणोदाहरण-द्रव्यगुण-रोगनिदानौषध-स्मृत्युक्तव्यवस्थादिसंयुक्त-सर्व्वदर्शनमतानुसारि-संस्कृताभिधानग्रन्थः।

स्यार-राजा-राधाकान्तदेव-बाहादुरेण

विरचितः।

पाणिनिमतानुसारि-प्रत्येकशब्दव्युत्पत्ति-मूलग्रन्थातिरिक्तबङ्गलशब्दार्थ-प्रमाण-प्रयोग-पर्याय-धातुपदोदाहरणादिभिः

नूतनसङ्कलितबङ्गलशब्द-तदर्थ-तत्प्रमाण-प्रयोगादिसहित-

सुप्रशस्तपरिशिष्टेन च सार्द्धम्

श्रीवरदाप्रसादवसुना तदनुजेन श्रीहरिचरणवसुना च

अशेषशास्त्रविशारदकोविदवृन्दसाहाय्येन संपरिवर्द्धितः। नागराक्षरैः प्रकाशितश्च।

## पञ्चमः काण्डः।

व्यञ्जनवर्णाः। श—ह।

कलिकाता-राजधान्यां

रामनारायण-यन्त्रे मुद्रितः। ७१ नं० पाथुरियाघाट-ष्ट्रीट्-स्थितभवनात् प्रकाशितश्च। शकाब्दाः १८१

PRINTED BY K. P. BASU, RAMNARAYAN PRESS; AND CONSIDERABLY IMPROVED, CAREFULLY REVISED AND PUBLISHED BY BARADA PRASAD BASU, AND HARI CHARAN BASU. 71, PATHURIAGHATA STREET. CALCUTTA:

To be had at the Sabdakalpadruma Office, No. 71. Pathuriaghata Street, Calcutta: and at the Baptist Mission Press, No. 24. Lower Circular Road. Calcutta: Price for Subscribers in India, Re. 1. and Countries out of India 3s. for each number.

# शब्दकल्पद्रुमः ।

## पञ्चममकाण्डम् ।



…तालव्यशकारः । स तु शवर्गीयप्रथमवर्णः ।
…त्रिंशद्वर्णश्च । अस्योच्चारणस्थानं तालु ।
इति तन्त्रव्याकरणे ॥ ( तथा च शिक्षायाम् ।
१७ ।
"…कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजावुपू ॥")
…स्य स्वरूपं यथा,—
"…शकारं परमेशानि ! शृणु वर्णं शुचिस्मिते ! ।
…रक्तवर्णप्रभाकारं स्वयं परमकुण्डली ॥
…चतुर्वर्गप्रदं देवि ! शकारं ब्रह्मविग्रहम् ।
…पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ! ॥
…रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ।
…त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ॥"
इति कामधेनुतन्त्रम् ॥ * ॥
…वङ्गीयवर्णमालायाम् ) तल्लेखनप्रकारो यथा,
"…कुञ्चिता वामतो दक्षगता च गोकृतिस्त्वधः ।
…तदूर्द्धगता तालु वह्निचन्द्रदिवाकराः ।
…मात्रा भवानी विज्ञेया ध्यानमस्य प्रचक्षते ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
…वाचकानि यथा,—
"…शः शब्दश्च कामरूपी कामरूपो महामतिः ।
…श्वेतनामा कुमारोऽस्य श्रीकण्ठो वृषकेतनः ॥
…पद्मः शयनं शान्ता सुभगा विस्फुलिङ्गिनी ।
…वसुदेवो महाकालमीमहेन्द्रः कुलकौलिनी ॥
…हंसो वियद्वक्त्रं हृदनङ्गाङ्कुशः खलः ।
…आमोदः पुण्डरीकात्मा कान्तिः कल्याण-
वाचकः ॥"
…इति योगिनीतन्त्रे १मांशे ७पटले वर्णाभिधानम् ॥
…काव्यादावस्य [illegible]प्रयोगे सुखं फलम् । यथा,
…रत्नाकरटीकायाम् ।
"शः सुखं [illegible] वेदम् ॥"
…वस्तुबन्धविशेषः । [illegible] कविकल्पद्रुमः ।
…शी इत्यादि [illegible]"
[illegible] ॥ )
[illegible]
[illegible]



शं, [ म् ] व्य, कल्याणम् । (यथा, राजेन्द्रकर्ण-
पूरे । ५१ ।
"यः कीर्त्तौ भवतो वतो नृपगुणैर्यः शंतनुः
शन्तनुः ॥")
शुभम् । शास्त्रम् । इति शब्दरत्नावली ॥
शः, पुं, शिवः । शस्त्रम् । इति शब्दरत्नावली ॥
शंयुः, त्रि, (शं शुभमस्यास्तीति । शं + "कंशंभ्यां
बभयुस्तितुतयसः ।" ५ । २ । १३८ । इति
युस् । ) शुभान्वितः । इति त्रिकाण्डशेषः ॥
( यथा, भट्टिः । ४ । १८ ।
"कुर्व्वाणा पश्यतः शंयून् स्त्रियो दुःखानना ॥"
पुं, बृहस्पतिपुत्त्रोऽग्निविशेषः । यथा, महा-
भारते । ३ । २१८ । २ ।
"आहुतिष्वेव यस्याग्ने हविषाज्यं विधीयते ।
सोऽग्निर्बृहस्पतेः पुत्त्रः शंयुर्नाम महाव्रतः ॥")
शंवः, पुं, मुसलाग्रस्थलौहमण्डलकः । वज्रम् ।
इति धरणिः ॥
शंवः, त्रि, ( शमस्यास्तीति । शं + "कंशंभ्या-
मिति ।" ५ । २ । १३८ । इति वः । ) शुभा-
न्वितः । इति त्रिकाण्डशेषः ॥
शंवरं, क्ली, ( शं वृणोतीति । वृ + अच् । )
जलम् । इत्यमरः ॥
शंस, उ हिंसास्तुत्योः । इति कविकल्पद्रुमः ॥
( भ्वा०-पर०-सक०-सेट् । क्त्वावेट् । ) ताल-
व्यादिः । उ, शंसित्वा शस्त्वा । यः शंसति
सतामिति हलायुधः ॥ अनेकार्थत्वात् कथने-
ऽप्ययम् । यथा रघौ । शशंस वाचा पुनरुक्त-
येवेति । न मे श्रिया शंसति किञ्चिदी-
प्सितमित्यादि च । इति दुर्गादासः ॥
शंसा, स्त्री, ( शंस + अः । स्त्रियां टाप् । )
वाक्यम् । वाञ्छा । इति मेदिनी ॥ प्रशंसा ।
इति शब्दरत्नावली ॥
शंसितः, त्रि, ( शंस + [illegible] ) निश्चितः । इति
हलायुधः ॥ [illegible]
[illegible] ( यथा,



"श्राद्धयाश्च महात्मानः सोमपाः शंसित-
व्रताः ॥")
शंस्ता, [ ऋ ] पुं, ( शंस + "तृन्तृचौ शंसि-
क्षदादिभ्यः संज्ञायां चानिटौ ।" उणा० २ ।
९४ । इति तृच् । यद्वा, छन्दसि "प्रसितस्क-
भितस्तभितेति ।" ७ । २ । ३४ । इति
निपातनात् साधुः । ) स्तोता । होता । इति
संक्षिप्तसारोणादिवृत्तिः ॥ ( प्रशास्ता । यथा,
ऋग्वेदे । १ । १६२ । ५ ।
"होताध्वर्युरावया अग्निमिन्धो
ग्रावग्राभ उत शंस्ता सुविप्रः ॥"
"शंस्ता प्रशास्ता ।" इति तद्भाष्ये सायणः ॥)
शंस्थः, त्रि, (शं शुभे तिष्ठतीति । शम् + स्था +
"स्थः क च ।" ३।२।७७ । इति कः । ) शुभा-
न्वितः । शंपूर्व्वस्थाधातोः कप्रत्ययेन निष्पन्न-
मिदम् ॥
शंस्थाः, त्रि, ( शं + स्था + "स्थः क च ।" ३।२।
७७ । इति क्विप् । ) शुभान्वितः । शम्-
पूर्व्वस्थाधातोः क्विप्प्रत्ययेन निष्पन्नमेतत् ॥
शंस्यः, त्रि, (शंस + ण्यत् । "ईडवन्दवृशंसदुहां
ण्यतः ।" ६।१।२१४। इत्याद्युदात्तः ।) हिंस्यः ।
स्तुत्यः । शन्सधातोः ण्यत्प्रत्ययेन निष्पन्नमेतत् ॥
शक, इ ङ त्रासशङ्कयोः । इति कविकल्पद्रुमः ॥
( भ्वा०-आत्म०-त्रासे अक०-शङ्कायां सक०-
सेट् । ) त्रासो भयम् । शङ्का संशयारोपः । इ,
शङ्क्यते व्याघ्राज्जनेन । ङ, शङ्कते पुरुषत्वं
स्थाणौ । स्थाणुर्व्वा पुरुषो वा इति संशय-
मारोपयतीत्यर्थः । इति दुर्गादासः ॥
शक, न इर् ज शक्तौ । इति कविकल्पद्रुमः ॥
(स्वा०-पर०-अक०-सक०-च-वेट् ।) न, शक्नो-
त्ययमध्यासी विजेतुं य इति हलायुधः ।
इर्, अशकत् अशकीत् अशाक्षीत् । कश्चित्त्व-
नात्मनेपदित्वं च इच्छन्ति । ज, शकिष्यति
शक्यति । [illegible]पाठादायो न भवति । [illegible]
[illegible] । [illegible]
[illegible] । [illegible] ।

शक्तोऽस्य मन्युर्भवता विनेतुमिति रघु: । रज:-परिणामभेदो न शक्यते प्रत्याख्यातुमिति तत्त्व-कौमुद्यां वाचस्पतिमिश्र: । शक्या मखेनापि मुदोऽमराणामिति नैषधम् । इति दुर्गादास: ॥

शक,य अ शक्तौ । इति कविकल्पद्रुम: ॥ (दिवा० उभ०-सक०-सेट् ।) शक्तिर्दिवादिपक्षे क्षमा स्वादिपक्षे सामर्थ्यम् । य अ, शक्यति शक्यते दु:खं दीन: । इति दुर्गादास: ।

शक:, पुं, (शक + अच् ।) जातिभेद: । नृपभेद: । इति मेदिनी ॥ स च नृप: शकादित्य: इति शालिवाहन इति च नाम्ना ख्यात: । तस्य मरणदिनावधि वत्सरगणनाङ्क: शकाब्देति नाम्ना पञ्जिकायां लिख्यते । स च म्लेच्छ-जातिविशेष: । सत्ययुगे सगरराजेनास्य मस्त-कार्द्धं मुण्डयित्वा वेदबाह्यत्वमकारि । यथा,—

"तत: शकान् सयवनान् काम्बोजान् पारदां-स्तथा ।
पह्लवांश्चापि नि:शेषान् कर्त्तुं व्यवसितो नृप: ॥
ते वध्यमाना वीरेण सगरेण महौजसा ।
वशिष्ठं शरणं जग्मु: सूर्य्यवंशपुरोहितम् ॥
वशिष्ठ: शरणापन्नान् समये स्थाप्य तानृषि: ।
सगरं वारयामास तेभ्यो दत्त्वाभयं तदा ॥
सगरस्तां प्रतिज्ञान्तु निशम्य सुमहाबल: ।
धर्म्मं जघान तेषाञ्च वेशानन्यांश्चकार ह ॥
अर्द्धं शिर: शकानान्तु मुण्डयामास भूपति: ।
जवनानां शिर: सर्व्वं काम्बोजानामपि द्विज ॥
पारदा मुक्तकेशांस्तु पह्लवान् श्मश्रुधारिण: ।
नि:स्वाध्यायवषट्कारान् सर्व्वानेव चकार ह ॥"

इति पाद्मे स्वर्गखण्डे सगरोपाख्यानम् १५ अ: ॥ देशभेद: । इति विश्व: ॥ ( यथा, मात्स्ये । १२०।४५ ।

"तुषारान् वर्व्वरान् कारान् पह्लवान् पारदान् शकान् ।
एतान् जनपदान् मङ्क्षु प्लावयित्वोदधिं गता ॥")

शकट:, पुं, क्ली, ( शक्नोति भारं वोढुमिति । शक् + "शकादिभ्योऽटन् ।" उणा० ४।८१। इति अटन् । ) यानविशेष: । गाड़ी इति भाषा ॥ तत्पर्य्याय: । अन: २ । इत्यमर: ॥ अक्ष: ३ । इति शब्दरत्नावली ॥ विष्णुवध्यासुरविशेष: । द्विसहस्रपलपरिमाणम् । तत्पर्य्याय: । भार: २ आचित: ३ शाकटीन: ४ शलाट: ५ । इति हेमचन्द्र: ॥ उक्तञ्च ।

"शकट: शाकिनी गावो यानमस्कन्दनं वनम् ।
अनूप: पर्व्वतो राजा दुर्भिक्षे नव वृत्तय: ॥"

इति भरत: ॥

तिनिसवृक्ष: । इति राजनिर्घण्ट: ॥ ( व्यूह-विशेष: । यथा, मनु: । ७ । १८७ ।

"दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ॥"

शकटाकृतित्वात् रोहिणीनक्षत्रम् । यथा, बृहत्संहितायाम् । २४ । ३० ।

"रोहिणीशकटमध्यसंस्थिते
[illegible]

क्वापि यान्ति शिशुयाचितान्नना:
सूर्य्यतप्तपिठराम्बुपायिन: ॥" )

शकटहा, [ न् ] पुं, ( शकटं हन्तीति । हन् + क्विप् ।) श्रीकृष्ण: । इति हेमचन्द्र: ॥ (एतद्वि-वरणं भागवते १० स्कन्धे ७ अध्याये तथा हरिवंशे ६१ अध्याये च द्रष्टव्यम ॥ ) शकट-नाशके, त्रि ॥

शकटाह्वा, स्त्री, (शकटमिति आह्वा यस्या: ।) रोहिणीनक्षत्रम् । तस्या: पञ्चतारामयशकटा-कृतित्वात् ॥

शकलं, क्ली, (शक्नोतीति । शक् + "शकिशम्यो-र्नित् ।" उणा० १ । १११ । इति कल: । ) त्वक् । खण्डम् । ( यथा, रघु: । २ । ४६ ।

"अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखै: शकलानि कुर्व्वन् ॥" )

रागवस्तु । वल्कलम् । इति मेदिनी ॥ शल्कम् । आँश इति भाषा । इति शकलिन्शब्ददर्शनात् ॥

शकल:, पुं, क्ली, ( शक् + कल: । ) एकदेश: । ( यथा, मनु: । ६ । ८८ ।

"प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥")

खण्डम् । यथा,—

"भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेऽंशके ॥"

इत्यमर: ॥

( यथा, मनु: । १ । १३ ।

"ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्म्ममे ॥")

शकली, [न्] पुं, (शकलमस्यास्तीति । इनि: ।) मत्स्य: । इत्यमर: ॥

शकान्तक:, पुं, ( शकस्य म्लेच्छजातिविशेषस्य अन्तक: ।) विक्रमादित्यराज: । इति केचित् ॥

शकार:, पुं, राज्ञ: अनूढाया: स्त्रिया भ्राता । यथा, साहित्यदर्पणे ३ परिच्छेदे ॥

"मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्त: ।
सोऽयमनूढाभ्राता राज्ञ: श्याल: शकार इत्युक्त: ॥"

शकारि:, पुं, (शकस्य म्लेच्छजातिविशेषस्यारि: शत्रु: । ) विक्रमादित्यराज: । स तु उज्जयनी-देशाधिपति: । यथा,—

"साहसाङ्क: शकारि: स्याद्विक्रमादित्य इत्यपि ॥"

इति जटाधर: ॥

शकुनं, क्ली, (शक्नोति शुभाशुभं विज्ञातुमनेनेति । शक् + "शकेरुनोन्तोन्त्युनय: ।" उणा० ३।४९। इति उन: । ) शुभशंसिनिमित्तम् । इति मेदिनी ॥ सगुन इति हिन्दीभाषा । फललक्षणम् । इत्यजयपाल: ॥ * ॥ अथ शुभशकुनानि ।

"कीर्त्तनात् श्रवणतो विलोकनात्
स्पर्शनात् समधिकं समोत्तरम् ।
मङ्गलाय दधिचन्दनादिकं
स्यात् प्रवासभवनप्रवेशयो: ॥
दध्याज्यदूर्वा[illegible]पूर्णकुम्भा:
सिद्धार्थ[illegible]चन्दनानि ।
आदर्श[illegible]शङ्खमीनवत्सा-
[illegible]
गोमांसगोरोचनगव्यगौड़-
पुष्पा[illegible]राज्ञुधानि ।
ताम्बूल[illegible]नासनवर्द्धमान-
ध्वजातपत्रव्यजनाम्बराणि ॥
अम्भोजभृङ्गारसमृद्धवह्नि-
गजाजवाजि: कुशचामराणि ।
रत्नानि चामीकररूप्यताम्र-
वड़वाश्चौषधय: सुराश्च ॥
वनस्पतेर्नूतनशाकमेवं
माङ्गल्यपश्चाशदिदं प्रदिष्टम् ।
शुभेषु कार्य्येष्वशुभेषु चैव
कार्य्ये गतानां शुभदा: सदैव ॥
एतानि दृष्ट्वा शुभदर्शनानि
कुर्व्वन्ति हृष्ट: पथि दक्षिणेन ।
सकृद्विलोकादशुभावहानि
त्यक्तानि वामेन शुभा भवन्ति ॥
गान्धारषड्जाहृषभस्तथान्ये
स्वरेषु गम्भीरमनोरमा ये ।
वादित्रवेदध्वनिगीतनृत्य-
मित्यादिशस्तं किल यत्र रौद्रम्
आदाय रिक्तं कलसं जलार्थी
यदि व्रजेत् कोऽपि सहाध्वगेन ।
पूर्णं समादाय निवर्त्ततेऽसौ
यथा कृतार्थ: पथिकस्तथैव ॥ * ।
अङ्गारभस्मेन्धनरज्जुपङ्क-
पिण्याककार्पासतुषास्थिविष्ठा: ।
कृष्णान्यवस्करकृष्णधान्य-
पाषाणकेशा भुजगौषधानि ॥
तैलं गुड़ं चर्म्म वसा विभिन्नं
रिक्तञ्च भाण्डं लवणं तृणञ्च ।
तक्रार्गला शृङ्खलहस्तिवाता:
कार्य्ये क्वचित् श्रिंशदिमे न शस्ता ।
स्वपादयानस्खलनं नृपाणां
भङ्ग: क्वचिद्यानपलायनञ्च ।
द्वाराभिघाताध्वगशस्त्रपाता:
प्रस्थानविघ्नं कथयन्तु यातु: ॥
मार्ज्जारयुद्धारवदर्शनानि
कलि: कुटुम्बस्य परस्परञ्च ।
चित्तस्य कालुष्यकरञ्च सर्व्वं
गन्तु: प्रयाणप्रतिषेधनाय ॥
दृष्टे शवे रोदनशब्दहीने
महार्थसिद्धि: कथितोऽध्वमेषु ॥
गृहप्रवेशेषु शव: शवत्वं
रुजं सदीर्घामथवा ददाति ॥
गण्डूषमावर्जयतां नराणा-
मन्तर्गतं चेत् प्रविशत्यकस्मात् ।
भवेत् तदाभीप्सितसौख्यलाभो
य: कौतुकी तेन निरूप्यमेतत् ॥
उच्चारितं झटिति [illegible]
[illegible]
[illegible]
[illegible]

इति वसन्तराजशाकुने विचारिता शुभावहाः ॥
अथ नराङ्गितविचारः ।
"यथाभिधास्ये द्विपदेषु तावत्
प्रधानभावात् शकुनं नराणाम् ।
नैमित्तिकं यत् प्रतिभाष्य सर्व्वं
फलं शुभाशोभनयोर्ब्रवीति ॥
नरोऽभिरूपः सितवस्त्रमाल्यो
वाचं प्रशस्तां मधुरां च जल्पन् ।
एवंविधा योषिदपि प्रयाणे
प्रवेशकाले च करोति सिद्धिम् ॥*॥
वमद्‌विरेकी हतमानगर्व्वः
छिन्नाङ्गनग्नाञ्जनतैलदिग्धाः ।
रजस्वला गर्भवती रुदन्ती
मलान्वितोन्मत्तजराधवाश्च ॥
दीनो द्विषत्कृष्णविमुक्तकेशाः
क्रमेलकस्थाः खरसैरिभस्थाः
सन्न्यासिसाक्रन्दनपुंसकाद्या
दुःखावहाः सर्व्वसमीहितेषु ॥*॥
पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो
वेश्या कुमारी सुहृदः सुकेशाः ।
नार्य्यो नराश्चाश्ववृषाधिरूढ़ाः
शुभाय दृष्टाः शकुनोद्यमेषु ॥*॥
कृष्णाम्बराः कृष्णविलेपनाढ्याः
कृष्णां स्रजं मूर्ध्नि विधारयन्ती ।
दृष्टा सकोपा यदि कृष्णवर्णा
नारी नरैस्तद्विपदो भवन्ति ॥*॥
श्वेताम्बरा श्वेतविलेपनाढ्या
मालां सितां मूर्ध्नि विधारयन्ती ।
दृष्टा प्रहृष्टा यदि गौरवर्णा
नारी नरैः स्यात्तदभीष्टसिद्धिः ॥
धृतातपत्रः सुविशुद्धवासाः
पुष्पान्वितश्चन्दनचर्च्चिताङ्गः ।
निश्शावयुक्तः कृतभोजनो वा
विप्रः पठन् यच्छति सर्व्वसिद्धिम् ॥
अभ्युपगच्छति यस्य हि याने
स्त्रीपुरुषोऽप्यथवा फलहस्तः ।
सर्व्वसमीहितसिद्धिरवश्यं
तस्य नरस्य भवत्यचिरेण ॥"
इति वसन्तराजशाकुने नराङ्गितेङ्गित-
[illegible]म् ॥ * ॥
"गच्छेति पृष्टे पुरतस्तथैव
वामोहृशौ केनचिदुच्यमाना ।
सर्व्वाशिषश्चातिशयेन ताभ्य-
श्चित्तस्य तुष्टिर्विजयाय पुंसाम् ॥
सिद्धैर विरावा अपि छिन्द भिन्धि
चेत्यादयः शब्दशोभनानाम् ।
क यासि मा गच्छत चैवमाद्याः
प्रयोजनारम्भनिवारणार्थाः ॥
[illegible]
[illegible]
[illegible]
[illegible]

उच्चं भवेद्रोदनमग्रभागे
भयं भवेद्वह्निविभागभूते ।
नैर्ऋत्यकोणे रणमार्गरोधो
वायव्यकोणे रुदितं सदुःखम् ॥
मृत्युः सुतानां रुदितेन पृष्ठे
लाभो भवेत्तच्च निवर्त्तनेन ।
मृत्युस्तदाग्रे रुदितेन गन्तुः
सिद्धिं विधत्ते रुदितं रिपूणाम् ॥"
इति वसन्तराजशाकुने नराङ्गिते उपश्रुति-
प्रकरणम् ॥*॥ वकचक्रवाकटिट्टिभिकार-
ण्डवभासभारद्वाजमयूरकपिञ्जललावकगृध्रो
लूककपोतगोवत्सकुक्कुटकलविङ्कभारतीचास
खञ्जनकाकपिङ्गलारूपाणिशकुनानि घोटक-
हस्तिमहिषखरगोमहिष्यजमेषैड़कोष्ट्रकुच्छु
न्दरीमूषिकमार्जारवानरमृगवराहशशकलास-
नकुलवृश्चिकपिपीलिकापतङ्गकुक्कुरादिरूप-
शकुनानि च वसन्तराजशाकुने द्रष्टव्यानि ।
हस्तिशशकमृगालषट्पदशरभसर्परूपाणि
शकुनानि तत्तच्छब्दे द्रष्टव्यानि ॥
शकुनः, पुं, (शक + उनः ।) पक्षिमात्रम् । (यथा,
महाभारते । १ । ७२ । १० ॥
"तं वने विजने गर्भे सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् ॥")
पक्षिविशेषः । गृध्र इति ख्यातः । इति मेदिनी ॥
कश्यपपत्नीताम्रायाः श्येनगृध्रादयः पुत्राः ।
इति श्रीभागवतम् ॥ गृध्रस्याशुभफलं यथा,—
"वामेऽपसव्ये पुरतश्च पृष्ठे
युतं विभेदं मरणं क्षियश्च ।
गृध्रः स्थितः सन् कुरुते क्रमेण
शब्दोऽपसव्योऽस्य विपत्तिहेतुः ॥"
इति वसन्तराजशाकुनम् ॥
विप्रभेदः । इत्युणादिकोषः । तद्विवरणं भाग-
वते उक्तम् । गीतविशेषः । तत्तु उत्सवादिषु
मङ्गलार्थगेयम् । इत्यजयपालः ॥ शुभशंसी ।
इति शब्दरत्नावली ॥
शकुनज्ञा, स्त्री, (शकुनं जानातीति । ज्ञा + कः ।
स्त्रियामाप् । ) ज्येष्ठी । इति त्रिकाण्डशेषः ॥
शकुनज्ञातरि, त्रि ॥ (यथा, कथासरित्-
सागरे । ३१ । ५१ ।
"प्राच्चिणोप्याङ्गिचिह्नापि स्वसख्या शकुनज्ञया ।
स्वतन्त्रोऽभिनवारूढ़ो युवतीनां मनोभवः ॥")
शकुनिः, पुं, (शक्नोति उत्नेतुमात्मानमिति ।
शक + "शकेरुनोन्तोन्त्युनयः ।" उणा० ३।४८
इति उनिः ।) पक्षी । इत्यमरः ॥ (यथा,
मनुः । ५ । ११ ।
"क्रव्यादान् शकुनीन् सर्व्वांस्तथा ग्राम-
निवासिनः ।
अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्जयेत् ॥")
चिल्लपक्षी । इति हेमचन्द्रः ॥ सौबलः । स तु
कौरवमातुलः । (अयं हि दुर्य्योधनमन्त्री । द्यूते
पाण्डवान् [illegible] प्रेषयामास । अयं हि
[illegible]

भारते शल्यपर्व्वणि द्रष्टव्यम् ॥) ववादिकादश-
करणान्तर्गताष्टमकरणम् । इति मेदिनी ॥
तत्करणजातफलम् ।
"परजनधनहर्त्ता वञ्चकः क्रूरचेष्टः
करधृतकरवालो व्याहतस्वामिपक्षः ।
अतिशयपरदारासक्तचित्तः सरोषो
भवति शकुनिजन्मा मानवः शीघ्रकर्म्मा ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
दुःसहपुत्रः । यथा,—
"दुःसहस्याभवत् भार्य्या निर्म्माष्टिर्नामनामतः ।
जाता कलेस्तु पाप्मायां कृतौचण्डालदर्शनात् ॥
तयोरपत्यान्यभवन् जगद्व्यापीनि षोडश ।
अष्टौ कुमाराः कन्याश्च तथाष्टावतिभीषणाः ॥
दन्ताकृष्टिस्तथोक्तिश्च परिवर्त्तस्तथा परः ।
अङ्गधुक् शकुनिश्चैव गण्डप्रान्तरतिस्तथा ॥"
तस्य पञ्च पुत्रा यथा,—
"श्येनकाककपोतांश्च गृध्रोलूकौ च वै सुतान् ।
अवाप शकुनिः पञ्च जगृहुस्तान् सुरासुराः ॥
श्येनं जग्राह वै मृत्युः काकं कालो गृहीत-
वान् ।
उलूकं निर्ऋतिश्चापि जग्राहातिभयावहम् ॥
गृध्रं व्याधिस्तदीशोऽथ कपोतञ्च स्वयं यमः ।
एतेषामेव चैवोक्ताः कृताः पापोपपादने ॥
तस्मात् श्येनादयो यस्य निलीयन्ते शिरस्यथ ।
तेनात्मरक्षणायाशं शान्तिः कार्य्या द्विजोत्तम ॥
गेहे प्रसूतिरेतेषां तद्वनीड़निवेशनम् ।
न शस्तं वर्जयेद्गेहं कपोताक्रान्तमस्तकम् ॥
श्येनः कपोतो गृध्रो वा कौशिको वा गृहे
द्विजः ।
प्रविष्टः कथयन्त्यन्तं वसतां तत्र वेश्मनि ॥
ईदृक् परित्यजेद्गेहं शान्तिं कुर्य्याद्द्विजोत्तम ।
स्वप्नेऽपि हि कपोतस्य दर्शनं न प्रशस्यते ॥"
इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिनामा-
ध्यायः ॥*॥ विकुक्षिपुत्रः । तथा,—
"वैवस्वतमनोरासीदिक्ष्वाकुः पृथिवीपतिः ।
तस्य पुत्रशतं चासीद्विकुक्षिर्ज्येष्ठ उच्यते ॥
सोऽयोध्याधिपतिर्वीरस्तस्य पञ्चदश स्मृताः ।
शकुनिप्रमुखाः पुत्रा रक्षिता रोमहर्षिताः ॥"
इति वह्निपुराणे सगरोपाख्याननामाध्यायः ॥
शकुनिप्रपा, स्त्री, (शकुनीनां पक्षिणां पानार्थं या
प्रपा । ) पक्षिणः पानीयशाला । तत्पर्य्यायः ।
श्रीशः २ । इति हारावली ॥
शकुनी, स्त्री, श्यामापक्षी । इति राजनिर्घण्टः ॥
चटकी । इति केचित् ॥ (पक्षीरूपधारिणी
पूतना । यथा, महाभारते । ५ । १३० । ४५ ।
"अनेन हि हता बाल्ये पूतना शकुनी तथा ।"
तथा च हरिवंशे । ६२ । १—२ ।
"कस्यचित्त्वथ कालस्य शकुनीवेशधारिणी ।
धात्री कंसस्य भोजस्य पूतनेति परिश्रुता ॥
पूतना नाम शकुनी घोरा प्राणिभयङ्करी ।
आजगामार्द्धरात्रे तु पक्षौ क्रोधात् विधु-
न्वती ॥")

शकुनीश्वरः, पुं, (शकुनीनां पक्षिणामीश्वरः ।) गरुड़ः । इति धनञ्जयः ॥

शकुन्तः, पुं, (शक्नोति उत्पतितुमिति । शक+ "शकेरुनोन्तोन्त्युनयः ।" उणा° ३।४९ । इति उन्तः ।) पक्षी । इत्यमरः ॥ (यथा, महाभारते । १ । ७२ । ११ ।
"नैनां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥")
कीटभेदः । भासपक्षी । इति मेदिनी ॥

शकुन्तला, स्त्री (शकुन्तैः पक्षिभिर्लायते पाल्यते इति । ला+घञर्थे कः । स्त्रियामाप् ।) मेनकाप्सरःसु विश्वामित्रेण जनिता कन्या । सा कण्वमुनिना प्रतिपालिता । दुष्मन्तराजेन विवाहिता । अस्याः पुत्रो भरतः राजचक्रवर्त्ती । अस्या नामकारणं यथा,—
"निर्जने तु वने यस्मात् शकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततोमया ॥"
इति महाभारते ।१।७२।१५॥
अस्या विवरणं कालिदासकृताभिज्ञानशकुन्तलनाटके द्रष्टव्यम् । पाद्मे स्वर्गखण्डे प्रथमादिपञ्चाध्यायेषु महाभारते आदिपर्व्वणि ६९ अध्यायमारभ्य च ज्ञातव्यम् ॥

शकुन्तलात्मजः, पुं, (शकुन्तलाया आत्मजः पुत्रः ।) भरतराजः । यथा,—
"दौष्मन्तिर्भरतः सर्व्वदमः शकुन्तलात्मजः ॥"
इति हेमचन्द्रः ॥

शकुन्तिः, पुं, (शक्नोति उत्पतितुमिति । शक+ उन्तिः ।) पक्षिमात्रम् । इत्यमरः ॥ (यथा, ऋग्वेदे । २ । ४२ । ३ ।
"अवक्रन्द दक्षिणतो गृहाणां
सुमङ्गलो भद्रवादी शकुन्ते ! ॥")
भासपक्षी । इत्युणादिकोषः ॥

शकुलः, पुं, (शक्नोति गन्तुं वेगेनेति । शक+ "मदुगुरादयश्च ।" उणा० १ । ४२ । इति उरच् । रस्य लः ।) मत्स्यविशेषः । इत्यमरः ॥ शउल इति भाषा ॥ (यथा, महाभारते ।१२ । १३७ । ३ ।
"नातिगाधे जलाधारे सुहृदः शकुलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय ! बभूवुः सहचारिणः ॥")
अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् । ग्राहित्वम् । पित्तामजित्त्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥

शकुलगण्डः, पुं, (शकुलस्य गण्ड इव गण्डो यस्य ।) शालमत्स्यः । इति त्रिकाण्डशेषः ॥

शकुलाक्षकः, पुं, सितदूर्व्वा । इत्यमरः ॥

शकुलाक्षी, स्त्री, गण्डदूर्व्वा । इति राजनिर्घण्टः ॥

शकुलादनी, स्त्री, (शकुलानां अदनं यस्याः । ङीप् ।) कटम्भरा । इत्यमरः ॥ कट्की इति भाषा । कर्कटशृङ्गी । इति मेदिनी । कांचड़ा दाम इति भाषा ॥ मांसी । जिञ्जिणिका । जलपिप्पली । कटुफलः । इति विश्वः । शङ्खोदरा । इति राजनिर्घण्टः ॥

शकुलार्भकः, पुं, (शकुलस्य अर्भक इव ।) गड़कमत्स्यः । इत्यमरः ॥ (गडुइमाछ इति भाषा ॥)

शकुली, स्त्री, (शकुल+ङीष् ।) मत्स्यविशेषः । स्टगाल् इति भाषा । महाशकुल इति केचित् । अस्या आकारो गुणाश्च ।
"शकुली रोहिताकारा भूमौ प्रायश्चरत्यसौ ।
गुर्व्वी पाके च मधुरा भेदिका दोषकोपना ॥"
इति राजवल्लभः ॥
पुस्तकान्तरे शकली इति च पाठः ॥ (नदीविशेषः । यथा, मार्कण्डेये । ५७ । २३ ।
"सुमेरुजा शक्तिमती शकुली त्रिदिवा क्रमुः ।
स्कन्धपादप्रसूता वै तामाम्या वेगवाहिनी ॥")

शकृत्, क्ली, (शक्नोति सर्त्तुमिति । शक्+ "शकेर्ऋतिन् ।" उणा० ४ । ५८ । इति ऋतिन् ।) विष्ठा । इत्यमरः ॥ यथा, (भागवते । ३।३०।१९।
"स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥")

शकृत्करिः, पुं, स्त्री, (शकृत् करोतीति । शकृत्+कृ+ "स्तम्बशकृतोरिन् ।" ३।२।२४। इति इन् ।) वत्सः । इत्यमरः ॥ दन्त्यादिरिति विद्याविनोदः ॥

शकृत्कारः, त्रि, मलत्यागकारकः । शकृत् करोतीत्यर्थे शकृच्छब्दात् कृधातोः अण् (अण्) प्रत्ययेन निष्पन्नः ॥

शकृद्द्वारं, क्ली, (शकृतो द्वारम् ।) मलद्वारम् । तत्पर्य्यायः । अपानम् २ पायुः ३ गुदम् ४ च्युतिः ५ अधोमर्म्म ६ त्रिवलीकः ७ वली ८ । इति हेमचन्द्रः ॥

शक्करः, पुं, वृषः । इति हेमचन्द्रः ॥

शक्करिः, पुं, वृषः । इति त्रिकाण्डशेषः ॥

शक्करी, स्त्री, छन्दोभेदः । नदीभेदः । मेखला । इति मेदिनी ॥ सा च समवृत्तषड्विंशतिच्छन्दोऽन्तर्गतचतुर्द्दशच्छन्दः । यथा,—
"उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्व्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्व्वा स्यादष्ट्यत्यष्टी तथा मता ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चापि तथा चैवातिसत्कृतिः ॥
इत्याख्याः समवृत्तानां छन्दसां क्रमशः कृताः ॥"
तत्र चतुर्दशाक्षरपादसमच्छन्दांसि सन्ति । तेषां नामानि गणाश्च यथा ।
मो गो गो नौ मः शरनवभिरसंबाधा । १ ।
ज्ञेयं वसन्ततिलकं तभजा जगौ गः । २ ।
ननरसलघुगैः स्वरैरपराजिता । ३ ।
ननभनलगिति प्रहरणकलिका । ४ ।
मस्तो नो मो मौ यदि गदिता वासन्तीयम् ।५।
द्विःसप्त छिदि लोलाम्सौ म्भौ गौ चरणे चेत् ।६।
स्वरभिदि यदि नौ तौ च नान्दीमुखीयम् ।७।
इति छन्दोमञ्जरी ॥
एतेषामुदाहरणानि तत्तच्छब्दे द्रष्टव्यानि ॥

शक्तः, त्रि, (शक+क्तः ।) शक्तिविशिष्टः । समर्थः । [illegible]

इति हेमचन्द्रः ॥ (यथा, मनुः । ९ । १०४ ।
"भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा ।
न निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम् ॥")
प्रियंवदः । इति शब्दशब्दटीकायां स्वामी ॥

शक्तवः, पुं, भूम्नि, भ्रष्टयवादिचूर्णम् । छातु इति भाषा । यथा,—
"धाना भ्रष्टयवे भूम्नि स्त्रियां पुंभूम्नि शक्तवः ।
केचित्तु शक्तुरस्त्रीति वन्धुरा भूमनि स्त्रियाम् ॥"
इति जटाधरः ।
अस्य विवरणं शक्तुशब्दे द्रष्टव्यम् ॥

शक्तिः, स्त्री, ( शक+क्तिन् । ) कार्य्यजननसामर्थ्यम् । यथा,—
"या देवी सर्व्वभूतेषु शक्तिरूपेण संस्थिता ।"
इति देवीमाहात्म्यस्य टीकायां नागोजीभट्टः ।
शक्यते जेतुमनया । सा प्रभावोत्साहमन्त्रजभेदात्त्रिविधा । तत्र प्रभुत्वे साधकत्वात् कोषदण्डौ प्रभुशक्तिः १ । विक्रमेण स्वशक्त्या विस्तुरणमुत्साहशक्तिः २ । सन्ध्यादीनां सामादीनाञ्च यथावस्थानं मन्त्रशक्तिः ३ ॥ सामर्थ्यमात्रम् । तत्पर्य्यायः । द्रविणम् २ तरः ३ सहः ४ बलम् ५ शौर्य्यम् ६ स्थामः ७ शुष्मम् ८ पराक्रमः ९ प्राणः १० । इत्यमरः ॥ शुष्म ११ सहम् १२ । इति शब्दरत्नावली ॥ ऊर्ज्जः १३ । इति जटाधरः ॥ कासूः । सा तु शर्व्वलानामास्त्रम् । इति नामार्थे अमरभरतौ ॥ गौरी । इति मेदिनी ॥ लक्ष्मीः । इति शब्दमाला ॥ * ॥
त्रिशक्तयो यथा,—
"एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ।
एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता ।
एषैव कृष्णा तमसी रौद्री देवी प्रकीर्त्तिता ॥
परमात्मा यथा देवो एक एव त्रिधा स्थितः ।
प्रयोजनवशाच्छक्तिरेकैव त्रिविधाभवत् ॥"
इति वाराहे त्रिशक्तिमाहात्म्यनामाध्यायः ॥ * ॥
अपि च ।
"बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः ॥"
इति क्रियासारः ॥
अन्यच्च ।
"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति ॥"
इति गोरक्षसंहिता ॥ * ॥
अष्ट शक्तयो यथा,—
"इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी ।
कौमारी नारसिंही च वाराही विश्वमातृका ।
माहेश्वरी महामाया भैरवी भीमरूपिणी ।
[illegible]
[illegible]

शक्तिः

शक्तिः

नव शक्तयो यथा,—
"तत्र घटे चाहरन्ती मध्ये च भक्तिपूर्ब्बकम् ।
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा ॥
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ।
सर्व्वशक्तिस्वरूपाञ्च प्रधानां सर्वमङ्गलाम् ॥
नवशक्तीश्च संपूज्य घटे देवांश्च पूजयेत् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६१ अध्यायः ॥*॥
पञ्चाशद्विष्णुशक्तयो यथा,—
"कीर्त्तिः कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया ।
मेधा सहर्षा श्रद्धा स्याल्लज्जा लक्ष्मीः सरस्वती ॥
प्रीती रती रमा प्रोक्ताः क्रमेण स्वरशक्तयः ।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ॥
विरजा विजया विश्वा विनदा सुनदा स्मृतिः ।
ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मतिः क्षमा ॥
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा ॥
अमोघा विद्युता चेति शक्तयः सर्व्वकामदाः ।
एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः ॥
विद्युद्दामसमानाङ्ग्यः पङ्कजाभयबान्धवः ॥"*॥
पञ्चाशद्रुद्रशक्तयो यथा,—
"गुणोदरी स्याद्विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता ॥
सुदीर्घमुखी गोमुख्यौ दीर्घजिह्वा तथैव च ।
कुण्डोदर्य्यूर्द्ध्वकेश्यौ च तथा विकृतमुख्यपि ॥
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ।
सुश्रीमुखी चैव विद्यामुख्येताः स्वरशक्तयः ॥
महाकालीसरस्वत्यौ सर्व्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविद्या स्यान्मन्त्रसिद्धिस्ततः परम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ॥
रूपिणी चिन्विणी पश्चात् काकोदर्य्यपि पूतना ।
स्याद्भद्रकालीयोगिन्यौ शङ्खिनी गर्ज्जिनी तथा ॥
कालरात्रिश्च कुब्जिन्या कपर्द्दिन्यपि वज्रया ।
जया च सुमुखेश्वर्य्या रेवती माधवी ततः ॥
वारुणी वायवी प्रोक्ता पश्चाद्रक्षोविदारिणी ।
ततश्च सहजा लक्ष्मीर्व्यापिनी माययान्विता ॥
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः ॥
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ॥"
इति प्रपञ्चसारः ॥ * ॥
कुलशक्तयो यथा,—
"शक्तयः परमेशानि ! विदग्धाः सर्वयोषितः ।
नटी कापालिकी वेश्या मालिनी कुसुमालिनी ॥
चाण्डाली च कुलाली च रजकी नापिताङ्गना ।
योगिनी योगिनी शूद्रा ब्राह्मणी राजकन्यका ॥
गोपाङ्गना च देवेशि ! तथैव शङ्खकारिणी ।
एताः षड्विंशतिः कन्या देवानामपि दुर्लभाः ॥
दैवज्ञा कायस्था च तथा मांसापहारिणी ।
गौरा च [illegible] देवि तथा रसपकारिणी ॥
वेश्या [illegible] [illegible] कुसुमालिनी ॥
गौवरी [illegible] [illegible] [illegible]
[illegible]
वातवैद्याङ्गना देवि [illegible] चित्रिणा स्मृता ॥
गौवकन्या चिधा देवि तथा कोषाङ्गना प्रिया ।
पूर्व्वोक्ताभिः सहैकत्र चतुःषष्टिश्च शक्तयः ॥"
इति रेवतीतन्त्रे ३ पटलः ॥ * ॥
अपि च ।
"पञ्चाचारेण देवेशि ! कुलशक्तिं प्रपूजयेत् ।
नटी कापालिकी वेश्या रजकी नापिताङ्गना ॥
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ।
मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः ॥
विशेषवैदग्ध्ययुताः सर्व्वा एव कुलाङ्गनाः ।
रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी ।
पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्ध्रुवम् ॥"
इति गुप्तसाधनतन्त्रे १ पटलः ॥ * ॥
तस्याः प्रशंसा यथा ।
"शक्तिं विना महेशानि ! सदाहं शवरूपकः ।
शक्तियुक्तो यदा देवि ! शिवोऽहं सर्वकामदः ॥
शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् ।
सावित्रीसहितो ब्रह्मा सिद्धोऽभूद्गगनन्दिनि ॥
द्वारवत्यां कृष्णदेवः सिद्धोऽभूत् सत्यया सह ।
तथा कोचवधूसङ्गात्मम सिद्धिर्वरानने ॥
ईश्वरोऽहं महादेवि ! केवलं शक्तियोगतः ।
शक्तियोगेन देवेशि ! यदि सिद्धिर्न जायते ॥
तदैव परमेशानि मम वाक्यं वृथा भवेत् ।
यद्दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि ! ॥
सिन्धुरूपं महेशानि ! तज्जलं नात्र संशयः ।
स्त्रीयैष्टदेवीभावेन भोजयेत्ताञ्च यत्नतः ॥
शक्तिश्च कथ्यते देवि शृणुष्व सुरसुन्दरि ।
त्रयोदशाब्दादूर्द्ध्वं या पञ्चविंशतिवार्षिकी ॥
अप्रसूता विशेषेण पञ्चमेऽपि भवेत् प्रिये ।
सुन्दरी तु विशेषेण प्रसूता वाप्रसूतिका ॥
अवश्यं पञ्चमं कुर्य्यात् शक्तिमार्गे महेश्वरि ॥"
इति शक्तिकागमसर्व्वस्वम् ॥ * ॥
तस्या उत्पत्तिमाहात्म्यादि यथा,—
नारायण उवाच ।
"सह बुधा बुद्धिमन्तो न वक्तुमुचितं सुराः ।
सर्व्वं शक्तयात्मया विश्वे शक्तिमन्तो हि जीविनः ॥
ब्रह्मादितृणपर्य्यन्तं सर्व्वं प्राकृतिकं जगत् ।
सत्यं नित्यं विना मात्र मया शक्तिः प्रकाशिता ॥
आविर्भूता च सा मत्तः सृष्टौ देवी मदीच्छया ।
तिरोहिता च सा शेषे सृष्टिसंहरणे मयि ॥
सृष्टिकर्त्री च प्रकृतिः सर्व्वेषां जननी परा ।
मम तुल्या च मन्माया तेन नारायणी स्मृता ॥
सुचिरञ्च तपस्तप्तं शम्भुना ध्यायता च माम् ।
तेन तस्मै मया दत्ता तपसां फलरूपिणी ॥
व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च ।
स्वयं व्रतानां तपसां फलदात्री जनार्दने ॥
मायया मोहिताः सर्व्वे जिनस्या वास्तवं व्रतम् ।
साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः ॥
सुरेश्वरा यदंशाच ब्रह्मविष्णुमहेश्वराः ।
कलाः कलांशरूपाश्च जीविनश्च चराचराः ॥
यथा विना [illegible] [illegible] कर्त्तुं [illegible] ।
विना [illegible] [illegible] [illegible] [illegible] ।
विना शक्त्या तथाहञ्च स्वसृष्टिं कर्त्तुमक्षमः ।
शक्तिप्रधाना सृष्टिश्च सर्व्वदर्शनसम्मता ॥
अहमात्मा च निर्लिप्तोऽदृश्यः साक्षी च देहिनाम् ।
देहाः प्राकृतिकाः सर्व्वे नश्वराः पाञ्चभौतिकाः ॥
अहं नित्यशरीरी च भक्तानुग्रहविग्रहः ।
सर्व्वाधारा च प्रकृतिः सर्व्वात्माहं जगत्सु च ॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः ।
पञ्च प्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी ॥
शक्तयो निद्रादयश्चैताः सर्व्वाश्च प्रकृतेः कलाः ।
सा च शैलेन्द्रकन्येयमिति वेदनिरूपितम् ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे ७ अध्यायः ॥*॥
अपि च ।
"सा शक्तिः सृष्टिकाले च पञ्चधा चेश्वरेच्छया
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः ।
प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥
ऐश्वर्य्याधिष्ठातृदेवी सर्व्वमङ्गलकारिणी ।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥
बुद्धाधिष्ठातृदेवी या सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी ॥
रागाधिष्ठातृदेवी या शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती ॥
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ॥
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ।
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च ॥"
इति च ब्रह्मवैवर्त्ते गणेशखण्डे ४० अध्यायः ॥*॥
ब्रह्माणीशक्तुत्पत्तिर्यथा ।
"ततो ब्रह्मादयो देवा भयं जग्मुः सवासवाः ।
यदि स्यान्निर्जितो देवः क्षयः सर्व्वदिवौकसाम् ॥
एतस्मिन्नन्तरे शक्र ! ब्रह्मा चिन्तयते क्रियाः ।
स्त्रीरूपधारिणी भूत्वा सहायत्वं महेश्वरि ॥
क्षिप्रं कुरु स्वकार्य्यं त्वं एवं विश्वेश्वरि रणे ।
ततो द्योतितवान् शम्भुः स्वशक्तिं निरञ्जनाम् ॥
ब्रह्मरूपधरां किन्तु कमलाकारविग्रहाम् ।
हंसस्यन्दनमारूढ़ा स्वकीयायुधधारिणी ॥
तर्ज्जयन्ती महौजेन दानवानां भयङ्करी ।
तस्या घोराणि कर्म्माणि दृष्ट्वा स विस्मयं शिवः
का पुनः स्रष्टुः सुखं वा सदातिप्रतिपत्त्यजित् ।
तस्याः शक्तिं द्वितीयाञ्च स्मरामि अपराजिताम् ॥"
इति देवीपुराणे वज्रवधे ब्रह्माण्युत्पत्तिः ॥*॥
नन्दातीर्थे शक्तिमन्त्राविचारनिषेधो यथा ।
"योऽसावनादिमध्यान्तशिवशक्तिमयः परः ।
तस्यैव परमानन्दा सर्व्वकिल्बिषनाशिनी ॥
तस्मात्तस्य प्राप्नोति तपोयज्ञादिकं फलम् ।
मन्त्राणां देवशक्तीनां न विचारो वरानने ॥"
इति देवीपुराणे नन्दाकुण्डप्रवेशः प्रथमाध्यायः ॥ * ॥

प्रकृतिः । यथा,—
"प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा ।
एतानि तस्या नामानि पुरुषं या समाश्रिता ॥"
तस्या गुणानाह ।
"सत्त्वं रजस्तमश्चेति विज्ञेयाः प्रकृतेर्गुणाः ।"
इति भावप्रकाशः ॥ * ॥
शक्तिविषयकपुष्पाणि यथा,—
"अथ पुष्पं प्रवक्ष्यामि कर्म्मयोगे महेश्वरि ।
शृणुष्व परया भक्त्या यथोक्तं ब्रह्मणा पुरा ॥
कमले करवीरे च कुसुम्भे तुलसीद्वयम् ।
जात्यशोके केतकी च कुमारीचम्पकोत्पलम् ॥
कुन्दमन्दारपुन्नागपाटलानागचम्पकम् ।
आरग्वधं कर्णिकारं पावन्ती नवमल्लिका ॥
सौगन्धिकं सकोरण्टं पलाशाशोकसञ्ज्ञकाः ।
सिन्धुवारो ह्यपामार्गवापुलीकञ्च कामजम् ॥
व्याघ्रचेलं दमनकं मरुवकं ततः परम् ।
लवङ्गं जलकर्पूरं तगरञ्च जवा तथा ॥
शिवपुष्पं द्रोणपुष्पं कामराजं सुकेतकम् ।
अन्यानि वनपुष्पाणि जलजस्थलजानि च ।
गिरिजानि देशजानि नानापुष्पाण्यतः परम् ॥"
इति प्रपञ्चसारः ॥
शक्तिग्रहः, पुं, ( शक्तिं गृह्णातीति । शक्ति + ग्रह + "शक्तिलाङ्गलाङ्कुशेति ।" ३।२।९ । इत्यस्य वार्त्तिकोक्त्या अच् । ) शिवः । कार्त्तिकेयः । शक्तिं गृह्णाति यः इत्यर्थे शक्तिशब्दपूर्वकग्रह-धातोरल्प्रत्ययेन निष्पन्न इति केचित् ॥ (शक्तेः ग्रहो ग्रहणम् । ) शब्दशक्तिज्ञानम् । यथा ।
"अस्मात् शब्दात् अयमर्थो बोद्धव्य इतीश्वरेच्छा शक्तिरिति तार्किकाः । तज्ज्ञानन्तु व्याकरणादिभ्यः । अतएव ।
'शक्तिग्रहं व्याकरणोपमान-
कोषाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'
इति प्राञ्चः ।" इति दुर्गादासः ॥
शक्तिग्राहकः, पुं, व्याकरणोपमानादिः । शक्तिग्रहीता च । शक्तिं ग्राहयति गृह्णाति च इत्यर्थे अन्ताजन्तग्रहधातोर्णक ( ण्वुल् ) प्रत्ययेन निष्पन्नमेतत् ॥
शक्तिधरः, पुं, (धरतीति । धृ + अच् । शक्तेर्धरः ।) कार्त्तिकेयः । इत्यमरः ॥ (यथा, हरिवंशे । ७३।९
"बलेन वपुषा चैव बाल्येन चरितेन च ।
ख्यातो शक्तिधरस्तुल्यो न तु कश्चन मानुषः ॥")
शक्तिधारके, त्रि ॥ ( यथा, बृहत्संहितायाम् । ५८ । ४१ ।
"स्कन्दः कुमाररूपः शक्तिधरो बर्हिकेतुश्च ॥")
शक्तिपर्णः, पुं, सप्तपर्णवृक्षः । इति जटाधरः ॥
शक्तिपाणिः, पुं, ( शक्तिरस्त्रविशेषः पाणौ यस्य ।) कार्त्तिकेयः । इति हलायुधः ॥
शक्तिभृत्, पुं, ( शक्तिं बिभर्त्तीति । भृ + क्विप् । तुक् च । ) कार्त्तिकेयः । इति हेमचन्द्रः ॥
शक्त्यस्त्रधारके, त्रि ॥

शक्तिहेतिकः, त्रि, (शक्तिर्हेतिः प्रहरणं यस्य ।) शक्त्यस्त्रधारियोद्धा । तत्पर्य्यायः । शाक्तीकः २ । इत्यमरः । शक्त्यायुधधरः ३ । इति शब्दरत्नावली ॥
शक्तुः, पुं क्ली, (शक + बाहुलकात् तुन् ।) भर्जित-यवादिचूर्णम् । छातु इति भाषा । यथा,—
"धाना भ्रष्टयवे भूम्नि स्त्रियां पुं भूम्नि शक्तवः ।
केचित्तु शक्तुरस्त्रीति वक्तुरा भूमनि स्त्रियाम् ।"
इति जटाधरः ।
अस्य गुणाः ।
"यवानां शक्तवो रूक्षा लेखना वह्निवर्द्धनाः ।
वातलाः कफरोगघ्ना वातवर्च्चोऽनुलोमनाः ॥
धानासंज्ञास्तु तेऽतीव दुर्जरा लेखनाः स्मृताः ।
गुर्व्वी पिण्डीकृतात्यर्थं लघ्वी सैव विपर्य्ययात् ।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥"
इति राजवल्लभः ।
अथ शक्तवः ।
"धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि शक्तवः ।"
तत्र यवशक्तवः ।
"यवजाः शक्तवः शीता दीपना लघवः सराः ।
कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्त्तिताः ॥
ते पीता बलदा वृष्या वृंहणा भेदनास्तथा ।
तर्पणा मधुरा रुच्याः परिणामे बलावहाः ॥
कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः ।
प्रशस्ता घर्म्मदाहद्या व्यायामार्त्तशरीरिणाम् ॥
अथ चणकयवशक्तवः ।
"निस्तुषैश्चणकैर्भृष्टैस्तुर्य्यांशैश्च यवैः कृताः ।
शक्तवः शर्करासर्पिःयुक्ता ग्रीष्मेऽतिपूजिताः ॥"
अथ शालिशक्तवः ।
"शक्तवः शालिसंभूता वह्निदा लघवो हिमाः ।
मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदाः ॥
न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् ।
न जलान्तरितान् न द्विः शक्तूनद्यान्न केवलान् ॥
पृथक्पानं पुनर्दानं सामिषं पयसा निशि ।
दन्तच्छेदनमुष्णञ्च सप्त शक्तुषु वर्ज्जयेत् ॥"
इति भावप्रकाशः ।
जन्मतिथौ तद्भक्षणफलम् । ज्योतिषे ।
"शक्तून् खादति यस्तु तस्य रिपवो नाशं
प्रयान्ति ध्रुवं
भुङ्क्ते यस्तु निरामिषं स हि भवेत् जन्मान्तरे
पण्डितः ।"
इति तिथ्यादितत्त्वम् ।
मेषसंक्रान्त्यां तद्दानविधिर्यथा । स्मृतिः ।
"मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी ।"
महार्णवे ।
"यो ददाति हि मेषादौ शक्तूनम्बुघटान्वितान्
पितॄनुद्दिश्य विप्रेभ्यः सर्व्वपापैः प्रमुच्यते ।
विप्रेभ्यः पादुके छत्रं पितृभ्यो विषुवे शुभम् ॥"
इति तिथ्यादितत्त्वम् ।
चातुर्मास्यव्रते प्रातःस्नानस्य कृतशक्तवो दक्षिणा यथा । नारदीयम् ।
"नियमान्ते हरिर्यस्मिन् [illegible]"
नियमान्ते [illegible] । इति [illegible] ॥

शक्तुकः पुं, विषभेदः । [illegible]
"यद्दर्शने शक्तुकेनैव पूर्व्व[illegible]
इति [illegible]
शक्तुफला, स्त्री. शमीवृक्षः । इत्यमरः ॥
शक्तुफली स्त्री, शमीवृक्षः । इति शब्दरत्नावली ॥
शक्तुयवः, पुं, (शक्तो रवः ।) ललाटादौ कुत्सित-ग्रीवासूत्पन्नो घर्म्मः दीर्घनिश्वासश्च । यथा,—
"कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते ।
शक्तुयवं तं विजानीयाद्दीर्घतीश्वासमेव च ॥"
इति राजवल्लभः
शक्तिः पुं, वशिष्ठमुनेर्ज्येष्ठपुत्रः । इति पुराणम् ( यथा, महाभारते । १ । १७७ । ६ ।
"अपश्यद्दर्जितः संख्ये मुनिं प्रतिमुखागतम् ।
शक्तिं नाम महाभागं वशिष्ठकुलवर्द्धनम् ।
ज्येष्ठं पुत्रं पुत्रशतात् वशिष्ठस्य महात्मनः ॥
अयं हि इक्ष्वाकुवंशीयं कल्माषपादनृपतिं अशपत् । स च नृपती राक्षसो भूत्वा एन-मभक्षयत् । एतद्वृत्तान्तस्तु महाभारते १।१७ अध्याये द्रष्टव्यः ॥ )
शक्रः, त्रि, प्रियंवदः । इत्यमरटीकायां भरतः ।
शक्तुः, त्रि, प्रियंवदः । इत्यमरः ॥
शक्मा, [न्]पुं, (शक + "अशिशकिभ्यां छन्दसि उणा० ४ । १४६ । इति मनिन् । ) शक्तिः शकधातोरौणादिकमनिन्प्रत्ययेननिष्पन्नम् इ सिद्धान्तकौमुदी ॥ ( इन्द्रः । इत्युज्ज्वलः । ४ । १४६ ॥ क्ली, शक्यतेऽनेनाभिमतं प्राप्तुं शक्नो-तीष्टं साधयितुं वा शक्यते कर्त्तुमिति वा शक + मनिन् । कर्म्म । इति निघण्टुः । २ । १ । यथा, ऋग्वेदे । ९ । ३४ । ३ ।
"दुहन्ति शक्मना पयः ॥"
"शक्मना कर्म्मणा ।" इति तद्भाष्ये सायणः ॥ )
शक्यः, त्रि, ( शक + "शकिसहोश्च ।" ३।१।९९ । इति यत् ) समर्थनीयः । (यथा, रघुः ।२।४९
"शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोध्नीः ॥")
शक्याश्रयः । ( यदा भावे यत् स्यात् तदा क्लीवलिङ्गः स्यात् । यथा, गीतायाम् ।१८।११
"नहि शक्यं देहभृता त्यक्तुं कर्म्माण्यशेषतः ।
तथाच रामायणे । २ । १३ । ५ ।
"तानि सर्व्वाणि संयन्तुं शक्यं राम जितेन्द्रियैः ।
पुं, वाच्योऽर्थः । यथा,—
"शक्योऽर्थोऽभिधया ज्ञेयः लक्ष्यो लक्षणया
मतः ।
व्यङ्ग्यो व्यञ्जनया ते स्युस्तिस्रः शब्दस्य शक्तयः ।
इत्यलङ्कारमालाम् ।
अन्यच्च ।
"शक्यं साह्यमनुचितस्तु भवेदुपमितो गुरुः ।"
इति [illegible]
अपि च । [illegible]
[illegible]
[illegible]
[illegible]

शक्तावच्छेदकं इति,(शक्यतायाः अवच्छेदकम्) शक्यांशे भासमानधर्मः। यथा,— "एवञ्च शाब्दधर्म्मस्य शक्यतावच्छेदकत्वं शरीरमेव।" इति शक्तिवादः॥

शक्रः, पुं,(शक्नोति दैत्यान् नाशयितुम्। शक+ "स्फायितञ्चीति।" उणा॰ २।१३। इति रक्।) इन्द्रः। इत्यमरः॥ (यथा, रघुः। ३। ३८।
"धनुर्भृतामग्रत एव रक्षिणां
जहार शक्रः किल गूढ़विग्रहः॥")
कुटजवृक्षः। अर्ज्जुनवृक्षः। इति मेदिनी॥ ज्येष्ठानक्षत्रम्। यथा,—
"शक्रो निरृतिस्तोयं विश्वविरिञ्चौ हरिर्वसु-
र्व्वरुणः।
अजपादोऽहिर्ब्रध्नः पूषा चेतीश्वरा भानाम्॥"
इति ज्योतिस्तत्त्वम्॥
चतुर्द्दशेन्द्रा यथा,—
"विश्वभुक् च विपश्चिच्च सुकीर्त्तिः शिविरेव च।
विभुर्मनोजवश्चैव तथौजस्वी वहिस्तथा॥
अद्भुतश्च तथा शान्तिस्तथा दिवचरो वृषः।
ऋतधामा दिवः स्वामी शुचिः शक्राश्चतुर्द्दश॥"*
ब्राह्मदिनमासाब्देषु इन्द्राणां नाशसंख्या यथा।
"ब्राह्मे दिने वै नश्यन्ति चतुर्द्दश पुरन्दराः।
शतानि मासि चत्वारि विंशत्या सहितानि च।
अब्दे पञ्चसहस्राणि चत्वारिंशच्छतानि च॥"
इत्याद्ये वह्निपुराणे गणभेदनामाध्यायः॥*॥
इन्द्रत्वप्राप्तिकारणं यथा,—

इन्द्र उवाच।

"रमाकान्तभवत्प्रीत्यै कृतं क्रतुशतं पुरा।
तेन पुण्येन सम्प्राप्तं मया पौरन्दरं पदम्॥
इदानीं नूतनः कोऽपि जातो दिवि पुरन्दरः।
न तेन धर्म्मो विहितो न तेन क्रतवः कृताः।
मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत॥
इत्येवं वदतस्तस्य श्रुत्वा वाक्यं रमापतिः।
उन्मीलितस्मिताक्षोऽसावुवाच मधुरं वचः॥

श्रीभगवानुवाच।

देवादयो मनुष्यान्ता मम सेवापरायणाः।
मदयाजनरता लोका मद्भक्तिस्तुतिपाठकाः॥
मन्मूर्त्तिषु कृतध्याना मत्कथाश्रवणा इह।
मत्पादोदकनैवेद्यभोजिनोऽन्वहमेव ये॥
मन्नामकीर्त्तनपरा मम स्तुतिपरायणाः।
मन्मन्त्रजापका नित्यमनन्याश्रयसम्पदः॥
कं विधित्वं किमिन्द्रत्वं देवत्वमपरं किमु।
तेषामलभ्यं यत्किञ्चित् दुर्लभं नास्ति संसृतौ॥
किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः।
मन्नामैः चिन्तितैः स मम प्रीतिमान् सदा॥

इन्द्र उवाच।

भगवन् कर्म्मणा केन च त्वत्प्रीतिपरो भवेत्।
वदस्व महाबाहो प्रपन्नभयभञ्जन॥

श्रीभगवानुवाच।

[illegible] मम प्रीतिकरं परम्।
[illegible] पुरन्दर॥
[illegible]
तथा मत्याः तु संप्राप्तं तव साक्षात् त्वमुत्त-
मम्॥"
इति पाद्मोत्तरखण्डे ८६ अध्यायः॥
(समर्थे, त्रि। यथा, ऋग्वेदे। ४। १६। ६।
"विश्वानि शक्रो नर्य्याणि विद्वा-
नपो रिरेच सखिभिर्निकामैः॥"
"विद्वान् जानन् शक्रः समर्थ इन्द्रः।" इति तद्भाष्ये सायणः॥)

शक्रक्रीड़ाचलः, पुं, (शक्रस्य क्रीड़ाचलः क्रीड़ा-पर्व्वतः।) सुमेरुपर्वतः। इति हलायुधः॥

शक्रगोपः, पुं, इन्द्रगोपकीटः। इति जटाधरः॥ (यथा, हरिवंशे। ६६। ५।
"नववर्षावसिक्तानि शक्रगोपाकुलानि च।
नष्टदावाग्निमार्गाणि वनानि प्रचकाशिरे॥")

शक्रजः, पुं, (शक्राज्जायते इति। जन+डः।) काकः। इति त्रिकाण्डशेषः॥ इन्द्रजाते, त्रि॥

शक्रजातः, पुं, (शक्राज्जातः।) काकः। इति शब्दरत्नावली॥ इन्द्रजाते, त्रि॥

शक्रजित्, पुं, (शक्रं जितवानिति। जि+क्विप्।) रावणपुत्रः। इति त्रिकाण्डशेषः॥ (यथा, रघुः। १४। ८३।
"अपि प्रभुः सानुशयोऽधुना स्यात्
किमुत्सुकः शक्रजितोऽपि हन्ता॥")
इन्द्रजेतरि, त्रि,॥

शक्रद्रुमः,(शक्रस्य पुं द्रुमः।) देवदारुवृक्षः। इति भावप्रकाशः॥

शक्रधनुः, [स्] क्ली, (शक्रस्य धनुः।) इन्द्रधनुः। इत्यमरः॥ गण्डी इति रामधनुक इति च भाषा।
"इन्द्रायुधं शक्रधनुः कौशिकायुधमित्यपि।
ऐरावतं रोहितं स्यादवक्रं यदि तद्धनुः॥
इति शब्दरत्नावली।
(यथा, महाभारते। ५। २६। ११।
"यथाकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च विद्म किन्नु तत्॥")

शक्रध्वजः, पुं (शक्रस्य ध्वजः।) इन्द्रध्वजः। (यथा, आर्य्यासप्तशत्याम्। २६८।
"ते श्रेष्ठिनः क्व सम्प्रति शक्रध्वज! यैः कृत-
स्तवोच्छ्रायः।
ईषां वा मेढिं वाधुनातनास्त्वां विधित्सन्ति॥")
तद्विवरणं यथा,—

नृपवाहन उवाच।

"भगवन् श्रोतुमिच्छामि तस्य उत्थापनं यथा।
क्रियते दिन ऋक्षे च द्रव्यमन्त्रविधिं वद॥

अगस्त्य उवाच।

ब्रह्मणा कथितं शक्र बृहस्पतिसमीपतः।
यथा तथा प्रवक्ष्यामि विधिं केतोः समुच्छ्रये॥

बृहस्पतिरुवाच।

शुभाहे चाक्षे करणे मुहूर्त्ते शुभमङ्गले।
दैवज्ञः सूत्रधारश्च वनं गच्छेत् सहायवान्॥
देवीप्रतिष्ठाविहिता यामायां या प्रबोधिता।
[illegible]
उदुम्बरार्ज्जुनश्चैव पक्षेते शोभना वृक्षाः।
ध्वजार्थं वर्जयेद्वत्स देव उद्यानजान् द्रुमान्॥
कन्या मध्ये तु या यष्टोः करभागेन कल्पयेत्।
एकादशकरा वक्ष नव पञ्च करापरा॥
चरालतां क्रिमिचितां तथा पक्षिनिकेतनाम्।
वल्मीकपितृवनजां सुशुष्ककोटरान्तराम्॥
कुब्जाश्च घटसितास्तु तथा स्त्रीनामगर्हिताम्।
विद्युद्वज्रहताश्चैव दग्धाश्च परिवर्जयेत्॥
अलाभे चन्दनं चाम्रं शालशाकमयं तथा।
कर्त्तव्यं शक्रचिह्नार्थे न चान्यं वृक्षजं क्वचित्॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम्।
ततः संपूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा॥
नमो वृक्षपते वृक्ष त्वामर्च्चयति पार्थिवः।
ध्वजार्थं तत्त्वतो नाथ अन्यथा उपगम्यताम्॥
रात्रौ देयो बलिस्तत्र युगवृक्षे तथैव च।
वासवानां महावृक्षं ज्ञात्वा चान्यत्र गम्यताम्॥
ध्वजार्थं देवराजस्य न चान्तिस्तव अघ च।
पूजयित्वा ततो वृक्षं बलिं भूताय दापयेत्॥
प्रभाते छेदयेद्वृक्षं शुभस्वप्नादिदर्शनैः।
शुक्लाम्बरधरश्चैव समुद्रतरणं नदी॥
वृक्षान् नम्रान् शुभान् चीरानारोहेत् देवता-
लयम्।
देवो द्विजस्तथा साधुलिङ्गश्च हरेरपि॥
प्रतिमा पूजिता स्वप्ने क्षिप्रं सिद्धिफलप्रदा।
मद्यमांसदधिलाभं रुधिरं मृतरोदनम्॥
अगम्यागमनं दृष्ट्वा आशु सिद्धिफलप्रदम्।
द्रुमांस्तिलं धनं धान्यं शकुनाशं यथा शुभम्॥
फलं पुष्पं सिता दूर्व्वा स्वप्ने लब्धा जयावहाः।
शङ्खगावस्तथा दन्तिलाभा राज्यप्रदायकाः॥
गौः सवत्सा नवसुता दृष्टा पुत्रफलप्रदा।
पङ्कस्योत्तरणं कूपे व्याधिमोक्षकरं चिरात्॥
एवं स्वप्नान् शुभान् दृष्ट्वा तथा छिन्देत पाद-
पम्।
उदङ्मुखः प्राङ्मुखो वा मधुवच्चालपर्शुना॥
पूर्व्वोत्तरं च पतनं शस्तोऽशब्दोऽव्रणः शुभः।
अलग्नपादपे चाग्ने अन्यथा तु परित्यजेत्॥
अष्टाङ्गुलं त्यजेत् मूले अग्रे तन्तु जले क्षिपेत्।
तथा तमानयेद्वत्स शकटेन वृषैरपि॥
युवाभिर्बलसम्पन्नैर्नेयं तत्पुरतः परम्।
नीयमाना यदा यष्टी समा वा चतुरस्रका॥
हृत्वा वा भङ्गमाधत्ते राज्ञः पुत्रं पुरोहितम्।
आरभङ्गे बलं भिन्द्याद्राज्यनाशं भयं तथा॥
अर्थस्य अक्षभङ्गे न शान्तिस्तत्र तु कारयेत्।
इन्द्रध्वजसमन्त्रेण जातदेवसमापि वा॥
तथा नीत्वा शुभे लग्ने पुरस्तादुपवेशयेत्।
द्वारशोभां पताकाञ्च गृहे हट्टे च कारयेत्॥
यदा पटध्वनादाच वेश्याशङ्खद्विजातयः।
सह कैर्मङ्गलद्रव्यैः ता नेया यत्र उच्छ्रयेत्॥
तत्रकार्याश्च कर्म्मार्चनिर्म्मितैस्तान्तु वेष्टयेत्।
वक्रैरत्नकरीमौलैः शुभैः शक्रैर्यथाक्रमम्॥
नन्दोपनन्दसंज्ञाश्च कुमार्य्यः प्रथमाशुभाः।
[illegible]काः शीघ्रांशवर्णाश्च ताः॥

पश्चिमे चैव अश्विनौ तथार्यमा देवतेदंष्ट्रका: ।
अजपरिमाणार्थं सुपरिधि: प्रथमं पिटम् ॥
षोडशांशविहीनानि कुर्य्याच्छेषाणि बुद्धिमान् ।
रसनां विविधवर्णां प्रथमां दद्यात् स्वयम्भू: ॥
सुरक्तां चतुरस्राश्च विश्वकर्म्मा द्वितीयत: ।
अष्टास्रान्तु स्वयं शक्रो नीलरक्तां प्रदापयेत् ॥
स्वर्णं यमेन दत्तञ्च वरुणेन सर्वरत्नकम् ।
मञ्जिष्ठाजलदाकारं वासुदेवो मसूरकम् ॥
नीलवर्णञ्च तं दद्यात् स्कन्दो बहुविचित्रितम् ।
वृत्तन्तु वह्निर्दद्यात् सुवर्णाभं तथाष्टमम् ॥
वैदूर्य्यसदृशमिन्द्रो षष्ठेयं दापयेद्बुध: ।
चक्राकृतिन्तु सूर्य्यो विश्वेदेवा: पद्मनिभम् ॥
ऋषयो नियमं दद्युर्नीलं नीलोत्पलाभासम् ।
गुरुश्च शक्रश्च ततो विशालं मूर्द्धनो न्यस्तम् ॥
यष्टिर्विचित्राणि बहुमातृभि: स्वानि रूपाणि ।
यथोक्तेनैव दत्तन्तु केतोस्तत्तस्य भूषणम् ॥
तदेव तं विजानीयादुयन्त्रादिभिस्तमुच्छ्रयेत् ।
प्रवर्षं प्रविशमाना भूमिं यष्टिर्हन्ति राष्ट्रम् ॥
बालानां तालशब्देन देशविघातं समाचष्टे ।
नृपवधकरा विशीर्णा शुभावहा सर्व्वसाम्राज्य ॥
शम्भुसूर्य्ययमशक्रसोमधनदवारुणै: ।
बलीयसपिमन्त्राश्च होतव्या दधि चाक्षता: ॥
शक्रस्कन्दगुरुरुद्रमप्सरादि प्रपाठयेत् ।
हुत्वा तु विधिवद्वह्निज्वालां लक्षेत बुद्धिमान् ॥
स्तेजा: सुमनो दीप्त: संहतो रुचिरप्रभ: ।
रथाशोकसमाकारो रथनिर्घोषसम: शुभ: ॥
शङ्खदुन्दुभिनिर्घोषो नादा: शस्तास्तु पावके ।
तत: सकारणोच्छ्रदयात् पताकानि समुच्छ्रये ॥
अन्याश्च विविधा: शोभा: शक्रकेतुसमुच्छ्रये ।
प्रौष्ठपदे तु अष्टम्यां शुक्लायां शोभने ऋक्षे ॥
आश्विने वाथ शुक्लायां श्रवणेनाथ उच्छ्रयेत् ।
पौरजनसमवृन्दै: पटभेरीनिनादितम् ॥
वितानध्वजशोभाढ्यं पताकाभि: समुज्ज्वलम् ।
विष्णौशशक्रमन्त्रेण सिंहरथाकृतेन च ॥
दृढमातृकारज्ज्वर्थं शुभतोरणमाकुलम् ।
अविलम्बितमुत्थानमभग्नपिठकं समम् ॥
न द्रुतं वा समुत्थाप्य केतुं वासवजं विभो ।
उच्छ्रितं रचयेत्तत्र: काकोलूककपोतयो: ॥
न समुत्थापनं दद्यादन्येषामपि पक्षिणाम् ।
यन्त्रोद्भवेन तं कुर्य्यात् सुखं केतोर्यथाविधि ॥
तथा सुरक्षितं पूज्यं सुखयन्त्रसुयन्त्रितम् ।
रात्रौ जागरणं कुर्य्यादिन्द्रमन्त्रानुकीर्त्तनम् ॥
पुरोहित: सदैवात्र: शुभशान्तिरत: सदा ।
[illegible]पातो नृपं हन्यात् पताका मणिहीनकम् ॥
[illegible]युवराजस्य सचिवमनुकम्पते ।
राष्ट्र[illegible]श्रे ध्वजे पतनयो भवेत् ॥
पतिते [illegible] तु नृपमन्यं समादिशेत् ।
[illegible] शत्रुभारस्करादकम् ।
[illegible] शान्तिं [illegible]नृपस्य नगरस्य च ॥
[illegible] [illegible] तावत् पौरा: सदा
[illegible] ।
[illegible]निरता यजनं कुर्य्याद्विप्रकार्य्य ॥

पाते तु तथैव कुर्य्यादुत्थाने यादृशी पूजा ।
रात्रौ शुभजात् पातनं नो दृष्टं काककपोतै: ॥
याति नृपं सङ्ग्राङ्घ्रं तथैव कारयेत् केतुम् ।
नगरे वा पुरे खेटे यथोक्तं कुर्वते पौरा: ॥
पुरे नगरस्य द्वारे वृषसिंहगजोत्थितम् ।
केतु समस्तघोराणां नाशनं जयदं महत् ॥
एवं पूर्वं हरि: केतुं प्राप्तवान् ब्रह्मवाक्यात् ।
तथा ब्रह्मसुतेनैव ब्रह्मण: शक्रमागत: ॥
तेन सोमस्य तद्दत्तं ततो दत्ते समागतम् ।
तदाप्रभृति कुर्वन्ति नृपा अद्यापि उच्छ्रयम् ॥
एवं य: कारयेद्राजा केतुं विजयकारकम् ।
तस्य पृथ्वी बलोपेता सद्दीपा वशगा भवेत् ॥”
इत्याद्ये देवीपुराणे इन्द्रध्वजलक्षणम् २१ अध्याय: ॥

शक्रनन्दन:, पुं, ( शक्रस्य नन्दन: । ) अर्ज्जुन: इति जटाधर: । ( इन्द्रपुत्रमात्रमपि । शक्रं नन्दयतीति । नन्दि + ल्यु: । ) इन्द्रानन्दकारके, त्रि ॥

शक्रपर्य्याय:, पुं, (शक्रस्य पर्य्यायो नाम यस्य ।) कुटजवृक्ष: । इति रत्नमाला । इन्द्रवाचकश्च ॥

शक्रपादप:, पुं, (शक्रस्य पादप: ।) देवदारुवृक्ष: । इत्यमर: ॥ कुटजवृक्ष: । इति राजनिर्घण्ट: ॥

शक्रपुष्पिका, स्त्री, (शक्रपुष्पी + स्वार्थे कन् । अत इत्वम् ।) अग्निशिखावृक्ष: । इति रत्नमाला ॥

शक्रपुष्पी, स्त्री, अग्निशिखावृक्ष: । इत्यमर: ॥

शक्रबीजं, क्ली, इन्द्रजव: । इति राजनिर्घण्ट: ॥

शक्रभवनं, क्ली, (शक्रस्य भवनम् ।) स्वर्ग: । इति त्रिकाण्डशेष: ॥

शक्रभित्, [द्] पुं, (शक्रं भिनत्तीति । भिद् + क्विप् । ) इन्द्रजित् । स च रावणपुत्त्र: । इति शब्दरत्नावली ॥

शक्रभूभवा, स्त्री, इन्द्रवारुणी । इति शब्दचन्द्रिका ॥

शक्रमाता, स्त्री, ( शक्रस्य मातेव । ) भार्गी । इति राजनिर्घण्ट: । इन्द्रजननी च ॥

शक्रमातृका, स्त्री, (शक्रस्य मातृकेव । ) शक्रध्वजाङ्गयष्टिविशेष: । यथा, कालिकापुराणम् ।
“कुमार्य्य: पञ्च कर्त्तव्या: शक्रस्य नृपसत्तम ।
शालमय्यस्तु ता: सर्वास्त्वपरा: शक्रमातृका: ॥
केतो: पादप्रमाणेन कार्य्या: शक्रकुमारिका: ।
मातृकार्द्धप्रमाणा तु यन्त्रं हस्तद्वयं तथा ॥
एवं कृत्वा कुमारीश्च मातृकां केतुमेव च ।
एकादश्यां सिते पक्षे यष्टीनामधिवासनम् ॥”
इति तिथ्यादितत्त्वम् ॥

शक्रमूर्द्धा, [न्] स्त्री, ( शक्रस्येव मूर्द्धा यस्य । ) वल्मीक: । इति त्रिकाण्डशेष: ॥

शक्रवल्ली, स्त्री, ( शक्रप्रिया वल्ली । ) इन्द्रवारुणी । इति राजनिर्घण्ट: ॥

शक्रवाहन:, पुं, ( शक्रं वाहयतीति । वह + णिच् + ल्यु: ।) मेघ: । [illegible] ॥

[illegible] ... [illegible] । इति [illegible] ॥

शक्रशाखी [illegible]
कुटजवृक्ष: । इति [illegible]
शक्रशाला, स्त्री, [illegible] । [illegible]
पुस्तकान्तरे शक्रशाला इति पाठ: । [illegible]
शाला । ) इन्द्रस्थानम् ॥

शक्रशिर:, [स्] क्ली, (शक्रस्य शिर इव ।) [illegible] इति राजनिर्घण्ट: ॥ इन्द्रमस्तकञ्च ॥

शक्रसारथि:, पुं, (शक्रस्य सारथि: ।) मातलि: । इति हलायुध: ॥

शक्रसुत:, पुं, ( शक्रस्य सुत: । ) वालिवानर: । इति हलायुध: ॥ इन्द्रपुत्त्रमात्रञ्च ॥

शक्रसुधा, स्त्री, (शक्रस्य सुधेव ।) पालङ्की । इति शब्दचन्द्रिका ॥ कुन्दुरुखोटी इति भाषा ॥

शक्रसृष्टा, स्त्री, ( शक्रेण सृष्टा । ) हरीतकी । इति त्रिकाण्डशेष: ॥

शक्राख्य:, पुं, (शक्रस्य आख्या यस्य ।) पेचक: । इति त्रिकाण्डशेष: । इन्द्रनामके, त्रि ॥

शक्राणी, स्त्री, (शक्रस्य पत्नी । ङीष् । आनुक् ।) शची । इति शब्दमाला ॥ ( यथा, महाभारते । ५ । ११ । २२ ।
“बृहस्पतिरथोवाच शक्राणीं भयमोहिताम् ॥”)

शक्राशनं, क्ली, (शक्रेण अश्यते इति । अश + ल्युट् । ) भङ्गा । भाङ् इति भाषा । अस्य गुणा: ।
“शक्राशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम् ।
बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥”
इति राजवल्लभ: ॥
अन्यत् विजयाशब्दे द्रष्टव्यम् । इन्द्रभोजनञ्च ॥

शक्राशन:, पुं, (शक्र इति नाम अश्नुते व्याप्नोतीति । अश + ल्यु: ।) कुटजवृक्ष: । इति शब्दचन्द्रिका ॥

शक्राह्व:, पुं, (शक्रस्य आह्वा यस्य ।) इन्द्रयव: । इति राजनिर्घण्ट: । इन्द्रनामके, त्रि ॥

शक्रि:, पुं, (शक + बाहुलकात् क्रिन् ।) मेघ: । वज्रम् । हस्ती । पर्व्वत: । इति संक्षिप्तसारोणादिवृत्ति: ॥

शक्रोत्थानं, क्ली, (शक्रस्य शक्रध्वजस्य उत्थानम् ।) शक्रध्वजोत्सव: । अस्य विधिर्यथा ।
कौशीर्य्य उवाच ।
“अथात: शृणु राजेन्द्र शक्रोत्थानमनोरमम् ।
यत्कृत्वा नृपतिर्याति नो कदाचित् [illegible]
रवौ हरिस्थे द्वादश्यां श्रवणे [illegible]
आराधयेन्नृप: सम्यक् सर्वविघ्नोपशान्तये ।
राजोपरिचरो नाम वसुनामा [illegible]
नृपस्तं नाकमतुलो [illegible] आवर्त्तित: [illegible]
प्राविट्काले च नभसि द्वादश्यामसितेतरे ।
पुरोहितो बहुविधै[illegible]
प्रथमं शक्रकेत्वर्थं [illegible]
[illegible]
[illegible]
[illegible]

उच्चारयन्तु तत्स्थान् तस्मात् लोकान् यथा
हुतम् ।
उग्रतारे महादेवि उच्चामुच्चारय द्रुतम् ॥
ततो गणाः कामरूपाद् वौ चाप्यपराजिता ।
लोकानुच्चारयामासुः पीठं कर्त्तुं रहस्यकम् ॥
उच्चार्य्यमाणे लोके तु चतुर्वर्णादि जातिभिः ।
सन्ध्याचलं गता विप्रो वशिष्ठः कुपितो मुनिः ॥
सोऽप्युग्रतारया देव्या उच्चारयितुमीशया ।
गणैः सह धृतः प्राह शापं कुर्वन् सुदारुणम् ॥
यस्मादहं धृतो वामे त्वयोच्चारयितुं मुनिः ।
तस्मात्त्वं वाम्यभावेन पूज्या भव सगन्धिका ॥
भ्रमन्ति येऽत्र वह्नयस्त्वाद्यास्ते मन्दबुद्धयः ।
भवन्तु ते म्लेच्छास्तस्माद् भवत्याः कामरूपके ॥
महादेवोऽपि यस्मात्त्वां निःसारयितुमुद्यतः ।
तपोधनं मुनिं दान्तं वेदवेदपारगम् ।
तस्मात् म्लेच्छप्रियो भूयात् शङ्करश्चास्थिभस्म-
धृक् ॥"

इति कालिकापुराणे ८३ अध्यायः ॥*॥

शङ्करगीता देवीपुराणे ७ अध्याये द्रष्टव्या ॥

• शिवावतारविशेषः । यथा,—

"तत्रवान् लोकरक्षार्थमुत्साद्य निखिलान्
खलान् ।
वर्त्म स्थापयतु श्रौतं जगद्येन सुखं व्रजेत् ॥
इत्युक्तोपरतान् देवानुवाच गिरिजाप्रियः ।
मनोरथं पूरयिष्ये मानुष्यमवलम्ब्य वः ॥
दुष्टाचारविनाशाय धर्म्मसंस्थापनाय च ।
भाष्यं कुर्वन् ब्रह्मसूत्रतात्पर्य्यार्थविनिर्णयम् ॥
मोचयन् प्रजतिर्द्वैतध्वान्तमध्यात्मभानुभिः ।
चतुर्भिः सहितः शिष्यैश्चतुरैर्हरिवद्भुजैः ॥
यतीन्द्रः शङ्करो नाम्ना भविष्यामि महीतले ।
मद्वत्तथा भवन्तोऽपि मानुषीं तनुमाश्रिताः ॥
तं मामनुसरिष्यन्ति सर्वे त्रिदिववासिनः ।
तदा मनोरथः पूर्णो भवतां स्यान्न संशयः ॥"

इति माधवीयसंक्षेपशङ्करजये १ सर्गः ॥*॥

( अयं हि द्वात्रिंशद्वर्षवयसि भौतिकशरीरं परित्यज्य परब्रह्मणि लीन आसीत्। यथा,तत्रैव
"एवं प्रकारैः किल कल्पवृन्दैः
शिवावतारस्य शुभैश्चरित्रैः ।
द्वात्रिंशदस्योज्ज्वलकीर्त्तिराशेः
समा व्यतीयुः किल शङ्करस्य ॥")

. मङ्गलकारके, त्रि । यथा,—

"क्षेमङ्करोऽरिष्टतातिः स्याच्छिवङ्करशङ्करौ ॥"
इति त्रिकाण्डशेषः ॥

(यथा च महाभारते । ३ । २२८ । ६ ।
"हिरण्यगर्भं शक्रं त्वं लोकानां शङ्करो भव ॥")

शङ्करप्रियः, पुं, (शङ्करस्य प्रियः ।) तित्तिरिपक्षी ।
इति केचित् ॥ शिवप्रिये, त्रि । ( यथा, कथा-
सरित्सागरे । ५४ । ८८ ।
"एतद्वचोभिः श्रुत्वा सा शरण्या शङ्कर-
प्रिया ।
[illegible]

शङ्कराचार्य्यः, पुं, (शङ्कर आचार्य्य इव ।) [illegible]
ख्याताचार्य्यः । स तु अद्वैतवादी वेदान्तभाष्य-
कर्त्ता च । यथा,—

"श्रीशङ्कराचार्य्यमवतारं
विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां
बोधाय कुर्वे कमपि प्रयत्नम् ॥"

इति मधुसूदनसरस्वतीकृतसिद्धान्तबिन्दुप्रथम-
श्लोकः ॥

शङ्करावासः, पुं, ( शङ्करस्य आवास इव शुक्ल-
त्वात् । ) कर्पूरभेदः । इति राजनिघण्टः ॥
(शङ्करस्य महादेवस्य आवासः । कैलासश्च ॥

शङ्करी, स्त्री, मञ्जिष्ठा । इति शब्दचन्द्रिका ॥
शमी । इति राजनिघण्टः ॥ शङ्करभार्य्या ।
यथा ।
"शङ्करी शम्भुपत्नी च शिवा शतनिनादिनी ।
शुभा शुभप्रदा नित्या शतसूर्य्यसमप्रभा ॥"
इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम् ॥

शङ्का, स्त्री, (शङ्क + अः । स्त्रियां टाप् ।)त्रासः ।
( यथा, हितोपदेशे ।
"शङ्काभिः सर्वमाक्रान्तमन्नं पानञ्च भूतले ।
प्रवृत्तिः कुत्र कर्त्तव्या जीवितव्यं कथं नु वा ॥")
वितर्कः । इति मेदिनी ॥ ( यथा, भागवते ।
८ । २ । ६ ।
"यत्र संगीतसन्नादैर्नदद्गुहममर्षया ।
अभिगर्ज्जन्ति हरयः श्लाघिनः परशङ्कया ॥")

शङ्कितः, त्रि, ( शङ्का जाता अस्य । शङ्का +
इतच् ।) भीतः । इति त्रिकाण्डशेषः ॥ (यथा,
"अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान् ॥")
वितर्कितः । इति शङ्काशब्दार्थदर्शनात् ॥ चोरक
नामगन्धद्रव्ये, पुं । इति राजनिघण्टः ॥

शङ्कितवर्णकः,पुं,(शङ्कितं अत्र कोऽप्यस्ति नास्ती-
त्यादिकं वा वर्णयति तर्कयतीति । वर्णि +
ण्वुल् । ) चौरः । इति त्रिकाण्डशेषः ॥

शङ्कुः पुं, (शङ्कतेऽस्मादिति । शङ्क + "खरशङ्कु-
पीयुनीलङ्गुलिगु ।" उणा० १ । ३७ । इति
कुप्रत्ययेन निपातितः । ) स्थाणुः । मुड़ा गाछ
इति भाषा । मत्स्यविशेषः । शाँकोच इति
भाषा । शल्यास्त्रम् । शेल इति भाषा । इत्य-
मरभरती ॥ संख्याविशेषः । स तु लीलावती-
मते दशलक्षकोटिः । कीलः । गोँज इति
भाषा । ( यथा, मनुः । ८ । २७१ ।
"निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः"
ईशः । कलुषः । इति मेदिनी ॥ पत्रशिरा-
जालम् । मेढ्रः । इति हेमचन्द्रः ॥ राक्षसः ।
इति शब्दमाला ॥ नखीनामगन्धद्रव्यम् ।
इति जटाधरः ॥ दीपसूर्य्ययोश्छायापरिमाणार्थं
काष्ठादिनिर्म्मितः क्रमेण सूक्ष्ममहाद्वादशाङ्गुल-
परिमितः कीलकः । यथा ।
"पर्वाङ्गुला तु [illegible]
शङ्कु संज्ञा अथैव [illegible] ॥

[illegible]
पूर्वोक्त[illegible]
सूर्य्य[illegible]
५ । ८ । १० । ११ । [illegible]
भाषाढादिषु मासेषु छाया [illegible]
अयनांशजमासान्ते [illegible]
संख्योक्ता न्यादिने भागहारे हरीतरे [illegible] ॥"
इति [illegible]

तस्य नामान्तरं नरः । यथा,—

अथ करणसूत्रम् ।

"शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न-
श्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ॥"

उदाहरणम् ।

"शङ्कुप्रदीपान्तरभूस्त्रिहस्ता
दीपौच्च्यमुक्तिः सार्द्धकरत्रया चेत् ।
शङ्कोस्तथार्काङ्गुलसंमितस्य
यस्य प्रभा स्यात् कियती वदाशु ॥"

न्यासः । शङ्कुः १२ भूः ३ दीपः ७ सखानि
च्छायाङ्गुलानि १२ । इति लीलावत्यां छाया-
व्यवहारः द्वादशाङ्गुलपरिमाणम् । यथा । वि
धर्म्मोत्तरीयप्रथमकाण्डम् ।
"द्वादशाङ्गुलिकः शङ्कुस्तद्वयन्तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुः सहस्रकः ॥"
इति तिथ्यादितत्त्वम्

( जनमेजयस्य पुत्रः । यथा, महाभारते । १
९५ । ८६ ।
"भवतो वपुष्टमायां द्वौ पुत्त्रौ जज्ञाते शतानी
शङ्कुश्च ॥" * ॥ उग्रसेनस्य पुत्त्रविशेषः । यथ
भागवते । ९ । २४ । २४ ।
"कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहू
राष्ट्रपालोऽथ धृष्टिश्च तुष्टिमानौग्रसेनयः ॥"

शङ्कुकर्णः पुं, (शङ्कु इव कर्णौ यस्य ।) गर्द्दभ
इति त्रिकाण्डशेषः ॥ ( दानवविशेषः । य
हरिवंशे । ३ । ८१ ।
"शङ्कुकर्णो विवादश्च गवेष्टो दुन्दुभिस्तथा ॥
नागविशेषः । यथा, महाभारते । १ । ५
१५ ।
"शङ्कुकर्णः पिठरकः कुठारमुखसेचकौ ॥"
शङ्कुसदृशकर्णविशिष्टे, त्रि । यथा, भाग
७ । ८ । १५ ।
"आत्मजः शतककेशरशङ्कुकर्ण-
विक्रादभीतदिगिभादविभिन्नवाधान् ।

शङ्कुचिः, पुं, शङ्कुमत्स्यः । इति शब्दरत्ना
शङ्कुतरुः, पुं, ( शङ्कुरिव तरुः । ) शालवृ
इति शब्दरत्नावली ॥

शङ्कुरः त्रि, ( शङ्कतेऽस्मादिति । शङ्क + श
कात् उरच् । ) त्रासदायी । इति हेमच

शङ्कुला, स्त्री, ( शङ्कुपूर्वात् लाति [illegible]
सर्वे कः । ३ । २ । ३ । [illegible]
[illegible]
[illegible]

[illegible] शङ्खः [illegible]

शङ्खधरः, पुं, (शङ्खं दधाति।) श्रीकृष्णः। इति हलायुधः ॥

शङ्खनखः, पुं, शङ्खमत्स्यः। इति जटाधरः ॥

शङ्खनाभिः, पुं, मत्स्यविशेषः। शाँकोच इति भाषा। यथा,—
"अथ शङ्खः शङ्खनाभिः स्यात् शङ्खनाभिः शङ्खचीत्यपि ॥"
इति शब्दरत्नावली ॥

शङ्खः, पुं, क्ली, (शाम्यति अशुभमस्मादिति। शम + "शमेः खः।" उणा० १। १०४। इति खः।) समुद्रोद्भवजन्तुविशेषः। शाँख इति भाषा। तत्पर्य्यायः। कम्बुः २। इत्यमरः ॥ कम्बोजः ३ अब्जः ४ जलजः ५। इति शब्दरत्नावली ॥ अर्णोभवः ६ पावनध्वनिः ७ अन्तःकुटिलः ८ महानादः ९ श्वेतः १० पूतः ११ मुखरः १२ दीर्घनादः १३ बहुनादः १४ हरिप्रियः १५। अस्य गुणाः। कटुरसत्वम्। शीतलत्वम्। पुष्टिवीर्य्यबलप्रदत्वम्। गुल्मशूलकफश्वासविषदोषनाशित्वञ्च। इति राजनिर्घण्टः ॥ अपि च।
"शम्बुशङ्खनखश्चापि शुक्तिशम्बूककर्कटाः।
जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिताः ॥
कोषस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः।
बृंहणा बहुवर्चस्का वृष्याश्च बलवर्द्धनाः ॥"
इति भावप्रकाशः ॥

अन्यच्च।
"शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ ॥"
इति राजवल्लभः ॥*॥

अस्योत्पत्त्यादिर्यथा।
"अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति।
ग्रीष्ममध्याह्नमार्त्तण्डशतकतुल्यमुत्तमम् ॥
शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि।
चकार भस्मसात्तञ्च सरथञ्चावलीलया ॥
शिवस्तेन शूलेन दानवस्यास्थिजालकम्।
[illegible]मृषा च प्रेरयामास लवणोदे च सादरम् ॥
[illegible]स्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह।
नानाप्रकाररूपा च शश्वत्पूता सुरार्च्चने ॥
प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम्।
तीर्थतोयस्वरूपञ्च पवित्रं शम्भुना विना ॥
शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीश्च सुस्थिरा।
स स्नातः सर्व्वतीर्थेषु यः स्नातः शङ्खवारिणा ॥
शङ्खे हरेरधिष्ठानं यतः शङ्खस्ततो हरिः।
तत्रैव सततं लक्ष्मीर्दूरीभूतममङ्गलम् ॥
स्त्रीणाञ्च शङ्खध्वनिभिः शूद्राणाञ्च विशेषतः।
भीता रुष्टा याति लक्ष्मीः स्थलमन्यत् स्थलान्तरम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १८ अध्यायः ॥*॥

अथ शङ्खमाहात्म्यम्।
[illegible]
[illegible] सर्व्वपापहरं शुभम् ॥
[illegible]

[illegible] अर्च्चनम् ॥
पश्चिमेऽमी [illegible] शङ्खे कृत्वा तु नारद।
यः स्नापयति देवेशं स गच्छेद्वैष्णवं पदम् ॥
क्षिप्त्वा गङ्गोदकं शङ्खे यः स्नापयति माधवम्।
नमो नारायणेत्युक्त्वा मुच्यते योनिसङ्कटात् ॥
शङ्खस्थन्तु यत्तोयं भ्रमितं केशवोपरि।
निःक्षिपेन्मूर्द्ध्नि सततं गङ्गास्नानेन तस्य किम् ॥
कृत्वा पादोदकं शङ्खे वैष्णवाय प्रयच्छति।
तिलमिश्रं तुलस्या च चान्द्रायणफलं लभेत् ॥
नदीतडागजं वारि वापीकूपह्रदोद्भवम्।
गाङ्गेयं तद्भवेत् सर्व्वं कृतं शङ्खे हरिप्रिय ॥
गृहीत्वा विष्णुपादाम्बु शङ्खे कृत्वा च वैष्णवः।
यो वहेत् शिरसा नित्यं स मुने तापसोत्तमः ॥
त्रैलोक्ये यानि तीर्थानि वासुदेवाज्ञया मुने।
शङ्खं तान्यधितिष्ठन्ति तस्मात् शङ्खं सदार्च्चयेत् ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे।
नमितः सर्व्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥
पुरतो वासुदेवस्य सपुष्पफलचन्दनैः।
शङ्खः समर्च्चितो येन तस्य लक्ष्मीर्न दुर्लभा ॥
दर्शनेनापि शङ्खस्य किमु तस्यार्च्चनेन च।
विलयं यान्ति पापानि हिमः सूर्य्योदये यथा ॥
गर्भा देवारिनारीणां विनश्यन्ति सहस्रधा।
तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥
तीर्थोदकं हरेर्मूर्द्ध्नि भ्रामयेत् शङ्खसंस्थितम्।
ददाति मुक्तिं देवेशः क्षीरसागरजाप्रियः ॥
यमदूताश्च कुष्माण्डपिशाचोरगराक्षसाः।
दृष्ट्वा शङ्खोदकं मूर्द्ध्नि भीता यान्ति दिशो दश ॥
नित्ये नैमित्तिके काम्ये स्नानाद्यनविलेपने।
शङ्खं समर्च्चयति यः श्वेतद्वीपे वसेत् स ॥"
इति पाद्मोत्तरखण्डे १२८ अध्यायः ॥*॥

अथ दक्षिणावर्त्तशङ्खमाहात्म्यम्।
"दक्षिणावर्त्तशङ्खेन गत्वा प्राक्स्रोतसं नदीम्।
कृत्वाभिषेकं विधिवत् ततः पापैः प्रमुच्यते ॥
दक्षिणावर्त्तशङ्खेन तिलमिश्रोदकेन तु।
उदके नाभिमात्रे तु यः कुर्य्यादभिषेचनम् ॥
प्राक्स्रोतस्यां तु वै नद्यां नरस्तत्राभिसाप्लुतः।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
दक्षिणावर्त्तशङ्खेन पात्रशोधं धरे स्थितम्।
उदकं यः प्रतीच्छेत शिरसा हृष्टमानसः ॥
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति।
न शङ्खेन पिबेत्तोयं न हन्यात् कूर्म्मशूकरौ ॥"
इति वाराहे प्रबोधनीमाहात्म्याध्यायः ॥*॥

दक्षिणावर्त्तशङ्खतोयेन विष्णुपूजाफलं यथा।
स्कान्दे।
"दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्च्चयेद्धरिम्।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥"
इत्याह्निकाचारतत्त्वम् ॥

स च शङ्खः रत्नविशेषः। तल्लक्षणादि यथा,—
"क्षीरोदकूलेऽपि सुराष्ट्रदेशे
तदन्यतोऽपि प्रभवन्ति शङ्खाः।
[illegible] शशिसुभ्रभासः
[illegible] ॥

[illegible]
दक्षिणावर्त्तशङ्खस्तु कुर्य्याद्वायुर्य्यतो [illegible] ॥
तेनैव शिरसो यस्तु [illegible] प्रतीच्छति।
वारि हित्वा स पापानि पुण्यमाप्नोति मानवः ॥
वृत्तत्वं स्निग्धताच्छत्वं शङ्खस्येति गुणत्रयम्।
आवर्त्तभङ्गदोषो हि हीमयोगाद्विनश्यति ॥
ब्रह्मादिजातिभेदेन स पुनस्तु चतुर्व्विधः ॥"*॥
इति युक्तिकल्पतरुः ॥

श्रीकृष्णार्ज्जुनादिशङ्खनामानि यथा,—
"पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥
अनन्तविजयं राजा कुन्तीपुत्त्रो युधिष्ठिरः।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥

अयन्तु रणवाद्यविशेषः। यथा,—
"भल्लतूर्य्यं गन्धतूर्य्यं रणतूर्य्यं महास्वनः।
संग्रामपटहः शङ्खस्तथा चाभयडिण्डिमः ॥
महाकन्दो नृपाभीर्भीर्व्वः कोलाहलोऽपि च।
युद्धवाद्यस्य पर्य्यायश्चान्ये भेदाः शङ्खादयः ॥"
इति शब्दरत्नावली ॥

ललाटास्थि। (यथा, सुश्रुते। १। ५।
'तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षाकुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः ॥") कुवेरस्य निधिविशेषः। (यथा, महाभारते। २। १०। २६।
"निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ॥"
यथा च मार्कण्डेये। ६८। ४२—४५।
"रजस्तमोमयश्चान्यः शङ्खसंज्ञो हि यो निधिः।
तेनापि नीयते विप्र तद्गुणित्वं निधिश्वरः।
एकस्यैव भवत्येष नरं नान्यमुपैति च।
यस्य शङ्खो निधिस्तस्य स्वरूपं क्रौष्टुके शृणु ॥
एक एवात्मना मिष्टमन्नं भुङ्क्ते तथाम्बरम्।
कदन्नभुक् परिजनो न च शोभनवस्त्रधृक् ॥
न ददाति सुहृद्भार्य्या भ्रातृपुत्त्रसुतादिषु।
स्वपोषणपरः शङ्खी नरो भवति सर्व्वदा ॥")
नखीनामगन्धद्रव्यम्। इत्यमरमेदिनीकारौ ॥
(यथा, सुश्रुते। ६। १७।
"मनःशिला चूर्णशङ्खमाक्षिकैः
ससिन्धुकासीसरसाञ्जनैः क्रियाः ॥")
कर्णसमीपास्थि। इति राजनिर्घण्टः ॥ (यथा, याज्ञवल्क्ये। ३। ८६।
"कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरौ ॥")
अष्टनागनायकान्तर्गतनागविशेषः। (यथा, मनसापूजापद्धतौ।
"अनन्तो वासुकिः पद्मो महापद्मस्तु तक्षकः।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः ॥")
हस्तिदन्तमध्यम्। इति त्रिकाण्डशेषः ॥ दशनिखर्व्वसंख्या। लक्षकोटिरिति यावत्। यथा,
"एकं दशशतञ्चैव सहस्रमयुतं तथा।
लक्षञ्च नियुतं चैव कोटिरर्व्वुदमेव च ॥
वृन्दः खर्व्वो निखर्व्वश्च शङ्खपद्मौ च सागरः।

अवलं भव्यं पराशर इयमडक्ता यथाक्रमम् ॥"
इति भरतकृतब्रह्माण्डपुराणवचनम् ॥*॥
धर्म्मशास्त्रप्रयोजकमुनिविशेषः । यथा,—
"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्बर्त्ताः कात्यायनवृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥"
इति याज्ञवल्क्यवचनम् ॥
शङ्खकं, क्लौ, वलयः । इति मेदिनी ॥
शङ्खकः, पुं क्लौ, (शङ्ख + स्वार्थे कन् ।) कम्बुः । शिरोरोगि,पुं । इति मेदिनी ॥ तस्य लक्षणादि यथा,—
शङ्खकमाह ।
"पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोथं कुर्व्वन्ति दारुणम् ॥
स शिरो विषवद्वेगान्निरुध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत् ॥"
पित्तरक्तानिलाः अत्र कफोऽपि योज्यः । क्षतानुतापः कफपित्तरक्तै रिति सुश्रुतवचनात् । विमूर्च्छिताः प्रवृद्धाः । त्रिरात्रात् त्रिरात्रमध्ये मारयति । इति भावप्रकाशः ॥ अस्य चिकित्सा शिरोरोगशब्दे द्रष्टव्या ॥ (ललाटास्थि । यथा, याज्ञवल्क्यः । ३ । ८० ।
"द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ।
उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥")
शङ्खकारः, पुं, (शङ्ख करोतीति । शङ्ख + कृ + अण् ।) वर्णसङ्करजातिविशेषः । शाङ्खारि इति भाषा । स तु शूद्रागर्भे विश्वकर्म्मौरसाज्जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥ तत्पर्य्यायः । शाङ्खिकः २ काम्बविकः ३ । इति शब्दरत्नावली ॥ शाम्बविकः ४ । इति जटाधरः ॥
शङ्खचरी,स्त्री, (शङ्ख, ललाटास्थि चरतीति । चर + टः । स्त्रियां ङीप् ।) ललाटिका । इति त्रिकाण्डशेषः ॥
शङ्खचर्च्चौ, स्त्री, ललाटिका । इति शब्दरत्नावली ॥
शङ्खचूर्णं, क्लौ, ( शङ्खस्य चूर्णम् । ) शङ्खजातचूर्णम् । शांखेर चूण इति भाषा । अस्य गुणाः ।
"शङ्खचूर्णं कटु क्षारमुष्णं क्रिमिहरं परम् ॥"
इति राजवल्लभः ॥
शङ्खजः, पुं, (शङ्खाज्जायते इति । जन + डः ॥) कपोतडिम्बवद्वृहन्मुक्ता । इति केचित् ॥ शङ्खजातवस्तुनि, त्रि ॥
शङ्खद्रावकः, पुं, शङ्खं द्रावयतीति । द्रु + णिच् + ण्वुल् ।) औषधविशेषः । यथा,—
"पर्कटुकी [illegible] तिलारम्वधचित्रकम् ।
[illegible] वस्त्रपूतं जलं हरेत् ॥
[illegible] ।
[illegible] तथा ॥
[illegible] ।
त्रिपुष्पं पञ्चलवणं [illegible] ॥
काचकूप्यान्तु [illegible] ।
शङ्खचूर्णपलं दत्त्वा वाकचीयन्त्रमुद्धरेत् ॥
सर्व्वधातून् हरेच्छीघ्रं वराटीशङ्खकादिकान् ।
उदरादिसर्व्वरोगाणां सद्यो हि नाशकः परः ॥"
इति शङ्खद्रावकः ॥*॥
अपि च ।
"योगिनीभैरवाभ्याञ्च बलिमादौ प्रदापयेत् ।
पश्चादृग्यन्त्रञ्च कर्त्तव्यमित्याह परमेश्वरी ॥
रस- शङ्खद्रवो नाम शम्भुदेवेन भाषितः ।
गुह्याद्गुह्यतमं गुह्यमिदानीं कथ्यते मया ॥
शङ्खचूर्णं यवक्षारं सर्ज्जिकाक्षारटङ्कणम् ।
समञ्च पञ्चलवणं स्फटिकारी नृशादरः ॥
काचकुप्यां ततः क्षिप्त्वा वाकचीयन्त्रमुद्धरेत् ।
यामार्द्धं द्रावयत्येष शङ्खशुक्तिवराटकान् ॥
अर्शांसि नाशयेत् षट् च मूत्रकृच्छ्राश्मरीं तथा
उदराष्टविधं हन्ति गुल्मप्लीहोदराणि च ॥
अजीर्णं नाशयेच्छीघ्रं शूलञ्चैव विसूचिकाम् ।
भुक्तशेषे च भोक्तव्यो माषमात्रो रसोत्तमः ॥
क्षणमात्राद्वेलायां पुनर्भोजनमिच्छति ।
प्रत्यहं भोजनान्ते च संसेव्योऽयं रसोत्तमः ॥
न रुजायां भयं क्वापि सत्यं सत्यं वदाम्यहम् ।
न देयं यस्य कस्यापि सदा गोप्यञ्च कारयेत् ।
रसः शङ्खद्रवो नाम वैद्यानामुपकारकः ॥"
शङ्खद्रावको रसः । इति भैषज्यरत्नावली ॥
शङ्खद्रावी,[न्] पुं, शङ्खं द्रावयतीति । द्रु + णिच् + णिनिः ।) अम्लवेतसः । इति राजनिर्घण्टः ॥
शङ्खधरा, स्त्री, ( धरतीति । धृ + अच् । टाप् । शङ्खस्य धरा । ) हिलमोचिका । इति रत्नमाला ॥
शङ्खध्मः, पुं, ( शङ्खं धमतीति । ध्मा + कः ।) शङ्खवादकः । तत्पर्य्यायः । शाङ्खिकः २ । इति जटाधरः ॥ (यथा,वाजसनेयसंहितायाम् ।३०।१९।
"क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मम् ॥"
शङ्खध्माः, पुं, ( शङ्खं धमतीति । ध्मा + क्विप् । ) शङ्खवादकः । इति मुग्धबोधव्याकरणम् ॥
शङ्खनखः, पुं, क्षुद्रशङ्खः । जोङ्गड़ा इति भाषा । इत्यमरभरतौ ॥(यथा,महाभारते ।१३।५०।२०)
"नर्म्मैः शङ्खनखैर्गात्रैः क्रोड़ैश्चित्रैरिवार्पितम् ॥"
नखीनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥ हट्टविलासिनी । यथा,—
"नखाङ्खुशी शङ्खनखः शङ्खाख्यो गन्धसारणः ।
इति रत्नमाला ॥
शङ्खनखा, स्त्री, शङ्खनखी । यथा,—
"द्विधा शङ्खनखाख्याभ्यां शुक्राख्या वदरीच्छदः ॥"
इति रत्नमाला ॥
शङ्खपुष्पी, स्त्री, ( शङ्खवत् पुष्पं यस्याः । ङीष् ।) क्षुपविशेषः । शङ्खाहुली इति डानकुनी इति च भाषा । तत्पर्य्यायः । सुपुष्पी २ शङ्खाह्वा ३ कम्बुपुष्पी [illegible] [illegible] पीतपुष्पी [illegible] [illegible] मेध्या ७ वनविलासिनी ८ [illegible] ९ [illegible]
१० भूलग्ना ११ [illegible] । अस्या गुणाः । [illegible] । [illegible] कारित्वम् । शङ्खपुष्पी [illegible] । [illegible] । इति राजनिर्घण्टः ॥
अपि च ।
"शङ्खपुष्पी तु तीक्ष्णोष्णा मेध्या [illegible]
[illegible] अपहा ॥"
इति राजवल्लभः ॥
अन्यच्च ।
"शङ्खपुष्पी तु शङ्खाह्वा मङ्गल्या कुसुमा [illegible]
शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगनुत् ॥
रसायनी कषायोष्णा स्मृतिकान्तिबलाग्नि[illegible]
दोषापस्माररभूतालक्ष्मीकुष्ठक्रिमिविषप्रणुत् ॥"
इति भावप्रकाशः ॥
शङ्खप्रस्थः, पुं, चन्द्रस्य चिह्नम् । यथा,—
"लिङ्गं लक्ष्म च चिह्नञ्च शङ्खप्रस्थो विधोरथ ॥"
इति शब्दमाला ॥
शङ्खभृत्, पुं, (शङ्खं विभर्त्तीति । भृ + क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥ (यथा, महाभारते १३ । १४९ । १२० ।
"शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ॥")
शङ्खमुखः, पुं, शङ्खवत् मुखं यस्य । ) कुम्भीरः । इति हेमचन्द्रः ॥ (नागविशेषः । यथा, महाभारते । १ । ३५ । ११ ।
"नागः शङ्खमुखश्चैव तथा कुष्माण्डकः परः ॥")
शङ्खमूलं, क्लौ, (शङ्खवत् शुक्लं क्रमसूक्ष्मं वा मूलं यस्य । ) मूलकम् । इति राजनिर्घण्टः ।
शङ्खाख्यः,पुं, ( शङ्ख इति आख्या यस्य । ) हट्टविलासिनी । इति रत्नमाला ॥
शङ्खाह्वा,स्त्री, (शङ्ख इति आह्वा नाम यस्याः ।) शङ्खपुष्पी । इति राजनिर्घण्टः ॥
शङ्खिका, स्त्री, शङ्खवत् पुष्पमस्त्यस्याः । शङ्ख + ठन् ।) क्षुपविशेषः । चोरवहुली इति भाषा । यथा । शङ्खिन्यां शङ्खिका चोरा । इति शब्दचन्द्रिका ॥
शङ्खिनी,स्त्री, ( शङ्खवत् पुष्पमस्त्यस्याः । शङ्ख + इनिः ।) चोरपुष्पी । इत्यमरः । श्वेतपुन्नागः । इति विश्वः ॥ श्वेतवृन्दा । इति मेदिनी ॥ श्वेतचुक्रा । इति शब्दरत्नावली ॥ वुद्धशिरिद्धः । इति त्रिकाण्डशेषः ॥ यवतिक्ता । इति राजनिर्घण्टः ॥ चतुर्विधस्त्रीमध्ये स्त्रीविशेषः । तल्लक्षणं यथा,—
"दीर्घा सुदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा ॥
शशकं पद्मिनी तुष्टा चित्रिणी रमते मृगम् ।
वृषभं शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥
पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी ।
शङ्खिनी क्षारगन्धा [illegible] ॥
[illegible]

ङ्कुशा। यथा,— [illegible]
"शङ्खिनी चापिनी चक्रे शुक्लीचक्रे शङ्कुशा॥"
इति देवीमाहात्म्यम्॥
रूपदेवताविशेषः। शङ्खिनीचापचक्रादिधर्म-
गात्॥

शङ्खिनीफलः, पुं, (शङ्खिन्याः फलमिव फलं
यस्य।) शिरीषवृक्षः। इति राजनिर्घण्टः॥

शङ्खिनीवासः, पुं, (शङ्खिन्या वास आश्रय-
स्थानम्।) शाखोटवृक्षः। इति शब्दचन्द्रिका॥

शङ्खी, [न्] पुं, (शङ्खोऽस्यास्तीति। शङ्ख+इनिः।)
विष्णुः। समुद्रः। इति मेदिनी॥ शाङ्खिकः।
शङ्खविशिष्टे, त्रि। इति शब्दरत्नावली॥
(यथा, हरिवंशे भविष्यपर्व्वणि। ८। १२॥
"शङ्खिनं चक्रिणं विष्णुं खड्गिनं गदिनं
विभुम्॥"
शङ्खनिधिविशिष्टे च त्रि। यथा, मार्कण्डेये। ६८।
४५।
"तपोधनपरः शङ्खी नरो भवति सर्व्वदा॥")

शच, इ ङ गत्याम्। इति कविकल्पद्रुमः॥
(भ्वा०-आत्म०-सक०-सेट्।) ङ, शञ्चते। इति
दुर्गादासः॥

शच, ङ वाचि। इति कविकल्पद्रुमः॥ (भ्वा०-
आत्म०-सक०-सेट्।) ङ, शचते। इति दुर्गा-
दासः॥

शचिः, स्त्री, (शच वाचि+"सर्व्वधातुभ्य इन्।"
उणा० ४। ११७। इति इन्।) इन्द्रपत्नी।
इत्यमरटीकायां भरतः॥

शची, स्त्री, (शचि+कृदिकारादिति ङीष्।)
इन्द्रपत्नी। तत्पर्य्यायः। पुलोमजा २ इन्द्राणी ३।
इत्यमरः॥ शचिः ४ सची ५ सचिः ६। इति
भरतः॥ पूतक्रतायी ७ पौलोमी ८। इति
जटाधरः॥ माहेन्द्री ९ जयवाहिनी १०
ऐन्द्री ११ शतावरी १२। इति शब्दरत्नावली॥
(यथा, रघुः। ३। १३।
"उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ॥")
शतमूली। कौकरवान्तरम्। तत्तु विष्टिकारव-
मिति केचित्॥ इति मेदिनी॥ (कर्म्म। इति
इति निघण्टुः। २। १॥ यथा, ऋग्वेदे। ८। ३२। १५।
"न किरस्य शचीनां नियन्ता सूनृतानाम्॥"
प्रज्ञा। इति निघण्टुः। ३। ९॥ वाक्। इति
च निघण्टुः। १। ११॥)

शचीपतिः, पुं, (शच्याः पतिः।) इन्द्रः। इत्यमरः॥
(यथा, मार्कण्डेये। १५। ७०।
"यदि जानासि धर्म्मं त्वं त्वं वा ब्रह्म शचीपते।
मम यावत् [illegible] तावत् [illegible]॥"
शचीवान्, त्रि। यथा, ऋग्वेदे। १। ६४। ५।
"[illegible] शचीवती [illegible]॥"
"[illegible] शचीति कर्म्मनाम कर्म्मवन्तो
[illegible]।" इति तद्भाष्ये सायनः॥)

शट, वादे। [illegible] इति कवि-
कल्पद्रुमः॥ (भ्वा०-पर०-[illegible]-
सेट्।) वादोऽवसादः। शीर्णता भेदः। शटति
लोकः अवसीदति। विशीर्य्यति। भज्यति
रुजति वा इत्यर्थः। इति दुर्गादासः॥

शट, क ङ श्लाघे। इति कविकल्पद्रुमः॥ (चुरा०-
आत्म०-सक०-सेट्।) क ङ, शाटयते। इति
दुर्गादासः॥

शटः, त्रि, अम्लः। शटधातोरच् प्रत्ययेन निष्पन्न-
मेतत्। इति सिद्धान्तकौमुदी॥

शटा, स्त्री, (शट+अच्। टाप्।) सटा। जटा।
इत्यमरटीका॥

शटिः, स्त्री, (शट+इन्।) शटी। इति शब्द-
रत्नावली॥

शटी, स्त्री, (शटि+वा ङीष्।) स्वनामख्याती-
षधिः। वन आदा इति भाषा। कचूर इति
हिन्दी भाषा। तत्पर्य्यायः। गन्धमूली २
षड्ग्रन्थिका ३ कर्च्चूरः ४ पलाशः ५। इत्य-
मरः॥ सटी ६ षटी ७ गन्धशटी ८ कर्च्चूरः ९
कर्च्चूरः १०। इति भरतादयः॥ सुगन्धा ११
सटिः १२ शटिः १३ गन्धमूला १४ गन्धोलिः १५
गन्धमूलकः १६। इति शब्दरत्नावली॥ गन्ध-
सटा १७ वधूः १८ गन्धमूलम् १९। इति
जटाधरः॥ जीमूतमूलम् २० कच्छोरम् २१
हिमजा २२। इति रत्नमाला॥ हैमी २३
षड्ग्रन्थिः २४ सुव्रता २५ गन्धाली २६
पलाशा २७ हिमा २८। इति ग्रन्थान्तरम्॥
षड्ग्रन्था २९ शालनिशा ३० सुगन्धमूला ३१
गन्धाली ३२ शटीका ३३ पलाशिका ३४
सुभद्रा ३५ तृणी ३६ दूर्व्वा ३७ गन्धा ३८
पृथुपलाशिका ३९ सौम्या ४० हिमोद्भवा ४१
गन्धवधूः ४२। अस्या गुणाः। तिक्तत्वम्।
अम्लरसत्वम्। लघुत्वम्। उष्णत्वम्। रुचि-
कारित्वम्। ज्वरकफासकण्डुव्रणदोषरक्तामय-
ध्वंसकारित्वम्। हृद्यत्वञ्च। इति राजनिर्घण्टः॥
अपि च। अथ गन्धपलाशी सुगन्धद्रव्यं काश्मीरे
प्रसिद्धम्।
"शटी पलाशी षड्ग्रन्था सुव्रता गन्ध-
मूलिका।
गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका॥
भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः।
तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी।
शोथकासव्रणश्वासशूलाध्मानग्रहापहा॥"
इति भावप्रकाशः॥

शट्टकं, क्ली, घृतजलमिश्रितशालिचूर्णम्। मयदार
शटा इति भाषा। यथा,—
"शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं वदेत्॥"
इति भावप्रकाशः॥

शठ, वधके शकैतवे। इति कविकल्पद्रुमः॥ (भ्वा०-
पर०-सक०-सेट्।) क्लेशो दुःखानुभवः।
कैतवं मिथ्यावचनम्। शठति [illegible]
[illegible] इत्यर्थः। इति दुर्गादासः॥

शठ, क [illegible]। [illegible] इति कवि-
कल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) क,
शाठयति [illegible] [illegible] [illegible]।
इति दुर्गादासः॥

शठ, क ङ श्लाघे। इति कविकल्पद्रुमः॥ (चुरा०-
आत्म०-सक०-सेट्।) क ङ, शाठयते। इति
दुर्गादासः॥

शठ, त् क दुर्व्वाचि। इति कविकल्पद्रुमः॥
(अदन्तचुरा०-पर०-सक०-सेट्।) शठयति
नीचः कुत्सितं वदतीत्यर्थः। एतावानयं
सम्यग्भाषणे इति मत्वा शठयति सम्यग्वदती-
त्यर्थ इत्याह। सम्यग्भाषणे इति जौमराः।
सम्यग्भावे इत्येके। इति दुर्गादासः॥

शठं, क्ली, (शठ+अच्।) तगरम्। कुङ्कुमम्।
लौहम्। इति राजनिर्घण्टः॥

शठः, पुं, मध्यस्थपुरुषः। धूर्त्तः। (यथा, मनुः।
४। ३०।
"पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान्
शठान्।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत्॥")
धुस्तूरः। इति मेदिनी॥ शठस्य लक्षणम्।
यथा,—
"प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्।
व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः॥"
इति विष्णुपुराणे। ३। १८। २१। श्रीधरटीका॥
चतुर्व्विधपत्यन्तर्गतपतिविशेषः। तस्य लक्षणम्।
कामिनीविषयकपटपटुः। यथा,—
"मौली दाम विधाय भालफलके व्यालिख्य
पत्रावलीं
केयूरं भुजयोर्निधाय कुचयोर्विन्यस्य मुक्ता-
स्रजम्।
विश्वासं समुपार्ज्जयन् मृगदृशः काञ्चीनिवेश-
च्छला-
न्नीवीग्रन्थिमपाकरोति मृदुना हस्तेन वाम-
भ्रुवः॥"
इति रसमञ्जरी॥
(वृष्णिवंशीयविशेषः। यथा, हरिवंशे। भविष्य-
पर्व्वणि। २। ३।
"बलभद्र शिनेः पुत्र शार्ङ्गिणं शठसारणौ॥")

शठता, स्त्री, (शठ+तल्।) शठस्य भावः।
तत्पर्य्यायः। माया २ शाठ्यम् ३ कुसृतिः ४
निकृतिः ५। इति हेमचन्द्रः॥ अन्यच्च।
"अक्षिया कपटी व्याज उपधिश्छद्म एव च।
कूटं दम्भं छलं छद्म मिथ्यैवैरव्यलीकवत्॥
अथ शाठ्यञ्च शठता कुसृतिर्निकृतिश्च सा।
हिंसापरैश्चतुर्थ्यं स्यात् शाठ्यपर्य्याय ईरितः॥
पूर्व्वः कपटपर्य्यायः [illegible]।
[illegible] इति केचित् प्रचक्षते॥"
इति शब्दरत्नावली॥

शठाम्बा, स्त्री, अम्बष्ठा। इति राजनिर्घण्टः॥

शड, इ ङ, संघाते। इति कविकल्पद्रुमः॥
(भ्वा०-आत्म०-सक०-सेट्।) तालव्यादिः। इ,

शाणाते । उ, शणते । आत्मनो वीरं वजती-त्यर्थः । इति दुर्गादासः ॥

शण, म दाने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) म, शणयति । इति दुर्गा-दासः ॥

शणं, क्ली, (शण+अच् ।) क्षुपविशेषः । तत्प-र्य्यायः । भङ्गा २ मातुलानी ३ । इति हेम-चन्द्रः ॥ (यथा, महाभारते । १ । १४५ । ११ ।
"शणं तैलं घृतञ्चैव जतु दारूणि चैव हि ।
तस्मिन् वेश्मनि सर्व्वाणि निःक्षिपेथाः सम-
न्ततः ॥")

शणः, पुं,(शण+पचाद्यच् ।) स्वनामख्यातक्षुपः । तत्पर्य्यायः । माल्यपुष्पः २ वमनः ३ कटु-तिक्तकः ४ निशावनः ५ दीर्घशाखः ६ त्वक्-सारः ७ दीर्घपल्लवः ८ । अस्य गुणाः । अम्लत्वम् । कषायत्वम् । मलगर्भास्रपातनत्वम् । वातकारित्वम् । पित्तकफतीव्राङ्गमर्द्दनाशि-त्वञ्च । इति राजनिर्घण्टः ॥

शणघण्टिका, स्त्री, (शणस्य घण्टेव तत्तुल्यशब्द-कारिफलवत्त्वात् । इवार्थे कन् । टापि अत इत्वम् । ) शणपुष्पी । इति राजनिर्घण्टः ॥

शणपर्णी, स्त्री, ( शणस्य पर्णमिव पर्णमस्याः । ङीष् ।) अश्मन्तपर्णी । इति शब्दरत्नावली ॥

शणपुष्पिका, स्त्री, (शणपुष्पी+स्वार्थे कन् । अत इत्वम् ।) घण्टारवा । इत्यमरभरतौ ॥ झन-झनिया इति वनशोण इति च भाषा ॥

शणपुष्पी, स्त्री, (शणस्य पुष्पमिव पुष्पमस्याः ।) क्षुपविशेषः । शणहुली इति शणाइ इति वन-शणइ इति च भाषा । तत्पर्य्यायः । बृहत्-पुष्पी २ शणिका ३ शणघण्टिका ४ पीतपुष्पी ५ स्थूलफला ६ सोमशा ७ माल्यपुष्पिका ८ । अस्या गुणाः । क्षुद्रतिक्तत्वम् । वमिकारित्वम् । रसनियामकत्वञ्च । इति राजनिर्घण्टः ॥

शणसूत्रं, क्ली, (शणस्य सूत्रम् ।) पवित्रकम् । इत्यमरः ॥ "द्वे शणसूत्रजाले । शणस्य सूत्रं शणसूत्रम् । शणति ददाति सूत्रं शणः । शण ञ्ण दाने अन् । शणः तालव्यशादिर्मूर्द्धन्य-णान्तः इति बहवः । सनो दन्त्यसादिर्दन्त्यनान्त इति केचित् । सन्यते वन ष णु दाने इत्यस्य रूपम् । सणो दन्त्यसादिमूर्द्धन्यणान्त इत्यपरे । सणचिक्कणविकाकणकोणकाणा इति मूर्द्धन्य-णान्ते विश्वाभरणम् ॥
'कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥' इति
मनुवचनात् पवित्रकमपि तदुच्यते । पाशाय इत्यादि चतुष्कं जाले इत्येके । पाशाय इत्यादि स्रोकार्द्धं कश्चिदिच्छति तत् स्वव्याख्योपेक्षितमपि अन्यैराहृतमिति विवृतम् ।" इति तट्टीकायां भरतः ॥

शणालुकः, पुं, (शणालुरिव । स्वार्थे कन् ।) आर-ग्वधः । इति शब्दरत्नावली ॥ शोणालु इति भाषा ॥

शणिका, स्त्री, (शण+स्त्रियां टाप् । कन् । अत इत्वम् ।) शणपुष्पी । इति राजनिर्घण्टः ॥

शणीरं, क्ली, शोणनदनदपुलिनम् । दर्द्दरीतटम् । इति मेदिनी ॥

शण्डं क्ली, पद्मादिसमूहः । इति शब्दरत्ना-वली ॥

शण्डः, पुं, नपुंसकम् । गोपतिः । इति भरत-द्विरूपकोषः ॥

शण्डता, स्त्री, (शण्डस्य भावः । तल् ।) षण्ड-त्वम् । शण्डशब्दात् भावे तप्रत्ययस्यानन्तरं आप् प्रत्ययेन निष्पन्नमेतत् ॥

शण्डिलः, पुं, (शडि रुजायाम्+"सलिकल्यनि-महिभडिभण्डिशण्डीति ।" उणा० १।५५ । इति इलच् ।) मुनिविशेषः । इति सिद्धान्त-कौमुदी ॥

शण्ढः,पुं,(शाम्यति ग्राम्यधर्म्मात् । शम+"शमेर्ढः" उणा० १।१२१ । इति ढः ।) अन्तर्म्महल्लिकः । अभ्यन्तरस्त्रीरक्षकोऽयम् । खोजा इति भाषा । तत्पर्य्यायः । वर्षवरः २ । तल्लक्षणम् यथा,—
"ये त्वल्पसत्त्वाः प्रथमाः क्लीवाश्च स्त्रीस्वभा-
विनः ।
जात्या न दुष्टाः कार्य्येषु ते वै वर्षवराः स्मृताः ॥"
इति ॥
नपुंसकम् । हिजड़े इति भाषा । इत्यमर-भरतौ ॥ गोपतिः । शाँड़ इति भाषा । इति मेदिनी ॥ वन्ध्यपुरुषः । इति जटाधरः ॥ उन्मत्तः । इति धनञ्जयः ॥

शतं, क्ली, ( दश दशतः परिमाणमस्येति । "पंक्तिविंशतित्रिंशदिति ।"५ । १ ।५९ । इति तः दशानां शभावश्च निपात्यते ।) दशगुणित-दशसङ्ख्या । एकशभो इति हिन्दीभाषा । (यथा, शान्तिशतके ।
"निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्रा-
धिपः ॥")
तत्पर्य्यायः । दशतिः २ । इति पुराणम् ॥ तद्वाचकानि । धार्त्तराष्ट्रः १ शतभिषातारा २ पुरुषायुषः ३ रावणाङ्गुलिः ४ पद्मदलम् ५ इन्द्रयज्ञः ६ अब्धियोजनम् ७ । इति कवि-कल्पलता ॥ (बहु । इति निघण्टुः । ३ । १ ॥ यथा, ऋग्वेदे । ८।१।५ । "वज्रिवो न शताय शतामघ ।" "शताय बहुनामैतत् अपरि-मिताय ।" इति तद्भाष्ये सायनः ॥)

शतकः, त्रि, ( शतं परिमाणमस्य । शत+ "संख्याया अतिशदन्तायाः कन् ।"५।१।२२ ॥ इति कन् ।)शतसंख्याविशिष्टः । यथा । शान्ति-शतकामरुशतकादिः । शतशब्दात् कप्रत्ययेन निष्पन्नमेतत् । (यथा, मार्कण्डेये । ४६ ।२० ।
"सन्ध्यासन्ध्यांशकञ्चैव शतकौ समुदाहृतौ ॥")
स्वार्थे के शतकञ्च ॥

शतकीर्त्तिः, पुं, भाव्यर्हद्विशेषः । इति हेमचन्द्रः ॥

शतकुन्दः, पुं, (शतं कुन्दा यस्य ।) करवीरः । इति राजनिर्घण्टः ॥

शतकुम्भः, पुं, पर्व्वतविशेषः । इति [illegible] शब्दटीकायां भरतः ॥ (क्ली, सरोवरविशेषः । यथा, महाभारते । ३ । ८४ । १० ।
"शुभश्चा शतकुम्भाख्य पञ्चयज्ञाख्य भारत ।
अभिगम्य नरश्चेह स्वर्गलोके महीयते ॥")

शतकोटिः, पुं,(शतं कोटयोऽग्राः शिखा यस्य ।) वज्रम् । इत्यमरः ॥ ह्रस्वसंख्या कोटिशतकोटि अजसंख्या ॥

शतक्रतुः, पुं, (शतं क्रतवो यस्य ।) इन्द्रः । इति धनञ्जयकोषः ॥ (यथा, महाभारते ।३।४२।१२।
"माऽहं मामभरश्रेष्ठः पिता तव शतक्रतुः ॥"
बहुकर्म्मा । बहुप्रज्ञः । यथा, ऋग्वेदे । १।१०।१।
"ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥"
"हे शतक्रतो बहुकर्म्मन् बहुप्रज्ञ वा ।" इति तद्भाष्ये सायनः ॥)

शतखण्डं, क्ली, सुवर्णम् । यथा,—
"सौमेरुकं महाधातुः शतखण्डं मृदुत्वकम् ॥"
इति शब्दचन्द्रिका ॥
शतभागश्च ॥

शतग्रन्थिः, स्त्री, (शतं ग्रन्थयो यस्याः ।) दूर्वा । इति राजनिर्घण्टः ॥

शतघ्नी, स्त्री, ( शतं हन्तीति । हन+टक् । ङीप् ।) शस्त्रभेदः । अस्य लक्षणम् । यथा,—
"अयःकण्टकसंछन्ना शतघ्नी महती शिला ।"
इति विजयरक्षितः ॥
"दुर्गञ्च परिखोपेतं वप्राट्टालकसंयुतम् ।
शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥
गोपुरं सकवाटञ्च तत्र स्यात् सुमनोहरम् ।
सपताकं गजारूढो येन राजा विशेत् पुरम् ॥"
इति मात्स्ये राजधर्म्मे दुर्गसम्पत्तिर्नाम १८१ अध्यायः ॥*॥ (यथा, रघुः । १२ । ९५ ।
"अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥"
"अथ रक्षो रावणः अयसः शङ्कुभिः कीलैः चितां कीर्णां शतघ्नीं लौहकण्टककीलितयष्टि-विशेषाम् । शतघ्नी तु चतुस्ताला लौहकण्टक-सञ्चिता । यष्टिः————॥ इति केशवः ।" इति तट्टीकायां मल्लिनाथः ॥) वृश्चिकाली । करञ्जकः । इति मेदिनी ॥ गलरोगविशेषः । अस्य निदानलक्षणचिकित्सा रोहिणीशब्दे द्रष्टव्याः ॥

शतच्छदः, पुं,(शतं छदा यस्य ।) काष्ठकुट्टपक्षी इति त्रिकाण्डशेषः ॥ काठोकरा इति भाषा । शतदलपद्मञ्च ॥

शततमः, त्रि, शतस्य पूरणः । शतशब्दात्तमट् प्रत्ययेन निष्पन्नमेतत् ॥

शततारा, स्त्री, (शतं तारा यस्याम् ।) शत-भिषानक्षत्रम् । इति केचित् ॥

शतदन्तिका, स्त्री, नागदन्ती । इति राजनिर्घण्टः ॥

शतद्रुः, स्त्री, (शतधा द्रवतीति । शत+द्रु । [illegible] उणा० १ । ३३ । इति कु ।) नदीविशेषः । शतलज् इति हिन्दी भाषा । सा हिमालयात्

दुलस्या विपाशायां निक्षिप्ता । (यथा नाम-निर्वाचनं यथा, महाभारते । १ । १७८ । ९ ।
"शतधा विद्रुता यस्मात्तस्माच्छतद्रुरिति विश्रुता ॥"
तत्पर्य्यायः । शितद्रुः २ । इत्यमरः ॥ शतुद्रिः ३ शतद्रूः ४ । पुत्रशोकसन्तप्तो वशिष्ठः कण्ठे शिलां बद्ध्वा नद्यामस्यां प्रविष्टस्ततो भीत्वा सेयं शतधा द्रुता इति शतद्रुः । इति तट्टीकायां भरतः ॥ (एतद्वृत्तान्तस्तु महाभारते ।१।१७८। अध्याये द्रष्टव्यः ॥ ) अस्या जलगुणाः ।
"शतद्रोर्विपाशायाश्च शिम्भुनद्याः
सुशीतं लघु स्वादु सर्व्वामयघ्नम् ।
जलं निर्म्मलं दीपनं पाचनञ्च
प्रदत्ते बलं बुद्धिमेधायुषञ्च ॥"
इति राजनिर्घण्टः ॥
शतधा, स्त्री, दूर्व्वा । इति शब्दचन्द्रिका ॥
शतधा, व्य, (शत + धाच् ।) शतप्रकारम् । यथा,
"शास्त्रोक्तवचनं श्रुत्वा यः सर्पो न निवर्त्तते ।
शतधा भिद्यते मूर्द्ध्नि शिरीषस्य फलं यथा ॥"
इति महाभारतम् ॥
शतधामा, [न्] पुं, (शतं धामानि वर्च्चांसि यस्य ।) विष्णुः । इति जटाधरः ॥
शतधारं, क्ली, (शतं धाराः कोणा यस्य ।) वज्रम् । इति त्रिकाण्डशेषः ॥ शतधारायुक्ते, त्रि । यथा,—
"वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ।
वसोः पवित्रेण शतधारेण सुत्वा कामधुक्ष्व ॥"
इति पशुपतिपद्धतिः ॥
शतधृतिः, पुं, इन्द्रः । (यथा, महिम्नः स्तोत्रे ।
"रथः क्षौणी यन्ता शतधृतिरगेन्द्रो धनुरथो ॥")
ब्रह्मा । इति मेदिनी ॥ (यथा, भागवते ।७।४।१।
"एवं वृतं शतधृतिर्हिरण्यकशिपोरथ ॥")
स्वर्गः । इति विश्वः ॥
शतपत्रं, क्ली, (शतं पत्राणि यस्य ।) पद्मम् । इत्यमरः ॥ ( यथा, महाभारते । ३ ।६८।२० ।
"इमामसितकेशान्तां शतपत्रायतेक्षणाम् ॥")
शतपत्रः, पुं, (शतं पत्राणि पक्षा यस्य ।) मयूरः । सारसः । दार्व्वाघाटपक्षी । इति मेदिनी ॥ राजकीरः । तुरो इति भाषा । इति हेमचन्द्रराजनिर्घण्टौ ॥ ( यथा, महाभारते । ३ । १०८ । ८ ।
"मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः ॥")
शतपत्रकः, पुं, (शतपत्र + स्वार्थे कन् ।) दार्व्वाघाट पक्षी । इत्यमरः ॥ काठ्ठोकरा इति भाषा ॥
शतपत्रनिवासः, पुं, ( शतपत्रे निवासो यस्य । ) ब्रह्मा । इति कविकल्पलता ॥ पद्मस्थे त्रि ॥
शतपत्री, स्त्री, ( शतं पत्राणि यस्याः । ङीष् ।) पुष्पविशेषः । सेवती इति भाषा । पाटल-वर्णासौ गोलाप इति वदन्ति । तत्पर्य्यायः । तरुणः २ सुशीता ३ शिवबल्लभा ४ [illegible]-वर्णी ५ [illegible] ६ [illegible] ७ शतपत्रिका ८ अस्या गुणाः । हिमत्वम् । तिक्तत्वम् । कटु-त्वम् । [illegible] इति राजनिर्घण्टः ॥
शतपत्रिका, स्त्री, (शतपत्री + कन् । टाप् । अत इत्वम् ।) शतपत्री । इति राजनिर्घण्टः ॥
शतपथिकः, (शतपथमधीते तद्वेद इति वा ।
"शतषष्टेः पिकन् पथो वहुलम् ।" ४ । २ । ६० इत्यस्य वार्त्तिकोक्त्या शत-शब्दोत्तरपथिन्-शब्दात् पिकन्प्रत्ययेन निष्पन्नः ।) नानामतावलम्बी । नानापथगामी । इति सिद्धान्तकौमुदी ॥
शतपदचक्रं, क्ली, (शतं पदानि कोष्ठा यस्य तच्च तच्चक्रञ्चेति । ) नाम्ना नक्षत्रज्ञानार्थं चक्रम् । यथा,—
"चक्रं शतपदं वक्ष्ये नक्षत्राक्षरसम्भवम् ।
नामादिवर्णतो ज्ञेया नक्षत्रांशं शकास्तथा ॥
तिर्य्यगूर्द्ध्वं गता रेखा रुद्रसंख्यालिखेद्बुधः ।
जायते कोष्ठकानाञ्च शतैकं१०० नात्र संशयः ॥
अ-व-क-ह-डा ऐशान्यां म-ट प-रता हरिति चाग्नेय्याम् ।
न-य-भ-ज-खा नैरृत्यां ग-स-द-च-ला वायव्याम् ॥
पञ्च पञ्च क्रमेणैव विंशवर्णान् प्रयोजयेत् ।
पञ्चस्वरसमायोगे एकैकं पञ्चधा कुरु ॥
अवर्णाद्यास्त्रयो ज्ञेयाः सव्यञ्जनयुतास्तथा ।
सजातीयैक्यमास्थाय पञ्चस्वरविनिर्णयः ॥
ऋद्लृतोरप्यकारेण शेन सस्य परिग्रहः ।
कुर्य्यात् कु-पु-भु ट्स्थाने त्रीणि त्रीण्यक्षराणि च ॥
कु-घ-ङ-छा भवेत् स्तम्भे रौद्रे त्वीशानगोचरे ।
पु-ष-ण-ठा भवेत् स्तम्भे हस्ते चाग्नेयसंज्ञके ॥
भु-ध-फ-ढा भवेत् स्तम्भे पूर्व्वाषाढे च नैरृते ॥
दु-थ-झ-ञा भवेत् स्तम्भे वायव्ये भाद्र उत्तरे ॥
एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः ॥
धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः ।
साभिजिन्त्यं शकास्तत्र शतैकं द्वादशाधिकम् ॥
यद्दर्शांशकोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः ।
तत्रस्थो वेधयेत् सम्यक् पुंसो नामादिमाक्षरम्
सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः ।
मिश्रे मिश्रफलं तत्र निर्वेधेन शुभाशुभम् ॥
यद्वाख्यं सर्व्वतोभद्रे ग्रहोपग्रहवेधतः ।
शुभाशुभफलं सर्व्वं तदिहापि विचिन्तयेत् ॥"
पञ्चस्वरा अ-इ-उ-ए-ओकारास्तैर्योगे धिष्ण्यानि नक्षत्राणि । अत्र चतुर्भिर्वर्णैरेकनक्षत्रं यथा,
अ इ उ ए ३ । ओ व वि वु ४ । वे वो क कि ५ । कु घ ङ छ ६ । के को ह हि ७ । हु हे हो ड ८ । डि डु डे डो ९ । म मि मु मे १० । मो ट टि टु ११ । टे टो प पि १२ । पु ष ण ठ १३ । पे पो र रि १४ । रु रे रो त १५ । ति तु ते तो १६ । न नि नु ने १७ । नो य यि यु १८ । ये यो भ भि १९ । भु ध फ ढ २० । भे भो ज जि २१ । जु जे जो ख । ०। खि खु खे खो २२ । ग गि गु गे २३ । गो स सि सु २४ । से सो द दि २५ । दु थ झ ञ २६ । दे दो च चि २७ । चु चे चो ल १ । लि लु ले लो २ । अत्रकुलः अकारयुक्तेन ज्ञेयः इकारेण दीर्घो ज्ञेयः । तालव्यशकारेण दन्त्यसकारो ज्ञेयः । इति शतपदचक्रम् । इति ज्योतिस्तत्त्वम्
शतपदी, स्त्री, ( शतं पादा यस्याः । ङीप् । ) बहुपदयुक्तकीटविशेषः । कानविछा इति कानकोटारी इति च भाषा । तत्पर्य्यायः । कर्णजलौका २ । इत्यमरः ॥ कर्णकीटी ३ भीरुः ४ शतपादिका ५ कर्णजलुका ६ । इति शब्दरत्नावली ॥ शतपात् ७ शतपादी ८ । इति जटाधरः ॥ शतावरी । इति राजनिर्घण्टः ॥
शतपद्मं क्ली, श्वेतकमलम् । यथा,—
"शतपद्मं महापद्मं पुण्डरीकं सिताम्बुजम् ॥"
इति रत्नमाला ॥
शतपर्व्वा, [न्] पुं, (शतं पर्व्वाणि यस्य ।) वंशः । इत्यमरः ॥ इक्षुभेदः । यथा,—
"शतपर्व्वा भवेत् किञ्चित्कोशकारगुणान्वितः ।
विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः ॥"
इति भावप्रकाशः ॥
शतपर्व्वा, स्त्री, (शतं पर्व्वाणि यस्याः ।) दूर्व्वा । वचा । भार्गवपत्नी । (यथा, महाभारते । ५ । ११७ । १३ ।
"बृहस्पतेश्च तारायां शुक्रस्य शतपर्व्वया ॥")
कोजागरपूर्णिमा । इति शब्दरत्नावली ॥
कटुका । इति राजनिर्घण्टः ॥
शतपर्व्विका, स्त्री, ( शतपर्व्वा + कन् । टापि अत इत्वम् । ) दूर्व्वा । वचा । इति मेदिनी ॥ यवः । इति शब्दरत्नावली ।
शतपर्व्वेशः, पुं, (शतपर्व्वाया ईशः ।) शुक्राचार्य्यः । इति त्रिकाण्डशेषः ॥
शतपात्, } स्त्री, (शतं पादा यस्याः । पादस्य
शतपाद, } पात् ।) कर्णजलौकाः । इति जटाधरः ॥
शतपादिका, स्त्री, (शतपाद + स्वार्थे कन् + टाप् । अत इत्वम् ।) काकोली । इति जटाधरः ॥ कर्णजलौकाः । इति शब्दरत्नावली ॥
शतपुष्पः, पुं, भारविः । स तु किरातार्ज्जुनीयग्रन्थकर्त्ता । इति त्रिकाण्डशेषः ॥
शतपुष्पा, स्त्री, (शतं पुष्पाणि यस्याः ।) शाकविशेषः । इति भरतः ॥ शलुफा इति ख्याता । (यथा, सुश्रुतसंहितायाम् । ५१ । १५ ।
"गन्धमांसिशतपुष्पया वदेत् ॥")
तत्पर्य्यायः । सितच्छत्रा २ अतिच्छत्रा ३ मधुरा ४ मिसिः ५ अवाक्पुष्पी ६ कारवी ७ । इत्यमरः ॥ शताह्वा ८ शतपुष्पिका ९ मधुरिका १० शताह्वा ११ छत्रा १२ मिशिः १३ मिश्री १४ । इति शब्दरत्नावली ॥ माधवी १५ घोषा १६ । इति जटाधरः ॥ अस्या गुणाः । मधुरत्वम् । वातपित्तज्वरत्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥ * ॥ क्षुपविशेषः । सौरी इति भाषा । तत्पर्य्यायः । शताह्वा २ मिसिः ३ घोषा ४ पोतिका ५ अतिच्छत्रका ६ [illegible]

पुष्पी ७ माधवी ८ कारवी ९ शिफा १० संघातपत्रिका ११ छत्रा १२ वन्यपुष्पा १३ सुपुष्पिका १४ शतप्रसूना १५ बहला १६ पुष्पाह्वा १७ शतपत्रिका १८ वनपुष्पा १९ भूरिपुष्पा २० सुगन्धा २१ सूक्ष्मपत्रिका २२ मधुरिका २३ अतिच्छत्रा २४ । अस्या गुणाः। कटुत्वम् । तिक्तत्वम् । स्निग्धत्वम् । श्लेष्मातिसारज्वरनेत्रव्रणनाशित्वम्। वस्तिकर्म्मणि प्रशस्तत्वञ्च ॥ * ॥ तद्बीजगुणाः उष्णत्वम् । मधुरत्वम् । गुल्मशूलवातनाशित्वम् । दीपनत्वम् । पथ्यत्वम् । पित्तकारित्वम् । रुचिदायकत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।

"शताह्वानिलदाहामशूलदृट्‌छर्द्दिनाशिनी ।"

इति द्रव्यगुणः ॥

अन्यच्च ।

"शतपुष्पा कटुः स्निग्धा तिक्तोष्णा कफवातजित् वर्ण्या वस्तिहिता मेध्या बलविट्‌क्रिमिशुक्रकृत् । संग्राही शीतला तिक्ता दाहनुत् वातला लघुः ॥"

इति भावप्रकाशः ।

अन्यन्मधुरिकाशब्दे द्रष्टव्यम् ॥

शतपुष्पिका, स्त्री, ( शतपुष्पा + स्वार्थे कन् । टापि अत इत्वम् । ) शतपुष्पा । इति शब्दरत्नावली ॥

शतप्रसूना, स्त्री,(शतं प्रसूनानि पुष्पाणि यस्याः।) शतपुष्पा । इति राजनिर्घण्टः ॥

शतप्रासः, पुं, (शतं प्रासा इव फलानि यस्य ।) करवीरवृक्षः । इत्यमरः ॥

शतभिषक्, [ज्] स्त्री, ( शतं भिषज इव तारा यत्र ।) शतभिषानक्षत्रम् । इति शब्दरत्नावली ॥ ( यथा, बृहत्संहितायाम् । ८ । ३४ ।

"शतभिषजि शौण्डिकानाम-
मङ्गलमपि यूतजीविनां पीडा ॥"

शतभिषजि जातः, त्रि । अत्र "श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ।" ४ । ३ । ३४ । इति जातार्थप्रत्ययस्य लुक् ॥ )

शतभिषा,स्त्री,अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतचतुर्विंशनक्षत्रम् । तत्पर्य्यायः।शतभिषक्२। इतिशब्दरत्नावली ॥ अस्या आकृतिर्मण्डलाकारशततारामयी । यथा,—

"मण्डलाभशततारकाकुले-
ऽध्यभाजि नभसः प्रचेतसि ।
वायशेवधरणौमिताः क्रमाः
शारदेन्दुरुचि तावुरेयुः ॥" दं२। पं५५ ।

इति कालिदासकृतरात्रिलग्ननिरूपणम्॥

अस्या अधिष्ठातृदेवता वरुणः । यथा,—

"अश्विय्यमदहनकमलजशशिशूलभृददितिजीवफणिपितरः ।
योन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः ॥
शक्रो निरृतिस्तोयं विश्वविरिञ्चौ हरिर्वसुर्वरुणः ।
अजपादोऽहिर्बुध्न्यः पूषा चेतीश्वरा भानाम् ॥"

सा तु अधोमुखी । यथा,—

"अग्ने यवक्रियमपिकयशिवाश्चयुक्तं
पूर्वात्रयं शतभिषा च मघाम्बुभानि ।
एतान्यधोमुखगणानि शिवानि नित्यं
विद्यार्थ्यभूमिखननेषु च भूषितानि ॥"

इति ज्योतिस्तत्त्वम् ॥ * ॥

तत्र जातफलम् ।

"शतभीतिरतिसाहसी सदा
निष्ठुरो हि चतुरो नरो भवेत् ।
वैरिणामतिशयेन दारुणो
वारुणोडु यदि यस्य सम्भवे ॥"

इति कोष्ठीप्रदीपः ॥ * ॥

तत्र जातस्य मिश्रगुणाः । यथा ।

"शतानलादित्यविशाखमैत्र-
शक्रोद्भवा मिश्रगुणाः प्रदिष्टाः ।
शिवाजहस्ताश्विभवा जघन्याः
शेषोद्भवाः सत्यवचा भवन्ति ॥" * ॥

रविवारादौ शतभिषादियोगे ज्वरोत्पत्तिफलं तथा,—

"शिवशतभिषावातौ याम्यसर्पत्रिपूर्वाः
शनिरविकुजवारे भूतगोष्ठीनवम्याम् ।
इह हि मरणयोगे यो हि रोगोपयुक्तः
पशुपतिसमदेहः सोऽपि मृत्युं प्रयाति ॥
उत्तरे विंशतिर्ज्ञेया द्वौ मासौ श्रवणे तथा ।
धनिष्ठायामर्द्धमासं वारुणेन दशाहकम् ॥"

इति ज्योतिःसारस्वतकौशिकवचनम् ।

शतभीरुः, स्त्री,मल्लिका । इत्यमरः ॥ शतं बहवो वियोगिनो भीरवोऽस्या इति शतभीरुः । शीतभीरुरिति च पाठः । तदा शैत्यकालेन शीताद्भिन्नेति शीतभीरुः । इति भरतः ॥

शतमखः, पुं, (शतं मखा यज्ञा यस्य । ) इन्द्रः । इति हलायुधः ॥ ( यथा, कुमारे । २ । ६४ ।

"सङ्कल्पमधुकृत्स्त्र्यस्तचूताङ्कुराक्षः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥")

शतमन्युः, पुं, शतं मन्यवः क्रतवो यस्य । )इन्द्रः इत्यमरः ॥ ( यथा भागवते । १ । ८ । ६ ।

"याजयित्वाश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥"

शतयज्ञकारिणि, त्रि । यथा, ऋक्संहितायाम् । ४३ । ५४ ।

"त्वमस्तकः सर्वेश्वरः क्रमात्तुः
सहस्रशीर्षा शतमन्युरीक्षः ॥"

बहुक्रोधे च त्रि । यथा ऋग्वेदे । १०।१०३।७।

"वीरः शतमन्युरिन्द्रः ।"

"शतमन्युः बहुयज्ञः बहुक्रोधो वा ।" इति तद्भाष्ये सायणः ॥ )

शतमानः, पुं, क्ली,. रूप्यपलम् । आढकः । इत्यमरभरतौ ॥ ( यथा, मनुः । ८ । १३७ ।

"धरणानि दश ज्ञेयः शतमानस्तु राजतः ।"

चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥"

शतलोकपूर्णे, त्रि । यथा, वाजसनेयसंहितायाम् । १९ । ९३ ।

"इत्यूच्च यत्र [illegible]
यन्त्रैव ज्योतिस्तत्त्वं [illegible] ॥"

"शतानामनेकेषां [illegible] पूर्णा [illegible] नत् अनतपूर्णमित्यर्थः ।" इति तद्भाष्ये [illegible] धरः ॥ )

शतमार्जः, पुं, ( शतं शतवारं मार्जयति [illegible] योधि । इत्यत्र शतो + मृज् + अण् । ) [illegible] कारकः । इति कश्चित् ॥ ( कश्चित् [illegible] इति पाठः ॥ )

शतमूला, स्त्री, (शतं मूलानि यस्याः ।) दूर्वा वचा । इति राजनिर्घण्टः ॥

शतमूलिका, स्त्री, (शतं मूलानि यस्याः । त[illegible] स्वार्थे कन् । ) द्रवन्ती । इति राजनिर्घण्टः

शतमूली, स्त्री,(शतं मूलानि यस्याः । 'पाककर्ण' ४।१।६४ । ङीष् । )स्वनामख्यातौषधविशेषः तत्पर्य्यायः । बहुसुता २ अभीरुः ३ इन्दीवरी ४ वरी ५ ऋष्यप्रोक्ता ६ भीरुपत्री ७ नारायणी ८ शतावरी ९ अहेरुः १० । इत्यमरः रङ्गिणी ११ शटी १२ दीपिका १३ । इति जटाधरः ॥ ऋष्यगता १४ । इति शब्दरत्नावली ॥ शतपदी १५ पीवरी १६ भीवरी १७ दुष्पा १८ दिव्या१९ दीपिका२० दरकण्टिका २१ सूक्ष्मपत्रा २२ सुपत्रा २३ बहुमूला २४ शताह्वया २५ स्वादुरसा २६ शताह्वा २७ लघुपर्णिका २८आत्मगुप्ता २९ जटा ३० मूल[illegible] ३१ शतवीर्य्या ३२ महौषधी ३३ मधुरा ३४ शतमूला ३५ केशिका ३६ शतपत्रिका ३७ विश्वस्था ३८ वैष्णवी ३९ पार्व्वती ४०वासुदेवप्रियङ्करी ४१ दुर्मना ४२ तैलवल्ली ४३ । अस्या गुणाः । हृद्यत्वम् । मधुरत्वम् । हिमत्वम् । पित्तकफवातपित्तनाशित्वम् । तिक्तत्वम् । श्रेष्ठत्वम् रसायनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च

"शतावरी बहुसुता भीरुरिन्दीवरी वरी ।
नारायणी शतपदी शतवीर्य्या च पीवरी ॥
महाशतावरी त्वन्या शतमूल्यूर्द्ध्वकण्टिका ।
सहस्रवीर्य्या हेतुश्च ऋष्यप्रोक्ता महोदरी ॥
शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी
मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित्
शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्"

इति भावप्रकाशः ॥ *

अन्यच्च ।

"शतावरी वातपित्तमेहकृच्छ्रहरा वरा ।"

इति राजवल्लभः

शतयष्टिकः, पुं, ( शतं यष्टयो गुच्छा यस्य । शतलतिकाहारः । तत्पर्य्यायः । देवच्छन्दः २ इत्यमरः ॥

शतद (द्वि) द्रीयं, त्रि, (शतं [illegible] शतवत्+"शतवद्भ्यां [illegible]" इत्यस्य वार्त्तिकोक्त्या [illegible] दिनम् । इति सिद्धान्तकौमुदी [illegible] भारते । [illegible]

पुलस्त्य उवाच ।

"यदाषाढी समायाति ब्रजति चोत्तरायणम् ।
तदा स्वपिति देवेशो भोगिभोगे श्रियः पतिः ॥
प्रतिसुप्ते विभौ तस्मिन् देवगन्धर्वगुह्यकाः ।
देवानां मातरश्चापि प्रसुप्ताश्चाप्यनुक्रमात् ॥

नारद उवाच ।

कथयस्व सुरादीनां शयने विधिमुत्तमम् ।
सर्वमनुक्रमेणैव पुरस्कृत्य जनार्दनम् ॥

पुलस्त्य उवाच ।

मिथुनाभिगते सूर्य्ये शुक्लपक्षे तपोधन ।
एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ॥
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् ।
कृत्वोपवीतकञ्चैव सम्यक् संपूज्य च द्विजान् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं स्वस्तिनिद्रां समानयेत् ॥
त्रयोदश्यां ततः कामः स्वपते शयने शुभे ।
कदम्बानां सुगन्धानां कुसुमैः परिकल्पिते ॥
चतुर्दश्यां ततो यक्षाः स्वपन्ति सुखशीतले ।
सुवर्णपङ्कजकृते सुखास्तीर्णोपधानके ॥
पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे ।
वैयाघ्रे च जटाभारं समुद्ग्रथ्यान्यचर्मणा ॥
ततो दिवाकरो राशिं संप्रयाति च कर्कटम् ।
ततोऽमराणां रजनी भवते दक्षिणायनम् ॥
ब्रह्मा प्रतिपदि तथा नीलोत्पलदलेऽनघ ।
तल्पे स्वपिति देवानां दर्शयन् मार्गमुत्तमम् ॥
विश्वकर्मा द्वितीयायां तृतीयायां गिरेः सुता ।
विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि धर्मराट् ॥
षष्ठ्यां स्कन्दश्च स्वपिति सप्तम्यां भगवान् रविः ।
कात्यायनी तथाष्टम्यां नवम्यां कमलालया ॥
दशम्यां भुजगेन्द्राश्च स्वपन्ति वायुभोजनाः ।
एकादश्यान्तु कृष्णायां साध्या ब्रह्मन् स्वपन्ति हि ॥
एष क्रमस्ते गदितो निशायां शयने मुने ।
स्वपत्सु तेषु देवेषु प्रावृट्कालः समाययौ ॥
कङ्काः समं बलाकाभिरारोहन्ति नगोत्तमान् ।
वायसाश्चापि कुर्वन्ति नीडानि मुनिपुङ्गव ।
वायस्यश्च स्वपन्त्येता ऋतौ गर्भभरालसाः ।
यस्यां तिथ्यां प्रस्वपिति विश्वकर्मा प्रजापतिः ।
द्वितीया सा शुभा पुण्या सुपुण्या शयनोदिता ॥
तस्यां तिथावभ्यर्च्य हरिं श्रीवत्साङ्कं चतुर्भुजम् ।
पर्य्यङ्कस्थं समं लक्ष्म्या गन्धपुष्पादिभिर्मुने ॥
ततो देवाय शय्यायां फलानि प्रक्षिपेत् क्रमात् ।
सुरभीणि निवेद्येत्थं विज्ञाप्यो मधुसूदनः ॥

> यथा हि लक्ष्म्या न वियुज्यसे त्वं
> त्रिविक्रमानन्त जगन्निवास ।
> तथास्त्वशून्यं शयनं सदैव
> अस्माकमेवेह तव प्रसादात् ॥
> यथा त्वशून्यं तव देव तल्पं
> समं हि लक्ष्म्या वरदाच्युतेश ।
> [illegible]
> [illegible]

[illegible]

नक्तं कुर्वीत देवर्षे तैलक्षारविवर्जितम् ॥
द्वितीयेऽह्नि द्विजाग्र्याय फलं दद्याद्विचक्षणः ।
लक्ष्मीधर प्रीयतां मे इत्युच्चार्य निवेदयेत् ॥
अनेन तु विधानेन चातुर्मास्यव्रतं चरेत् ।
यावद्वृश्चिकराशिस्थः प्रतिभाति दिवाकरः ।
ततो विबुध्यन्ति सुराः क्रमशः क्रमशो मुने ॥
नभस्ये मासि च तथा या स्यात् कृष्णाष्टमी शुभा ।
युक्ता मृगशिरेणैव सा तु कालाष्टमी स्मृता ॥
तस्यां सर्वेषु लिङ्गेषु तिथौ स्वपिति शङ्करः ।
वसते सन्निधाने तु तत्र पूजाक्षया स्मृता ॥"

इति वामने १६ अध्यायः ॥*॥

अथ हरिशयनादिव्यवस्था । भविष्यनारदीययोः ।

> "मैत्राद्यपादे स्वपितीह विष्णु-
> र्वैष्णव्यमध्ये परिवर्त्तते च ।
> पौष्णावसाने च सुरारिहन्ता
> प्रबुध्यते मासचतुष्टयेन ॥"

मैत्रमनुराधा । वैष्णवं श्रवणा । पौष्णं रेवती । भविष्ये ।

"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम्
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत् ॥"

इत्यत्र नक्षत्रयोगप्राप्तौ फलातिशयः । एतद्विधानं वामनपुराणे ।

"एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ।
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत् ॥"

अनुज्ञां लब्ध्वा इत्यन्वयः । एकादशीसमये दिवाशयनीयकल्पनं रात्रौ द्वादशीक्षणे निद्रेति । विष्णुधर्मोत्तरे ।

"स्वास्तीर्णशयनं कृत्वा प्रीणयेच्छेषशायिनम् ।
आषाढशुक्लद्वादश्यां विष्णुलोके महीयते ॥"

स्वास्तीर्णशयनं शोभनास्तरणयुक्तं खट्वादि । वराहपुराणे श्रीभगवानुवाच ।

"अन्यत्तु संप्रवक्ष्यामि कर्म संसारमोचनम् ।
कदम्बकुटजश्चैव धवकोऽर्ज्जुनकस्तथा ॥
एभिरभ्यर्च्चनं कुर्य्याद्विधिदृष्टेन कर्मणा ।
ततः संस्थापनं कृत्वा मम मन्त्रविधिः स्मृतः ।
नमो नारायणायोक्त्वा इमं मन्त्रमुदीरयेत् ॥

> पश्यन्तु मेघानपि मेघश्यामं
> समुपागतं सिच्यमानं महीमिमाम् ।
> निद्रां भगवान् भजतु लोकनाथ
> वर्षास्विमं पश्यतु मेघवृन्दम् ॥
> ज्ञात्वैव पश्यैव च लोकनाथ मासा-
> श्चत्वारि वैकुण्ठस्य च पद्मनाथ ।

आषाढशुक्लद्वादश्यां सर्वशान्तिकरं शिवम् ॥
य एतेन विधानेन भूमि ! मे कर्म कारयेत् ।
स पुमान् न प्रणश्येत्तु संसारेषु युगे युगे ॥"

शयने कुटजविधानात् विष्णुधर्मोत्तरीयनिषेधोऽन्यत्र । धवकः कपित्थः । संस्थापनं समापनम् । भूमि इति पृथिव्याः सम्बोधनम् ।

"एवमुक्तेन मन्त्रेण [illegible] ।
सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम् ।
विबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम् ॥"

इति मन्त्रेण पूजयेत् ॥*॥

"प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि ।
कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते ॥"

कटदानं पार्श्वपरिवर्त्तः । कामरूपीयनिबन्धे ।

"एवं संपूज्य विधिवद् भाद्रस्य द्वादशीदिने ।
मन्त्रेणानेन देवेशं पार्श्वेन परिवर्त्तयेत् ॥
वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव ॥
त्वयि सुप्ते जगन्नाथ जगत्सर्वं चराचरम् ॥"

ब्रह्मपुराणे ।

"एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवम्
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥"

रात्रौ प्रसुप्तमित्यन्वयः । बोधनन्तु दिवैव ॥

"कृत्वा वै मम कर्म्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ॥

> महेन्द्ररुद्रैरभिनूयमानो
> भवानृषिर्वन्दितवन्दनीयः ।
> प्राप्ता तवेयं किल कौमुदाख्या
> जागृष्व जागृष्व च लोकनाथ ॥
> मेघा गता निर्म्मलपूर्णचन्द्रः
> शारद्यपुष्पाणि च लोकनाथ ।
> अहं ददानीति च पुण्यहेतो-
> र्जागृष्व जागृष्व च लोकनाथ ॥

एवं कर्म्माणि कुर्वीरन् द्वादश्यां ये यशस्विनि ।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम् ॥"

अत्र मन्त्रद्वयपाठान्तरम् ।

"उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम् ॥"

इति सम्प्रदायागतस्तृतीयः श्लोक इति वाचस्पतिमिश्राः ॥ शयनोत्थानमन्त्रास्तु कल्पतरुप्रभृतिग्रन्थसंवादाल्लिखिताः । तदेवं द्वादश्यां एकादश्यां वा रेवत्यन्तपादयोगवशाद्विष्णोत्थानं नक्षत्रयोगाभावे तु द्वादश्यामेव कारयेदिति गुरुचरणाः । जीमूतवाहनस्तु भविष्ये ।

"आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु प्रस्वापावर्त्तबोधनम् ॥"

आ-भा-का-सितपक्षेषु आषाढ-भाद्र कार्त्तिकशुक्लपक्षेषु । एवञ्च द्वादश्यां प्राप्तौ मुख्यकल्पः । भविष्यपुराणम् ।

"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत् ॥"

विष्णुधर्मोत्तरे ।

"विष्णुर्दिवा न स्वपिति न रात्रौ प्रतिबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरेः ।
पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत् ॥"

वचनान्तरम् ।

"रेवत्यन्ते यदा रात्रौ द्वादश्यां च समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥

"त्यज संसारमसारमेव शरणं पार्व्वतीरमणम्।
विश्वविधि स्तुतिमिश्वरं विश्वमिदं तव निदिध-
नाम ॥")

रक्षणम्। वधः। इति मेदिनी ॥ घातकः।
इति शब्दरत्नावली ॥

शरणा, स्त्री, प्रसारणी। इति शब्दरत्नावली ॥

शरणागतः, त्रि, (शरणमागतः प्राप्तः।) शरणा-
पन्नः। तत्पर्य्यायः। शरणापन्नः२ अभिपन्नः३
शरणार्थी ४। इति त्रिकाण्डशेषः ॥ तद्रक्षणा-
रक्षणयोः गुणदोषौ यथा,—
"शक्तिहीनस्य भीतस्य दीनस्य शरणागतम्।
यो न रक्षत्यधर्म्मिष्ठः कुम्भीपाके वसेद्युगम् ॥
राजसूयशतानाञ्च रक्षिता लभते फलम्।
परमैश्वर्य्ययुक्तश्च धर्म्मेण न भवेदिह ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५५ अध्यायः ॥*॥
अपि च।
"शरणागतरक्षां यः प्राणैरपि धनैरपि।
कुरुते मानवो ज्ञानी तस्य पुण्यं निशामय ॥
सर्व्वपापविनिर्म्मुक्तो ब्रह्महत्यामुखैरपि।
आयुषोऽन्ते व्रजेन्मोक्षं योगिनामपि दुर्लभम्॥"
इति पाद्मे क्रियायोगसारे गङ्गामाहात्म्यं नाम
८ अध्यायः ॥ अन्यच्च।
"लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेत् शरणागतम्।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि।
शरणागतघातुस्तु न दृष्टा निष्कृतिः क्वचित् ॥"
इति वह्निपुराणे दानावस्थानिर्णयनामाध्यायः॥

शरणार्थी, [न्] त्रि, (शरणं अर्थयते इति।
अर्थ+णिनिः।) शरणागतः। इति हेम-
चन्द्रः ॥ (यथा, महाभारते। १। १६२।१०।
"आगतस्य गृहं त्यागस्तथैव शरणार्थिनः।
याचमानस्य च वधो नृशंसो गर्हितो बुधैः॥")

शरणार्पकः, त्रि, (शरणार्थमर्पयति आत्मान-
मिति। अर्प+ण्वुल्।) शरणापन्नः। इति
त्रिकाण्डशेषः।

शरणिः, स्त्री, पन्थाः। इत्यमरः ॥ सरत्यनयेति
सरणिः नाप्नोति अनिः इदन्तात् पक्षे ईपि
सरणी च।
"सरणिः श्रोणिवत्र्म नोरिति दन्त्यादौ रभसः।"
शृञ् गि हिंसने इत्यस्मात् पूर्व्ववदनौ शरणि-
स्तालव्यादिश्च। शुभं शुभे प्रदीप्ते च शरणिः
पथि चावनाविति तालव्यादावजयः। इति
तट्टीकायां भरतः ॥ पृथ्वी। इत्यजयः॥ (हिंसा
यथा, ऋग्वेदे। १। ३१। १६।
"इमामग्ने शरणिं मीमृषो नः।"
"हे अग्ने नोऽस्मत्सम्बन्धिनीं इमामिदानीं
सम्पादितां शरणिं हिंसां व्रतलोपरूपां मीमृषः
क्षमस्व ॥*॥ शरणिं शृ हिंसायामित्यस्मादौ-
णादिकः अनिः प्रत्ययः॥" इति तद्भाष्ये सायणः॥

शरणी, स्त्री, (शरणि+वा ङीष्।) पन्थाः।
प्रसारणी। इति शब्दरत्नावली ॥ जयन्ती।
इति शब्दचन्द्रिका ॥

शरण्डः, पुं, पक्षी। कामुकः। इति शब्दरत्नावली॥
धूर्त्तः। शरटः भूषणभेदः। इति मेदिनी ॥
चतुष्पात्। इति संक्षिप्तसारोणादिवृत्तिः ॥

शरण्यः, त्रि, (शृणाति भयमिति। शृ हिंसा-
याम् +"शरण्योच।" उणा० ३।१०१। इति
अन्यः। यद्वा, शरणमिव। शरण+"शाखा
दिभ्यो यः।" ५।३।१०३। इति यः।) रक्षा-
कर्त्ता यथा,—
"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्।
भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥"
इति श्रीभागवतम् ॥

शरण्या, स्त्री, (शरण्य+टाप्।) दुर्गा। यथा
"विषाग्निभयघोरेषु शरण्यं शरणादृयतः।
शरण्या तेन सा देवी पुराणे परिपठ्यते ॥"
इति देवीपुराणे देवीनिरुक्ताध्यायः ॥

शरण्युः, पुं, वारिदः। वातः। इति विश्वः ॥
भरण्युः। इति शब्दमाला ॥

शरत्, [द्] स्त्री, (शृ हिंसायाम्+("शृ दृभ-
सोऽदिः ॥" उणा० १।१२८। इति अदिः।)
वत्सरः। (यथा, रघुः। १०। १।
"पृथिवीं शासतस्तस्य पाकशासनतेजसः।
किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥")
ऋतुविशेषः। स चाश्विनकार्त्तिकमासद्वया-
त्मकः। इत्यमरः ॥ तत्पर्य्यायः। शारदा २
कालप्रभातः ३। इति शब्दरत्नावली ॥ काल-
प्रभातम् ४। इति त्रिकाण्डशेषः ॥ वर्षाव-
सानः ५ मेघान्तः ६ प्रावृडत्ययः ७। (यथा,
रघुः। ४। २४।
"सरितः कुर्व्वती गाधाः पथश्चाश्यानकर्द्दमान्।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥)"
तत्र जलगुणाः।
"वर्षासु नाभसं वारि सेवतोद्भिदमेव वा।
सर्व्वं शरदि हेमन्ते तडागं सारसन्तु वा ॥*"॥
तत्र शाल्यवायुर्यथा,—
"वसन्ते दक्षिणो वातो भवेत् वर्षासु पश्चिमः।
उत्तरः शारदे काले पूर्व्वो हेमन्तशैशिरे ॥"
इति राजनिर्घण्टः ॥*॥
अपि च।
"शारदस्यानभिष्यन्दि लघु तत्परिकीर्त्तितम्।
हैमन्तिकं जलं स्निग्धं बल्यं हृद्यं हितं गुरु॥"
इति राजवल्लभः ॥*॥
वैद्यकमते भाद्राश्विनमासात्मकः। केचित्तु।
"ऋतुषट्कं समाख्यातं रवौ राशिषु संक्र-
मात् ॥
मीनो मेषवृषौ प्रोक्तः प्रावृट् मिथुनकर्कटौ।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत्।
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनकौ ॥"
अन्ये तु।
"शिशिरः पुष्यसमयौ शीतौ वर्षौ मघशिमः।
माघादिमासयुग्मैः [illegible]"

तस्या गुणाः।
"शरदुष्णा [illegible]
इति [illegible]
तत्र जातफलम्।
"नरः शरत्प्रसवकाल[illegible]
भवेत् सुकर्म्मा मनुज[illegible]।
शुचिः सुशीली गुणवान् [illegible]
धनान्वितो राजकुलप्रपन्नः ॥"
इति कोष्ठीप्रदीपः ॥
तत्र वर्णनीयानि यथा। चन्द्रपटुता। रवि-
पटुता। जलशुभ्रता। घनसङ्गः। हंसः। वृषः।
सर्पः। सप्तच्छदः। पद्मम्। श्वेतमेघः। शा-
शिखिपक्षमदपातः। इति कविकल्पलता ॥

शरत्कामी, [न्] पुं, (शरदि शरत्काले कामयते
कुक्कुरीमिति। कम+णिङ्+णिनिः।) कुक्कुरः।
इति शब्दरत्नावली ॥

शरत्पद्मं, क्ली, (शरदः पद्मम्।) सिताम्भोजम्।
इति राजनिर्घण्टः ॥

शरत्पर्व्व, [न्] क्ली, (शरदः पर्व्व।) कोजागर
पूर्णिमा। यथा,—
"कोजागरः शरत्पर्व्व शारदी द्यूतपूर्णिमा।"
इति जटाधरः।

शरत्पुष्पं, क्ली (शरदः पुष्पम्।) पाटुलम्।
इति राजनिर्घण्टः ॥ शरदुद्भवकुसुमञ्च ॥

शरद्, स्त्री, (शृ+अदिः।) शरत्। इत्यमरः।

शरदन्तः, पुं, (शरदः तदाख्य-ऋतोरन्तो यस्मात्)
हेमन्तः। राजनिर्घण्टः ॥ इति।

शरदा, स्त्री, वत्सरः। शरदृतुः। इति शब्द-
रत्नावली ॥

शरदिजं, त्रि, (शरदि जायते यत्। जन+ड
"प्रावृट्शरत्कालदिवां जे।" ६।३।१५। इति
सप्तम्या अलुक्।) शरत्कालजातम्। यथा
"नद्यः प्रावृषिजास्तु पीनसकफश्वासार्त्तिका-
प्रदाः
पथ्या वातकफापहाः शरदिजा हेमन्तजा
बुद्धिदाः।
सन्तापं शमयन्ति संविदधते शैशिर्य्यवासन्तजा-
स्तृष्णादाहवमिभ्रमार्त्ति शमदा ग्रीष्मे भवाश्च
गुणाः ॥
इति राजनिर्घण्टः ॥

शरदुदाशयं, क्ली, शरत्कालीनसरोवरम् यथा,—
"शरदुदाशये साधुजातसत्-
सरसिजोदरश्रीमुषा दृशा।
सुरतनाथ तेऽशुल्कदासिका
वरद निघ्नतो नेह किं वधः ॥"
इति श्रीभागवते। १०।३१।२।
शरदुदाशये शरत्कालीनसरसि। इति श्रीधर-
स्वामी ॥

शरधिः, पुं, (शरा धीयन्तेऽस्मिन्निति। शर+
धा+"कर्म्मण्यधिकरणे च।" ३।३।९३। इति
इति किः।) तूणः। [illegible]
[illegible]

[illegible]
माघे

[illegible] शिरश्चापखण्डोदयधिया [illegible]
[illegible]वती ॥" )

शरपुङ्खा, स्त्री पुं, (शरस्य पुङ्खेव आकृतिर्यस्याः।) नीलीवत्प्रकृतिक्षुपविशेषः। शरफोंका इति हिन्दीभाषा। तत्पर्य्यायः। काण्डपुङ्खा २ बाणपुङ्खा ३ इषुपुङ्खिका ४ सायकपुङ्खा ५ इषुपुङ्खा ६। अस्या गुणाः। कटुत्वम्। उष्णत्वम्। कृमिवातव्रणापहत्वम्। शोथकासशोधनत्वञ्च। इति राजनिर्घण्टः॥ अपि च।
"शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः।
तिक्तः कषायः कासास्रश्वासज्वरहरो लघुः॥"
इति भावप्रकाशः॥

शरपक्ष पत्ते, पुं॥ ( स्त्री, यन्त्रविशेषः। यथा, सुश्रुते। १। ७। "तेषां गण्डूपदशरपुङ्खसर्पफणवडिशमुखे द्वे द्वे एषणव्यूहनचालनाहरणार्थमुदिश्यते॥" )

शर(ल)भः, पुं, (शृणाति हिनस्तीति। शॄ हिंसायाम्+"कृशृशलिकलिगर्दिभ्योऽभच्।" उणा० ३। १२२। इति अभच्।) मृगेन्द्रविशेषः। इत्यमरः॥ तत्पर्य्यायः। महामृगः २ महास्कन्धी ३ महामना ४ अष्टपादः ५ महासिंहः ६ मनस्वी ७ पर्व्वताश्रयः ८। इति राजनिर्घण्टः॥ अस्य लक्षणं यथा,—
"अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टयः।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम्॥"
इति महाभारतम्। १२। ११७। १२॥
करभः। ( यथा, ऋतुसंहारे। १। २३।
"भ्रमति गवययूथः सर्व्वतस्तोयमिच्छन्
शरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात्॥")
वानरविशेषः। इति मेदिनी॥ उष्ट्रः। इति शब्दधरः॥ ( विष्णुः। यथा, महाभारते। १३। १४९। ५२।
"चतुरः शरभो भीमः समयज्ञो हविर्हरिः॥"
दनुपुत्रविशेषः। यथा, तत्रैव। १। ६५। २६।
"शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा।
एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः॥"
नागविशेषः। यथा, तत्रैव। १। ५७। ११।
"विरजः शरभो मेदः प्रमोदः संहतापनः॥")

शरभूः, पुं, (शरे शरवणे भूरुत्पत्तिर्यस्य।) कार्त्तिकेयः। इति हेमचन्द्रः॥

शरमयं, त्रि, (शरस्य विकारोऽवयवो वा। शर+"नित्यं वृद्धशरादिभ्यः।" ४। ३। १४४। इति मयट्।) शरनिर्म्मितम्। यथा,—
"शरमयवर्हिषा कुशमयवर्हिर्भवति।" इति श्रुतिः॥

शरमृगः, पुं, ( शरे शरवणे मृग इव।) पक्षिविशेषः। इति [illegible] इति [illegible]
[illegible]
[illegible]

शरयु, [illegible] ) स्त्री, नदीविशेषः। इति त्रिकाण्ड-
शरयूः, [illegible] ) शेषः॥ [illegible] इति
बहुसम्मतः॥

शरलः, त्रि, त्रिगोलः। अव्यक्तहृदयः। वृक्षविशेषे पुं। इति सारस्वताभिधानम्॥ दन्त्यसादिरयमिति बहुसम्मतः॥

शरलकं, क्ली, जलम्। इति शब्दचन्द्रिका॥

शरवणोद्भवः, पुं, (शरवणे उद्भवो यस्य।) कार्त्तिकेयः। इति केचित्॥ ( यथा, महाभारते। ३। २३१। ८।
"ब्रह्मचारी ब्रह्मचारी च शूरः शरवणोद्भवः॥")

शरवाणिः, पुं, शरमुखम्। पदातिः। शरजीवी। इति हेमचन्द्रः॥

शरव्यं, क्ली, ( शरवे हिंसायै वाणक्षिप्त्यै वा साधु। शरु+"उगवादिभ्यो यत्॥" ५।१।२। इति यत्। यद्वा, शरान् व्ययति। व्ये+डः।) लक्ष्यम्। इत्यमरः॥ (यथा, माघे। ७। २४।
"विदधाति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम्॥")

शराघातः, पुं, (शरस्याघातः।) बाणाघातः। तत्पर्य्यायः। प्रचलाकः २। इति जटाधरः॥

शराटिः, स्त्री, ( शरं जलं अटति प्राप्नोतीति। अट्+इन्।) शरालिपक्षी। इति शब्दरत्नावली॥

शराडिः, स्त्री, शरालिपक्षी। इति शब्दरत्नावली॥

शरातिः, स्त्री, ( शरं जलमततीति। अत+इन्।) शरालिपक्षी। इत्यमरटीकायां रामाश्रमः॥

शराभ्यासः, पुं, (शराणामभ्यासः।) बाणशिक्षा। तत्पर्य्यायः। उपासनम् २। इत्यमरः॥ विकर्षणम् ३ खुरली ४ शस्त्राभ्यासः ५। इति शब्दरत्नावली॥

शरारिः, पुं, (शरं जलं ऋच्छतीति। ऋगतौ+"अच इः।" इति इः।) शरालिपक्षी। तत्पर्य्यायः। आटिः २ आडिः ३। इत्यमरः॥ आडी ४ शराडी ५ आडिका ६ शराली ७ शरालिः ८ शराटिः ९ शरालिका १०। इति शब्दरत्नावली॥ ( यथा, ऋतुसंहारे। ४। ८।
"प्रफुल्लनीलोत्पलशोभितानि
शरारिकादम्बविघट्टितानि।
प्रसन्नतोयानि सशैवलानि
सरांसि चेतांसि हरन्ति यूनाम्॥")
अस्य गुणाः। पवनापहत्वम्। स्निग्धत्वम्। बलप्रदत्वम्। लघुत्वम्। वातरक्तहरत्वम्। हिमत्वञ्च। इति राजवल्लभः॥ अपि च।
"हंससारसक्रौञ्चचक्रवाककुररशरारिकाः।
नन्दीमुखीसकादम्बाः बलाकाद्याः प्लवाः
स्मृताः॥
प्लवाः [illegible]
[illegible]
इति [illegible]॥"

शराव, [illegible]
राद्यः।" ३। २। १७३। इति चाप्।) [illegible]
इत्यमरः॥

शरारोपः, पुं, (शरस्यारोपो यस्मिन्।) धनुः। इति जटाधरः॥

शरालिः, स्त्री, शरारिपक्षी। इति शब्दरत्नावली॥

शरालिका, स्त्री, शरारिपक्षी। इति शब्दरत्नावली॥

शराली, स्त्री, शरारिपक्षी। इति शब्दरत्नावली॥

शरावः, पुं स्त्री, ( शरं जलं अवति रक्षतीति। अव रक्षणे+अच्।) मृत्पात्रविशेषः। सरा इति भाषा। तत्पर्य्यायः। वर्द्धमानकः २। इत्यमरः॥ मार्त्तिकः ३ सरावः ४ शराजिरम् ५ पार्थिवम् ६ मृत्पात्रम् ७। इति शब्दरत्नावली॥ (यथा, आर्य्यासप्तशत्याम्। १२६।
"उदितेऽपि तुहिनगहने गगनप्रान्ते न
दीप्यते तपनः।
कठिनस्तनपूरपूर्णे शरावशिरसि प्रदीप इव॥")
कुडवद्वयपरिमाणम्। तत्तु चतुःषष्टितोलकात्मकम्। सेर इति भाषा। तत्पर्य्यायः। मानिका २। इति शब्दमाला वैद्यकपरिभाषा च॥

शरावती, स्त्री, (शराः तृणविशेषाः सन्त्यस्यामिति। शर+मतुप्। "शरादीनाञ्च।" ६। ३। १२०। इति दीर्घः।) नदीविशेषः। इत्यमरः॥ (यथा, महाभारते। ६। ९। २०।
"शरावतीं पयोष्णीञ्च वेणां भीमरथीमपि॥"
लवस्य राजधानी। यथा, रघुः। १५। ९७।
"स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम्।
शरावत्यां सतां सूक्तैः जनिताश्रुलवं लवम्॥").

शरावार्द्धं, क्ली, (शरावस्य अर्द्धम्।) कुडवपरिमाणम्। तत्तु द्वात्रिंशत्तोलकात्मकम्। आधसेर इति भाषा। इति वैद्यकपरिभाषा॥

शराश्रयः, पुं, ( शराणामाश्रयः। ) तूणः। इति हेमचन्द्रः॥

शरासनं, क्ली, (शरा अस्यन्ते क्षिप्यन्तेऽनेनेति। असु+करणे ल्युट्।) धनुः। इत्यमरः॥ ( यथा, रघुः। ३। ५२।
"स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम्॥"
पुं, धृतराष्ट्रपुत्राणामन्यतमः। यथा, महाभारते। १। ११७। ४।
"चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः॥")

शरास्यं, क्ली, ( शरा अस्यन्तेऽनेनेति। असु+ण्यत्।) धनुः। यथा,—
"विस्फोर्य्य सर्व्वतः [illegible]
[illegible]
[illegible] ॥"

इति मार्कण्डेयपुराणे जैमिनिपक्षि[illegible] पुराणं परिपूर्णम् ॥

शरिमा, [न्] पुं, (शृणाति जीवनमिति शॄ + "इषिमदिमुदिखिदिछिदिभिदिमन्दि[illegible]।" उणा० ४।१४७। इति इमनिच्।) प्रसवः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

शरी, स्त्री, एरकातृणम्। इति भावप्रकाशः ॥

शरीरं, क्ली, (शॄ + "कॄशॄपॄकटिपटिशौटिभ्य ईरन्।" उणा० ४।३०। इति ईरन्।) शीर्य्यते रोगादिना यत्। तत्पर्य्यायः। कलेवरम् २ गात्रम् ३ वपुः ४ संहननम् ५ वर्ष्म ६ विग्रहः ७ कायः ८ देहः ९ मूर्त्तिः १० तनुः ११ तनूः १२। इत्यमरः ॥ क्षेत्रम् १३ पुरम् १४ घनः १५ अङ्गम् १६ पिण्डम् १७। इति राजनिर्घण्टः ॥ भूतात्मा १८ स्वर्गलोकेशः १९ स्कन्धः २० पञ्जरः २१ कुलम् २२ बलम् २३ आत्मा २४। इति जटाधरः ॥ स्कन्धम् २५। इति शब्दरत्नावली ॥ इन्द्रियायतनम् २६ भूः २७ मूर्त्तिमत् २८ करणम् २९ बेरम् ३० सञ्चरः ३१ बन्धः ३२ पुद्गलम् ३३। इति हेमचन्द्रः ॥*॥ शरीरधर्म्मा यथा,—

"शरीरे भस्मसाद्भूते प्रतिविम्बः स चात्मनः।
जीवस्तत्रान्तरीक्षस्थ उवाच विनयं विभुम् ॥
जीव उवाच।
सत्तुष्टिर्व्वा कदुष्टिर्व्वा कोपः सन्तोष एव च।
लोभो मोहश्च कामश्च क्षुत्पिपासादिकञ्च यत्
[illegible] कार्य्यञ्च नाशश्च इत्याद्यं समुद्भवम्।
सर्व्वं शरीरधर्म्मश्च न जीवस्य न चात्मनः ॥
सत्त्वं रजस्तम इति शरीरं त्रिगुणात्मकम्।
तच्च नानाप्रकारञ्च प्रबोध कथयामि ते ॥
किञ्चित् सत्त्वातिरिक्तञ्च किञ्चिदेव रजोऽधिकम्।
तमोऽतिरिक्तं किञ्चिच्च न समं कुत्रचिन्मुने ॥
सत्त्वाद्दया च मुक्तीच्छा कर्मेच्छा च रजोगुणात्।
तमोगुणाज्जीवहिंसा कोपोऽहङ्कार एव च ॥
कोपात् कदुष्टिर्नियतं कदुतया शत्रुता भवेत्।
तया चाप्रियता सद्यः शत्रुः कः कस्य भूतले ॥
को वा प्रियोऽप्रियो वा कः किं मित्रं को रिपुर्भुवि।
इन्द्रियाणि च जीवानि सर्व्वत्र शत्रुमित्रयोः ॥"

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २४ अः ॥*॥ [illegible] स्त्रीपुंसयोः सर्व्वाङ्गानि पादादिशिरःपर्य्यन्तानि। प्रपदम् १ पार्ष्णिः २ गुल्फः ३ [illegible] ४ [illegible] ५ जानु ६ ऊरुः ७ वङ्क्षणः ८ [illegible] ९ [illegible] १० नितम्बः ११ स्फिक् १२ [illegible] १३ [illegible] १४ ककुन्दरम् १५ जघनम् १६ जठरम् १७ नाभिः १८ वलिः १९ स्तनः २० चूचुकम् २१ [illegible] २२ रोम २३ कक्षः २४ [illegible] २५ [illegible] २६ [illegible] २७ पार्श्वः २८ [illegible] २९ [illegible] ३० [illegible] ३१ प्रकोष्ठः ३२ [illegible] ३३ अङ्गुलिः ३४ [illegible] ३५ नखः [illegible] ३६ नखाः ३७ [illegible] [illegible] ३९ [illegible] ४० शिरोधिः ४१ [illegible] ४२ मुखम् ४३ ओष्ठः ४४ चिबुकम् ४५ हनुः ४६ [illegible] ४७ तालु ४८ रदः ४९ जिह्वा ५० नासा ५१ भ्रूः ५२ गण्डः ५३ लोचनम् ५४ अपाङ्गः ५५ तारा ५६ कर्णः ५७ भालः ५८ मस्तकम् ५९ केशः ६०। इति कविकल्पलता ॥ * ॥

परमेश्वरशरीरतो देवानामुत्पत्तिर्यथा,—

"सर्व्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः।
विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः ॥
अग्निस्तथाश्विनौ गौरी गजवक्त्रो भुजङ्गमः।
कार्त्तिकेयस्तथादित्यो मातरो दुर्गया सह ॥
दिशो धनपतिर्विष्णुर्धर्म्मो रुद्रः शशी तथा।
पितरश्चेति संभूताः प्राधान्येन जगत्पतेः ॥
हिरण्यगर्भस्य तनौ सर्व्वे एव समुद्भवाः।
पृथक् पृथक् ततो गर्व्वं वहमानाः समन्ततः ॥
अहं योग्यस्त्वहं याज्य इति तेषां स्वनो महान्।
श्रूयते देवसमितौ क्षुब्धसागरसन्निभः ॥
तेषां विवदमानानां वह्निरुत्थाय पार्थिव।
उवाच मां यजस्वेति ध्यायध्वं मामिति ब्रुवन् ॥
प्राजापत्यमिदं नूनं शरीरं महिना कृतम्।
विनाशमुपपद्येत यतो नाहं महानहम् ॥
एवमुक्त्वा शरीरन्तु त्यक्त्वा वह्निर्व्विनिर्ययौ।
निर्गतेऽपि ततस्तस्मिंस्तच्छरीरं न शीर्य्यते ॥
ततोऽश्विनौ मूर्त्तिमन्तौ प्राणापानशरीरगौ।
आवां प्रधानावित्येवमूचतुर्याज्यवर्त्तरौ ॥
एवमुक्त्वा शरीरं तौ विहाय क्वचिदास्थितौ।
तयोरपि क्षयं ज्ञात्वा शीर्णं तत्पुरमास्थितः ॥
ततश्च वाग्ब्रवीद्गौरी प्राधान्यमपि संस्थितम्।
साप्येवमुक्त्वा क्षेत्रात्तु निश्चक्राम बहिः शुभा ॥
तया विनापि तत् क्षेत्रं वागूनं व्यवतिष्ठते।
ततो गणपतिर्व्योममाकाशाख्योऽब्रवीत्तदा ॥
न मया रहितं किञ्चिच्छरीरस्थोऽपि दूरतः।
कालान्तरेत्येवमुक्त्वा सोऽपि निष्क्रम्य देहतः ॥
पृथग्भूतस्तथा ह्येतच्छरीरं नाप्यनीनशत्।
विना सांख्यस्य तत्त्वेन तथापि न विशीर्य्यते ॥
शुषिरैस्तु विहीनन्तु दृष्ट्वा क्षेत्रं व्यवस्थितम्।
शरीरधातवः सर्व्वे ते भूयुर्व्वाक्यमेव हि ॥
अस्माभिर्व्यतिरिक्तस्य न शरीरस्य धारणम्।
भवतीत्येवमुक्त्वा ते जहुः सर्व्वे शरीरिणः ॥
तैर्व्यपेतमपि क्षेत्रं पुरुषेण प्रपाल्यते।
तद्दृष्ट्वा त्वब्रवीत् स्कन्दः सोऽहङ्कारः प्रकीर्त्तितः ॥
मया विना शरीरस्य सम्भूतिरपि नेष्यते।
एवमुक्त्वा शरीरात्तु सोऽप्यपेतः पृथक् स्थितः ॥
तेनापेतेन तत् क्षेत्रं विना मुक्तवदास्थितम्।
तद्दृष्ट्वा कुपितो भानुः स चादित्यः प्रकीर्त्तितः ॥
मया विना कथं क्षेत्रमिमं क्षणमपीष्यते।
एवमुक्त्वाथ यातः स तच्छरीरं न शीर्य्यते ॥
ततः कोपादिवर्गश्च मातरो [illegible]।
न [illegible] अतिरिक्तञ्च शरीरस्य व्यवस्थितिः ॥
[illegible] शरीरं [illegible]
ततो [illegible]
[illegible]
न [illegible] विना [illegible]
ततो दिशः समुत्तस्थुरुचुर्वै वचो महत् ॥
नास्माभी रहितं कार्य्यं [illegible]
चतस्र आगताः [illegible]
ततो धनपतिर्व्वायुर्मध्ये [illegible]
शरीरस्येति सोऽप्येवमुक्त्वा [illegible]
ततो विष्णोर्मनो भूयात् नायं [illegible]
क्षणमप्युत्सहे [illegible] पुनः ॥
ततो धर्म्मोऽब्रवीत् सर्व्वमिदं पालितवानहम्।
इदानीं मय्युपगते कथमेतद्भविष्यति ॥
एवमुक्त्वा गते धर्म्मे तच्छरीरं न शीर्य्यते।
ततोऽब्रवीन्महादेवश्चाव्यक्तो भूतनायकः ॥
महत्संज्ञो मया हीनं शरीरं नो भवेद्ध्रुवम्।
एवमुक्त्वा गतः शम्भुस्तच्छरीरं न शीर्य्यते ॥
तद्दृष्ट्वा पितरश्चोचुस्तन्मात्रा यावदक्षिः।
प्राणान्तरैभिरेतच्च शरीरं शीर्य्यते ध्रुवम् ॥
एवमुक्त्वा तु तं देहं त्यक्त्वान्तर्द्धानमागताः।
अग्निः प्राणः अपानश्च आकाशश्चैव वातकः ॥
क्षेत्रं तद्वत्स्वहंकारो भानुः कामादयो मता।
काष्ठा वायुर्विष्णुधर्म्मौ शम्भुश्चैवेन्द्रियार्थकाः ॥
एतैर्मुक्तन्तु तत् क्षेत्रं मुक्ताविव सुसंस्थितम्।
सोमेन पाल्यमानन्तु पुरुषेणेन्दुरूपिणा ॥
एवं व्यवस्थिते सोमे षोड़शात्मन्यथाक्षरे।
प्राग्वत्तत्र गुणोपेतं क्षेत्रमुत्थाय यद्भवेत् ॥
प्रागवस्थं शरीरन्तु दृष्ट्वा सर्व्वप्रपालितम्।
ताः क्षेत्रदेवताः सर्व्वा वैलक्ष्यं भावमाश्रिताः ॥
तमेवं तुष्टुवुः सर्व्वास्तं देवं परमेश्वरम्।"

इति वाराहे महातपोपाख्याननामाध्यायः ॥*॥

शरीराङ्गं यथा,—

"शरीरमापः सोमश्च विविधं चाक्षमुच्यते।
प्राणो ह्यग्निस्तथादित्यस्त्रिभोक्ता एक एव तु ॥"

इति गारुड़े २१५ अध्यायः ॥*॥

मानसकायिकत्वे शरीरव्रतं यथा,—

धरण्युवाच।
"कथमाराध्यसे देव भक्तिमद्भिर्नरैर्विभो।
स्त्रीभिर्वा सर्व्वमेतन्मे शंस त्वं भूतभावन ॥
वाराह उवाच।
भावसाध्यस्त्वहं देवि न वित्तेन जपेन च।
साध्यस्तथापि भूतानां कायक्लेशं वदामि ते ॥
कर्म्मणा मनसा वाचा मच्चित्तो यो नरो भवेत्।
तस्य व्रतानि वक्ष्येऽहं विविधानि निबोध मे ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषम्।
एतानि मानसान्याहुर्व्रतानि तु [illegible]
एकभक्तं तथा नक्तमुपवासादिकञ्च यत्।
तत् सर्व्वं कायिकं पुंसां व्रतं भवति [illegible]"

इति वाराहे [illegible]

शरीरजः, पुं, [illegible]
[illegible]

[illegible]

"मत्स्यण्डिका खण्डसिता गुणश्रेष्ठा यथोत्तरम्
स्निग्धा शीतला स्निग्धा गुर्व्यः स्वादुतराः"

[illegible] सराः ॥

[illegible]शीतरक्तपित्तानिलापहाः ।
[illegible] पाश्चिणी बल्या कषाया वातजिद्-

[illegible] गुरुः ॥

[illegible] गुरु सरं वृष्यं वातघ्नं बलपुष्टिदम् ।
सितोपला सरा गुर्वी वातघ्नी न कफप्रदा ॥"

इति पथ्यापथ्यविवेकः ॥*॥

अन्यच्च ।
"शर्करा ज्वरपित्तास्रङ्मूर्च्छाच्छर्दितृषापहा ।
तृष्णाप्रशमनी[illegible] ज्वरदाहास्रपित्तनुत् ॥
[illegible]मत्स्यण्डिकासिताः ।
निर्मला स्वच्छोर्ध्वा याः शीतवीर्य्या यथोत्तरम् ।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥"

इति राजवल्लभः ॥*॥

किञ्च ।
"खण्डन्तु सिकतारूपं सुश्वेतं शर्करा सिता ।
सिता सुमधुरा रुच्या वातपित्तास्रदाहजित् ।
मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्र-
कारिणी ॥*॥
[illegible]सिता शीता रक्तपित्तहरी लघुः ।
सितोपला सरा लघ्वी वातपित्तहरी हिमा ॥*॥
मधुजा शर्करा रूक्षा कफपित्तहरी गुरुः ।
[illegible]तीसारतृड्दाहरक्तास्रुवरा हिमा ॥
यथा यथैषां नैर्म्मल्यं मधुरत्वं तथा तथा ।
[illegible]सरत्वञ्च तथा तथा ॥"

इति भावप्रकाशः ॥*॥

उपला । कर्परांशः । ( यथा, महाभारते । ३ । ५५ । २ ।
"ततो वायुर्महान् शीघ्रो नीचैः शर्करवर्षणः ॥"
शर्करान्वितदेशः । रोगभेदः । शकलम् । इति मेदिनी ॥ शर्करारोगस्य निदानचिकित्सादि-
र्मूत्रकृच्छ्रशब्दे द्रष्टव्यः ॥(कूर्म्मचक्रस्य पुच्छदेश-
स्थितदेशविशेषः । यथा, मार्कण्डेये । ५८ ।३५।
"तारक्षुरा शृङ्गलाः शर्कराः शाल्व-
वेश्मकाः ॥")

शर्कराचलः, पुं, (शर्करामयोऽचलः ।) दानार्थ-
[illegible]शर्करामयाचलविशेषः । अस्य विवरणं
पर्व्वतशब्दे द्रष्टव्यम् ॥

शर्कराधेनुः, स्त्री, (शर्कराभिर्निर्म्मिता धेनुः ।)
[illegible]शर्करानिर्म्मितधेनुः । तद्विधिर्यथा,—
[illegible] श्रीहोतोवाच ।
"[illegible] शर्कराधेनुं शृणु राजन् यथार्थतः ।
[illegible] कृष्णाजिनकुशोत्तरे ॥
[illegible] कृत्वा भारचतुष्टयम् ।
[illegible]तुर्थांशेन वत्सकम् ॥
[illegible] भारकेण तु ।
[illegible] तत्ततः ॥
[illegible]
[illegible]

[illegible]
सौवर्णमुख[illegible] मौक्तिकानयनौ तथा ॥
गुडेन तु मुखं कार्य्यं जिह्वा पिष्टमयी तथा ।
कम्बलं पट्टसूत्रेण कण्ठाभरणभूषितम् ॥
इक्षुपादां रौप्यखुरां नवनीतमयस्तनीम् ।
प्रशस्तपत्रश्रवणां सितचामरभूषिताम् ॥
पञ्चरत्नसमायुक्तां वस्त्रेणाच्छादितां तथा ।
गन्धपुष्पैरलङ्कृत्य ब्राह्मणाय कुटुम्बिने ॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते ।
वेदवेदाङ्गविदुषे आहिताग्नेर्विशेषतः ॥
अदुष्टाय प्रदातव्या न तु मत्सरिणे नृप ।
अयने विषुवे पुण्ये व्यतीपाते शशिक्षये ॥
एषु पुण्येषु कालेषु यदृच्छया वा सदार्पयेत् ।
सत्पात्रन्तु द्विजं दृष्ट्वा आगतं श्रोत्रियं गृहे ॥
तादृशाय प्रदातव्या पुच्छदेशे विन्यस्य च ।
पूर्व्वाभिमुखमास्थाय अथवा स उदङ्मुखः ॥
गां पूर्व्वाभिमुखीं कृत्वा वत्समुत्तरतो न्यसेत् ।
दानकाले तु ये मन्त्रास्तान् पठित्वा समर्पयेत् ॥
संपूज्य विधिवद्विप्रं मुद्रिकाकर्णभूषणैः ।
स्वशक्त्या दक्षिणां दत्त्वा वित्तशाठ्यविवर्जितः ॥
हस्ते तु दक्षिणां दत्त्वा गन्धपुष्पसचन्दनाम् ।
धेनुं समर्पयेत्तस्य मुखञ्च न विलोकयेत् ॥
एकाहं शर्कराहारो ब्राह्मणस्तद्दिनं वसेत् ।
सर्व्वपापहरा धेनुः सर्वकामप्रदायिनी ।
सर्वकामसमृद्धस्तु जायते नात्र संशयः ॥
दीयमानां प्रशंसन्ति ते यान्ति परमां गतिम्
य इदं शृणुयान्नित्यं पठते वापि मानवः ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥"

इति वाराहे शर्कराधेनुमाहात्म्यनामाध्यायः॥

शर्कराप्रभा, स्त्री,(शर्करेव प्रभा यस्याः ।)जिनानां
नरकविशेषः । यथा,—
"रत्नशर्करावालुकापङ्कधूमतमःप्रभा ।
महातमःप्रभा चेत्यधोऽधो नरकभूमयः ॥"

इति हेमचन्द्रः ॥

शर्करार्बुदः, पुं, क्ली (शर्करावदर्बुदः । )क्षुद्ररोग-
विशेषः । तल्लक्षणं यथा,—
"प्राप्य मांसं शिराः स्नायुं मेदः श्लेष्मा तथानिलः
ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् ॥
स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः ।
मांसं विशोष्य ग्रथितां शर्करां जनयत्यतः ॥
दुर्गन्धक्लिन्नमत्यर्थं नानावर्णं ततः शिराः ।
स्रवन्ति सहसा रक्तं तं विद्याच्छर्करार्बुदम् ॥"
शर्करा वालुकातुल्या । तच्चिकित्सा यथा,—
"शिरोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ॥"

इति भावप्रकाशः ।

शर्करावान्, [त्] त्रि, (शर्करा विद्यतेऽस्मिन् ।
"देशे लुबिलचौ च ।" ५।२।१०५। इति मतुप् ।)
कर्परांशबहुलदेशः । तत्पर्य्यायः । शर्करा २
शर्करिलः ३ शार्करः ४ । इत्यमरः ॥

शर्करासप्तमी, स्त्री, (शर्करया साध्या [illegible]
सप्तमी ।) [illegible] ॥ [illegible]
[illegible]

[illegible]
"शर्करासप्तमीं [illegible]
[illegible]
माधवस्य सिते पक्षे [illegible]
प्रातः स्नात्वा तिलैः [illegible]

[illegible]
स्थण्डिले पद्ममालिख्य कुङ्कुमेन [illegible]
तस्मै नमः सवित्रे तु गन्धपुष्पं [illegible] ।
स्थापयेदुदकुम्भञ्च शर्करापात्रसंयुतम् ॥
शुक्लवस्त्रैरलङ्कृत्य शुक्लमाल्यानुलेपनैः ।
सुवर्णाश्वसमायुक्तं मन्त्रेणानेन पूजयेत् ॥
विश्ववेदमयो यस्मात् वेदवादीति पठ्यसे ।
त्वमेवामृतसर्व्वस्वमतः शान्तिं प्रयच्छ मे ॥
पञ्चगव्यं ततः पीत्वा स्वपेत्तत् पार्श्वतः क्षितौ
सौरसूक्तं स्मरन्नास्ते पुराणश्रवणेन च ॥
अहोरात्रे गते पश्चात् अष्टम्यां कृतनैत्यिकः ।
तत् सर्व्वं वेदविदुषे ब्राह्मणाय निवेदयेत् ॥
भोजयेच्छक्तितो विप्रान् शर्कराघृतपायसैः ।
भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः ॥
अनेन विधिना सर्वं मासि मासि समाचरेत् ।
संवत्सरान्ते शयनं शर्कराकलसान्वितम् ॥
सर्व्वोपस्करसंयुक्तं तथैकां गां पयस्विनीम् ।
गृहञ्च शक्तितो दद्यात् समस्तोपस्करान्वितम् ।
सहस्रेणाथ निष्काणां कृत्वा दद्यात् शतेन वा ।
दशभिर्व्वाथ निष्काणां तदर्द्धेनाथ शक्तितः ॥
सुवर्णाश्वः प्रदातव्यः पूर्ववन्मन्त्रवाचनम् ।
वित्तशाठ्यं न कुर्वीत कुर्वन् दोषं समश्नुते ॥
अमृतं पिबतो वक्त्रात् सूर्य्यस्यामृतबिन्दवः ।
निपेतुर्ये तदुत्थाश्च शालिमुद्गेक्षवः स्मृताः ॥
शर्करापरमस्तस्मादिक्षुसारोऽमृतात्मकः ।
इष्टा रवेरतः पुण्या शर्कराहव्यकव्ययोः ॥
शर्करा सप्तमी चैषा वाजपेयफलप्रदा ।
सर्वदुःखोपशमनीं पुत्त्रसन्ततिवर्द्धनीम् ॥
यः कुर्य्यात् परया भक्त्या स परं ब्रह्म गच्छति
कल्पमेकं वसेत् स्वर्गे ततो याति महत् पदम् ।
इदमनघं शृणोति यः स्मरेद्वा
परिपठतीह दिवाकरस्य लोके ।
मतिमपि च ददाति सोऽपि
देवैरमरवधूजनमालया च पूज्यः ॥"

इति मात्स्ये ७२ अध्यायः ॥

शर्करिकः, त्रि, ( शर्करा विद्यते [illegible] ।
"कुमुदादिभ्यः ठच्" इत्यत्र "वुञ्छण्कठजिलसेति ।" ४।२।८० । इति [illegible]
दित्वात् ठक् । ) शर्करावान् । इति सिद्धान्त-
कौमुदी ॥

शर्करिलः, त्रि, (शर्करा विद्यते [illegible] ।
लुबिलचौ च ।" ५ । २ । १०५ । इति [illegible]
शर्करावान् । इत्यमरः ॥

शर्करी, स्त्री, कन्दीविशेषः । [illegible]
[illegible]
[illegible]
[illegible]

शर्करोदकं, क्ली, ([illegible]) शर्करायुक्तजलम्। [illegible] इति ख्यातस्य इति च भाषा। यथा,—
"[illegible] शीतलेनैव योजिता शुभ्रशर्करा।
[illegible]कर्पूरमरिचैश्च समन्विता॥
शर्करोदकनाम्ना तत् प्रसिद्धं विदुषां मुखे।
शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम्॥
[illegible] रुच्यं लघु स्वादु वातपित्तास्रनाशनम्।
मूर्च्छाच्छर्द्दितृषादाहज्वरशान्तिकरं परम्॥"
इति भावप्रकाशः॥
शर्द्धः, पुं, (शृधु शब्दकुत्सायाम् + घञ्।) अपानवायुः। शृधधातोर्घञ्प्रत्ययेन निष्पन्नमेतत्॥ (तेजः। यथा, ऋग्वेदे। ४। १। १२।
"प्र शर्द्ध आर्त्त प्रथमं विपन्या॥"
"शर्द्धस्तेजः।" इति तद्भाष्ये सायणः॥
समूहः। यथा, तत्रैव। १। ६४। १।
"वृष्णे शर्द्धाय सुमखाय वेधसे।"
"शर्द्धाय समूहाय।" इति तद्भाष्ये सायणः॥
प्रसहनशीले, त्रि। यथा, तत्रैव।१।२७।४।
"प्रवः शर्द्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे॥"
'शर्द्धाय प्रसहनशीलाय।' इति तद्भाष्ये सायणः॥)
शर्द्धञ्जहः, पुं, (शर्द्धं जहातीति। हा + "एजेः खश्।" ३। २। २८। इत्यत्र। वातशुनीतिलशर्द्धेष्विति।" खश्। "अरुर्द्दिषदजन्तस्य मुम्।" ६। ३। ६७। इति मुम्।) माषः यथा। शर्द्धं पार्द्दत्वं जहाति इति शर्द्धञ्जहो माषः। इति मुग्धबोधव्याकरणटीकायां दुर्गादासः॥
शर्द्धनं, क्ली, (शर्द्ध + ल्युट्।) अधोवायुः। इति मनुटीकायां कुल्लूक-भट्टः॥ वातकर्म्म इति भाषा॥
शर्ब्ब, हिंसे। गतौ। इति कविकल्पद्रुमः॥ शर्ब्बति। इति दुर्गादासः॥
शर्म्म,[न्] क्ली, (शॄ + "सर्व्वधातुभ्यो मनिन्॥" उणा० ४। १४४। इति मनिन्।) सुखम्। इत्यमरः॥ (यथा, ऋग्वेदे। ४। १५। ४।
"तस्मा अग्निर्भारतः शर्म्म यं सत्।"
"शर्म्म सुखम्।"इति तद्भाष्ये सायणः॥ यथाच कथासरित्सागरे। ७८। ४९।
"स्वामिभक्तस्तदेतस्य शर्म्मोपायमिमं शृणु॥")
तद्वति, त्रि॥ गृहम्। इति निघण्टुः।३।४॥ (यथाच ऋग्वेदे। १। १३। ४।
"स नः शर्म्माणि वीतयेऽग्निर्यच्छतु शन्तमा।"
"शर्म्माणि शर्म्मशब्दो गृहवाची छाया शर्म्मेति तन्नामसु पाठात्।" इति तद्भाष्ये सायणः॥)
शर्म्मा,[न्] पुं, (शृणात्यशुभमिति। शॄ + "सर्व्वधातुभ्यो मनिन्।" उणा० ४। १४४। इति मनिन्।) ब्राह्मणस्योपाधिविशेषः। यथा,—
"शर्म्मवर्म्मादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽत्ययकाले च पितॄणां तृप्तमक्षयम्॥"
[illegible]

"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम्॥"
देवात् पूर्व्वं नराख्यं नरनाम तच्च विशिष्टं शर्म्मयुतम्। एतच्च विप्रपरम्।
"शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता तु भूभुजः।
भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्॥"
इति यमवचनात्॥
अत्र चकारेण देवशर्म्मणोः समुच्चयः। अत्रापि शर्म्माद्यन्ततामाह शातातपः॥
"शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं क्षत्रियस्य च धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः॥"
इति श्राद्धतत्त्वम्॥
(तथा च विष्णुपुराणे। ३। १०। ८—९।
"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम्॥
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम्।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः॥"
"दशमेऽहनि अतीते इति शेषः तच्चाशौचान्तोपलक्षणम्। अत्रैव कालान्तरमप्याह। यथा,—
"नामधेयं दशम्याञ्च केचिदिच्छन्ति पार्थिव।
द्वादश्यामथवा रात्र्यां मासि पूर्णे तथापरे॥"
इति॥
देवपूर्व्वं कुलदेवतानामपूर्व्वकं कुलदेवतासम्बन्धं नाम कुर्य्यात् इति शङ्खोक्तेः। नराख्यं पुरुषवाचकम्। तत्र प्रान्ते शर्म्मवर्म्मादिसंयुतम्। यथा, सोमशर्म्मा इन्द्रवर्म्मा चन्द्रवर्म्मा चन्द्रगुप्तः शिवदासः इत्यादि।"इति तट्टीकायां स्वामी॥
"तत्रादौ नाम निर्णयः।
"शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम्।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः॥"
इत्यत्रेति पदस्वरसेन यद्यपि शर्म्मपदात्मकमेव नामावगम्यते तथापि तावन्मात्रं न नाम किन्तु तद्युक्तनामेति निर्णीयते द्व्यक्षरं चतुरक्षरं इत्यादिगृह्यदर्शनात्। एवञ्च हरिशर्म्मा नारायणशर्म्मेत्यादि सिध्यति शर्म्मपदमात्रात्मकत्वात् तन्नाम्नश्चतुरक्षरता न स्यादेव। तयाच नारायणादिपदशर्म्मपदाभ्यां निर्णीतमेव नाम द्व्यक्षरादिकन्तु शर्म्मपूर्व्वप्रतिकमात्रमेव अतएव दानादौ नामोच्चारणे चैत्रशर्म्मणे इत्येव श्रूयते। गोभिलः।
"शर्म्मवर्म्मादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽत्ययकाले स्यादेवं कुर्व्वं न मुह्यति॥"
इदमप्युत्तरप्रतीकमात्रपरमुक्तप्रमाणेन स्वैकमूलत्वात्। एतेन शर्म्म सुखनीयमिति कर्म्म दर्शनात् शर्म्मपदमर्थपरं तेन शुभङ्करत्वाद्येव नामेत्यपास्तं गोभिलविरोधात्। कर्म्मन्तु पूर्व्वप्रतीकमात्रपरम्। तेन शुभङ्करशर्म्मा श्रीशर्म्मेत्यादि सिध्यति एवञ्च इत्थमर्थे चैतादृशमेव नाम तेषां प्रयोज्यम्। अपवादकाभावादिति। अत्रैव मनुः।
"[illegible]
[illegible]

[illegible]
[illegible]
[illegible]॥"
शर्म्मवर्म्मेत्यवधीनि उत्तरपदानि कार्य्याणीति मनुटीकापि। स्त्रीनाम तु यशोदादेवीत्यादि स्त्रीणां दान्तमित्यपि पूर्व्वप्रतीकमात्रपरम्। वैश्यस्य गुप्तान्तमिति तु परामरः। एवञ्च दानादौ चैत्रशर्म्मणे ब्राह्मणायेत्यादि वक्तव्यं वाक्यम्॥" इति द्वैतनिर्णयः॥ [illegible])
शर्म्मरः, पुं, वस्त्रभेदः। इति धरणिः॥
शर्म्मरा, स्त्री, दारुहरिद्रा। इति धरणिः॥
शर्य्या, स्त्री, रात्रिः। यथा,—
"त्रियामा शर्व्वरी शर्य्या क्षयिणी क्षणदा क्षपा।"
इति भरतधृतवाचस्पतिः॥
(इषुः। यथा, ऋग्वेदे।१।१४।४।
"शर्य्यामसना अनुद्युन्।" "शर्य्या इषवः शरमय्यः। इति यास्कः॥" इति तद्भाष्ये सायणः॥
अङ्गुलिः। यथा, तत्रैव।९।११०।५।
"शर्य्याभिर्न्न भरमाणो गभस्त्योः।"
"शर्य्याभिरङ्गुलीभिः।" इति तद्भाष्ये सायणः॥)
शर्य्यातिः, पुं, वैवस्वतमनुपुत्त्रः। तस्य पुत्त्र आनर्त्तः यथा,—
"आनर्त्तो नाम शर्य्यातेः सुकन्या नाम दारिका।
आनर्त्तस्याभवत् पुत्त्रो रोचमानः प्रतापवान्।
आनर्त्तो नाम देशोऽभून्नगरी च कुशस्थली॥"
इति मात्स्ये १२ अध्यायः॥
(अस्य विशेषविवरणं भागवते ८। १२॥ एवं ९। १। अध्याये च द्रष्टव्यम्॥)
शर्व, हिंसे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) शर्वति। इति दुर्गादासः॥
शर्वः, पुं, (शृणाति सर्व्वाः प्रजाः संहरति प्रलये संहारयति वा भक्तानां पापानि। शॄ "कॄ गॄ शॄ दॄभ्यो वः।" उणा० १।१५५। इति वः।) शिवः। इति हेमचन्द्रः॥ (यथा, रघुवंशे। ११। ९३।
"कतिचिदवनिपालाः शर्व्वरीः शर्व्वकल्पाः [illegible]
दन्त्यसादिरप्ययम्। विष्णुः। यथा,—
"शर्वः सर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः॥"
इति तस्य सहस्रनामस्तोत्रम्॥
शर्वरं, क्ली, तमः। कन्दर्पः। इति संक्षिप्तसारोणादिवृत्तिः॥
शर्वरी, स्त्री, (शृणाति चेष्टामिति। शॄ + "कॄ गॄ शॄ वृञ्चतिभ्यः ष्वरच्।" उणा० २। १२२। इति ष्वरच्। षित्वात् ङीष्।) रात्रिः। इत्यमरः॥ (यथा, ऋग्वेदे। ५। ५२। ३।
"अतिष्कन्दन्ति शर्व्वरीः॥")
योषित्। इति मेदिनी॥ हरिद्रा। इति विश्वः॥ सन्ध्या। इति संक्षिप्तसारोणादिवृत्तिः॥
शर्वला, स्त्री, तोमरास्त्रम्। इत्यमरटीकायां रायमुकुटः॥ दन्त्यादिरप्ययम्॥
शर्वाणी, स्त्री, ([illegible]) [illegible] इति ङीष्।) शर्वाणी। [illegible]

[illegible]
[illegible]
[illegible]
शाखादन्तःशल्य यदा सी [illegible] ॥"
[illegible] । इति मेदिनी ॥ [illegible] । इति
[illegible] ॥ दुःखदम् । दुर्वाक्यम् । इति शब्द-
रत्नावली ॥ पापम् । इति शिवाद्रशेषः ।
[illegible] यथा । अथ शल्योद्धारविधिः ।

"सुनिश्चितो मन्दिर भूमिभागो
निखाय तोयावधि यत्नतस्ताम् ।
कूर्म्मादियद्वामथवा श्मशानं
शल्यावधा शल्यमथादिविधिः ॥
कूर्म्मप्रश्नाद्यक्तपुष्पपाणिः
शुचिः शुचिं दैवविदं समेत्य ।
पृच्छेद्विनीतो मधुरस्वरेण
शल्यस्य तत्त्वं भवने तदीयः ॥
ततः पृष्टादिमो वर्णः सन्धार्य्यो यत्नतोऽथवा ।
क्रमात् पुष्पापगादेव फलानां श्रावणादितः ॥
अवनो धरणी धारिणी करी च तदनन्तरम् ।
न भूले मम इत्येव मन्त्रो वह्निप्रियान्तकः ॥"

वह्निप्रिया स्वाहा ।

"मन्त्रेणानेन कठिनीमभिमन्त्र्य विभाजयेत् ।
अथवा मदनस्येवं तया पश्चाद्विलेखयेत् ॥
अ-क-च-त-ए-श-ह: अ-प-या नव चेत् प्रश्ना-
क्षराणि जायन्ते ।
प्रागादिकोष्ठे नवके वर्णास्ते शल्यमाख्यान्ति ॥
प्राग्वे वकारः पुरतो नरास्थि
ब्रवीति शल्यं मरकप्रदायि ।
कोणेमदष्कोरगहेतुमृत्यु-
प्रदं ककारः खरशल्यमग्नौ ॥
याम्यां चकारः श्ववगास्थि वेश्म
प्रभोर्विनाशं प्रकरोति शल्यम् ।
रक्षोदिशि स्थास्थिरदक्षिमानां
मदक्षयं वक्ति सुनिश्चितं तः ॥
एः पश्चिमदिश्यस्थि शिशोर्ब्रवीति
मृत्युं प्रवासादगृहमिव शल्यम् ।
शो वायुकोणे नरकूपमस्थि
दारिद्र्यमित्रव्ययसन्निधत्ते ॥"
"स्मपदिशि शकारः प्राह विप्रास्थि वित्त-
क्षयदय पकारो वक्ति मत्स्यास्थि शम्भौ ।
तदिह कुलविनाशं बोधनानाच हानिं
वितरति गृहमध्यापि शल्यं देवैः ॥
यो मध्यमो भवितं कपालं
[illegible] कुलक्षयाय ।
[illegible]
[illegible] तत्त्वं कथयामि शम्भो ॥
[illegible] ।
[illegible] ॥"
[illegible]
[illegible]

[illegible]
[illegible]
[illegible] यथा,—
"नृपो न हरिसेवको व्यसनो न [illegible]
कविर्न सुरचित् कविः श्रुतगुणैर्न दैवज्ञः ।
गुणो न भगवत्परो रसिकधीर्न स्वाश्रयः
स न व्रजजनानुगो जगति सप्त शल्यानि च ॥"
इति पाद्मोत्तरखण्डे १०० अध्यायः ॥

शल्यः, पुं, ( शल गतौ + यः । ), मदनवृक्षः ।
श्वावित् । इत्यमरः ॥ (यथा, भागवते।८।२।२२।
"वृका वराहा महिषर्क्षशल्या
गोपुच्छशालावृकमर्कटाश्च ॥")
नृपभेदः । स तु युधिष्ठिरमातुलः । ( अयं हि
दुर्य्योधनेन कापट्यात् वशीकृतः कुरुपाण्डव-
युद्धे दुर्य्योधनपक्षं समाश्रयत् । यथा, महा-
भारते । १ । २ । २१६ ।
"मद्रराजश्च राजानमायान्तं पाण्डवान् प्रति
उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः ॥
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥"
कर्णार्ज्जुनयोर्द्वैरथयुद्धे शल्यस्य कर्णतेजो भङ्ग-
करणे प्रतिज्ञा । यथा, तत्रैव । ५।८।१७-४५।
युधिष्ठिर उवाच ।
"सुकृतं ते कृतं राजन् ! प्रहृष्टेनान्तरात्मना ।
दुर्य्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥
एकं त्विच्छामि भद्रन्ते क्रियमाणं महीपते ।
राजन्नकर्त्तव्यमपि कर्त्तुमर्हसि मातुल ॥
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥
कर्णार्ज्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्य्यं सारथ्यं नात्र संशयः ॥
तत्र पाल्योऽर्ज्जुनो राजन् यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्य्यः सौतेरस्मज्जयावहः ।
अकर्त्तव्यमपि ह्येतत् कर्त्तुमर्हसि मातुल ॥
शल्य उवाच ।
शृणु पाण्डव भद्रं ते यद्ब्रवीषि दुरात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्त्रस्य संयुगे ॥
अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां स हि मन्यते ॥
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं सन्दर्शयिष्यामि योद्धुकामस्य संयुगे ॥
यथा च हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥"
युधिष्ठिरस्तु एनं वृतवान् । एतद्वृत्तान्तस्तु
महाभारते शल्यपर्व्वणि १७अध्याये द्रष्टव्यः ॥)
सीमा । शलाका । इति हेमचन्द्रः ॥ विल्व-
वृक्षः । मत्स्यभेदः । इति राजनिर्घण्टः ॥*॥
शल्यनिःसरणौषधं यथा,—
"इन्द्र वारुणिकामूलं [illegible] तथैव च ।
तेन [illegible] शल्यो निःसरति [illegible] ।
[illegible] तेन मार्गेण [illegible] ॥"
इति गारुडे १८४ अध्यायः ॥

[illegible]
तत्पर्य्यायः । [illegible] ।
२ शलः ४ [illegible] ५ विषाङ्कुरः ६ । इति
शिवाद्रशेषः ॥

शल्यकः, पुं, ( शल्य इव । शल्य + स्वार्थे कन् । )
मदनवृक्षः । इति शब्दरत्नावली ॥ शल्यकी-
जन्तुः । इति राजनिर्घण्टः ॥ (यथा, मनुः ।
५ । १८ ।
"श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥")

शल्यकण्ठः, पुं, (शल्यं तद्रोम कण्ठेऽपि यस्य ।)
शल्लकी । इति शब्दचन्द्रिका ॥

शल्यलोम, [न्] क्ली, (शल्यवत् लोम ।) शल्लकी
इति राजनिर्घण्टः ॥

शल्यारिः, पुं, ( शल्यस्य अरिर्हन्तृत्वात् । )
युधिष्ठिरराजः । इति हेमचन्द्रः ॥

शल्ल, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् । ) शल्लति । इति दुर्गादासः ॥
सौत्रधातुरयम् ॥

शल्लं, क्ली, त्वक् । इति शब्दरत्नावली ॥

शल्लः, पुं, भेकः । इति शब्दरत्नावली ॥

शल्लकं, क्ली, (शल्लमिव । स्वार्थे कन् ।)त्वक् । इति
शब्दरत्नावली ॥

शल्लकः, पुं, शोणवृक्षः । इति जटाधरः ॥
( शल्लकीजन्तुः । यथा, याज्ञवल्क्ये । १ ।
१७७ ।
"भक्ष्याः पञ्चनखाः सेधा गोधाकच्छपशल्लकाः ।
शशाश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥")

शल्लकी, स्त्री, पशुविशेषः । शजारु इति वङ्ग-
भाषा । साहिल इति हिन्दीभाषा ॥ तत्-
पर्य्यायः । श्वावित् २ शललः ३ शल्यः ४ ।
इति जटाधरः ॥ क्रकचपादः ५ छेदारः ६ ।
इति शब्दारत्नावली ॥ शल्यकः ७ शल्यमुखः ८
वज्रशल्यः ९ विलेशयः १० । अस्या मांस-
गुणाः ।
"शल्यमांसं गुरु स्निग्धं शीतलं कफपित्तजित् ॥"
इति राजनिर्घण्टः ॥
भावप्रकाशोक्तगुणाः विलेशयशब्दे द्रष्टव्याः ॥
वृक्षविशेषः । (यथा, रामायणे । २ । ५५ । ८ ।
"क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम् ।
शल्लकीबदरीमिश्रं राम वंश्यैश्च यामुनैः ।
स पन्थाश्चित्रकूटस्य गतस्य बहुशो मया ॥")
तत्पर्य्यायः । गजभक्ष्या २ सुवहा ३ सुरभिः ४
रसा ५ महेरणा ६ कुन्दुरुकी ७ ह्लादिनी ८ ।
इत्यमरः ॥ गजभक्षा ९ सुरभी १० महेरणा ११
महारणा १२ ह्लादिनी १३ सिल्लकी १४
सल्लकी १५ । इति भरतः ॥ सुरभीरसा १६
शिल्लकी १७ । इति टीकान्तरम् ॥ सिल्लकी १८
सिल्लभूमिका १९ । इति शब्दरत्नावली ॥ पत्र-
स्रुती २० [illegible] २१ । इति जटाधरः ॥

शल्लकीदल, पुं, [illegible] । इति जटाधरः ॥
[illegible] । [illegible] ।

शव, विकारे। मतौ। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) शवति चित्तं कामः। इति दुर्गादासः॥

शवं, क्ली, (शवति गच्छतीति। शव+अच्।) जलम्। इति मेदिनी॥

शवः, पुं, क्ली, (शवति दर्शनेन चित्तं विकारीतीति। शव विकारे+अच्।) मृतशरीरम्। तत्पर्य्यायः। कुणपः २। इत्यमरः॥ क्षितिशयनः ३। इति शब्दरत्नावली॥ मृतकम् ४। इति वराहपुराणम्॥*॥ तद्दाहविधिर्यथा,—

"नष्टसंज्ञं समुद्दिश्य ज्ञात्वा मृत्युवशं गतम्।
महावनस्पतिं गत्वा गन्धांश्च विविधानपि॥
कृततैलसमायुक्तं ज्ञात्वा वै देहशोधनम्।
तेजो व्यपकरं चास्य तत् सर्वं परिकल्प्य च॥
दक्षिणायां शिरः कृत्वा सलिले तं निधाय च।
तीर्थस्यावाहनं कृत्वा स्नापनं तस्य कारयेत्॥
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः।
कुरुक्षेत्रञ्च गङ्गा च यमुना च सरिद्वरा॥
कौशिकी च पयोष्णी च सर्वपापप्रणाशिनी।
गण्डकी भद्रनामा च सरयूर्बलदा तथा॥
वनानि नव वाराहं तीर्थं पिण्डारकं तथा।
पृथिव्यां यानि तीर्थानि चत्वारः सागरास्तथा॥
सर्वाणि मनसा ध्यात्वा स्नानमेवन्तु कारयेत्।
प्राणाहतन्तु तं ज्ञात्वा चितां कृत्वा विधानतः॥
तस्या उपरि तं स्थाप्य दक्षिणाग्रं शिरस्तथा।
देवानग्निमुखान् ध्यात्वा गृह्य हस्ते हुताशनम्॥
प्रज्वाल्य विधिवत्तत्र मन्त्रमेतदुदीरयेत्।
कृत्वा सुदुष्करं कर्म जानता वाप्यजानता॥
मृत्युकालवशं प्राप्य नरः पञ्चत्वमागतः।
धर्म्माधर्म्मसमायुक्तो लोभमोहसमावृतः॥
दह एतस्य गात्राणि दिव्यलोकाय गच्छतु।
एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम्॥
ज्वलमानं तदा वह्निं शिरःस्थाने प्रदापयेत्।
चातुर्वर्ण्येषु संस्कारमेवं भवति पुत्रक।
गात्राणि वाससी चैव प्रक्षाल्य विनिवर्त्तयेत्॥
मृतनाम ततोद्दिश्य दद्यात् पिण्डं महीतले।
तदाप्रभृति चाशौचं देवकर्म्म न कारयेत्॥"

इति वाराहे श्राद्धोत्पत्तिनामाध्यायः॥

अन्यत् दाहशब्दे द्रष्टव्यम्॥*॥ तस्य स्पर्शे दोषो यथा,—

वाराह उवाच।

"स्पृष्ट्वा तु मृतकं भद्रे नरं पञ्चत्वमागतम्।
[illegible] बहिः कृत्वा यः श्मशानं प्रपद्यते॥
[illegible] सुश्रोणि चालानश्च पितामहाः।
[illegible] भूत्वा भवन्त्यन्तः शवांस्तथा॥
[illegible] श्रुत्वा कर्म्मकामा वसुन्धरा।
[illegible] सर्वलोकहिताय वै॥

[illegible] उवाच।

[illegible] पापी विचारी प्रभो।
[illegible] मुच्यति किल्बिषात्॥

वराह उवाच।

"शृणु सुन्दरि! तत्त्वेन यन्मां त्वं परिपृच्छसि।
कथयिष्यामि ते सौद्रं शोधनं पापनाशनम्॥
एकाहारं दिनान् सप्त त्रिदिनं वायुभोजितः।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्यति किल्बिषात्॥
•
शवे स्पृष्टेऽपराधस्य एष ते कथितो विधिः।
सर्वथा वर्जनीयो वै मद्भागवतेन तु॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।
विमुक्तः सर्वपापेभ्यः अपराधो न विद्यते॥
अपिच।

वराह उवाच।

"स्पृष्ट्वा तु मृतकं देवि! योमत्क्षेत्रेषु तिष्ठति।
शतं वर्षसहस्राणि गर्भेषु परिवर्त्तते॥
दश वर्षसहस्राणि चण्डालश्चैव जायते।
अन्धः सप्तसहस्राणि मण्डूकश्च शतं समाः॥
मक्षिका त्रीणि वर्षाणि टिट्टिभैकादशं समाः।
दश वै सप्त चान्यानि कृकलासो भवेत् समाः॥
हस्ती वर्षशतश्चैव खरो द्वात्रिंशको भवेत्।
मार्ज्जारो नव वर्षाणि वानरो दश पञ्च च॥
एवं स चालदोषेण मम कर्म्मपरायणः।
प्राप्नोति सुमहद्दुःखं देवि! एव न संशयः॥
ततो हरेर्वचः श्रुत्वा दुःखेन परिपृच्छति।
सर्वसंसारमोक्षाय प्रत्युवाच वसुन्धरा॥
किमिदं भाषसे देव मानुषाणां दुरासदम्।
वाक्यं भीषणकञ्चैव मम कर्म्मप्रतोदकम्॥
आचाराच्च परिभ्रष्टस्तव कर्म्मपरायणः।
तरन्ति येन दुर्गाणि प्रायश्चित्तं तथा वद॥
श्रुत्वा पृथ्व्यास्ततो वाक्यं लोकनाथो जनार्द्दनः।
धर्म्मसंरक्षणार्थाय प्रत्युवाच वसुन्धराम्॥

वराह उवाच।

स्पृष्ट्वा तु मृतकं भूमे मम कर्म्मपरायणः।
एकाहारं ततस्तिष्ठेत् दिनानि दश पञ्च च॥
तत एवं विधिं कृत्वा पञ्चगव्यन्तु प्राशयेत्।
शुद्धभावं विशुद्धात्मा कर्म्मणा च न लिप्यते॥
एतत्ते कथितं देवि स्पृष्ट्वा मृतकमेव च।
दोषश्चैव विबुध्याय यत्त्वया पूर्वपृच्छतम्॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।
अपराधविनिर्मुक्तो मम लोकं स गच्छति॥"

इति वाराहे मृतदर्शनस्पर्शनप्रायश्चित्तनामाध्यायः॥*॥ शवानुगमनमाशौचं यथा। कूर्म्मपुराणम्।

"प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥
एकाहात् क्षत्रिये शुद्धिर्वैश्ये च स्यात् द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः॥"

एतच्च घृतप्राशनं शुद्धिहेतुत्वाभिप्रायम्, न तु प्रायश्चित्तत्वबोधकाभावपरम्। तच्च तद-[illegible] [illegible] याज्ञवल्क्य-वचनम्।

"[illegible]

[illegible]

तदस्मादाश्रय[illegible]
अश्नासि न तु[illegible]
शवदहने दोषो यथा,—

"कृतमात्रं पदेनैव देवाम् [illegible]
पदप्रमाणवर्षञ्च तेषाञ्च नरके स्थितिः।
ततस्तेषाञ्च साहाय्यं करोति [illegible]
ददाति मुक्तिं तेभ्योऽपि [illegible] च [illegible]
जन्म पुण्यवतां गेहे कारयित्वा च [illegible]
स्थानं ददाति वैकुण्ठे निश्चितं [illegible]

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८४ अध्यायः॥ शवदूषितगृहजलाशयादीनां शुद्धिर्यथा,—

ब्रह्मपुराणम्।

"येषामभक्ष्यं मांसञ्च तच्छरीरैर्युतञ्च यत्।
वापीकूपतडागेषु जलं सर्वञ्च दुष्यति॥"

तच्छरीरैर्मृतशरीरैः। उत्तरवचने कुणपग्रहणात्। यथा,—

"सकुणपं सकर्द्दमं तेभ्यस्तोयमपास्य तत्।
प्रक्षिपेत् पञ्चगव्यञ्च समन्त्रं सवशोधितम्॥
अपास्य कुणपं तेभ्यो बहुतोयेभ्य एव वा।
शतं घटानथवा त्रिंशत् तोयकुम्भान् समुद्धरेत्॥"

वापी ससोपाना। निःसोपानः कूपः। तडागः पद्माकरः। शतादिजलाल्पत्वापेक्षया व्यवस्था सर्वोद्धारणाभिधानात्। एवं मरणसमये गृहान्निःसार्य्यते अन्यथा गृहस्य दुष्टता स्यात्॥ यथा, हारीतः।

"शवशूद्रपतितास्वाथा मृताश्चेद्द्विजमन्दिरे।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा॥
दशरात्राच्छुनि प्रेते मासाच्छूद्रे भवेच्छुचिः।
द्वाभ्यान्तु पतिते गेहे अन्त्ये मासचतुष्टयात्॥
अत्यन्तं वर्जयेद्दुष्टमित्येवं मनुरब्रवीत्॥"

द्वाभ्यां मासाभ्यां मासशब्दपाठात्। अन्त्यो म्लेच्छः। अत्यन्तः श्वपाकः। इति प्रायश्चित्तमिताक्षरा॥ यमः।

"द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात्।
दिनैकेन बहिर्भूमिरग्निप्रोक्षणलेपनैः॥"*।

यथोक्तकालानन्तरकर्त्तव्यमाह संवर्त्तः।

"गृहशुद्धिं प्रवक्ष्यामि अन्तस्थशवदूषिते।
प्रोत्सृज्य मृन्मयं-पात्रं सिद्धमन्नं तथैव च॥
गृहादपास्य तत् सर्वं गोमयेनोपलेपयेत्।
गोमयेनोपलिप्याथ छागेनाघ्रापयेद्बुधः॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः।
सर्वमभ्युक्षयेत् सद्म ततः [illegible]
अत्र मन्त्रा आदौ गायत्री। देवल:।

"पञ्चधा वा चतुर्धा वा भूर्मी[illegible]
दुष्टा द्विधा त्रिधा चापि [illegible]
दहनं खननं भूमे[illegible]
पर्य्यन्तवर्षणाचापि [illegible]
मृद्भी वर्त्मिनी [illegible]

[illegible]

[illegible] ॥ [illegible]
[illegible]
[illegible] विश्वा [illegible] ॥
[illegible]
[illegible]पि [illegible] संज्ञिना भवेत् ॥"
शवं दृष्ट्वैव पूरकम् । कथितं वासः ।
[illegible] भूतप्रेतादि । चतुर्थादौ पञ्चानां
[illegible] शवासनं भवेत् । अङ्गिराः ।
"शीर्षं शवरोमाणां वायुम्बर्वेन्दुरश्मिभिः ।
[illegible] शवस्पर्शमात्रेण नैव दुष्यति ॥"
शवरोमाणां [illegible] । इति शुद्धि-
तत्त्वम् ।

शवकाम्यः, पुं, (शवः काम्यो यस्य ।) कुक्कुरः ।
इति शब्दरत्नावली ॥

शवयानं, क्ली, (शवस्य यानम् ।) शववहनार्थ-
खट्टा । मड़ार खाट इति भाषा । तत्पर्य्यायः ।
काष्ठमञ्चः २ । इति हारावली ॥ खोटः ३
खाटी ४ खाटिका ५ शवरथः ६ । इति शब्द-
रत्नावली ॥

शवरः, पुं, (शव + बाहुलकादरः । यद्वा, शवं
राति गृह्णातीति । रा + कः ।) म्लेच्छजाति-
विशेषः । इत्यमरः ॥ मयूरपुच्छपरिधानो म्लेच्छः
किरातः । पत्रपरिधानः शवरः । इति तट्टी-
कायां भरतः ॥ पानीयम् । शिवः । इति
मेदिनी ॥ शास्त्रविशेषः । हस्तः । इत्युणादि-
कोषः ॥

शवरथः, पुं, (शवस्य रथः ।) शवयानम् । इति
शब्दरत्नावली ॥

शवरलोध्रः, पुं, श्वेतलोध्रः । इति रत्नमाला ॥

शवरालयः, पुं, (शवरस्यालयः ।) शवरस्थानम् ।
तत्पर्य्यायः । पक्कणः २ । इत्यमरः ॥ शक्कणः ३ ।
इति शब्दरत्नावली ॥ शवरावासः ४ । इति
हेमचन्द्रः ॥

शवरावासः, पुं, (शवरस्यावासः ।) शवरालयः ।
इति हेमचन्द्रः ॥

श(ब)वलः, पुं, (शप आक्रोशे + "शपेर्वश ।"
उणा० १ । १०७ । इति कलः वकारान्तादेशः ।)
कर्बुरवर्णः । तद्वति, त्रि । इत्यमरः ॥ (यथा,
भागवते । ३ । २१ । २४ ।
"[illegible] मलपङ्केन संछन्नं शवलस्तनम् ॥")

शवला, स्त्री, (शवल + स्त्रियां टाप् । शवलवर्णा
गौः । इत्यमरभरतौ ॥

शवली, स्त्री, (शवलयोमादन्यतो ङीष् ।) शवल-
वर्णा गौः । इत्यमरभरतौ ॥

शवाक्षः, पुं, पण्डितः । इति सिद्धान्तकौमुदी ॥
वैदिकपदोऽयम् । शवधातोरौणादिकसानच्
[illegible] निष्पन्नमिदम् ॥

शश, प्लुतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) [illegible] शशति
[illegible]
[illegible]
[illegible]

शशः, पुं, (शशति प्लुतिं [illegible] शश +
अच् ।) पशुविशेषः । [illegible] ॥ [illegible] इति
[illegible] इति च भाषा ॥ (यथा, मनौ । ३ । २७० ।
"शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥"
अस्य मांसगुणाः । स्वादुत्वम् । कषायत्वम् ।
मलबद्धकारित्वम् । शीतलत्वम् । लघुत्वम् ।
शोषातीसारपित्तरक्तनाशत्वम् । रूक्षत्वञ्च ।
इति राजवल्लभः । अपि च ।
"शशमांसं त्रिदोषघ्नं दीपनं श्वासकासनुत् ॥"
इति राजनिर्घण्टः ॥
अन्यच्च ।
"शशः शूली कोमलश्च विशेषयः प्रकीर्त्तितः ।
शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा
हितः ॥
वह्निकृत् कफपित्तघ्नो वातसाधारणः स्मृतः ।
ज्वरातीसारशोषासृक्श्वासामयहरश्च सः ॥"
इति भावप्रकाशः ॥
श्राद्धेऽस्य मांसस्य दानफलं यथा,—
"हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तैनेह पितामहाः ॥"
इति श्राद्धतत्त्वम् ॥
विष्णवे एतन्मांसस्य देयत्वं यथा,—
"मार्गं मांसं तथा च्छागं शाशं समनुयुज्यते ।
एतानि हि प्रियाणि स्युः प्रयोज्यानि वसुन्धरे॥"
इत्येकादशीतत्त्वम् ॥
चन्द्रलाञ्छनः । इति धरणिः ॥ बोलः । लोध्रः ।
मनुष्यविशेषः । इति मेदिनी ॥ स तु चतुर्विध-
पुरुषान्तर्गतपुरुषविशेषः । तस्य लक्षणं यथा,—
"मृदुवचनसुशीलः कोमलाङ्गः सुकेशः ।
सकलगुणनिधानः सत्यवादी शशोऽयम् ॥"
इति रतिमञ्जरी ॥

शशकः, पुं, (शश + स्वार्थे कन् । शशः । यथा,
"शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमः ।
भक्ष्याः पञ्चनखेष्वेते न भक्ष्यास्त्वन्यजातयः ॥"
इति स्मृतिः ॥

शशधरः, पुं, (शशस्य धरः ।) चन्द्रः । (यथा,
साहित्यदर्पणे । १० ।
"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः ॥")
कर्पूरः । इत्यमरः ॥

शशप्लुतकं, क्ली, नखाघातः । इति शब्दमाला ॥

शशबिन्दुः, पुं, विष्णुः । राजविशेषः । इति मेदिनी ॥
(यथा, महाभारते । १ । १ । २२५ ।
"रामं दाशरथिञ्चैव शशबिन्दुं भगीरथम् ॥")
स तु चित्ररथपुत्रः । इति पुराणम् ॥

शशभृत्, पुं, (शशं बिभर्त्तीति । भृ + क्विप् ।)
चन्द्रः । इति हेमचन्द्रः ॥ (यथा, कथासरित्-
सागरे । ७१ । २५९ ।
"[illegible] राजशशभृत् [illegible] ॥")

शशभृद्भृत्, पुं, (शशभृतं चन्द्रं बिभर्त्तीति । भृ +
क्विप् ।) शिवः । यथा,—
"[illegible]
[illegible] ।
हरिणे [illegible] शशभृद्भृतः ॥"
इति कालिकापुराणे ४४ अध्यायः ॥

शशलोम, [न्] क्ली, (शशस्य लोम ।) [illegible]
रोम । तत्पर्य्यायः । शशोर्णम् २ । इत्यमरः ॥
(पुं, नृपविशेषः । यथा, महाभारते ।
१५ । २० । १४ ।
"शशलोमा स राजासीत् राजन् परम-
धार्म्मिकः ॥")

शशशिम्बिका, स्त्री, जीवन्ती । इति राजनिर्घण्टः ॥

शशस्थली, स्त्री, अन्तर्वेदी । इति त्रिकाण्डशेषः ॥
सा च गङ्गायमुनयोर्मध्यदेशः । अधुना दोयाब
इति नाम्ना ख्यातः ॥

शशाङ्कः, पुं, (शशोऽङ्कश्चिह्नं यस्य क्रोडे वा यस्य ।)
चन्द्रः । इति हलायुधः ॥ (यथा, कथासरित्-
सागरे । १८ । ३८५ ॥
"स जनैर्ददृशे तत्र शिखरे ज्वलितौषधौ ।
शशाङ्क इव पूर्व्वाद्रे उदयस्थो विदूषकः ॥")
कर्पूरः । इति राजनिर्घण्टः ॥

शशाण्डुलिः, स्त्री, कर्कटीभेदः । तत्पर्य्यायः । बहु-
फला २ तण्डुली ३ क्षेत्रसम्भवा ४ क्षुद्राण्डा ५
लोमशफला ६ धूम्रा ७ वृत्तफला ८ । अस्या
गुणाः ।
"शशाण्डुलिर्हिमकटुश्च कोमला
कटुकषायुक्ता मधुरा कफापहा ।
पाके तु साम्ला मधुरा विदाहकृत्
कफे तु शस्ता रुचिकृच्च दीपनी ॥"
इति राजनिर्घण्टः ॥

शशादः, पुं, (शशमत्तीति । अद + अच् ।) श्येन-
पक्षी । इति राजनिर्घण्टः ॥ (इक्ष्वाकुपुत्रः ।
यथा, महाभारते । ३ । २२१ । १ ।
"इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवी-
मिमाम् ।
प्राप्तः परमधर्म्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥"
अस्य विकुक्षिरिति नाम आसीत् । अयं हि
पित्रनुज्ञातः श्राद्धार्थं मांसमानेतुं वनं गतः
मृगान् व्यापादयामास । ततोऽतिश्रान्तः क्षुत्-
परीत एकं शशमभक्षत् अतोऽस्य शशाद इति
नाम अजायत । एतद्विवरणं भागवते । ९ । ६
अध्याये तथा विष्णुपुराणे ४ । २ अध्याये च
द्रष्टव्यम् ॥ )

शशादनः, पुं, (शशमत्तीति । अद + ल्युः ।)
श्येनपक्षी । इत्यमरः ॥

शशिकला, स्त्री, चतुर्दशाक्षरपादच्छन्दोविशेषः ।
यथा,—
"गुरुनिचयसह [illegible] शशिकला ।
[illegible]
[illegible]
[illegible]
[illegible] ।"
इति छन्दोमञ्जरी ॥

[illegible]

[illegible]

[illegible] यथा,—

"[illegible] यथाविध [illegible]।
[illegible] कुद्दालक [illegible]: [illegible] ॥"

[illegible] दीर्घ [illegible]।

"[illegible] मसूराश्च निष्पावा: सकुलत्थका:।
[illegible] ग्राम्या: सप्तदश स्मृता: ॥
इत्येता ओषधीनान्तु ग्राम्याणां जातयो मुने ॥"

[illegible] यथा,—

"ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्द्दश।
ब्रीहयश्च यवा माषा गोधूमाश्चाणवस्तिला: ॥
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थका:।
श्यामाकास्त्वथ नीवारा जर्त्तिला: सगवेधुका:॥
तथा वेणुयवा: प्रोक्तास्तथा मर्कटका मुने।
ग्राम्यारण्या: स्मृता ह्येता ओषध्यस्तु चतुर्द्दश॥"

इति विष्णुपुराणे १ अंशे ६ अध्याय: ॥*॥

नवशस्यसम्भोगनक्षत्राणि यथा,—

"अनुराधा मृगशिरो रेवती चोत्तरात्रयम्।
हस्ता चित्रा मघा पुष्या श्रवणा च पुनर्व्वसु: ॥
रोहिणी नवशस्यादिनवद्रव्याशनादिषु।
प्रशस्तं नवपीठादिसम्भोगं शस्तविद्वदेत् ॥"*॥

नवशस्यश्राद्धादिकालो यथा,—

"शरद्वसन्तयो: केचिन्नवयज्ञं प्रचक्षते।
धान्यपाकवशादन्ये श्यामाको वनिन: स्मृत:॥"

इत्यनेन शरद्वसन्तविहितनवशस्येष्टे:।

"श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालत:।
प्रागयष्ट्वा युज्यतेऽवश्यं न त्वन्नाशयणात्ययः ॥"

इति कालान्तरदर्शनात् श्राद्धेऽपि तथा।

आग्रयणं नवशस्येष्टि:।

"हरिबोधे शुक्लपक्षे तु नवान्नं शस्यते बुधै:।
अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् ॥
धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु।
पितरस्तत्र गच्छन्ति नवान्नामिषकाङ्क्षिण: ॥"

अपरे कृष्णपक्षे।

"पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुध:।
भवेत् जन्मान्तरे रोगी पितृणां नोपतिष्ठते ॥
यद्यपि व्रीहिपाके च यवपाके च पार्थिव।
न तावद्यो महाराज विना श्राद्धं कथञ्चन॥"

इति विष्णुधर्म्मोत्तरवचने श्राद्धं प्रति व्रीहियव-
पाकयोर्निमित्तत्वं प्रतीयते। तथापि नवोदके
नवान्ने च इति शातातपवचने पूर्व्वोक्तवह्नपु
वचनेषु च नवान्नस्य श्रुतेर्नवान्नत्वेनैवोभयसाधा-
रणं निमित्तं लाघवात्। अभिलापवाक्ये नवा-
न्ननिमित्तमिति निर्योज्यम्। न तु यवान्ना-
[illegible] हरिबोधे [illegible] च इति तु धनुरादि-
[illegible] प्राशस्त्य-
[illegible] न तु [illegible] इति [illegible]
[illegible]
[illegible]
[illegible]
[illegible]

[illegible] [illegible] (शस्यस्य [illegible]) [illegible]
निर्गतशस्याग्नियुक्तम्। शीष इति भाषा॥
तत्पर्य्यायः। कणिशम् २। इत्यमरः॥ कणिशः
३ कणिश: ४। इति तट्टीका॥

शस्यशूकं, क्ली, (शस्यस्य शूकम्।) शस्यस्य
तीक्ष्णाग्रम्। शुङा इति भाषा। तत्पर्य्याय:।
किंशारु: २। इत्यमर:॥

शस्यसम्बर:, पुं, सालवृक्ष:। इत्यमर:॥

शस्यात्, त्रि, शस्यभक्षक:। शस्यं अत्ति इत्यर्थे
अदधातो: कर्त्तरि क्विप्प्रत्ययेन निष्पन्नमेतत्।
इति मुग्धबोधव्याकरणम्॥

शस्यारु:, पुं, कुङ्कुमवृक्ष:। इति शब्दरत्ना-
वली॥

शांशप:, पुं, शिंशपाया विकारश्चमस:। शिंशपा-
शब्दादण्प्रत्यये इकारस्य आकारादेशेन निष्पन्न-
मेतत्। इति सिद्धान्तकौमुदी॥

शांशपायन:, पुं, मुनिविशेष:। इति पुराणम्॥
(यथा, विष्णुपुराणे। ३। ६। १८।
"काश्यप: संहिताकर्त्ता सावर्णि: शांश-
पायन: ॥")

शाकं, क्ली, पुं, (शक्यते भोक्तुमिति। शक + घञ्।)
पत्रपुष्पादि। साग इति हिन्दीभाषा। तत्-
पर्य्याय:। हरितकम् २ शिग्रु: ३। इत्यमर:॥
सिग्रु: ४। इति तट्टीका॥ हारितकम् ५ इति
शब्दरत्नावली॥ अथ शाकवर्ग:। तत्र शाक-
निरूपणम्।

"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा।
शाकं षड्विधमुद्दिष्टं गुरु विद्यात् यथोत्तरम्॥"

अथ शाकानां गुणा:।

"प्राय:शाकानि सर्व्वाणि विष्टम्भीनि गुरूणि च
रूक्षाणि बहुवर्च्चांसि सृष्टविण्मारुतानि च॥
शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं
वर्णं विनाशयति रक्तमथापि शुक्रम्।
प्रज्ञाक्षयञ्च कुरुते पलितञ्च नूनं
हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञा: ॥
शाकेषु सर्वे निवसन्ति रोगा:
सहेतवो देहविनाशनाय।
तस्माद्बुध: शाकविवर्जनञ्च
कुर्य्यात्तथाम्लेषु स एव दोष: ॥"

इति भावप्रकाश: ॥

अपि च।

"सर्वशाकमचाक्षुष्यमचक्षेयममैथुनम्।
ऋते पटोलवास्तूकाकाकमाचीपुनर्नवा: ॥"

इति राजवल्लभ: ॥

शाक:, पुं, वृक्षविशेष:। सेगोन् इति भाषा।
तत्पर्य्याय:। शाकवृक्ष: २ शाकाख्य: ३ खर-
पत्र: ४ धर्म्मीपम: ५। इति रत्नमाला॥
क्रकचपत्र: ६ शरपत्र: ७ अतिपत्र: ८ अहि-
[illegible]: ९ [illegible]: १० [illegible]: ११ [illegible]-
द्रुम: १२। अस्य गुणा:। सारकत्वम्। पित्त-
[illegible]। [illegible]। [illegible]-
[illegible]। [illegible]। [illegible]। [illegible]

[illegible]। [illegible]
मेदिनी॥ [illegible]। इति [illegible]॥
नृपभेद:। इति त्रिका:॥ द्वीपविशेष:। [illegible]
विवरणं यथा,—

सूत उवाच।

"शाकद्वीपस्य वक्ष्यामि [illegible]
कथ्यमानं निबोधध्वं शाकद्वीपं [illegible]:॥
जम्बुद्वीपस्य विस्ताराद्द्विगुणस्तस्य [illegible]।
विस्ताराद्द्विगुणश्चापि परिणाह: [illegible]॥
तेनावृत: समुद्रोऽयं द्वीपेन [illegible]॥
तत्र पुण्या जनपदाश्चिराच्च म्रियते जन:॥
कुतएव च दुर्भिक्षं क्षमातेजोयुतेष्विह।
तत्रापि पर्वता: शुभ्रा: सप्तैव मणिभूषिता:॥
शाकद्वीपादिद्वीपेषु सप्त सप्त नगा[illegible]।
ऋज्वायता: प्रतिदिशं निविष्टा वर्षपर्वता:॥
रत्नाकराद्रिनामान: शोभावन्तो महाचिता:।
समाचिता: प्रतिदिशं द्वीपविस्तारमानत:॥
उभयत्रावगाढ़ाश्च लवणक्षीरसागरौ।
शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान्॥
देवर्षिगन्धर्वयुत: प्रथमो मेरुरुच्यते।
प्रागायत: स सौवर्ण उदयो नाम पर्वत:॥
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च।
तस्यापरेण सुमहान् जलधारो महागिरि:॥
सैव चन्द्र: समाख्यात: सर्व्वौषधिसमन्वित:।
तस्मान्नित्यमुपादत्ते वासव: परमं जलम्॥
नारदो नाम सैवोक्तो दुर्गशैलो महाचित:।
तत्राचले समुत्पन्नौ पूर्वं नारदपर्व्वतौ॥
तस्यापरेण सुमहान् श्यामो नाम महागिरि:।
यत्र श्यामत्वमापन्ना: प्रजा: पूर्वमिमा: किल॥
स एव दुन्दुभिर्नाम श्याम: पर्वतसत्तम:।
शब्दमृत्यु: पुरा तस्मिन् दुन्दुभिस्ताड़ित: सुरै:॥
रत्नज्वालान्तरमय: शाल्मलश्चान्तरान्वित:।
तस्यापरेण रजतो महानस्तो गिरि: स्मृत:॥
सैव सोमक इत्युक्तो देवैर्यत्राहृतं पुरा।
सम्भृतञ्च हृतञ्चैव मातुरर्थे गरुत्मता॥
तस्यापरे चाम्बिकेय: सुमनाश्चैव स स्मृत:।
हिरण्याक्षो वराहेण तस्मिन् शैले निषूदित:॥
आम्बिकेयात् परो रम्य: सर्वौषधिसमन्वित:।
विभ्राजस्तु समाख्यात: स्फाटिक: स महा-
गिरि:॥
यस्माद्विभ्राजते नित्यं विभ्राजस्तेन स स्मृत:।
सैवेह केशवेत्युक्तो यतो वायु: प्रवायति॥
तेषां वर्षाणि वक्ष्यामि पर्वतानां द्विजोत्तमा:।
शृणुध्वं नामतस्तानि यथावदनुपूर्वश:॥
द्विनामान्येव वर्षाणि यथैव गिरयस्तथा।
उदयस्योदयं वर्षं जलधारेति विश्रुतम्॥
नाम्ना [illegible] वर्षं तत् प्रथमं स्मृतम्।
द्वितीयं [illegible] सुकुमारमिति स्मृतम्॥
तदेव शैशिरं नाम वर्षं संपरिकीर्त्तितम्।
[illegible] तु कौमारं तदेव च [illegible]।
[illegible]
[illegible] तदेव [illegible]

"[illegible]
[illegible]
[illegible]
"प्रत्यावे पुरा यस्मात् नवम्यां बोधिता सुरैः।
शारदा सा समाख्याता पीठे लोके च मानतः॥"
इति तिथ्यादितत्त्वम् ॥
[illegible]विशेषः। इति शब्दरत्नावली ॥ ब्राह्मी।
शारिवा। इति राजनिर्घण्टः ॥
शारदिकं, क्ली, (शरद् + "श्राद्धे शरदः।" ४।३।
१२। इति ठञ्।) श्राद्धम्। इति सिद्धान्त-
कौमुदी ॥
शारदिकः, पुं, (शरद् + "विभाषा रोगातपयोः।"
४।३।१३। इति ठञ्।) रोगः। आतपः।
इति सिद्धान्तकौमुदी ॥
शारदी, स्त्री, (शारद + ङीप्।) तोयपिप्पली।
सप्तपर्णः। इति मेदिनी ॥ कोजागरपूर्णिमा।
इति शब्दरत्नावली ॥ शरत्कालीने, त्रि।
यथा, स्कान्दभविष्ययोः।
"शारदीचण्डिकापूजा त्रिविधा परिगीयते।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः।
माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम् ॥
पाठस्तस्य जपः प्रोक्तः पठेद्देवीमना: प्रिये।
राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा ॥
सुरामांसाद्युपहारैर्जपयज्ञैर्विना तु या।
विना मन्त्रैस्तामसी स्यात् किरातानाञ्च
सम्मता ॥"
इति तिथ्यादितत्त्वम् ॥
(संवत्सरसम्बन्धिनी। यथा, ऋग्वेदे।१।१३१।४।
"यदिन्द्रशारदीरवातिरः सा सहानो अवा-
तिरः ॥")
शारदीयमहापूजा, स्त्री, (शारदीया महापूजा।)
शरत्कालीनदुर्गामहापूजा। यथा,—
"शारदीया महापूजा चतुःकर्म्ममयी शुभा।
तां तिथित्रयमासाद्य कुर्य्यात् भक्त्या विधा-
नतः ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च।
"इते घोरे महावीरे सुरासुरभयङ्करे।
[illegible] देवाः प्रभूता राक्षसास्तथा ॥
[illegible] सर्व्वदेवास्ते देवीं भक्त्या तुतोषिरे।
[illegible] दधुर्भूतानां महिषाजामिषेष च ॥
एवं तस्मिन् दिने वत्स प्रेतभूतसमाकुलम्।
[illegible] सर्व्वदेव पूजाच शाश्वतीर्मता ॥
[illegible] मासि [illegible]
[illegible] तु अष्टमीनवरात्रिषु ॥
[illegible] भक्त्या ते भवन्ति महाबलाः
[illegible] ये प्रयच्छन्ति सर्व्वभूतविनाशनम् ॥
[illegible]
[illegible]
[illegible]
[illegible]

[illegible]
[illegible]
इन्द्र उवाच।
आश्विने शासिते घोरे नवमी प्रतिवत्सरम्।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्।
कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥
कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम्।
अयाची त्वथ वैकाशी नक्ताशी वाथ वायुदः ॥
प्रातःस्नायी जितद्वन्द्वः त्रिकालं शिवपूजकः।
जपहोमसमायुक्तः कन्यकां भोजयेत् सदा ॥
अष्टम्यां नवगेहानि दारुजानि शुभानि च।
एवं वा चित्तभावेन कारयेत् सुरसत्तम ॥
तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती च वा
मृन्मयी लक्षणोपेता खड्गे शूलेऽथ पूजयेत् ॥
सर्व्वोपहारसम्पन्नो वस्त्ररत्नफलादिभिः।
कारयेद्रथदोलादीन् पूजाञ्च बलिदैवकीम् ॥
पुष्पादिद्रोणबिल्वाम्रजातीपुन्नागचम्पकैः।
विचित्रां कारयेत् पूजां अष्टम्यामुपवासयेत् ॥
दुर्गायतो जपेन्मन्त्रमेकचित्तः सुभावितः।
तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तमैः ॥
पश्चाच्च लक्षणोपेतं गन्धधूपसमर्च्चितम्।
विधिवत् कालि कालीति जप्त्वा खड्गेन घात-
येत् ॥
तस्योत्थं रुधिरं मांसं गृहीत्वा पूतनादिषु।
नैरृताय प्रदातव्या महाकौशिकमन्त्रितम् ॥
तस्याग्रतो नृपः स्नायाच्छत्रं कृत्वा तु पिष्टजम्
खड्गेन घातयित्वा तु दद्यात् स्कन्दविशा-
खयोः ॥
ततो देवीं स्नापयेत् प्राज्ञः क्षीरसर्पिर्जला-
दिभिः।
कुङ्कुमागुरुकर्पूरचन्दनैश्चारुधूपकैः ॥
हैमानि पुष्परत्नानि वासांसि स्वाहृतानि च।
निवेद्यं सुप्रभूतन्तु देयं देव्याः सुभावितैः ॥
अश्वमेधमवाप्नोति भक्तिमान् सुरसत्तम।
महानवम्यां पूजेयं सर्व्वकामप्रदायिका ॥
सर्व्वेषु सर्व्ववर्णेषु तव भक्त्या प्रकीर्त्तिता।
कृत्वाप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः ॥"
इति देवीपुराणे २८।१० अध्यायात् सङ्कलितं
न तु सक्रमकम् ॥
शारिः, पुं, (शॄ हिंसायाम् + इञ्।) अक्षोप-
करणम्। पाशकादेर्वलम्। गुटिका। इति
मेदिनी ॥ तत्पर्य्यायः। शारः २ खेलनी ३।
इति हेमचन्द्रः ॥
शारिः, स्त्री, (शॄ + "अः शकुनौ।" उणा० ४।
१२७। इति इञ्।) शकुनिकाभेदः। युद्धार्थं-
गजपर्य्याणम्। व्यवहारान्तरम्। इति मेदिनी॥
कपटः। इति धरणिः ॥
शारिका, स्त्री, (शारिरिव। स्वार्थे कन्।) पक्षि-
विशेषः। मयना इति भाषा। तत्पर्य्यायः।
पीतपादा २ गोराटी ३ गोकिराटिका ४।
[illegible]

[illegible] इति [illegible] ॥
[illegible] १० । इति [illegible]
धरः ॥ [illegible] । तत्पर्य्यायः। [illegible]
२। इति हेमचन्द्रः ॥
शारिफलं, क्ली, पुं, (शारीणां [illegible])
शारिपट्टः। शारिक्रीडनाधारः। [illegible] इति
भाषा। तत्पर्य्यायः। अष्टापदम् २। [illegible]
फलकः ३। इति शब्दरत्नावली ॥ [illegible]
शारिफलकः ५ विन्दुतन्त्रः ६ [illegible] ७ ॥
इति जटाधरः ॥
शारिफलकः, पुं, क्ली, (शारीणां फलकः।) शारि-
फलम्। इति जटाधरः ॥
शारिवा, स्त्री, श्यामलता। तत्पर्य्यायः। गोपी २
श्यामा ३ अनन्ता ४ उत्पलशारिवा ५। इत्य-
मरः ॥ पञ्च श्यामलतायाम्। नागजिह्वाया-
मिति केचित्। गोप्यादित्रयं श्यामलतायां
अनन्तादिद्वयं अनन्तमूले इति केचित्। गुपू
रक्षणे गोपादित्वाट्टीप् गोपा च।
'गोपीश्यामा गोपवल्ली गोपा गोपालिकापि च।'
इति वाचस्पतिः।
"एकं वा शारिवामूलं सर्व्वव्रणविशोधनम्।"
इति वैद्यकम्। इति भरतः ॥
अस्या गुणः। वायुपित्तरक्ततृष्णाच्छर्दिज्वर-
नाशित्वम्। इति राजवल्लभः ॥
शारिशृङ्खला, स्त्री, (शारीणां शृङ्खला यत्र।)
पाशकविशेषः। यथा,—
"चुम्बुरी तिन्तिडी द्यूतं पञ्चमी शारिशृङ्खला।
नयपीठी चाष्टकाली नयः स्याज्जयपुत्रकः।
एते पाशकभेदाः स्युर्जयकोलाहलोऽपि च ॥"
इति शब्दरत्नावली ॥
शारी, स्त्री, (शॄ + इञ्। वा ङीष्।) कुशा।
इति केचित् ॥ (शकुनिकाभेदः। यथा, आर्य्या-
सप्तशत्याम्। ६२१।
"सा विरहदहनदूना मृत्वा मृत्वापि जीवति
वराकी।
शारीव कितव भवतानुकूलिता पातिता[illegible]")
शारीरं, क्ली, वृषः। (शरीरे भवः। शरीर +
अण्।) शरीरजाते, त्रि। इति मेदिनी ॥
शारीरदण्डो यथा,—
"दिग्दण्डं प्रथमं कुर्य्यात् वाग्दण्डं तदनन्तरम्
तृतीयं धनदण्डञ्च वधदण्डमतः परमिति ॥"
वधदण्डोऽपि शारीरो [illegible]।
इति मिताक्षरायां व्यवहाराध्याये ॥
शारीरदुःखं यथा,—
"आध्यात्मिको वै द्विविधः शारीरो मानस-
स्तथा।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः।
गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥
तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः।
भिद्यते देहजस्तापो मानसं [illegible]
[illegible]

"चतुर्विधा यास्तु शिराः शरीरे
प्रायेण ता मर्म्मसु सन्निविष्टाः।
स्नाय्वस्थिमांसानि तथैव सन्धीन्
सन्तर्प्य देहं प्रतिपालयन्ति॥
ततः क्षते मर्म्मणि ताः प्रवृद्धः
समन्ततो वायुरभिस्तृणोति।
विवर्द्धमानस्तु स मातरिश्वा
रुजः सुतीव्राः प्रतनोति काये॥
रुजाभिभूतन्तु पुनः शरीरं
प्रलीयते नश्यति चास्य संज्ञा।
अतो हि शल्यं विनिहर्त्तुमिच्छन्
मर्म्माणि यत्नेन परीक्ष्य कर्षेत्॥"

एतेन शेषं व्याख्यातम्। तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति। कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति। विशल्यप्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति रुजाञ्च करोति। रुजाकरमतीव्रवेदनं भवति। तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति। कालान्तरप्राणहराणि पक्षान्मासाद्वा। तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति। विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति॥ *॥ अत ऊर्द्ध्वं प्रत्येकशो मर्म्मस्थानान्यनुव्याख्यास्यामः। तत्र पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म्म तत्र विद्धस्याक्षेपकेण मरणम्। मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम तत्रापि रुजाभिर्मरणम्। क्षिप्रस्योपरिष्टादुभयतः कूर्च्चो नाम तत्र पादस्य भ्रमणवेपने भवतः। गुल्फसन्धेरध उभयतः कूर्च्चशिरो नाम तत्र रुजाशोफौ। पादजङ्घयोः सन्धाने गुल्फो नाम तत्र रुजः स्तब्धपादता खञ्जता वा। पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम तत्र शोणितक्षये मरणम्। जङ्घोर्व्वोः सन्धाने जानु नाम तत्र खञ्जता जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च। ऊरुमध्ये ऊर्व्वी नाम तत्र शोणितक्षयात् सक्थिशोषः। ऊर्व्व्या ऊर्द्ध्वमधोवङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम तत्र लोहितक्षयेण पक्षाघातः। वङ्क्षणवृषणयोरन्तरे विटपं नाम तत्र षाण्ढ्यमल्पशुक्रता वा भवति। एवमेतान्येकादश सक्थिमर्म्माणि व्याख्यातानि। एतेनेतरसक्थि बाहू च व्याख्यातौ। विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि तानि बाहौ मणिबन्धकूर्परकक्षधराणि। यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्षःकक्षयोर्मध्ये कक्षधरं तस्मिंश्च विद्धे त एवोपद्रवाः। विशेषतस्तु मणिबन्धे कुण्ठता। कूर्पराख्ये कुणिः। कक्षधरे पक्षाघातः। एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि॥ *॥ अत ऊर्द्ध्वमुदरोरसोर्म्मर्म्माण्यनुव्याख्यास्यामः। तत्र वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म्म तत्र सद्योमरणम्। [illegible] मांसशोणितोऽल्पमांसः कट्यां मूत्राशयो वस्तिर्नाम तत्रापि सद्योमरणमश्मरीव्रणादृते। तत्राप्युभयतो भिन्ने न जीवति एकतो भिन्ने मूत्रस्रावी व्रणो भवति। स तु यत्नेनोपक्रान्तो रोहति। पक्वामाशययोर्मध्ये सिराप्रभवा नाभिर्नाम तत्रापि सद्य एव मरणम्। स्तनयोर्म्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम तत्र सद्य एव मरणम्। स्तनयोरधस्तात् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्म्मणी तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते। स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम तत्र रक्तेन पूयभावं गतेन मरणम्। उभयोस्तत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम तत्र वातपूर्णकोष्ठतया कासश्वासाभ्याञ्च मरणम्। एवमेतान्युदरोरसोर्द्वादश मर्म्माणि व्याख्यातानि॥ *॥ अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः। तत्र पृष्ठवंशमुभयतः प्रतिश्रोणिकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते। पार्श्वजघनवहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च। श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम तत्राधःकायशोषो दौर्ब्बल्याच्च मरणम्। अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम तत्र लोहितपूर्णकोष्ठतया म्रियते। स्तनमूलादुभयतः पृष्ठवंशस्य बृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्म्रियते। पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र बाह्वोः स्वापः शोषो वा। बाहुमूर्द्धग्रीवामध्येऽसपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्धबाहुता। एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि व्याख्यातानि॥ *॥ अत ऊर्द्ध्वं जत्रुगतानि व्याख्यास्यामः। तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन तत्र मूकता स्वरवैकृतमरसग्राहिता च। ग्रीवायामुभयतश्चतस्रः सिरामातृकास्तत्र सद्योमरणम्। शिरोग्रीवयोः सन्धाने कृकाटिके नाम तत्र चलमूर्द्धता। कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम तत्र बाधिर्य्यम्। घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम तत्र गन्धाज्ञानम्। भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम तत्रान्ध्यं दृष्ट्युपघातो वा। भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम तत्राप्यान्ध्यं दृष्ट्युपघातश्च। भ्रुवोःपुच्छान्तयोरुपरि कर्णललाटयोर्म्मध्ये शङ्खौ नाम तत्र सद्योमरणम्। शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम तत्र सशल्यो जीवेत् पाकात् पतितशल्यो वा नोद्धृतशल्यः। भ्रुवोर्मध्ये स्थपनी नाम तत्रोत्क्षेपवत्। पञ्च सन्धयः शिरसि विभक्ताः [illegible] नाम तत्रोन्मादभयचित्तनाशैर्मरणम्। [illegible] सिराणां मध्ये सिरासन्निपाताः शृङ्गाटकानि तानि चत्वारि मर्म्माणि तत्रापि सद्योमरणम्। मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्त्तः अधिपतिस्तत्रापि सद्योमरणम्। एवमेतानि सप्तत्रिंशज्जत्रूर्द्ध्वं जत्रुगतानि मर्म्माणि व्याख्यातानि॥ *॥ भवन्ति चात्र।

"ऊर्व्व्यः शिरांसि विटपे च सकक्षपार्श्वे
एकैकमङ्गुलमिता स्तनपूर्व्वमूलम्।
विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम्॥
हृद्वस्तिकूर्च्चगुदनाभि वदन्ति मूर्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे।
तानि स्वपाणितलकुञ्चितसंमितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम्॥
एतत् प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः
शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म।
पार्श्वाभिघातितमपीह निहन्ति मर्म्म
तस्माद्धि मर्म्मसदनं परिवर्ज्जनीयम्॥
छिन्नेषु पाणिचरणेषु शिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति।
प्राप्यामितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं
गच्छत्यतीव पवनश्च रुजं करोति।
एवं विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा इवायुधविघातनिकृत्तमूलाः॥
तस्मात्तयोरभिहतस्य तु पाणिपादं
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे।
मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति
यस्माच्च मर्म्मसु हता न भवन्ति सद्यः॥
जीवन्ति तत्र यदि वैद्यगुणेन केचित्
ते प्राप्नुवन्ति विकलत्वमसंशयं हि।
सम्भिन्नजर्ज्जरितकोष्ठशिरःकपाला
जीवन्ति शस्त्रनिहतैश्च शरीरदेशैः।
छिन्नैश्च सक्थिभुजपादकरैरशेषै-
र्येषां न मर्म्मपतिता विविधाः प्रहाराः॥
सोममारुततेजांसि रजःसत्त्वतमांसि च।
मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते॥
मर्म्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः।
इन्द्रियार्थेष्वसंप्राप्तिर्मनोबुद्धिविपर्य्ययः।
रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते।
हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम्।
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति।
हते वैकल्यजनने केवलं वैद्यनैपुणात्।
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात्।
विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम्।
रुजाकराणि मर्म्माणि [illegible]
कुर्व्वन्ति [illegible]
[illegible]
[illegible]

[illegible] शोणितं [illegible]
[illegible]
प्रायेण मर्माभिहितास्तु [illegible]
वैकल्यमृच्छन्ति [illegible] म्रियन्ते ॥
मर्माण्यधिष्ठाय हि ये विकाराः
मूर्च्छन्ति काये विविधा नराणाम्।
प्रायेण ते कृच्छ्रतमा भवन्ति
नरस्य यत्नैरपि साध्यमानाः ॥ * ॥"

सप्तमोऽध्यायः।

अथातः सिरावर्णनविभक्तिर्नाम शारीरं व्याख्यास्यामः। सप्त सिराशतानि भवन्ति। याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यते अनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः। द्रुमपत्रसेवनीनामिव च तासां प्रतानास्तासां नाभिर्मूलं ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च ॥ * ॥ भवतश्चात्र।

"यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम्
नाभ्यां सर्वा निबद्धास्ता प्रतन्वन्ति समन्ततः ॥
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता।
सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥"

तासां मूलसिराश्चत्वारिंशत्। तासां वातवाहिन्यो दश। पित्तवाहिन्यो दश। कफवाहिन्यो दश। दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति। तावत्य एव पित्तवाहिन्यः। पित्तस्थाने कफवाहिन्यश्च। कफस्थाने रक्तवाहिन्यश्च। यकृत्प्लीह्नोरेवमेतानि सप्तसिराशतानि तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः। श्रोण्यामष्टौ। द्वे द्वे पार्श्वयोः। षट् पृष्ठे। तावत्य एव चोदरे। दश वक्षसि। एकचत्वारिंशज्जत्रुण ऊर्द्ध्वम्। तासां चतुर्दश ग्रीवायाम्। कर्णयोश्चतस्रः। नव जिह्वायाम्। षट् नासिकायाम्। अष्टौ नेत्रयोः। एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातम्। एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश। कर्णयोर्द्वे। एवं रक्तवहा कफवहाश्च। एवमेतानि सप्तसिराशतानि सविभागानि व्याख्यातानि ॥ * ॥

भवन्ति चात्र।

"क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम्।
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन् ॥
यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः ॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्।
संसर्पन् स्वाः सिराः पित्तं कुर्य्याच्चान्यान् गुणानपि ॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥
[illegible]
[illegible] गुणान् ॥
यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्।
स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥
न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा।
श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः ॥
प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम्।
ध्रुवमुन्मार्गगमनमतः सर्ववहाः स्मृताः ॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना सिराः।
पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात्।
असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि न विध्येद्याः सिरा भिषक्।
वैकल्यं मरणञ्चापि व्यधात्तासां ध्रुवं भवेत् ॥
सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्।
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि ॥
शाखासु षोडश सिराः कोष्ठे द्वात्रिंशदेव तु।
पञ्चाशज्जत्रुणश्चोर्द्ध्वमवेध्याः परिकीर्त्तिताः ॥"

तत्र सिराशतमेकैकस्मिन् सक्थ्नि भवति तासां जालधरा त्वेका तिस्रश्चाभ्यन्तराः। तत्रोर्वीसंज्ञे द्वे लोहिताक्षसंज्ञा चैकैतास्त्ववेध्याः। एतेनेतरसक्थिबाहू च व्याख्यातावेवमशस्त्रकृत्याः षोडश शाखासु। द्वात्रिंशत् श्रोण्यां तासामष्टावशस्त्रकृत्याः। द्वे द्वे विटपयोः कटीकतरुणयोश्च। अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकैकामूर्द्ध्वगां परिहरेत्। पार्श्वसन्धिगते च द्वे। चतस्रो विंशतिश्च पृष्ठवंशमुभयतस्तासामूर्द्ध्वगामिन्यौ द्वे द्वे परिहरेद्बृहती सिरे। तावत्य एवोदरे तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्। चत्वारिंशद्वक्षसि तासां चतुर्दशाशस्त्रकृत्याः। हृदये द्वे द्वे। द्वे स्तनमूले। स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ। एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति। चतुःषष्टिसिराशतं जत्रुण ऊर्द्ध्वं भवति तत्र षट्पञ्चाशच्छिरोधरायां तासामष्टौ चतस्रश्च मर्मसंज्ञाः परिहरेत्। द्वे कृकाटिकयोः। द्वे विधुरयोः। एवं ग्रीवायां षोडशाव्यध्याः। हन्वोरुभयतोऽष्टावष्टौ तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत्। षट्त्रिंशज्जिह्वायां तासामधः षोडशाशस्त्रकृत्याः रसवहे द्वे वाग्वहे च द्वे। चतुर्विंशतिर्नासायां तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकां मृदावुद्देशे। अष्टात्रिंशदुभयोर्नयनयोस्तासामेकैकामपाङ्गयोः परिहरेत्। कर्णयोर्दश तासां शब्दवाहिनीमेकैकां परिहरेत्। नासानेत्रगतास्तु ललाटे षष्टिस्तासां केशान्तानुगताश्चतस्र आवर्त्तयोरेकैका स्थपन्यां चैका परिहर्त्तव्या। शङ्खयोर्दश तासां शङ्खसन्धिगतामेकैकां परिहरेत्। द्वादश मूर्द्ध्नि तासामुत्क्षेपयोर्द्वे परिहरेत्। सीमन्तेष्वेकैकामधिपतावेकामिति। एवमशस्त्रकृत्याः पञ्चाशज्जत्रूर्द्ध्वमिति। भवति चात्र।

"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥"

षष्ठमोऽध्यायः।

अथातः सिराव्यधविधिशारीरं व्याख्यास्यामः। बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तमद्याध्वस्त्रीकर्षितवमितविरिक्तास्थापितानुवासितजागरितक्लीबकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीडितानाञ्च सिरां न विध्येत्। याश्चाव्यध्या व्यध्याश्चादृष्टा दृष्टाश्चायन्त्रिता यन्त्रिताश्चानुत्थिता इति। शोणितावसेकसाध्याश्च विकाराः प्रागभिहितास्तेषु चापक्वेष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च सिरां विध्येत्। प्रतिषिद्धानामपि च विषोपसर्गे चात्ययिकेषु सिराव्यधनमप्रतिषिद्धम्। तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकद्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्मान्तर्वल्कलतानामन्यतमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा सिरां विध्येत् ॥ * ॥

"नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते।
सिराणां व्यधनं कार्य्यमरोगे वा कदाचन ॥"

तत्र व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परसन्धिद्वयस्योपरि हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात् स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूयाद्दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयत्यन्तःकृतायथार्थं यन्त्रं पृष्ठमध्ये च पीडयेदिति कर्म पुरुषञ्च वायुपूर्णमुखं स्थापयेदेष उत्तमाङ्गगतानामन्तर्मुखवर्ज्जानां सिराणां व्यधने यन्त्रणविधिः। तत्र पादव्यध्यसिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्य गुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुले प्लोतादीनामन्यतमेन बद्ध्वा पादसिरां विध्येत्। अथोपरिष्टाद्बाहू गूढाङ्गुष्ठकृतमुष्टी कृत्वासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत्। गृध्रसीविश्वाच्योः [illegible] जानुकूर्परं [illegible]
[illegible]
[illegible]
[illegible]

[illegible]

[illegible] शाल्मली [illegible] ४ मचक: ५ [illegible]। [illegible]। [illegible] रोचकय-कारित्वम्। पिच्छिलत्वम्॥ पित्तदाहार्त्तिशोष-[illegible] । इति राजनिर्घण्टः॥
शाल्मलीफल:, पुं, (शाल्मल्याः फलमिव फलं यस्य) [illegible] । इति राजनिर्घण्टः॥
शाल्मलीवेष्टः, पुं, (शाल्मल्या वेष्टः।) शाल्मलि-निर्यासः। [illegible] इति भाषा॥ तत्-पर्य्यायः। पिच्छा २। इत्यमरः॥ मोचरसः ३ [illegible] ४ शाल्मलीवेष्टकः ५। इति रत्न-माला॥ मोचस्रावः ६ मोचनिर्यासः ७। [illegible] गुणाः।
"मोचस्रावो हिमो ग्राही स्निग्धो वृष्य: कषायकः।
प्रवाहिकातिसारामकफपित्तास्रदाहनुत्॥"
इति भावप्रकाशः॥
शाल्मलीवेष्टकः, पुं, (शाल्मलीवेष्ट+स्वार्थे कन्।) शाल्मलीवेष्टः। इति रत्नमाला॥
शाल्वः, पुं, देशविशेषः। यथा,—
"शाल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः॥"
इति हेमचन्द्रः॥
राजविशेषः। इति महाभारतम्॥ (भीष्मेण सहास्य युद्धवृत्तान्तो महाभारते आदिपर्व्वणि १०२ अध्याये तथा कृष्णेन सहास्य युद्ध-वृत्तान्तस्तत्रैव वनपर्व्वणि १५ अध्यायमारभ्य द्रष्टव्यः॥)
शाल्वणः, पुं, वातघ्नौषधगणविशेषः। यथा,—
"काकोल्यादिः स वातघ्नः सर्व्वाम्लद्रव्यसंयुतः।
आनूपौदकमांसस्तु सर्व्वस्नेहसमन्वितः॥
सलवणः स्वल्पलवणः शाल्वणः परिकीर्त्तितः।
तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणाम्॥"
इति सुश्रुते चिकित्सितस्थाने ५ अध्यायः॥
शावः, पुं, (शव्यते प्राप्यते इति। शव गतौ+ घञ्।) शिशुः। इति शब्दरत्नावली॥ (यथा, रघुवंशे। ६। ३।
"शिलाविभङ्गैर्मृगराजशावः
तुङ्गं नगोत्सङ्गमिवारुरोह॥"
[illegible] शव+अण्।) शवसम्बन्धिनि, [illegible] यथा,—
"[illegible] विमुक्तो सौतिकं स्मृतम्।
[illegible] क्रियाक्रमः॥
इति [illegible] ब्रह्माण्डपुराणम्॥
[illegible] पुं, ([illegible] स्वार्थे कन्।) शिशुः। [illegible] (यथा, [illegible] संहितायाम्। ४८।
[illegible]
[illegible] मिवावमित्यथवा॥")
[illegible] पुं, ([illegible] + घञ्।)
[illegible] इति मेदिनी॥
[illegible]

[illegible] इति तिथ्यादितत्त्वम्॥
शाबरभेदाख्य, क्ली, ताम्रम्। इति हेमचन्द्रः॥
शाबरी, स्त्री, शूकशिम्बी। इति मेदिनी॥
शारदोत्सवः, पुं, (शारदायाः उत्सवः।) [illegible] उत्सवः। यथा,—
"पूजयित्वा महाष्टम्यां नवम्यां बलिभिस्तथा।
विसर्ज्जयेत् दशम्यां तु श्रवणे शारदोत्सवैः॥
अन्त:पादो दिवाभागे श्रवणस्य यदा भवेत्।
तदा संप्रेषणं देव्या दशम्यां शारदोत्सवैः॥
रागिणीभिः कुमारीभिर्वेश्याभिर्नर्त्तकैस्तथा।
शङ्खतूर्य्यनिनादैश्च मृदङ्गैः पटहैस्तथा॥
ध्वजैर्वस्त्रैर्बहुविधैर्लाजपुष्पप्रकीर्णकैः।
धूलीकर्द्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः॥
भगलिङ्गविधानैश्च भगलिङ्गप्रगीतकैः।
भगलिङ्गादिशब्दैश्च क्रीडयेयुरलं जनाः॥
परैर्नाक्षिप्यते यस्तु यः परं नाक्षिपत्यपि।
क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम्॥"
इति कालिकापुराणे उत्तरतन्त्रे ६० अध्यायः॥
शाश्वतं, त्रि, (शश्वद्भवम्। शश्वत्+अण्।) नित्यम्। इत्यमरः॥ (यथा, रामायणे। १। २। १५।
"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥")
पारिभाषिकशाश्वतं यथा,—
"शाश्वतं देवपूजादि विप्रदानञ्च शाश्वतम्।
शाश्वतं सगुणा विद्याः सुहृन्मित्रञ्च शाश्वतम्॥"
इति गारुडे नीतिसारे १०९ अध्यायः॥
शाश्वतः, पुं, वेदव्यासः। इति शब्दरत्नावली॥ (शिवः। यथा महाभारते। १३। १७। ३२।
"प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः॥")
शष्कुलः, त्रि, मांसाशी। इति हेमचन्द्रः॥
शाष्कुलिकं, क्ली, (शष्कुल+समूहार्थे ठक्।) शष्कुलिसमूहः। इत्यमरः॥
शास, उ ऋ लृ शासने। इति कविकल्पद्रुमः॥ (अदा०-पर०-सक०-सेट्। क्त्वावेट्।) उ, शासित्वा शिष्ट्वा। ऋ, अशशासत्। लृ, अशिषत्। शास्ति यथाज्ञया राज्ञः स सम्राडित्यमरः। इति दुर्गादासः॥
शास ङ उ ⎫ आशिषि। इति कविकल्पद्रुमः॥
शास ल ङ ⎭ (आ०-अदा०- च-आत्म०-सक०-सेट्।) आङ्पूर्व्वः इति केवलानामन्यपूर्व्वा-णाञ्च प्रयोगनिरासार्थम्। किन्तु "इदं गुरुभ्यः पूर्व्वेभ्यो नमो वाकं प्रशास्महे।" इत्युत्तरचरिते प्रपूर्व्वोऽपि दृश्यते। ङ, आशास्ते। उ, आशा-सित्वा आशास्त्वा। पञ्चमस्वरानुबन्धसामर्थ्यात् क्त्वाप्रत्ययस्य न यप् समासाभावादिति गोविन्द-भट्टः। किन्तु अस्य उदनुबन्धफलं छन्दस्येवेति धातुप्रदीपः। ल ङ, [illegible] [illegible] [illegible]
[illegible] इति दुर्गादासः॥

[illegible]
मनौ। ८। [illegible]
"कुर्व्वीत शासनं राजा [illegible]॥")
तत्पर्य्यायः। अववादः २ निर्देशः ३ निदेशः ४ शिष्टिः ५। इत्यमरः॥ आज्ञा ६। इति भरतः॥ आदेशः ७ आदेशनम् ८। इति शब्दरत्नावली॥ शासनम् ९। इति जटाधरः॥ राजदत्तभूमिः। लेखः। शासनम्। शास्त्रम्। इति मेदिनी। (दानलिखिततामपत्रादिः। यथा, कथासरित्सागरे। १२४। ६२-६३।
"शासनं लेखयित्वा च तमेवं स समादिशत्।
ओँकारपीठमार्गेण भद्र गच्छोत्तरां दिशम्॥
तत्रामुना शासनेन ग्रामं भुङ्क्ष्व मदर्पितम्।
[illegible]"
यथाच मार्कण्डेये। ३६। ८।
"वाच्यं ते शासनं पट्टे मुद्राक्षरविशेषितम्॥"
स्त्रियां धर्म्मोपदेशकर्त्री। यथा, ऋग्वेदे। १। ३१। ११।
"इलामकृण्वन्मनुषस्य शासनीम्॥")
शासनहरः, पुं, (हरतीति। हृ+अच्। शास-नस्य हरः।) राजदूतः। आज्ञावाहकः। इति केचित्॥
शासितः, त्रि, (शास+क्तः।) कृतशासनः। यथा,
"सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः।
सुचिन्त्य चोक्तं सुविचार्य्य यत् कृतं
सुदीर्घकालेऽपि न याति विक्रियाम्॥"
इति पञ्चतन्त्रम्॥
शासिता, [ऋ] त्रि, (शासु+तृच्।) शास्ता। इति त्रिकाण्डशेषः॥ (यथा, मनौ। ७।१७।
"स राजा पुरुषो दण्डः स नेता शासिता च सः॥")
व्याख्याता। यथा, तत्रैव। २। १५०।
"ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता॥")
शास्ता, [ऋ] त्रि, (शासु+"तृन्तृचौ शंसीति" उणा० २। ९४। इति असंज्ञायामपि तृन्। स च अनिट्।) शासनकर्त्ता। तत्पर्य्यायः। [illegible] २ शासिता ३। इति त्रिकाण्डशेषः॥ यथा,—
"द्वौ धाता च विधाता च पौराणौ जगतः पती।
द्वौ शास्तारौ त्रिलोकेऽस्मिन् धर्म्माधर्म्मौ प्रकी-र्त्तितौ॥"
इति वह्निपुराणे [illegible] नामाध्यायः॥
(यथा च भागवते। १। १२। २६।
"राजर्षीणां जनयिता शास्ता चोत्पथगामि-नाम्॥")
शास्ता, [ऋ] पुं, (शासु+"तृन्तृचौ शंसिक्ष-दादिभ्यः संज्ञायां चानिटौ।" उणा० २।९४। इति तृन्। स च अनिट्।) बुद्धः। इत्यमरः॥ [illegible]। राजा। पिता। इति [illegible]॥

शास्ति:, स्त्री, (शास्+क्तिन्।) [illegible] ४ । १७४ । ) शासनम् । इति शब्दरत्नावली ॥ (यथा, मार्कण्डेये । ११३।५ ।
"प्राचीने [illegible] दुष्टशास्तिसमुद्यतम् ॥")

शास्त्रं, क्ली, (शिष्यते अनेन । शास+"सर्व्व-धातुभ्यः ष्ट्रन्" उणा० ४।१५८। इति ष्ट्रन् ।) निदेश: । ग्रन्थ: । इत्यमर: ॥ स च ग्रन्थ: अष्टादशविध: । तस्य विवरणं विद्याशब्दे द्रष्टव्यम् ॥ * ॥ शास्त्रोत्पत्तिर्यथा,—

मत्स्य उवाच ।

"तपश्चचार प्रथमममराणां पितामह: ।
आविर्भूतास्ततो वेदा: साङ्गोपाङ्गपदक्रमा: ॥
पुराणं सर्व्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनि:सृता: ।
मीमांसान्यायविद्याश्च प्रमाणं तर्कसंयुता: ॥
वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसा: ।
मनस: पूर्व्वसृष्टा वै जाता ये तेन मानसा: ॥"

इति मात्स्ये ३ अध्याय: ॥ * ॥

शास्त्रोक्तकर्म्म कर्त्तव्यं न तु शास्त्रविरुद्धम् । यथा,—

"श्रुतिस्मृतिसदाचारविहितं कर्म्म केवलम् ।
सेवितव्यं चतुर्वर्णैर्भजद्भि: केशवं सदा ॥
अन्यथा निरयं यान्ति कुमार्गागमसेवनात् ।
अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म्म संत्यजेत् ॥
स्वबुद्धिरचितै: शास्त्रै: प्रतार्य्येह च बालिशान् ।
विघ्नन्ति श्रेयसो मार्गं लोकनाशाय केवलम् ॥
निन्दन्ति देवता वेदांस्तपो निन्दन्ति सद्द्विजान् ।
तेन ते निरयं यान्ति असच्छास्त्रनिषेवणात् ॥
श्रुतिस्मृतिसदाचारविहितं कर्म्म शाश्वतम् ।
स्वं स्वं धर्मं प्रयत्नेन श्रेयोऽर्थीह समाचरेत् ॥
स्वबुद्धिरचितै: शास्त्रैर्मोहयित्वा जनं नरा: ।
तेन ते निरयं यान्ति युगानां सप्तविंशति: ॥"

इति पाद्मे उत्तरखण्डे १७ अध्याय: ॥ * ॥

अध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दा यथा,—

"पुराणं भारतं वेदधर्म्मशास्त्राणि यानि च ।
आयुष: क्षपणायैव धर्म्मतत्त्वं न चाचरेत् ॥
पुत्त्रदारादिसंभार: पुंसां संमूढचेतसाम् ।
विदुषां शास्त्रसंभार: तद्योगाभ्यासविघ्नकृत् ॥
इदं ज्ञेयमिदं ज्ञेयं य: सर्व्वं ज्ञातुमिच्छति ।
अपि वर्षशतेनापि शास्त्रान्तं नाधिगच्छति ॥
भिक्षायाचरतश्चान्नं जीवितुश्चापि सञ्चलन् ।
विहाय शास्त्रजालानि पारलौकिकमाचरेत् ॥
[illegible]ऽपि हि मूर्खोऽसौ शक्तियुक्तोऽप्य-
[illegible] शक्तिक: ।
[illegible] आत्मानं समुत्तारयितुं क्षम: ॥"

इति [illegible] सुनामद्वादशोनामाध्याय: ॥ * ॥

[illegible] यथा,—

"[illegible] लोकेऽस्मिन्मोहनानि च
[illegible] तानि तु ॥
[illegible]
[illegible]

[illegible]
[illegible] सन्ततम् ॥"

इति कौर्म्मे उपविभागे १६ अध्याय: ॥ * ॥

अपि च । कूर्म्मपुराणे हिमालयं प्रति देवी-वाक्यम् ।

"यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विवि-धानि च ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥
करालभैरवञ्चापि यामलं वाममार्गितम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ।
मया सृष्टानि चान्यानि मोहायैषां भवार्णवे ॥"

तस्मात् सद्भि: श्रुतिस्मृतिविरुद्धे वर्त्मनि न कदाचित् पदं न्यसनीयम् । इति मलमासतत्त्वम् ॥ * ॥

पृथिव्यां तन्त्रशास्त्रावतरणं यथा,—

शिव उवाच ।

"लम्बोदर महाभाग शृणु मे परमं वच: ।
इदं महासुसन्दर्भं मम वक्त्राद्विनिर्गतम् ॥
निर्गतं पार्व्वतीवक्त्रात्तन्त्रं परमदुर्लभम् ।
विलिख्य बहुयत्नेन गच्छ सिद्धाश्रमं सुत ॥
यत्र तिष्ठन्ति मुनयो वेदवेदाङ्गपारगा: ।
अणिमादिगुणैर्युक्ता: शीघ्रं त्वं भव मे सुत ॥
इत्युक्त: शङ्करेणासौ चाष्टबाहुरभूत्तत: ।
चतुर्भिर्हस्तै: संलिख्य शिवाय विनिवेदयेत् ॥

शिव उवाच ।

गच्छ पुत्त्र महाबाहो तन्त्रमादाय सत्वरम् ।
सिद्धाश्रमं वनं रम्यं यथेन्द्रस्य च नन्दनम् ।
प्रणम्य प्रययौ शीघ्रं तन्त्रमादाय तद्वनम् ॥"

इत्युपक्रम्य ।

"मुनेर्व्वाक्यं तत: श्रुत्वा तत्तन्त्रं मुनये ददौ ।
एवं तन्त्राणि सर्व्वाणि विलिख्य विनिवेदयेत् ॥"

इति गायत्रीतन्त्रे दशमब्राह्मणपटल: ॥ * ॥

शैवपाशुपतादिशास्त्रोत्पत्तिर्यथा,—

"प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रै: संप्रोक्तानि तत: परम् ॥
कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं सांख्यन्तु कपिलेन तु ॥
धिषणेन तथाप्रोक्तं चार्व्वाकमतिगर्हितम् ॥
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रं तथा प्रोक्तं नग्ननीलपटादिकम् ॥
आपत्य श्रुतिवाक्यानां दर्शयन् लोकगर्हितम् ।
कर्म्मस्वरूपत्याज्यत्वमत्र वै प्रतिपद्यते ।
सर्व्वकर्म्मपरिभ्रष्टं कल्याणन्तु तदुच्यते ॥
गौतमप्रोक्तशास्त्रार्थनिरता: सर्व्व एव हि ।
शार्गालीं योनिमापन्ना: सन्दिग्धा: सर्व्व-कर्म्मसु ॥"

इति गन्धर्व्वतन्त्रे प्रथमपटल: ।

शास्त्रकृत्, पुं, (शास्त्रं करोतीति । कृ+क्विप् ।) ऋषि: । इति त्रिकाण्डशेष: ॥ शास्त्रकर्त्तरि, त्रि ॥ (यथा, भागवते । १ । १० । २२ ।
"विधिकृत्शास्त्रोऽनुमतम् [illegible] ॥")

शास्त्रगण्ड:, त्रि, शब्दाविद् । इति त्रिकाण्डशेष: ॥
[illegible]

शास्त्रचक्षु:, [illegible]
[illegible] शास्त्रम् । [illegible]

शास्त्रतस्कर:, त्रि, ( शास्त्र [illegible]
तीति । अद+ [illegible] ) [illegible]
इति शब्दरत्नावली ॥

शास्त्रज्ञ:, त्रि, (शास्त्रं जानातीति । ज्ञा+क: ।) शास्त्रवेत्ता । यथा,—

"अनियुक्तो नियुक्तो वा शास्त्रज्ञो [illegible]
देवीं वाचं स वदति य: शास्त्रमुपजीवति ॥"

इति व्यवहारतत्त्वधृत[illegible] ॥

शास्त्रतत्त्वज्ञ:, पुं, (शास्त्रस्य तत्त्वं जानातीति । ज्ञा+क: ।) गणक: । यथा, शब्दरत्नावल्याम् ।
"देवज्ञो गणको ज्ञानी मौहूर्त्तो दैवलेखक: ।
वार्त्तान्तिको ज्योतिषिको मौहूर्त्तिकमहत्तमौ ।
संवत्सरो वर्षकोषो रेखाजीवी अहाङ्गुण: ।
तान्त्रिको ज्ञातसिद्धान्त: शास्त्रतत्त्वज्ञ इरित: ॥"

शास्त्रदर्शी, [न्] त्रि, ( शास्त्रं द्रष्टुं शीलमस्य । णिनि: ।) शास्त्रज्ञ: । तत्पर्य्याय: । अन्तर्वाणि: २ शास्त्रवित् ३ शास्त्रचारण: ४ । इति शब्द-रत्नावली ॥

शास्त्रवित्,[द्]त्रि,(शास्त्रं वेत्तीति । विद+सत्सूद्विषेति क्विप् ।) शास्त्रदर्शी । इत्यमर: ॥

शास्त्रविप्रतिषिद्ध:,त्रि,(शास्त्रेण विप्रतिषिद्ध: ।) शास्त्रनिषिद्ध: । शास्त्रशब्दपूर्व्वकविपूर्व्वकसिध-धातो: कर्म्मणि क्तप्रत्ययेन निष्पन्नो वा ॥

शास्त्रशिल्पी,[न्] पुं, (शास्त्रं शिल्पमस्यास्तीति इनि: । ) काश्मीरदेश: । तद्देशस्थे, पुं भूम्नि । इति त्रिकाण्डशेष: ॥

शास्त्री, [न्] त्रि, शास्त्रज्ञ: । शास्त्रं वेत्तीत्यर्थे णिन्प्रत्ययेन निष्पन्न: ॥

शास्य:, त्रि, ( शास्+ण्यत् ।) शासनीय: । शासितव्य: ( यथा, मनौ । ८ । १९२ ।
"यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥")
शिक्षणीय: यथा, ऋग्वेदे । १ । १८९ । ७ ।
"अभिपित्वे मनवे शास्यो भू: ।"
"शास्यो भू: शिक्षणीयो भव इदं कुरु इदं मा कुर्विति विधेयो भव ।" इति तद्भाष्ये सायण: ।)

शि, न अ निशाने । इति कविकल्पद्रुम: ( स्वा०-उभ०-सक०-अनिट् । ) निशानमिति [illegible] रूपम् । शान अ तेजे इत्यस्य [illegible] अनेकार्थत्वात् निशानमिव [illegible] न अ, शिनोति शिनुते [illegible]
इति दुर्गादास: ॥ [illegible]

शिंशपा, स्त्री, वृक्षविशेष: । [illegible] तत्पर्य्याय: । पिच्छिला २ अगुरु ३ [illegible] भस्मगर्भा ५ । इत्यमर: ॥ [illegible] इति भरत: ॥ [illegible] पिङ्गला ८ [illegible] माला ॥ * ॥ [illegible]
"शिंशपा [illegible]
[illegible]"

[illegible]
[illegible] शिंशपा [illegible]"
इति शब्दरत्नावली ॥
[illegible]गुणा: । "शिंशपा मानसाशिनी ।" इति राजवल्लभ: ॥ अपि च ।
"शिंशपा कटुका तिक्ता कषाया शोफकारिणी ।
उष्णवीर्या हरेच्छर्दि: कुष्ठविड्वमिसञ्चयान् ।
[illegible]दाहाश्च गर्भपातिनी ॥"
इति भावप्रकाश: ॥
तत्काष्ठनिर्म्मितरथस्तु दृढो भवति । यथा, ऋग्वेदे । ३ । ५३ । १९ ।
"अभिव्ययस्व खदिरस्य सार-
मोजो धेहि स्पन्दने शिंशपायाम् ।"
"स्पन्दने रथस्य गमने सति शिंशपायां शिंशपाख्यदारुनिर्म्मिते रथस्य फलके ओजो धेहि॥ दार्ढ्यं कुरु ।" इति तद्भाष्ये सायण: ॥)
शिक्, [च्] स्त्री, शिक्यम् । इति शब्दरत्नावली ॥
शिक्रु:, त्रि, अव्यवसायी । इति त्रिकाण्डशेष: ॥
शिक्थं, क्ली, मधुजातद्रव्यविशेष: । मोम् इति भाषा । तत्पर्य्याय: । शिक्थकम् २ मधुजम् ३ विघसम् ४ मधुसम्भवम् ५ मोदनम् ६ काचम् ७ उच्छिष्टमोदनम् ८ मक्षिकामलम् ९ क्षौद्रेयम् १० पीतरागम् ११ स्निग्धम् १२ माक्षिकजम् १३ क्षौद्रजम् १४ मधुशेषम् १५ द्रावकम् १६ माक्षिकाश्रयम् १७ मधूत्थितम् १८ मधूत्थम् १९ । अस्य गुणा: । पिच्छिलत्वम् । स्वादुत्वम् । कुष्ठवातास्रनाशित्वम् । मृदुत्वम् । कटुत्वम् । स्निग्धत्वम् । लेपेन स्फुटिताङ्गविलोपनत्वञ्च । इति राजनिर्घण्ट: ॥
शिक्थकं, क्ली, (शिक्थ + स्वार्थे कन् ।) शिक्थम् । इति राजनिर्घण्ट: ॥
शिक्यं, क्ली, ( स्रंस + "स्रंसे: शि कुट् किच्च ।" उणा० ५ । १६ । इति यत् । स च कित् । कुडागम: शिरादेशश्च ।) द्रव्यधारणार्थरज्जुमयाधारविशेष: । शिका इति भाषा । तत्पर्य्याय: । काच: २ शिक्या ३ शिक् ४ । इति शब्दरत्नावली ॥ ( यथा, भागवते । १० । ८ । ३० ।
"हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यै-श्छिद्रं ह्यन्तर्निहितवयुन: शिक्यभाण्डेषु तद्वित्")
शिक्या, स्त्री, (शिक्य + स्त्रियां टाप् ।) शिक्यम् । इति शब्दरत्नावली ॥
शिक्यित:, त्रि, ( शिक्ये स्थापितमित्यर्थे प्रातिपदिकात् धात्वर्थे इति णिच् तत: क्त: ।) शिक्यस्थापितवस्तु । तत्पर्य्याय: । काचित:२ । इत्यमर: ॥
शिक्ष, ङ [illegible] । इति कविकल्पद्रुम: ॥ (भ्वा०-आत्म०-सक०-सेट् ।) [illegible] शिक्षते । [illegible] पितुरिव [illegible] इति दुर्गादास: ॥
शिक्षणं, क्ली, [illegible]) [illegible]म् ।
[illegible]

शिक्षा, स्त्री, (शिक्ष + "गुरोश्च हल:" [illegible] ।
इत्य: । ततष्टाप् ।) शिक्षणम् । [illegible] ।
इति शब्दमाला ॥ वेदाङ्गशास्त्रविशेष: । इत्यमर: ॥ यथा,—
"शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां
गण: ।
छन्दोविचितिरित्येतै: षडङ्गो वेद उच्यते ॥"
इति ।
तत्र अकारादिवर्णानां स्थानकरणप्रयत्नबोधिका अ-कु-ह-विसर्जनीयाः कण्ठ्या इत्यादिका शिक्षा । इति तट्टीकायां भरत: ॥*॥*॥
अथ शिक्षाशास्त्रं लिख्यते ।
"अथ शिक्षां प्रवक्ष्यामि पाणिनीयमतं यथा ।
शास्त्रानुपूर्व्वं तद्विद्याद्यथोक्तं लोकवेदयो: ॥
प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभि: ।
पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥
त्रिषष्टिश्चतु:षष्टिर्वा वर्णा: शम्भुमते मता: ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ता: स्वयम्भुवा ॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशति: ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमा: स्मृता: ॥
अनुस्वारो विसर्गश्च × क $\asymp$ पौ चापि पराश्रितौ ।
दु:स्पृष्टश्चेति विज्ञेय: ऌकार: प्लुत एव च ॥
आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मन: कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रात:सवनयोगन्तं छन्दो गायत्रमाश्रितम् ॥
कण्ठे माध्यन्दिनयुतं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्त्तीयसवनं शीर्षण्यं जागतानुगम् ॥
सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुत: ।
वर्णाञ्जनयते तेषां विभाग: पञ्चधा स्मृत: ॥
स्वरत: कालत: स्थानात् प्रयत्नानुप्रदानत: ।
इति वर्णविद: प्राहुर्निपुणं तं निबोधत ॥
उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रय: ।
ह्रस्वो दीर्घ: प्लुत इति कालतो नियमा अचि ॥
उदात्ते निषादगान्धारावनुदात्ते ऋषभधैवतौ ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमा: ॥
अष्टौ स्थानानि वर्णानामुर: कण्ठ: शिरस्तथा ।
जिह्वा मूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च
ओभावश्च विवृत्तिश्च श-ष-सा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मण: ॥
यद्योभावप्रसन्धानमुकारादिपरं पदम् ।
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मण: ॥
हकारं पञ्चमैर्युक्तमन्त:स्थाभिश्च संयुतम् ।
औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥
कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्द्धन्या ऋ-टु-र-षा दन्त्या लृ-तु-ल-सा:
स्मृता: ॥
जिह्वामूले तु कु: प्रोक्तो दन्त्योष्ठ्यो व: स्मृतो
बुधै: ।
ए ऐ तु कण्ठतालव्या ओ औ कण्ठोष्ठजौ
स्मृतौ ॥
अर्द्धमात्रा तु कण्ठ्या [illegible] ।

[illegible]
संवृतं मात्रिकं [illegible] विवृतन्तु [illegible]
घोषा वा संवृता: सर्वे अघोषा विवृता: स्मृता: ॥
स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् ।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥
अनुस्वारयमानाञ्च नासिकास्थानमुच्यते ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिन: ॥
अलाबुवीणानिर्घोषो दन्त्यमूलस्वरानुग: ।
अनुस्वारस्तु कर्त्तव्यो नित्यं ह्रो: श-ष-सेषु च ॥
अनुस्वारे विवृत्यान्तु विरामे चाक्षरद्वये ।
द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयो: ॥
व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीड-
येत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ॥
यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते ।
एवं रङ्गा: प्रयोक्तव्या: खे-अराँ इव खेदया ॥
रङ्गवर्णं प्रयुञ्जीरन् नो ग्रसेत् पूर्वमक्षरम् ।
दीर्घस्वरं प्रयुञ्जीयात् पश्चान्नासिक्यमाचरेत् ॥
हृदये चैकमात्र: स्यादर्द्धमात्रस्तु मूर्द्धनि ।
नासिकायां तथार्द्धञ्च रङ्गस्यैवं द्विमात्रता ॥
हृदयादुत्करे तिष्ठन् कांस्येन समनुस्वरम् ।
मार्दवञ्च द्विमात्रञ्च जघन्वाँ इति निदर्शनम् ॥
मध्ये तु कम्पयेत् कम्पमुभौ पार्श्वौ समौ तथा
स रङ्गं कम्पयेत् कम्पं रथीवेति निदर्शनम् ॥
एवं वर्णा: प्रयोक्तव्या नाव्यक्ता न च पीडिता: ।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥
गीती शीघ्री शिर:कम्पी तथा लिखितपाठक: ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमा: ॥
माधुर्य्यमक्षरव्यक्ति: पदच्छेदस्तु सुस्वर: ।
धैर्य्यं लयसमर्थञ्च षडेते पाठका गुणा: ॥
शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् ।
काकस्वरं शिरसि गतं तथा स्थानविवर्ज्जितम् ॥
उपांशुदष्टं त्वरितं निरस्तं
विलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरञ्च
वदेन्न दीनं न तु सानुनास्यम् ॥
प्रात: पठेन्नित्यमुर:स्थितेन
स्वरेण शार्दूलरुतोपमेन ।
मध्यं दिने कण्ठगतेन चैव
चक्राह्वसंकूजितसन्निभेन ॥
तारन्तु विद्यात् सवनं तृतीयं
शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वराणां
तुल्येन नादेन शिर:स्थितेन ॥
अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टा: श-लस्तथा ।
शेषा: स्पृष्टा हल: प्रोक्ता निबोधानुप्रदानत: ॥
यमोऽनुनासिका न ह्रौ नादिनो ह-झष:
स्मृता: ।
ईषन्नादा यणो जश्च श्वासिनस्तु खफादय: ॥
ईषच्छ्वासांश्चरो विद्यात् गोर्धामैतत् प्रचक्षते ।
दाक्षीपुत्र: पाणिनिना येनेदं व्यापितं भुवि ॥
छन्द: पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

उदात्तमाख्याति वृषोऽङ्गुलीनां
प्रदेशिनीमूलनिविष्टमूर्द्धा ।
उपान्तमध्ये स्वरितं धृतञ्च
कनिष्ठिकायामनुदात्तमेव ॥

उदात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् ।
निहतन्तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥

अन्तोदात्तमाद्युदात्तमुदात्त-
मनुदात्तं नीचस्वरितम् ।
मध्योदात्तं स्वरितं द्व्युदात्तं
त्र्युदात्तमिति नव पदशय्या ॥

अग्निः सोमः प्र वो वीर्य्यं हविषां
स्वर्बृहस्पतिरिन्द्राबृहस्पती ।

अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्र इत्युदात्तं व इत्यनुदात्तं वीर्य्यं नीचस्वरितम् ॥ हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम्
अनुदात्तो हृदि ज्ञेयो मूर्द्ध्न्युदात्त उदाहृतः ।
स्वरितः कर्णमूले तु सर्व्वास्ये प्रचयः स्मृतः ॥
चाषस्तु वदते मात्रां द्विमात्राञ्चैव वायसः ।
शिखी रौति त्रिमात्रन्तु नकुलस्त्वर्द्धमात्रकम् ॥
कुतीर्थादागतं दग्धमपवर्णञ्च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥
सुतीर्थादागतं व्यक्तं साम्नाय्यं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

अनक्षरं हतायुष्यं विस्वरं व्याधिपीड़ितम् ।
अक्षता शस्त्ररूपेण वज्रं पतति मस्तके ॥
हस्तहीनन्तु योऽधीते स्वरवर्णविवर्ज्जितम् ।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥
हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥
शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते ।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥
येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥
अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥

त्रिनयनमुखनिःसृतामिमां य
इह पठेत् प्रयतश्च सदा द्विजः ।
स भवति [illegible]कीर्त्तिमा-
नतुल[illegible] दिवीति दिवीति ॥

अथ शिक्षामात्[illegible] [illegible] [illegible]
यथा शौनकीया ॥ [illegible]

[illegible] ॥" इति [illegible]
नमत् ॥ * ॥ अपि च [illegible]

अग्निरुवाच ।

"वक्ष्ये शिक्षां त्रिषष्टिः स्युर्वर्णा वा चतुरधिकाः ।
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ॥
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।
अनुस्वारो विसर्गश्च ×क ×पौ चापि पराश्रितौ ॥
दुःस्पृष्टश्चेति विज्ञेयः ऌकारः प्लुत एव च ।
रङ्गश्च खे अरां इव हकारः पञ्चमैर्युतः ॥
अन्तस्थाभिः समायुक्तः औरस्यः कण्ठ्य एव सः ।
आत्मा बुद्ध्या समेत्यार्थं मनो युङ्क्ते विवक्षया ॥
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥
प्रातःसवनयोगन्तं छन्दो गायत्रमाश्रितम् ।
कण्ठे माध्यन्दिनयुतं मध्यमं त्रैष्टभानुगम् ॥
तारं तार्त्तीयसवनं शीर्षण्यं जागतानुगम् ॥
सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥
वर्णान् जनयते तेषां विभागाः पञ्चधा स्मृताः ।
स्वरः कालतः स्थानात् प्रयत्नानुप्रदानतः ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥
ओ-भावश्च विवृत्तिश्च श-ष-सा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥
यद्योभावप्रसन्धानमुकारादिपरं पदम् ।
स्वरान्तं तादृशं विद्यात् यदन्यद्व्यक्तमूष्मणः ॥
कुतीर्थादागतं दग्धमपवर्णञ्च भक्षितम् ।
एवमुच्चारणं पापमेवमुच्चारणं शुभम् ॥
सुतीर्थादागतं द्रव्यं स्नानार्थं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥
न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः ।
गद्गदाबद्धजिह्वश्च न वर्णान् वक्तुमर्हति ॥
उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥
कण्ठ्यावहा वि-चु-य-शास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्द्धन्या ऋ-टु-र-षा दन्त्या ऌ-तु-ल-साः स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठ्यतालव्यौ ओ औ कण्ठ्योष्ठजौ स्मृतौ ॥
अर्द्धमात्रा तु कण्ठ्या स्यात् एकारैकारयोर्भवेत् ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥
अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥
यमोऽनुनासिका न ह्रो नादिनो हझषः स्मृताः ।
ईषन्नादा यणो जश्च श्वासिनश्च खफादयः ।
ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत् प्रचक्षते ॥"
इत्याग्नेये महापुराणे शिक्षानिरूपणं नाम [illegible]
॥ [illegible]

[illegible] [illegible]
[illegible]
[illegible]र्त्तरि, त्रि ॥
शिक्षागुरुः, पुं, (शिक्षाया गुरुः ।) शिक्षक[illegible]
गुरुः । मन्त्राद्युपदेशक[illegible]
इयं हि [illegible]
स्याभिरूपभूयिष्ठा परिषत् । [illegible]
शकुन्तलायाम् १ अङ्कः ॥ [illegible]
शिक्षितः, त्रि, (शिक्ष + क्तः ।) विज्ञः । इत्यमरः ॥ शिक्षायुक्तः । यथा,—
"आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥"
इत्यभिज्ञानशकुन्तलायाम् १ अङ्कः ॥
शिक्षिताक्षरः, पुं, (शिक्षितानि अक्षराणि येन ।) शिक्षाकारी । छात्रः । यथा,—
"आदन्तरमुखः काशाञ्चरिकः शिक्षिताक्षरः ।"
इति त्रिकाण्डशेषः ॥
(शिक्षिते, त्रि । यथा, राजतरङ्गिण्याम् ।५।८३।
"स सुय्यनामा मतिमान् प्रबुद्धः शिक्षिताक्षरः ।
कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥")
शिक्षकः, पुं, लेखकः । इति संक्षिप्तसारोणादिवृत्तिः ॥
शिखण्डः, पुं, मयूरपुच्छः । इत्यमरः ॥ यथा,
"शिखण्डोऽस्त्री पिच्छबर्हे शिखिपुच्छशिखण्डके ।"
इति शब्दरत्नावली ।
(यथा, महाभारते । १२ । २८१ । १८ ।
"हृतस्य रुधिराच्चैव शिखण्डाः पार्थ जज्ञिरे ।
द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः ॥")
चूड़ा इति मेदिनी ॥
शिखण्डकः, पुं, (शिखण्ड इव । कन् ।) काक-पक्षः । इत्यमरः ॥ जुल्पी इति भाषा । "[illegible]
क्षत्रियकुमाराणां शिखात्रये । उक्तञ्च ।
'बालानाञ्च शिरः कार्य्यं त्रिशिखं मुण्ड[illegible]
[illegible]
शिखापञ्चके इत्यन्ये । सामान्येन चूडा[illegible]
मित्यन्ये । काकपक्षाकारत्वात् काक[illegible]
शिरसि खण्डते शिखण्डकः मनीषादि[illegible]
ब्यादिः शिखण्डे तु शिखावर्हे इति ता[illegible]
रभसः । शिखाखण्डकश्च । शिखण्डकमित्[illegible]
विति वाचस्पतिः ।" इति तट्टीकायां [illegible]
( यथा, रघुः । ११ । ५ ।
"तौ पितुर्नयनजेन वारिणा
किञ्चिदुक्षितशिखण्डकावुभौ ।
धन्विनौ तमृषिम[illegible]
पौरदृष्टिकृतमार्गतोरणौ ॥")
मयूरपुच्छे, स्त्री च । [illegible]
शिखण्डिका, [illegible]
इति । [illegible]
[illegible]

शिखावला, स्त्री, ( शिखा + वलच् । टाप् । ) मयूरशिखा । इति राजनिर्घण्टः ॥

शिखावान्, [त्] पुं, (शिखा विद्यतेऽस्य । शिखा + मतुप् । मस्य वः । ) अग्निः । चित्रकवृक्षः । इत्यमरः ॥ केतुग्रहः । इति शब्दरत्नावली ॥ शिखायुक्ते, त्रि ॥ (यथा, मनौ १ । ३८ श्लोके । "कैतवः शिखावन्ति ज्योतींषि ॥" इति मेधातिथिकुल्लूकौ ॥)

शिखावृक्षः, पुं, (शिखाया वृक्ष इव ।)दीपवृक्षः । इति शिखातरुशब्ददर्शनात् ॥

शिखावृत्तिः,स्त्री, (शिखेव वृत्तिर्यस्याः ।)कायिका वृत्तिः । प्रात्यहिकदेयलाभः । इति स्मृतिः ॥

शिखिकण्ठं, क्ली, (शिखिनो मयूरस्य कण्ठ इव आकृतिर्यस्य ।) तुत्थम् । इति रत्नमाला ॥

शिखिग्रीवं, क्ली, (शिखिनः ग्रीवेव आकृतिर्यस्य) तुत्थम् । इत्यमरः ॥

शिखिध्वजः,पुं, (शिखिनो वह्नेर्ध्वज इव ।)धूमः । इति त्रिकाण्डशेषः ॥ (शिखी मयूरो ध्वजो यस्य । ) कार्त्तिकेयः । इति शब्दरत्नावली ॥

शिखिनी, स्त्री, ( शिखा विद्यतेऽस्याः । इनिः । स्त्रियां ङीप् । ) मयूरशिखा । इति राजनिर्घण्टः ॥

शिखिपुच्छं, क्ली, ( शिखिनः पुच्छम् । ) मयूरपिच्छम् । यथा,—

"शिखण्डोऽस्त्री पिच्छबर्हे शिखिपुच्छशिखण्डके ॥"

इति शब्दरत्नावली ॥

शिखिप्रियः, पुं, (शिखिनः प्रियः ।) लगुवदरः । इति राजनिर्घण्टः ॥

शिखिमण्डलः, पुं, वरुणवृक्षः । इति शब्दरत्नावली ॥

शिखिमोदा,स्त्री, (शिखिनं मोदयतीति । मुद + णिच् + अच् । टाप् । ) अजमोदा । इति राजनिर्घण्टः ॥

शिखियूपः, पुं, ओकारी मृगः । इति राजनिर्घण्टः ॥

शिखिवर्द्धकः,पुं, (शिखिनं जठराग्निं वर्द्धयतीति वृध + ण्वुल् ।)कुष्माण्डः । इति शब्दरत्नावली ॥

शिखिवाहनः, पुं, (शिखी वाहनं यस्य ।) कार्त्तिकेयः । इत्यमरः ॥

शिखिव्रतं, क्ली, (शिखिनो व्रतम् । ) व्रतविशेषः यथा,—

ब्रह्मोवाच ।

"वक्ष्ये प्रतिपदादीनि व्रतानि व्यास श्रूयताम् । प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः । वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम् ॥"

इति गारुडे १२९ अध्यायः ॥

शिखी, [न्] पुं, (शिखास्यास्तीति । शिखा + "व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति इनिः । ) मयूरः । ( यथा, ऋतुसंहारे । १ । २८ । "शिखिपटलनिनादैः [illegible] न करोति [illegible]नानि ॥") अग्निः । ( यथा, [illegible] । [illegible] । "[illegible] च शब्दो च [illegible] शिखी हतः स्तुमभिरिवाज्यसिक्तः ॥") चित्रकवृक्षः । इत्यमरः । बलीवर्दः । शरः । केतुग्रहः । द्रुमः । कुक्कुटः । इति मेदिनी ॥ घोटकः । इति हेमचन्द्रः । अजलोमा । इति रत्नमाला ॥ सितावरः । मेथिका । इति राजनिर्घण्टः ॥ पर्व्वतः । ब्राह्मणः । दीपः । इति केचित् ॥ शिखायुक्ते, त्रि । इति मेदिनी ॥

शिग्रुः, पुं, ( शेते स्वल्पेपि वायौ । शी + "अब्रादयश्च ।"उणा० ४।१०२। इति । रः ह्रस्वो गुणागमश्च । ) शाकम् । इत्यमरः ॥ वृक्षविशेषः । सजिना इति भाषा । तत्पर्य्यायः । हरितशाकः २ शाकपत्रः ३ सुपत्रकः ४ अपदंशः ५ अक्षमादंशः ६ कोमलपत्रकः ७ बहुमूलः ८ दंशमूलः ९ तीक्ष्णमूलः १० । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । तीक्ष्णत्वम् । वातकफमुखजाड्यव्रणदोषहरत्वम् । दीपनत्वम् रुच्यत्वञ्च । तस्य पत्रशाकगुणाः । रुच्यत्वम् । वातकफक्रिमिनाशित्वम् । कटुत्वम् । उष्णत्वम् । दीपनत्वम् । पथ्यत्वम् । पाचनत्वञ्च * ॥ अपि च ।

"शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः । मुखमोदः कृष्णशिग्रुश्चक्षुष्यो रुचिराञ्जनः ॥ शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा जन्तुवातार्त्तिशूलघ्नश्चक्षुष्यो रोचनः परः ॥*॥ श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः । समूलः श्वेतमरिचो रोचनो मधुशिग्रुकः ॥ श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः । अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत् ॥*॥ रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः । सुगन्धिः केशरी सिंहो मृगारिश्च प्रकीर्त्तितः ॥ रक्तशिग्रुर्महावीर्य्यो मधुरश्च रसायनः । शोफाध्मानसमीरार्त्तिपित्तश्लेष्मापसारकः ॥"

इति राजनिर्घण्टः ॥

(ब्राह्मणस्याश्रमिणां तद्भक्षणनिषेधो यथा मनौ ६ । १४ ।

"वर्ज्जयेन्मधुमांसञ्च भौमानि कवकानि च । भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च ॥"

"शिग्रुकं वाह्लीकेषु प्रसिद्धं शाकम् ।" इति मेधातिथिकुल्लूकौ ॥ )

शिग्रुजं, क्ली, (शिग्रोर्जायते । इति । जन + डः) शोभाञ्जनबीजम् । तत्पर्य्यायः । श्वेतमरिचम् २ इत्यमरः ॥ शिग्रुभवे त्रि ॥

शिग्रुबीजं, क्ली, (शिग्रोर्बीजम् । ) शोभाञ्जनबीजम् । इति शब्दचन्द्रिका ॥

शिघ, ऋ आघ्राणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ऋ, शिघ्यते । इति दुर्गादासः ॥

शिञ्जा[illegible], स्त्री, (शिञ्ज + [illegible] । [illegible] [illegible] । [illegible]

[illegible]

[illegible]

शिङ्खाणकः, पुं, शिङ्घति इति । शिघ + [illegible] "कृपॄवृजिमन्दिनिधाञ्भ्यः ।" उणा० ३ । [illegible] आनकः । ) श्लेष्मा । इत्युणादिकोषः ॥

शिङ्घाणक:, पुं, क्ली, (शिघ + आनकः ।)[illegible] मलम् । इत्युणादिकोषः ॥

शिङ्घितं, त्रि, ( शिघ + क्तः । ) घ्रातम् । [illegible] शब्दरत्नावली ॥

शिजि, इ र्क्षि ङ अव्यक्तशब्दे । इति कविकल्पद्रुमः ॥ ( चुरा०-पक्षे भ्वा०-अदा० च-आत्म०-अक०-सेट् । ) अव्यक्तशब्दनिह भूषणध्वनिः एव । भूषणानान्तु शिञ्जितमित्यमरात् । [illegible] शिञ्जयते । ल ङ, शिञ्जते । त्रि ङ, शिञ्जते मञ्जीरम् । तालैः शिञ्जद्वलय[illegible] नर्त्तितः कान्तयामे इत्यत्र शिञ्जदिति [illegible] नित्यत्वादिति रमानाथः । वस्तुतस्तु शिञ्जः पचादित्वादच् ततः शिञ्ज इवाचरतीति [illegible] क्वौ शत्रन्तम् । इति दुर्गादासः ॥

शिञ्जा, स्त्री, ( शिजि अव्यक्तशब्दे + "गुरोश्च हलः ।" ३।३।१०३ । इत्यः । टाप् । ) भूषणशब्दः । इति शब्दरत्नावली ॥ धनुर्गुणः । इति हेमचन्द्रः ॥

शिञ्जितं, क्ली, ( शिञ्ज + क्तः । ) भूषणध्वनिः इत्यमरः ॥ ( यथा,—

"नखानि विधुशङ्कया विरहिणी करेणावृणोत् ततः किशलयभ्रमात् स्वयमथाचिपद् [illegible] । ततो वलयशिञ्जितं भ्रमरगुञ्जिताशङ्कया उदहरिति कुक्कुरवध्वनिधिया ततो मूर्च्छिता ॥"

इत्युद्भटः ॥ )

शिञ्जिनी, स्त्री, ( शिञ्जति आकृष्टमुता [illegible] यते इति । शिञ्ज + णिनिः । स्त्रियां ङीप् । ) धनुर्गुणः । इत्यमरः ॥ नूपुरः । इति [illegible] चन्द्रः ॥

शिञ्जी, [ न् ] त्रि, भूषणशब्दविशिष्टः [illegible] विद्यतेऽस्य इत्यर्थे इन्प्रत्ययेन निष्पन्नः [illegible]

शिट, अनादरे । इति कविकल्पद्रुमः [illegible] पर०-सक०-सेट् । ) शेटति [illegible] दुर्गादासः ॥

शिण्डाकी, स्त्री, स्वाद्यद्रव्यविशेषः [illegible]

"शिण्डाकी राजिकायुक्तैः स्वा[illegible] सर्षपसरसैर्व्वापि शालिपिष्ट[illegible] शिण्डाकी रोचनी गुर्व्वी पित्त[illegible]

इति [illegible]

शितं त्रि, ( शो तनूकरणे + क्तः [illegible] तरञ्चाम् । " ७ । ४ । ४१ । [illegible] दुर्बलः । निशितः इति मेदिनी [illegible] रघौ ६ । ४२ ।

"धारां शितां [illegible]

[illegible]

[illegible]

"पिण्डं दद्यात् गयाशिरे ।" इति वायुपुराणम् ॥
"शिरो वाटी शिरोऽरण्यो रक्षोवाटी रजस्वया ।"
इति कोषान्तरम् ।") शय्या । अजगरः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

शिरः, [ स् ] क्ली, ( श्रि + "श्रयतेः स्वाङ्गे शिरः
किच्च ।" उणा० ४ । १९३ । असुन् । स च कित् ।
धातोः शिरादेशश्च । ) शिखरम् । ( यथा,
महाभारते । ४ । ७३ । २ ।
"यथा वर्षेण वै दीर्घं पर्व्वतस्य महच्छिरः ।" )
मस्तकम् । इत्यमरः ॥ ( यथा, लक्ष्मीचरित्रे ।
"शिरः सपुष्पं चरणौ सुपूजितौ ।" )
मम माममात्रेण भवति । इति सुखबोधः ॥
तद्रोगनाशकौषधम् । यथा,—
"शिरोरोगहरं लेपात् गुञ्जामूलं सकाञ्जिकम् ।"
इति गारुडे १८८ अध्यायः ॥
प्रधानम् । ( यथा, भागवते । ५ । १४ । ४५ ।
"योगाय सांख्यशिरसे प्रकृतीश्वराय ।" )
सेनाग्रम् । इति मेदिनी ॥

शिरःकपाली, [ न् ] पुं, ( शिरःकपालोऽस्यास्तीति ।
इनिः । ) नरमस्तककपालधारी सन्न्यासी । इति
केचित् ॥

शिरःफलः, पुं, ( शिरस्तुल्यं फलं यस्य । ) नारि-
केलः । इति त्रिकाण्डशेषः ॥

शिरःशूलं, क्ली, ( शिरसः शूलम् । ) मस्तक-
वेदनारोगः । ( यथा, कथासरित्सागरे । १३ ।
१५५ ।
"प्रातः सोऽपि शिरःशूलव्यपदेशेन वेष्टनम् ।
कृत्वा प्रच्छादयामास ललाटतटमङ्कितम् ।")
तस्यौषधं यथा,—
"श्वेतापराजितामूलं पिप्पलीशुण्ठिसंयुतम् ।
परिपिष्टं शिरोलेपात् शिरःशूलविनाशनम् ।"
इति गारुडे १८८ अध्यायः ॥

शिरजः, पुं, ( शिरसो जायते इति । जन + डः । )
केशः । इति शब्दरत्नावली ॥

शिरसिजः, पुं, ( शिरसि जायते इति । जन +
डः । ) केशः । इति जटाधरः ॥ ( यथा,
माघे । ७ । ६२ ।
"श्लथशिरसिजपाशपातभारा-
दिव नितरां नतिमङ्गिरंसभागैः ।")

शिरसिरुहः, पुं, ( शिरसि रोहतीति । रुह +
कः । ) केशः । इति शब्दरत्नावली ॥

शिरस्कं, क्ली, शिरस्त्राणम् । इति हेमचन्द्रः ॥
शिरःसम्बन्धिनि, त्रि ॥

शिरस्त्रं, क्ली, ( शिरस्त्रायते इति । त्रै + कः । )
शिरोरक्षणसन्नाहः । टोप् इति ख्यातः । इत्य-
मरभरतौ ॥ ( यथा, राजतरङ्गिण्याम् । ५ । ४७ ।
"वहन् मध्येऽश्ववाराणां शून्यत्वेनाश्ववाजिना ।
वल्गाङ्कुशोद्वहनं शिरस्त्रं वामपाणिना ।")

शिरस्त्राणं, क्ली, ( शिरस्त्रायते अनेन । त्रै +
ल्युट् । ) शिरोरक्षणसन्नाहः । लोपका इति
टोप् इति च भाषा । तत्पर्य्यायः । शीर्षण्यम् २
शीर्षकम् ३ शिरस्त्रम् ४ । इति हेमचन्द्रः ॥
शिरस्त्रम् ५ । इत्यमरः ॥ ( यथा, रघौ ।
४ । ६४ ।
"अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।")

शिरस्यः, पुं, ( शिरस् + "शाखादिभ्यो यत् ।"
५ । ३ । १०३ । इति यत् । ) विशदकचः ।
तत्पर्य्यायः । शीर्षण्यः २ । इत्यमरः ॥ द्वे स्नातः
स्नानादिना वा निर्म्मले अन्योन्यासंपृक्ते केशे ।
इति भरतः ॥

शिरा, स्त्री, धमनिः । इति मेदिनी ॥ शिर इति
भाषा । अस्याः पर्य्यायादिकं नाडीशब्दे द्रष्ट-
व्यम् ॥

शिरापत्रः, पुं, ( शिरायुक्तं पत्रं यस्य । ) हिन्ताल-
वृक्षः । इति राजनिर्घण्टः ॥ कपित्थः । इति
शब्दचन्द्रिका ॥

शिरालं, क्ली, ( शिराः सन्ति अस्य । "प्राणि-
स्थादातो लजन्यतरस्याम् ।" ५ । २ । ९६ ।
इति लच् । ) कर्म्मरङ्गम् । इति शब्द-
चन्द्रिका ॥ ( शिरायुक्ते, त्रि । यथा, भट्टौ ।
२ । ३० ।
"आपिङ्गरूक्षोर्द्ध्वशिरस्यवालैः
शिरालजङ्घैर्गिरिकूटदघ्नैः ।")

शिरालकः, पुं, ( शिराल इव । कन् । ) अस्थिभङ्ग-
वृक्षः । इति शब्दचन्द्रिका ॥ हाड्भाङ्गा इति
भाषा ॥

शिरावृत्तं, क्ली, सीसकम् । इति राज-
निर्घण्टः ॥

शिरिः, पुं, ( शृणात्यनेन + "कॄगॄशॄपॄकुटिभिदिछि-
दिभ्यश्च ।" उणा० ४ । १४२ । इति इः । स च
कित् । ) खड्गः । शरः । हिंस्रः । इत्युणादि-
कोषः ॥ शलभः । इति सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥

शिरीषः, पुं, ( शृणाति झटिति नाशयतीति । शॄ +
"शॄपॄभ्यां किच्च ।" उणा० ४ । २७ । इति
ईषन् स च कित् । ) स्वनामख्यातवृक्षः । ( यथा,
कुमारे । ५ । ४ ।
"पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ।" )
तत्पर्य्यायः । कपीतनः २ भण्डिलः ३ । इत्य-
मरः ॥ भण्डिरः ४ भण्डीरः ५ भण्डीलः ६ ।
इति तट्टीका ॥ मृदुपुष्पः ७ शुकतरुः ८ विष-
नाशनः ९ । इति रत्नमाला ॥ शीतपुष्पः १०
भण्डिकः ११ स्वर्णपुष्पकः १२ शुकेष्टः १३ वर्ह-
पुष्पः १४ विषहन्ता १५ सुपुष्पकः १६ उद्दा-
नकः १७ शुकतरुः १८ लोमशपुष्पकः १९
कपीतकः २० कलिङ्गः २१ श्यामलः २२
शङ्खिनीफलः २३ मधुपुष्पः २४ वृत्तपुष्पः २५ ।
पुस्तकान्तरे शिङ्खिनीफलः २६ भण्डी २७ शवसः
२८ शुकपुष्पः २९ । अस्य गुणाः । कटुत्वम् ।
शीतलत्वम् । विषवातपामाखर्ज्जुकण्डूतित्वग्दोष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः ।
शुकपुष्पः शुकतरुर्म्मृदुपुष्पः शुकप्रियः ॥
शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः ।
दोषशोथविसर्पघ्नः कासव्रणविषापहः ।"
इति भावप्रकाशः ॥
कटभीकिणिहीश्वेताप्रभृतीनाम् ... [illegible]
कटुकशिरीषस्य पर्य्यायः ।
"कटभी किणिही श्वेता महाश्वेता च रोहिणी ।"
इति रत्नमाला ॥
अस्य गुणाः ।
"शिरीषो विषवीसर्पखेदकृग्दोषशोथजित् ।"
इति राजवल्लभः ॥

शिरीषपत्रिका, स्त्री, ( शिरीषस्य पत्रमिव ... [illegible]
मस्याः । ततः स्वार्थे कन् । टापि अत इत्वम् । )
श्वेतकिणिही । इति राजनिर्घण्टः ॥

शिरोगृहं, क्ली, ( शिरसो गृहम् । ) चन्द्रशालि ...
परिग्रहम् । तत्पर्य्यायः । चन्द्रशाला २ । ...
हेमचन्द्रः ॥

शिरोग्रीवं, क्ली, शिरश्च ग्रीवा च तयोः सम-
हारः । यथा । द्वन्द्वैकत्वं अव्ययीभावश्च ...
स्यात् द्वन्द्वस्य समासस्य एकत्वं समाहारा-
द्यर्थः । यथा, वाक्त्वचं शीलवं पाणि-
शिरोग्रीवम् । इति क्लीवलिङ्गसंग्रहटीका-
भरतः ॥

शिरोधरा, स्त्री, ( शिरसो धरा । ) ग्रीवा । इ-
हेमचन्द्रः ॥ ( यथा, भागवते । ३ । १७ । ...
"सङ्गीतवन्नोदनवद्युमनमय्य शिरोधराम् ।
व्यसृजन् विविधा वाचो ग्रामसिंहास्ततस्ततः ।"
क्लीवलिङ्गेऽपि दृश्यते । यथा, तत्रैव । १-
१२ । २७ ।
"दीर्घाशु अम्भोपसदः शिरोधरम् ।")

शिरोधिः, स्त्री, ( शिरो धीयते अनया । धा +
"कर्म्मण्यधिकरणे च ।" ३ । ३ । ९३ । इति किः । )
ग्रीवा । इत्यमरः ॥

शिरोमणिः, पुं स्त्री, ( शिरसो मणिः । ) मस्तक-
धार्य्यरत्नम् । तत्पर्य्यायः । चूडामणिः २ शिरो-
रत्नम् ३ । इति शब्दरत्नावली ॥ पण्डित-
उपाधिविशेषश्च ॥ ( द्वयोरुदाहरणम् । यथा,
"यस्य सांसारिकी चिन्ता चिन्ता चिन्तामणि ...
... कुतः
तस्यैव हि शिरः कम्पः क्व शिरोमणिधारणम् ।"
इत्युद्भटः । )

शिरोमर्म्मा, [ न् ] पुं, ( शिर एव मर्म्म जीवाधारो
यस्य । ) शूकरः । इति हेमचन्द्रः ॥

शिरोरत्नं, क्ली, ( शिरसो रत्नम् । ) शिरोमणिः ।
इत्यमरः ॥

शिरोरुजा, स्त्री, ( शिरसि रुजतीति । रुज +
कः । टाप् । ) वनमर्क्कवृक्षः । इति त्रिकाण्ड-
शेषः ॥ मस्तकरोगश्च ॥

शिरोरुट्, [ ह् ] पुं, ( शिरसि रोहतीति । रुह +
क्विप् । ) केशः । इति शब्दरत्नावली ॥

शिरोरुहः, पुं, ( शिरसि रोहतीति । रुह + कः । )
केशः । इत्यमरः ॥ ( यथा, भागवते ।
२८ । ४४ ।
"चीरवासा व्रतक्षामा ... [illegible]

शिरोरोगः, पुं, ( शिरसो रोगः । ) मस्तकपीड़ा ।
यथा,—
अथ शिरोरोगाधिकारः । अथ शिरोरोगस्य
निदानं संख्याचाह ।
"शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥
सूर्य्यावर्त्तानन्तवातशङ्खकार्द्धावभेदकाः ।
एकादशविधस्यास्य लक्षणानि प्रचक्षते ॥"
शिरोरोगा अथ शिरोरोगः शूलरूपा दशभि-
र्भवति । वातपित्तकफैस्त्रिभिः । ननु वातपित्त-
कफैरित्युक्ते तत्त्रित्वबोधात् । किमर्थं त्रिभि-
रिति पदम् । वातपित्तकफानां पृथक्कार-
णत्वबोधनार्थम् । तर्हि सर्व्व एव शिरोरोगाः
सन्निपातसमुद्भवा इति कथम् । तदा वातादय
उल्वणतया पृथक्कारणानि बोद्धव्यानि । क्षयेण
रसादिक्षयेण ॥ * ॥ वातिकस्य लक्षणमाह ।
"यस्यानिमित्तं शिरसो रुजश्च
भवन्ति तीव्रा निशि चातिमात्रम्
बन्धोपतापैः प्रशमश्च यत्र
शिरोऽभितापः स समीरणेन ॥"
भवेदिति विशेषः । अनिमित्तं अतर्कितविप्र-
हरनिमित्तम् । निशि चातिमात्रं रात्रौ शैत्येन
रोगाधिक्यात् । प्रतापः खेदनम् । शिरोऽभि-
तापः शिरःपीड़ा ॥ * ॥ पैत्तिकमाह ।
"यस्योष्णमङ्गारचितं यथैव
भवेच्छिरो दह्यति नासिकाग्रम् ।
शीतेन रात्रौ च भवेच्छमश्च
शिरोऽभितापः स तु पित्तकोपात् ॥"
दह्यतीत्यार्षत्वात् ॥ * ॥ श्लैष्मिकमाह ।
"शिरो भवेद्यस्य कफोपदिग्धं
गुरु प्रतिष्टब्धमथो हिमञ्च ।
शूनाक्षिकूटं वदनञ्च यस्य
शिरोऽभितापः स कफप्रकोपात् ॥"
कफोपदिग्धं अन्तःकफलिप्तम् । प्रतिष्टब्धं स्तब्ध-
मिरम् ॥ * ॥ सान्निपातिकमाह ।
"शिरोऽभितापे त्रितयप्रवृत्ते
सर्व्वाणि लिङ्गानि समुद्भवन्ति ।" * ।
रक्तजमाह ।
"रक्तात्मकः पित्तसमानलिङ्ग-
स्पर्शासहत्वं शिरसो भवेच्च ॥"
पैत्तिकाद्भेदकलिङ्गमाह । शिरःस्पर्शासहत्व-
मिति ॥ * ॥ क्षयजमाह ।
"वसावलासक्षतसम्भवानां
शिरोगतानामतिसंक्षयेण
क्षयप्रवृत्तिः शिरसोऽभितापः
कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥"
वसाबलासं रुधिरम् । कष्टः कृच्छ्रसाध्यः ।
"यस्मो भवति तृषित शिरो विभ्रान्तनेत्रता ।
मर्च्छा शास्त्रावयवक्ष शिरोरोगे क्षयात्मके ॥"
क्रिमिजमाह ।
"निस्तुद्यते यस्य शिरोऽतिमात्रं
संभक्ष्यमाणं स्फुरतीव चान्तः ।
घ्राणाच्च गच्छेद्रुधिरं सपूयं
शिरोऽभितापः क्रिमिभिः सघोरः ॥"
संभक्ष्यमाणं क्रिमिभिरिति शेषः । घ्राणाच्चेति
चकारेण क्रिमिनिर्गमोऽपि बोध्यते ॥ * ॥ सूर्य्या-
वर्त्तमाह ।
"सूर्य्योदयं या प्रतिमन्दमन्द-
मक्षिभ्रुवं रुक् समुपैति गाढम् ।
विवर्द्धते चांशुमता सहैव
सूर्य्यापवृत्तौ विनिवर्त्तते च ॥
शीतेन शान्तिं लभते च कश्चि-
दुष्णेन जन्तुः सुखमाप्नुयाद्वा ।
सर्व्वात्मकं कष्टतमं विकारं
सूर्य्यावर्त्तं तमुदाहरन्ति ॥"
सूर्य्योदयमिति लक्षीकृत्य आरभ्येति यावत् ।
सूर्य्यस्यापवृत्तौ सूर्य्यस्याधोगतौ ॥ * ॥ अनन्त-
वातमाह ।
"दोषास्तु दुष्टाः त्रय एव मन्यां
संपीड्य घाटां सरुजां सुतीव्राम् ।
कुर्व्वन्ति सोऽक्षिभ्रुवि शङ्खदेशे
स्थितिं करोत्याशु विशेषतस्तु ॥
गण्डस्य पार्श्वे तु करोति कम्पं
हनुग्रहं लोचनजान् विकारान् ।
अनन्तवातं तमुदाहरन्ति
दोषत्रयोत्थं शिरसो विकारम् ॥"
एवशब्दोऽप्यर्थः । अनन्तानामनेकार्थत्वात् ।
सरुजां रुजा सह रुजां यथादाहगौरवादिरूपां
दोषाः कुर्व्वन्ति । अयमनन्तवातः । स अनन्त-
वातः अक्ष्यादिषु स्थितिं करोति । विशेषतः
गण्डपार्श्वे स्थितिं करोति । पीड़या स्थितिं
कृत्वा कम्पादींश्च करोति ॥ * ॥ शङ्खकमाह ।
"पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ॥
तीव्ररुग्दाहरागं हि शोथं कुर्व्वन्ति दारुणम् ॥
स शिरो विषवद्वेगान् निरुद्ध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत् ॥"
पित्तरक्तानिलाः अत्र कफोऽपि योज्यः । हताशु-
ताम कफपित्तरक्तैरिति सुश्रुतवचनात् । विमू-
र्च्छिताः प्रवृद्धाः । स शोथः । त्रिरात्रात्
त्रिरात्रमध्ये मारयति ॥ * ॥ अर्द्धावभेदकमाह ।
"रूक्षाशनात्यध्यशनाग्र्यप्राग्वातमैथुनैः ।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥
केवलः सकफो वार्द्धं गृहीत्वा शिरसो बली ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेषु वेदनाम् ॥
शस्त्राशनिनिभां कुर्य्यात्तीव्रां सोऽर्द्धावभेदकः ।
नयनं वाथवा श्रोत्रमभिवृद्धो विनाशयेत् ॥"
अध्यशनं अध्यशनाय । आयासः अतिबलेन
भारोद्वहनादिभिः । व्यायामः स्वल्पश्रमः ।
शस्त्राशनिनिभां शस्त्रपातेनेव वज्रपातेनेव वेद-
नाम् ॥ * ॥ अथ शिरोरोगाणां चिकित्सा ।
"वातजाते शिरोरोगे स्नेहस्वेदं विमर्द्दनम् ।
पानाहारोपनाहांश्च कुर्य्याद्वातामयापहान् ॥
कुष्ठमेरण्डमूले च काञ्जिके तत्र पेषितम् ।
कदुष्णं शिरसः पीड़ां भाले लेपनतो हरेत् ॥
रसः श्वासकुठारोऽत्र नस्ये विशेषतः ।
शिरःशूलं हरत्येव विशेषो वात संशयः ॥" * ॥
अथ शिरोबस्तिविधिः ।
"आशिरोयाति तत्कर्म्म षोड़शाङ्गुलमुच्छ्रितम् ।
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥
निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत् ।
धारयेदाहृतः शान्तेर्यामं यामार्द्धमेव च ॥
शिरोबस्तिर्हरत्येव शिरोरोगं मरुद्भवम् ।
हनुमन्याक्षिकर्णार्त्तिमर्द्दितं मूर्द्धकम्पनम् ।
विना भोजनमेवैव शिरोबस्त्याः प्रयुञ्जते ॥
दिनानि पञ्च वा सप्त रुचि तत्परतोऽपि वा ।
ततोऽपनीततैलस्तु मोचयेद्बस्तिबन्धनम् ॥
शिरोललाटवदनग्रीवादीनि विमर्द्दयेत् ।
सुखोष्णेनाम्भसा गात्रं प्रक्षाल्याश्नाति यद्धितम् ॥
आमिषं जाङ्गलं पथ्यं तत्र शाल्यादयोऽपि च ।
सुप्तान् माषान् कुलत्थांश्च खादेद्वा निशि
केवलान् ॥
कटुकोष्णान् ससर्पिष्कानुष्णं क्षीरं पिबेत्तथा ।
पित्तात्मके शिरोरोगे शीतानां चन्दनादिकाम् ॥
कुमुदोत्पलपद्मानां स्पर्शाः सेव्याश्च मारुताः ।
सर्पिषः शतधौतस्य शिरसा धारणं हितम् ॥
रसः श्वासकुठारोत्थः कर्पूरं कुङ्कुमं नवम् ।
शीतं छागीपयः सर्व्वं वदनेनानुवर्त्तयेत् ॥
तस्य नस्यं भिषग्दद्यात् पित्तजायां शिरोरुजि ।
किन्तु मस्तकमूलेषु सर्व्वेष्वेवं हितं मतम् ॥
गुड़नागरकल्कस्य नस्यं मस्तकमूलनुत् ॥ * ।
रक्तजे पित्तवत् सर्व्वं भोजनाद्युपसेवनम् ॥
शीतोष्णयोश्च विन्यासो विशेषो रक्तमोक्षणम् ।
कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः ॥ *
सन्निपातभवे कार्य्या सन्निपातहरी क्रिया ।
पुराणसर्पिषः पानं विशेषेण दिशन्ति हि ॥
एरण्डमूलं तगरं शताह्वा
जीवन्तिका सैन्धवरास्निके च ।
भृङ्गं विड़ङ्गं मधुयष्टिका च
विश्वौषधं कृष्णतिलस्य तैलम् ॥
अजापयस्तैलविमिश्रितञ्च
चतुर्गुणं भृङ्गरसे विपक्वम् ।
षड्बिन्दवो नासिकयोः प्रदेयाः
सर्व्वान् हन्युः शिरसो विकारान् ॥
च्युतांश्च केशान् पलितांश्च दन्तान्
निर्बद्ध्य मूलान् प्रकटीकरोति ।
सुपर्णगृध्रप्रतिमञ्च चक्षुः
कुर्व्वन्ति बाह्वोरधिकं बलञ्च ॥"
जीवन्तिका अत्र चरीतकी शाकविशेषश्च ॥
इति षड्बिन्दुतैलम् ॥ * ॥
"क्षयजे क्षयनाशाय कर्त्तव्यो बृंहको विधिः ।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ *
क्रिमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम् ।
अजामूत्रयुतं नस्यं कर्त्तव्यं क्रिमिहृत् परम् ॥
सूर्य्यावर्त्ते विधातव्यं नस्यं कर्म्मादिभेषजम् ।
भोजयेत् मधुरं सर्पिर्घृतपूराश्च भक्षयेत् ।

नावनं क्षीरसर्पिर्भ्यां पानञ्च क्षीरसर्पिषोः ।
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥
भृङ्गराजरसच्छागक्षीरतुल्यार्कतापितः ॥
सूर्य्यावर्त्ते शिरःस्नाप्य नस्येनैव प्रयोगराट् ।*।
अर्द्धावभेदके पूर्व्वं स्नेहस्वेदौ हि भेषजम् ॥
विरेकः कायशुद्धिश्च धूपाः स्निग्धोष्णभोजनम् ।
पिष्ट्वाणि तिलान् सर्षान् समान् पिष्ट्वा
विलेपयेत् ॥
नस्यं साध्याधरेत्तस्मादर्द्धभेदं व्यपोहति ।
पिवेत् सशर्करं क्षीरं नीरं वा नारिकेलजम् ॥
सुशीतं वापि पानीयं सर्पिर्व्वा नस्ततस्तयोः ॥”
नस्ततः नासिकया पिवेदित्यन्वयः । तयोः
सूर्य्यावर्त्तार्द्धभेदयोः ॥ * ॥
“अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः ।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च प्रदातव्यो वातपित्तविनाशनः ।
मधुमस्तकसंयावघृतपूपैर्व्विशेषतः ॥”
संयावः पक्वान्नविशेषः । गरकिया इति लोके ।
स च मधुमस्तकः मधुनोपलिप्तः । घृतपूरो-
ऽपूपः ।
“पथ्याक्षधात्री रजनी गुडूची
भूनिम्बनिम्बैः सगुडः कषायः ।
भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धशूलं
निहन्ति नासानिहितः क्षणेन ॥”
इति पथ्यादिक्वाथः ॥ * ॥
“दार्व्वी हरिद्रा मञ्जिष्ठा सनिम्बोशीरपद्मकम् ।
एतत्प्रलेपनं कुर्य्याच्छङ्खकस्य विनाशयेत् ॥
शीततोयाभिषेकश्च शीतलक्षीरसेवनम् ।
काकोल्या क्षीरहस्ताया शङ्खके लेपनं हितम् ॥”
सर्व्वेषु ।
“यष्टीमधुकमाषः स्यात् तुर्य्यांशस्तु विषम्भवेत् ।
तयोश्चूर्णन्तु सूक्ष्मं स्यात्तच्चूर्णं सर्पिषोक्षितम् ॥
नासिकाभ्यन्तरं न्यस्तं सर्व्वां शीर्षव्यथां हरेत् ।
हरप्रयोगो योगोऽयमशुभाविभिरादृतः ॥
आर्द्रं यच्छुक्तिकाचूर्णं चूर्णितं नवसारदम् ।
उभयं योजितं गन्धात्तस्य नश्यति शीर्षरुक् ॥”
इति भावप्रकाशे शिरोरोगाधिकारः ॥
शिरोऽर्त्तिः, स्त्री, ( शिरसोऽर्त्तिः । ) शिरःपीडा ।
इति लोके प्रसिद्धिः ॥ (यथा, कथासरित्सागरे ।
११ । १६२ ।
“जागरेणातिपानेन शिरोऽर्त्तिं सपदिस्म च ।
प्रातः स तस्यौ वक्त्रेण वेष्टयित्वाक्षिते शिरः ॥”)
शिरोपत्री, स्त्री, ( शिरसो पत्रीव । ) वार्हिचूडा ।
इति शब्दचन्द्रिका ।
शिरोवृत्तं, क्ली, ( शिर इव वृत्तम् । ) मरिचम् ।
इति राजनिर्घण्टः ।
शिरोवस्थकः, पुं, ( शिरसि दत्तं पत्रं यस्य । )
रक्तायामार्गः । इति भावप्रकाशः ।
शिरोवेष्टः, पुं, ( शिरो वेष्टयतीति । वेष्ट+अच् ।)
उष्णीषः । इति त्रिकाण्डशेषः ।
शिरोवेष्टनं, क्ली, ( शिरो वेष्टयतीति । वेष्ट+
ल्युः ।) शिरःप्रावरणम् । पागड़ी इति भाषा ।
तत्पर्य्यायः । उष्णीषः २ वेष्टनम् ३ वेष्टकम् ४ ।
इति शब्दरत्नावली ॥ शिरोवेष्टः ५ पेको-
ष्णकः ६ । इति त्रिकाण्डशेषः ॥
शिरोऽस्थि, क्ली, ( शिरसोऽस्थि । ) मस्तकास्थि ।
माथार खुलि इति भाषा । तत्पर्य्यायः ।
करोटिः २ शिरस्कायम् ३ शीर्षकम् ४ । इति
राजनिर्घण्टः ॥
शिल, श उञ्छे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् । ) उञ्छ उद्धृतशस्यशेषाहर-
णम् । श, शिलति धान्यं दीनः । शिलिता ।
इति दुर्गादासः ॥
शिलः, पुं, क्ली, ( शिल+कः । ) उञ्छः । इति
मेदिनी ॥ (यथा, भागवते । ११ । १७ । ४१ ।
“अन्याभ्यामेव जीवेत शिलैर्व्वा दोषदृक्
तयोः ॥”)
जीवनोपायविशेषः । यथा,—
“ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥”
इति मानवे ४ अध्यायः ॥
“अवाधितस्थानेषु पथि वा क्षेत्रेषु वा अप्रति-
हतावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र
तत्राङ्गुलीभ्यां एकैकं कणं समुच्चयित्वा इति
बौधायनदर्शनात् । एकैकधान्यादिगुडकोच्चय-
मुञ्छः । मञ्जर्य्यात्मकानेकधान्योच्चयनं शिलः ।
उञ्छश्च शिलश्च इत्येकवद्भावः । तत् सत्यसमान-
फलत्वादृतमित्युच्यते ।” इति तट्टीकायां कुल्लूक-
भट्टः ॥ ( रघुवंशीयपारियात्रनृपपुत्रः । यथा,
रघुवंशे । १८ । १७ ।
“तस्याभवत् सूनुरुदारशीलः
शिलः शिलापट्टविशालवक्षाः ॥”)
शिलगर्भजः, पुं, पाषाणभेदकः । इति राज-
निर्घण्टः ॥
शिला, स्त्री, पाषाणः । ( यथा, मनौ । २ ।
२०४ ।
“गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥”)
द्वाराधःस्थितदारु । इत्यमरः ॥ स्तम्भशीर्षम् ।
मनःशिला । इति मेदिनी ॥ कर्पूरः । इति
राजनिर्घण्टः ॥
शिलाकर्णी, स्त्री, ( शिलेव कर्णः कोषो यस्याः ।
ङीष् ।) शल्लकीवृक्षः । इति शब्दचन्द्रिका ॥
शिलाकुट्टकः, पुं, ( शिलां कुट्टयति दारयतीति ।
कुट्ट+ण्वुल् । ) टङ्कः । इति शब्दरत्नावली ॥
शिलाजं, क्ली, ( शिलाया जायते इति । जन+
डः ।) शैलेयम् । इति शब्दचन्द्रिका ॥ लोहम् ।
इति राजनिर्घण्टः ॥
शिलाजतु, क्ली, ( शिलाया जतु । ) पर्व्वतजातो-
पधातुविशेषः । शिलाजित् इति हिन्दीभाषा ।
तत्पर्य्यायः । गैरेयम् २ अर्थ्यम् ३ गिरिजम् ४
अश्मजम् ५ । इत्यमरः ॥ शिलाजम् ६ जतुजम्
७ शैलम् ८ अग्निजम् [illegible] । इति [illegible]
शैलेयम् १० शीलद्रुमजम् ११ । इति शब्द-
चन्द्रिका ॥ शिलाव्याधिः १२ । इति त्रिकाण्ड-
शेषः ॥ अश्मोत्थम् १३ अश्मलाक्षा १४ [illegible]
जतुकम् १५ अश्मजतुकम् १६ । अस्य गुणाः ।
तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । [illegible]
मेहोन्मादाश्मरीशोफकुष्ठापस्मारनाशित्वं [illegible]
इति राजनिर्घण्टः ॥ अपि च । सर्व्वरोग-
रोगहरत्वम् । योगवाहित्वम् । [illegible]
त्वञ्च । इति राजवल्लभः ॥ अस्योत्पत्तिः [illegible]
अस्य गुणाः ।
“निदाघे घर्म्मसन्तप्ता धातुसारं धराधराः ।
निर्य्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम् ।
सौवर्णं राजतं ताम्रं आयसं तच्चतुर्व्विधम् ।
शिलाजत्वद्रिजन्तु च शैलनिर्य्यास इत्यपि ।
गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम् ।
शिलाजं कटुतिक्तोष्णं कटुपाकं रसायनम् ।
छेदि योगवहं हन्ति कफमेदोऽश्मशर्कराः ।
मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि
च पाण्डुताम् ।
अपस्मारं तथोन्मादं शोथकुष्ठोदरकृमीन् ।
सौवर्णन्तु जपापुष्पवर्णं भवति तद्रसात् ।
मधुरं कटुतिक्तञ्च शीतलं कटुपाकि च ।
राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च ।
ताम्रं मयूरकण्ठाभं तिक्तोष्णं लवणं भवेत् ।
विपाके कटुकं शीतं सर्व्वश्रेष्ठमुदाहृतम् ।”
इति भावप्रकाशः ।
शिलाशनी, स्त्री, ( शिलामश्नातीति । अश+
ल्युः । स्त्रियां ङीप् । ) काकाशनीवृक्षः । इति
राजनिर्घण्टः ॥
शिलाटकः, पुं, ( शिलामटतीति । अट+ण्वुल् ।
अट्टः । विलम् । इति मेदिनी ॥
शिलात्मजं, क्ली, ( शिलाया आत्मजमिव ।
लोहम् । इति राजनिर्घण्टः ॥
शिलात्मिका, स्त्री, मूषा । इति शब्दचन्द्रिका ।
शिलाददुः, पुं, ( शिलाया ददुरिव । ) शैलेय
इति राजनिर्घण्टः ॥
शिलाधातुः, पुं, ( शिलानां धातुः । ) [illegible]
पक्षः । इति त्रिकाण्डशेषः ॥ खड़ी इति भाषा
गैरिकभेदः । स तु पीतवर्णः । इति रा[illegible]
निर्घण्टः ॥
“सितोपलः शिलाधातुर्व्वर्णलेखा च मक्कम[illegible]
शिलाधातुविशेषस्तु विज्ञेयो लोकमाणवः ।”
इति शब्दरत्नावली
शिलापट्टः, पुं, ( शिलायाः पट्टः । ) पेषण[illegible]
शिला । शिल् इति भाषा । इति कोषः ।
शिलापुत्रः, पुं, (शिलायाः पुत्र इव ।) पेषणी[illegible]
शिला । नोड़ा इति भाषा । तत्पर्य्यायः । [illegible]
वाचः २ शिलापुत्रकः ३ । इति शब्द[illegible]
वली ।
शिलापुष्पं, क्ली, ( शिलायाः पुष्पमिव । ) शै[illegible]
यम् । इति राजनिर्घण्टः ।

ईशानवायू चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्या: सुरा उक्तविधानतस्तु ॥ * ॥
ब्रह्मा नैरपदस्तु तेन समका देवार्यमाद्यास्तमी
कोणेऽष्टौ द्विपदास्तथाष्टमहत: कोणेऽर्द्धभागाद्
बहि: ।
शेषा एकपदा: सुरास्तु कथिता वेदर्तुके-६४
ऽथो नव
ब्रह्मा षट्पदिनोऽर्य्यमादिविबुधा ईशादयश्चे-
कश: ॥
ब्रह्मा कलांशो वसुतोऽर्य्यमाद्या:
कोणेऽष्ट चाह्येऽपि च सार्द्धभागा: ।
विधाष्टकोणे द्विपदास्तथाष्टौ
शेषा: सुरा एकपदा: शतांशे ॥*॥
ब्रह्माजिनांश८४ उदित: शिवतोऽर्य्यमाद्या:
कोणेषु सार्द्धपदतोऽपि तथैव चाष्टौ ।
शेषा द्विभागसमका रविभागकोऽयं
पूज्यो रथाश्वगजवाहनकेऽम्बुयन्त्रे ॥
यन्त्रे चयोदशपदैरपि पूजनीय-
स्तत् पञ्चविंशतिरजो दशतोऽर्य्यमाद्या: ।
कोणेऽष्वयोऽमरगणा बहिरके कलांशा
भद्रेऽधिकं रविविभागपरे द्विभागा: ॥*॥
द्वात्रिंशत् कमलासनोऽर्य्यमसुखा: स्यु: सूर्य-
भागा क्रमात्
कोणेऽन्येऽष्टसुरा द्विभागसहिता बाह्येषु
सार्द्धांशका: ।
अष्टौ रामपदा: पुनर्द्विपदका: षड्भागिनोऽष्टौ
सुरा:
शेषे षसुवचन्द्रभागसहिते १९६ स्यादृदेवतानां
क्रम: ॥ * ॥
वेदांशो विधिरर्य्यमप्रभृतयश्चांशा नवस्तृके
कोणेऽन्येऽष्टपदार्द्धगा: परसुरा: षड्भागहीने
पदे ।
वास्तोर्नन्दयुगांश ४९ एवमधुनाष्टांशे चतु:-
षष्टिके
सम्धे: सुसमिताग् सुधी: परिहरेद्भित्तीस्तुला:
स्तम्भकान् ॥ * ॥
रेखाद्वयं कोणगतं विधेय-
मंशान्तरेणैव तु कर्णसूत्रात् ।
यदष्टचे: कथितं तु पद्मं
तत्पीड़नात् स्वामिधनप्रनाश: ॥
प्रोक्तं चतुर्व्विंशतिलाङ्गुलं यत्
पादार्द्धगं चानिकरं प्रजाया: ।
षड्भिस्तु सूत्रैर्मरणाय सर्व्वं
कोणे त्रिशूलञ्च रिपोर्भयाय ॥
परीक्ष भूमीमवसेचयेत्तां
सुपञ्चगव्येन ततो विलेख्या ।
रेखा सुवर्णेन मणिप्रवालै:
पिष्टाक्षतैर्व्वापि पुनश्चपूर्वे ।
द्वात्रिंशदंशा: प्रथुके च दैर्घ्ये

एततृपदानां कथितं सहस्रं
शिवञ्च सर्व्वोत्तममेव वास्तो: ॥ * ॥
मध्ये ब्रह्मा पूजनीय: शतांशै-
श्चत्वारिंशद्भि: पदैर्ब्रह्मवीथी ।
प्रोक्ता देवा अर्य्यमाद्या अशीता
मध्ये कोणेऽष्टौ शतं चाष्टचत्वा ॥
कोणेऽष्वयो नन्दपदै: सुराश्च
शेषाश्च बाह्ये वसुभागिनश्च ।
वीथी च बाह्ये रविभागयुक्तं
शतं पदानां कथितं मुनीन्द्रै: ॥
दुर्गप्रतिष्ठाविषये निवेशे
तथा महार्घासु च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि च्येष्ठलिङ्गे
वास्तु: सहस्रेण पदै: प्रपूज्य: ॥*॥
त्रिमेखलं शङ्करदिग्विभागे
कुण्डं प्रकुर्य्यात् करतो युगाश्रम् ।
होमं सुराणां शतमष्टयुक्तं
प्रत्येकमष्टाधिकविंशतिं वा ॥
मध्वाज्यदुग्धैर्दधिशर्कराभ्यां
क्षीरैस्तिलैर्व्रीहियवैर्नवान्नै: ।
पलाशदूर्व्वाङ्कुरदुग्धवृक्षै-
र्होमं तदन्ते सुरपूजनञ्च ॥
ईशे घृताक्षमपरे सघृतोदनञ्च
दद्यात्जयाय हरितान्नमेव कूर्म्मम् ।
रत्नानि पिष्टकमयं कुलिशं सुरेन्द्रे
धूम्रं वितानमुदितञ्च दिवाकरस्य ॥
गोधूमयुक्तं घृतमेव सत्ये
मत्स्यान् भृशे शष्कुलिमन्तरीक्षे ।
वह्नौ सुचं पूष्णि तथैव लाजा
दद्याद्यमे चञ्चौदनञ्च ॥
मध्वन्नञ्च गृहक्षताय यमतो मांसौदनं दापयेत्
गन्धर्व्वे शतपत्रमोदनयुतं भृङ्गेऽजजिह्वां तथा ।
प्रोक्ता नीलजवा मृगाय पितृतो देयाश्च सन्नो-
दका:
पेटं दन्तधावनं तथैव विधिवद्दद्याच्च दौवारिके ॥
सुग्रीवाय च पूपका गणवरे श्वेतप्रसूनं पय:
पद्मं वारुणके सुराप्यसुरके तैलं तिला: शोषके ।
पापाख्येऽपि च पक्वमांसमुदितं रोगाय सर्व्वौ-
षधी:
गोक्षीरं फणिने च मुख्यविबुधे क्षीरान्नभक्ते
तथा ॥
भल्लाटाय सुवर्णकं धनपतौ मत्स्यान्नदुग्धं तथा
शक्तून् पर्व्वतकेऽदितेस्तु लपिकां दद्याद्दितौ
पूरिकाम् ।
सक्षीरं दधिकं क्रमेण विहितं त्वापापवत्से तथा-
प्यर्य्यम्णेऽक्षतचन्दनञ्च पयसा युक्ता तथा
शर्करा ॥
सावित्रेऽपि च सकुशाश्च सवितु: पुष्पा गुडा
सद्गुणा
देयं वाय विवस्वते घृतयुतं दुग्धं तथा मोदका: ।
इन्द्राख्ये कुसुमस्रगिन्द्रजयके देयं तथा चम्पकं

तनविनुसमन्यापि वायरा
सहस्रमांसां पृथिवीधराय ।
पयस्तथा शाममतं सदञ्च
इत्यादिषो सर्व्वमतोऽतिविस्त: ।
सुरादि मांसं विहितं चरके
तथैव पीतौदनको विदार्य्यै ।
रक्तौदनै: पूतनिकायै चोक्ता
मत्स्यासवेनापि तथैव पापा: ।
मांसं पक्वं पिलिपिञ्जाय तजजन्याये विहितं
सदा ।
स्कन्दाय तन्नादिरायुक्तं चार्य्यमृणे दिशि
पूर्णाशौ ।
य: पूजयेद्वास्तुमनन्यबुद्धिा
न तस्य दु:खं भवतीह किञ्चित् ।
जीवत्यसौ वर्षशतं सुखेन
स्वर्गे नरस्तिष्ठति कल्पमेकम् ।"
इति श्रीसूत्रधारमण्डनविरचिते वास्तुशा
राजवल्लभे वास्तुलक्षणम् २ [अध्याय: । * ।
"आयव्ययतारकांशकविधुं राशिं एषां
तथ
धान्यं सौख्ययशोऽभिवृद्धिरधिका यशादत:
भवते ।
आयास्तु ध्वजधूमसिंहशुनका गोरासभेभा:
क्रमात्
ध्वाङ्क्षस्त्वष्टम आयभेषु विषमा: श्रेष्ठा: सुराय
गे ।
मानं देवगृहादिभूपसदने प्रासादतलेन
गेहे कर्म्मकरस्य नायकरत: प्राकेष देवं
अथो हस्तकराङ्गुलादिमपि ते हस्ताङ्गुलेर
शिवस्याप्यशुमानतोऽपि नगरे हस्तेन मानं
आय: कल्प्यो हस्तमेयै: करेण
शेषे मात्रानिर्म्मिते मात्राभि: ।
मध्ये पर्य्यङ्कासने मन्दिरे च
देवागारे मण्डपे भित्तिबाह्ये ।
कूपे देवगृहे द्विजस्य भवने स्यादिवाय
विस्तारोच्छ्रयसम्भूभवनमठागारेषु प्रशो
धूमो वह्निरपजीविनामपि गृहे कुण्डे च
सिंहद्वारनृपालयेऽस्त्रनिचये सिंहश्च
वृषाङ्गे शुनको विशास्तु वृषभो सर्वे
वास्विन्ये धनभोजनस्य भवनेऽपो
वादिन्ने खरजीविनामपि गृहे
याने जीवश्वान्वे च भवने
आह: शिल्पिनपत्निनां
आह: काकवासो

त्रिभागदैर्घ्येऽधिकतो विधेया
गृहा: क्रमेणैव यथोदिताश्च ॥
प्रोक्तं चतु:षष्टिकरं पृथुत्वे
क्रमेण षड्भिश्च करैर्विहीनम् ।
षड्भागतो दैर्घ्यमतोऽधिकं स्या-
द्दलाधिपस्यैव च पञ्चहह: ॥
षष्ट्या हस्तैर्मन्त्रिगेहं पृथुत्वे
हीनं हीनं पञ्चकं वेदवेदै: ।
कुर्य्याद्धस्तैरष्टमांशोऽधिकोऽसौ
याबाद्यो वर्द्धितो दैर्घ्य एव ॥
सामन्तादिकभूपतेश्च भवनं विध्यब्धिहस्तै: समं
हस्तैर्व्वेदविहीनकै: क्रमतया भागाधिकं दैर्घ्यत: ।
दैवज्ञस्य सभासदस्य गुरुत: पौरोधसं भेषजं
विंशत्यष्टकरं त्रिहस्तरहितं दैर्घ्ये द्विधा तद्-भवेत् ॥
वैश्याकञ्चुकिशिल्पिनामपि गृहे वेदाधिका विंशति-
र्मानं हस्तचतुष्टयैर्विरहितं दैर्घ्येऽधिका याबत: ।
चर्म्मांश्च दूतकरान्तिकस्य रचितो हस्तै: समं विस्तरे
हीनं तद्द्वकरेण पञ्चकमिदं तुर्य्यांशदैर्घ्याधिकम् ॥
द्वात्रिंशता मानमिदं द्विजादे-
र्हीनं चतुर्भि: क्रमतो विधेयम् ।
दिगष्टरागाब्धिविभागतश्च
क्रमेण तद्वर्णचतुष्टयेऽपि ॥
कर्णाधिकं विस्तरतोऽधिकञ्च
शीघ्रं विनाशं समुपैति गेहम् ।
द्वारं मतं मूर्द्धि यदाग्रतश्च
तत् सन्ततेर्हानिकरं प्रदिष्टम् ॥
त्रासि सप्ततिहस्तविमुक्ते
शालामानमिदं मनुभुक्ते ।
पञ्चविंशत् पुनरपि तस्मिन्
मानमुशन्ति जघोरिव दृढा: ॥
एकं द्वारं प्राङ्मुखं शोभनं स्यात्
चातुर्व्वर्ण्य धात्रभूपेशजेने ।
युग्मं प्राच्यां पश्चिमे स्यान्निकेतु
मूलं द्वारं दक्षिणे वर्ज्जनीयम् ॥"

इति वास्तुशास्त्रे राजवल्लभमण्डने राजगृहादि-लक्षणं नाम नवमोऽध्याय: ॥ * ॥

शिल्पिका, स्त्री, तृणविशेष: । कहानसिपी इति हिन्दीभाषा । तत्पर्य्याय: । शिल्पिनी २ शीता ३ पेचका ४ मृदुच्छदा ५ । अस्या गुणा: । मधुरोष्णत्वरोमूत्रज्वरपित्तापहारकत्वम् । इति राजनिर्घण्ट: ॥

शिल्पिनी, स्त्री, कोलदलौषधि: । इति मेदिनी ॥

शिल्पिशाला, स्त्री, क्ली, ( शिल्पिनां शाला । ) शिल्पशाला । इत्यमरटीकायां स्वामी ॥

शिल्पी, [न्] त्रि, (शिल्पं क्रियाकौशलमस्यास्तीति । इनि: ।) शिल्पकर्त्ता । (यथा, मनौ । ७ । ७५ ।
"आयुधै: शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ।")
तत्पर्य्याय: । कारु: २ । इत्यमर: ॥ अस्य विवरणं शिल्पकारशब्दे द्रष्टव्यम् । शिल्पसम्बन्धी च ॥

शिवं, क्ली, ( शी+"सर्व्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ।" उणा० १ । १५३ । वन् प्रत्ययेन साधु । ) मङ्गलम् । इत्यमर: ॥ (यथा, रघु: । १ । ६० ।
"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणाञ्च प्रतिहर्त्ता त्वमापदाम् ॥")
सुखम् । जलम् । इत्युणादिकोष: ॥ सैन्धवम् । समुद्रलवणम् । श्वेतटङ्कणम् । इति राजनिर्घण्ट: ॥ ( मङ्गलवति, त्रि ॥ यथा, महाभारते । १ । २०८ । ३६ ।
"तत्र रम्ये शिवे देशे कौरवस्य निवेशनम् ॥")

शिव:, पुं, (शी+"सर्व्वनिघृष्वेति ।"उणा० १।१५३। इति वन्प्रत्ययेन साधु: ।) अव्यय: संज्ञाविशेष: । तस्य व्युत्पत्तिर्यथा । शिवं कल्याणं विद्यतेऽस्य शिव: । श्यति अशुभमिति वा । शेरतेऽवतिष्ठन्ते अणिमादयोऽष्टौ गुणा अस्मिन् इति वा शिव: । इत्यमरटीकायां भरत: ॥ तत्पर्य्याय: । शम्भु: २ ईश: ३ पशुपति: ४ शूली ५ महेश्वर: ६ ईश्वर: ७ सर्व्व: ८ ईशान: ९ शङ्कर: १० चन्द्रशेखर: ११ भूतेश: १२ खण्डपरशु: १३ गिरीश: १४ गिरिश: १५ मृड: १६ मृत्युञ्जय: १७ कृत्तिवासा: १८ पिनाकी १९ प्रमथाधिप: २० उग्र: २१ कपर्द्दी २२ श्रीकण्ठ: २३ शितिकण्ठ: २४ कपालभृत् २५ वामदेव: २६ महादेव: २७ विरूपाक्ष: २८ त्रिलोचन: २९ कृशानुरेता: ३० सर्व्वज्ञ: ३१ धूर्ज्जटि: ३२ नीललोहित: ३३ हर: ३४ स्मरहर: ३५ भर्ग: ३६ त्र्यम्बक: ३७ त्रिपुरान्तक: ३८ गङ्गाधर: ३९ अन्धकरिपु: ४० क्रतुध्वंसी ४१ वृषध्वज: ४२ व्योमकेश: ४३ भव: ४४ भीम: ४५ स्थाणु: ४६ रुद्र: ४७ उमापति: ४८ । इत्यमर: ॥ वृषपर्व्वा ४९ रेरिहाण: ५० भगाली ५१ पांशुचन्दन: ५२ दिगम्बर: ५३ अट्टहास: ५४ कालञ्जर: ५५ पुरहिट् ५६ वृषाकपि: ५७ महाकाल: ५८ वराक: ५९ नन्दिवर्द्धन: ६० हीर: ६१ वीर: ६२ खर: ६३ भूरि: ६४ कटप्रू: ६५ भैरव: ६६ ध्रुव: ६७ शिविपिष्ट: ६८ गुडाकेश: ६९ देवदेव: ७० महानट: ७१ । इति जटाधर: ॥ तीव्र: ७२ खण्डपर्शु: ७३ पञ्चानन: ७४ कण्ठेकाल: ७५ भव: ७६ भीरु: ७७ भीषण: ७८ कङ्कालमाली ७९ जटाधर: ८० व्योमदेव: ८१ सिद्धदेव: ८२ धरणीश्वर: ८३ विश्वेश: ८४ जयन्त: ८५ हररूप: ८६ सन्ध्यानाटी ८७ सुप्रसाद: ८८ चन्द्रापीड: ८९ शूलधर: ९० वृषाङ्क: ९१ वृषभध्वज: ९२ भूतनाथ: ९३ शिपिविष्ट: ९४ वरेश्वर: ९५ विश्वेश्वर: ९६ विश्वनाथ: ९७ काशीनाथ: ९८ कुलेश्वर: ९९ अस्थिमाली १०० विशालाक्ष: १०१ हिण्डी १०२ प्रियतम: १०३ विषमाक्ष: १०४ [illegible] ऊर्द्ध्वरेता: १०६ यमान्तक: १०७ [illegible] अष्टमूर्त्ति: १०९ पर्व्वतीश: ११० [illegible] भक्तेश: ११२ अहङ्कारेश: ११३ [illegible] इति शब्दरत्नावली ॥ [illegible] ११५ [illegible] पाणि: ११६ पञ्चवक्त्र: ११७ [illegible] तन: ११८ हिमाद्रितनयापति: ११९ । [illegible] कविकल्पलता ॥ तस्य बहुनामानि [illegible] भारते अनुशासनपर्व्वणि १७ अध्याये [illegible] यानि ॥ * ॥ अस्य कपालिनामकारणं यथा [illegible]
ईश्वर उवाच ।
"आसीत्तत्र वरारोहे ब्रह्मणस्तु शिरोऽपरं
पञ्चमं श्रवणं सुश्रोणि जातं काञ्चनसुप्रभम् ।
ज्वलन्तं परमं शीर्षं जातं तस्य महात्मन: ।
स एवमब्रवीद्देवि ! जन्म जानामि ते ह्यहम् [illegible]
तत: क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ।
ब्रह्मोवाच ।
यस्मादनपराधेन शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्त: कपाली त्वं भविष्यसि [illegible]"
इति मात्स्ये १५८ अध्याय: ॥ *
अथ शिवमन्त्रा: । तत्र एकाक्षरमन्त्रो यथा [illegible]
"सान्तमौकारसंयुक्तं बिन्दुभूषितमस्तकम् ।
प्रासादाख्यो मनु: प्रोक्तो भजतां कामदो मणि: ।" हौं । *
अस्य पूजा । प्रात:कृत्यादिमातृकान्यासं प्रा[illegible] यामञ्च विधाय श्रीकण्ठादिन्यासं मातृका[illegible] कुर्य्यात् । तत: सामान्यपूजापद्धत्युक्तपीठ[illegible] कृत्वा पीठशक्तीर्न्यसेत् । तत: ऋष्यादिन्या[illegible] तत: कराङ्गन्यासौ । तत: ईशानाद्या: [illegible] मूर्त्तीर्न्यसेत् । मूर्द्धस्तु एतत्पञ्चकं न्यासं [illegible] ध्यायेत् । अन्यथानधिकारात् । तत कं प्रा[illegible] दक्षिणोत्तरपश्चिमेषु मुखेषु ईशानस्य पञ्च[illegible] पञ्च ब्रह्म मन्त्र: पदादिका: प्रणवाद्या [illegible] ऽन्ता न्यसेत् । तत: पूर्व्वपश्चिमदक्षिणोत्त[illegible] तत्पुरुषस्य चतस्र: कला विन्यसेत् । ततो [illegible] ग्रीवायां अंशद्वये नाभौ कुक्षौ पृष्ठे [illegible] अघोरस्याष्टौ कला: न्यसेत् । ततो गुह्ये [illegible] कोषे जङ्घद्वये जानुद्वये जङ्घाद्वये स्फि[illegible] कट्यां पार्श्वयो: वामदेवस्य त्रयोदश[illegible] विन्यसेत् । तत: पार्श्वयो: जङ्घयोर्नासि[illegible] मूर्द्धि बाहुयुग्मे सद्योजातस्याष्टौ कला: [illegible] तत: पञ्चाङ्गुलीषु ईशानाद्या: पञ्च [illegible] एवं मन्त्रस्य हृदयगुह्यपादेष्वेता [illegible] ततोऽङ्गन्यासान्तरं कुर्य्यात् । एवं [illegible] ध्यायेत् ।
"मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखै: पञ्च[illegible]
त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटि[illegible]
[illegible]
शूलं टङ्कृपाणवज्रदहनानागेन्द्रघण्टाङ्कुशा[illegible]
पाशं भीतिहरं दधानममिता[illegible]

ईश्वर उवाच।

कोचाख्याने च देशे च योगिनीगर्भसम्भवः।
साध्वी सती सात्त्विका हि रेवती जनविश्रुता॥
म्लेच्छदेशोद्भवा या तु योगिनी सुन्दरी मता।
तत्कुचौ कठिनौ हृद्यौ योनेस्तस्याश्च पीनता॥
भिक्षाचारप्रसङ्गेन गच्छामि च दिवानिशम्।
तत्सन्निधौ महेशानि तया मे रमणं महत्॥

देव्युवाच।

कुमारीन् किं तपस्त्वं कथं प्राप्तं महीतलम्।
कथं वाहं रतिर्येन स्यात् नाशस्य तपसः फलम्॥
तथापि च कृपा तस्यां जायते महती मया।
इदानीं किमभूत् सा हि कृपया परया वद॥

ईश्वर उवाच।

नगेन्द्रतनये साध्वि शृणु सत्यावचक्ष्महि।
शाम्बरीचरितं किञ्चित् कथयामि शुचिस्मिते॥
रक्षःक्रीड़ाचकाराख्यमेकाम्रकानने सदा।
वेदाङ्गसम्भवा साध्वी योगिनी या सुरी मता॥
नाभूत्तस्याः सुतःप्रिये मत्क्रियायां नगात्मजे।
मामामुत्कटं तप्तं दुष्टे मे शिवकामदे॥
एकाम्रगहने देवि पर्व्वते तीर्थसङ्कुले।
तत्रैको ब्राह्मणो जातो भिक्षार्थं तामुवाच ह॥
न दत्तमुत्तरं तस्मै भिक्षा तिष्ठतु दूरतः।
ततः शशाप विप्रस्तां म्लेच्छतां याहि दुर्म्मदे।
इत्युक्त्वा स ययौ विप्रो म्लेच्छत्वमाप योगिनी।
अतोऽर्थिनः समर्थश्चेत् याचितं न ददाति च॥
स दुर्गतिमवाप्नोत्यसमर्थो विनयञ्चरेत्।
तस्मात्तु तपसा देवि क्रीतोऽहमभवं सदा॥*॥
अतस्तया रतिर्जाता मम कामिनि सर्व्वदा।
तस्याः पुत्रो विशुसिंहो महीरथसमुद्भवः॥
एकेन जितवान् कामान् यौमारान् गौड़पश्च-
मान्।
विनिर्ज्जित्य नृपान् सर्व्वान् एकः श्रीमान् महा-
मतिः॥
तस्यापि बहवः पुत्राः पृथिवीपरिपालकाः।
कुचाचा धार्म्मिकाः सर्व्वे राजानो युद्धदुर्म्मदाः॥
ततोऽपि स विशुसिंहो योगमाश्रित्य विह्वले।
तिष्ठत्यव्यक्तरूपेण पट्टे चाकल्पमम्बिके॥
कामात् या माधवी देवी महेशि सीमतां गता।
यथा जाया नन्दिमाता तथेयं योगिनी मता॥
यथा पुत्रो भृङ्गरीटिस्तथा विशुर्म्ममात्मजः।
विशुसिंहोऽपि कल्पान्ते परां सिद्धिमवाप्स्यति॥
तद्वंशजास्तु राजानः सर्व्वे कैलासवासिनः।
भविष्यन्ति महात्मानो गणेशाः सर्व्वशालिनः॥
कल्पशेषसमृद्धैर्देवकन्यागणैः सह।
विहरन्ति यदा देवि क्रीड़न्ति भैरवा यथा॥*॥
यदा यदा ब्रह्मशापः कामाख्यायां भवेत् पुनः।
तदा तदावतीर्य्याहं विश्वकामस्य पालकः।
तथा तद्वंशजाः सर्व्वे भवेयुः कामपालकाः।
कल्पान्तमेवं देवेशि यावत् शापो विनश्यति॥
तावदेव महामाये मद्वीर्य्यात् क्रीड़ते ध्रुवम्।
कथमेवं महेशानि कल्पौ वंशप्रवचनम्॥
यावत्तु परमेशानि युवती शापं महाम्बिके।
कामाख्या हि महामाये तदन्ते सफला भवेत्॥
एवं ते कथितं देवि ब्रह्मशापविमोचनम्।
कामाख्यायां महेशानि यावत्क्षेम मया ध्रुवम्॥"
इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्व्विंशति-
साहस्रे १३ पटलः॥ मोक्षः। कीलकः।
वालुकम्। गुग्गुलुः। वेदः। पुण्डरीकद्रुमः।
इति मेदिनी॥ कृष्णधुस्तूरः। पारदः। इति
राजनिर्घण्टः॥ देवः। इति शब्दरत्नावली॥
लिङ्गः। इत्युणादिकोषः॥ विष्कम्भादिसप्त-
विंशतियोगान्तर्गतविंशतितमयोगः। तत्र जात-
फलम्।

"महेशभक्तः श्रुतिपारदृश्वा
जितेन्द्रियश्चावततुर्म्महात्मा।
शिवाभिधाने खलु योगराजे
प्रसूतिकाले यदि मानवानाम्॥"
इति कोष्ठीप्रदीपः॥

**शिवकः**, पुं, कीलकः। इत्यमरः॥ हे खोँटा इति ख्याति। गवां गात्रकण्डूयनार्थं गोष्ठे निखातस्तम्भे इति सुभूतिः। कण्डूयनार्थकाष्ठे इति केचित्। बन्धनस्तम्भे इति केचित्। यत्र वत्सा गौड़ ख्याते इति केचित्। शेते गात्रकण्डूं शिवः शो तनूकरणे नाम्नीति शिवः स्वार्थे कः। शिवकस्तालव्यादिः। कील्यते बध्यतेऽस्मिन् कीलः कील बन्धे घञ् स्वार्थे कः कीलकः। इति भरतः॥

**शिवकरः**, पुं, (शिवस्य करः।) चतुर्व्विंशति-भूतार्हदन्तर्गतजिनविशेषः। इति हेमचन्द्रः॥ मङ्गलकारके, त्रि॥

**शिवकाञ्ची**, स्त्री, पुरीविशेषः। यथा,—
"शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुग्मञ्च सम्मतम्।
एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन॥
काञ्ची शिवत्रिमूलस्था काञ्ची हरिहरात्मिका।
वामदक्षिणहस्ताभ्यां दधार द्विजपुङ्गवाः॥"
इति भूतशुद्धितन्त्रम्॥

**शिवकीर्त्तनः**, पुं, (शिवं सुखकरं कीर्त्तनं यस्य।) भृङ्गरीटः। विष्णुः। इति मेदिनी॥ शैवः। इति शब्दरत्नावली॥

**शिवगतिः**, पुं, भूतार्हद्विशेषः। इति हेमचन्द्रः॥

**शिवघर्म्मजः**, पुं, (शिवघर्म्माज्जातः। जन्+डः।) मङ्गलग्रहः। अस्य प्रमाणं मङ्गलशब्दे द्रष्टव्यम्॥

**शिवङ्करः**, त्रि, मङ्गलकर्त्ता। तत्पर्य्यायः। क्षेमङ्करः २ अरिष्टतातिः ३ शिवतातिः ४। इति हेमचन्द्रः॥ (पुं, दानवविशेषः। यथा, हरिवंशे। २६६। ७५।
"संह्रादः शङ्कुपमः कालभूतः शिवङ्करः॥")

**शिवचतुर्द्दशी**, स्त्री, (शिवप्रिया चतुर्द्दशी।) चतुर्द्दशीकर्त्तव्यशिवव्रतविशेषः। यथा,—

नन्दिकेश्वर उवाच।

"शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम्।
त्रिषु लोकेषु विख्यातं नाम्ना शिवचतुर्द्दशी॥
मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः।
प्रार्थयेद्देवदेवेशं त्वामहं शरणं गतः॥
चतुर्द्दश्यां निराहारः सम्यगभ्यर्च्य शङ्करम्।
सुवर्णवृषभं दत्त्वा भोक्ष्यामीति परेऽहनि॥
एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः।
कृतस्नानजपः पश्चादुमया सह शङ्करम्॥
पूजयेत् कमलैः शुभ्रैर्गन्धधूपानुलेपनैः।
पादौ नमः शिवायेति शिरः सर्व्वात्मने नमः॥
ललाटं वामदेवाय नेत्राणि हरये नमः।
मुखमिन्दुमुखायेति श्रीकण्ठायेति कन्धरम्।
सद्योजाताय कर्णौ तु वामदेवाय वै भुजौ।
अघोरहृदयायेति हृदयञ्चापि पूजयेत्।
स्तनौ तत्पुरुषायेति तथेशानायेति चोदरम्।
पार्श्वे चानन्तधर्म्माय ज्ञानभूताय वै कटिम्।
ऊरू चानन्तवैराग्यसिंहायेति च पूजयेत्।
अनन्तैश्वर्य्यनाथाय जानुनी चार्च्चयेद्बुधः।
प्रधानाय नमो जङ्घे गुल्फौ व्योमात्मने नमः।
व्योमकेशात्मरूपाय पृष्ठमभ्यर्च्चयेन्नरः।
नमः पुष्ट्यै नमस्तुष्ट्यै पार्व्वतीञ्चापि पूजयेत्।
ततस्तु वृषभं हैमसुदकुम्भसमन्वितम्।
शुक्लमाल्याम्बरयुतं पञ्चरत्नपरिष्कृतम्।
भक्ष्यैर्नानाविधैर्युक्तं ब्राह्मणाय निवेदयेत्।
प्रीयतां देवदेवोऽत्र सद्योजातः पिनाकधृक्।
ततस्तु विप्रानन्नेन तर्पयेच्छक्तितः शुभान्।
पृषदाज्यञ्च संप्राश्य स्वपेद्भूमावुदङ्मुखः।
पञ्चदश्यां ततः पूज्य विप्रान् भुञ्जीत वाग्यतः।
तद्वत् कृष्णचतुर्द्दश्यामेतत् सर्व्वं समाचरेत्।
चतुर्द्दशीषु सर्व्वासु कुर्य्यात् पूर्व्ववदर्च्चनम्।
ये तु मासविशेषाः स्युस्तान्निबोध क्रमादिह।
मार्गशीर्षादिमासेषु स्वयमेतदुदीरयेत्।
शङ्कराय नमस्तुभ्यं नमस्ते करवीरक।
त्र्यम्बकाय नमस्तेऽस्तु महेश्वर नमः परम्।
नमस्तेऽस्तु महादेव स्थाणवे च ततः परम्।
नमः पशुपते नाथ नमस्ते शम्भवे पुनः।
नमस्ते परमानन्द नमः सोमार्द्धधारिणे।
नमो भीमाय इत्येवं त्वामहं शरणं गतः।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
पञ्चगव्यं तथा विल्वं यवान् गोशृङ्गवारि च।
तिलांश्च कृष्णान् विधिवत् प्राशनं क्रमशः
स्मृतम्।
प्रतिमासं चतुर्द्दश्योरेकैकं प्राशनं स्मृतम्।
मन्दारैर्मालतीभिश्च तथा धुस्तूरकैरपि।
सिन्धुवारैरशोकैश्च मल्लिकाभिश्च पाटलैः।
अर्कपुष्पकदम्बैश्च शतपत्रैस्तथोत्पलैः।
एकैकेन चतुर्द्दश्यामर्च्चयेत् पार्व्वतीपतिम्।
पुनश्च कार्त्तिके मासि संप्राप्ते तर्पयेत् द्विजान्।
अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रमाल्यविभूषणैः।
कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः।
उमामहेश्वरं हैमं वृषभञ्च गवा सह।
मुक्ताफलाष्टकयुतं सितनेत्रपटावृतम्।
सर्व्वोपस्करसंयुक्तां शय्यां [illegible]।
ताम्रपात्रोपरि पुनः [illegible]।

ज्ञाय विप्राय शान्ताय वेदव्रतपराय च ।
वेदवाक्यविदे देयं न चक्रशिने क्वचित् ।
कुलीने शोभिने दद्यादाचार्य्ये तत्त्ववेदिने ।
सर्व्वाङ्गाय शौचाय सदाकल्याणकारिणे ।
सपत्नीकाय संपूज्य माल्यवस्त्रविभूषणैः ।
दूरे सति गुरोर्देयं तदभावे द्विजातये ।
न वित्तशाठ्यं कुर्व्वीत कुर्व्वन् मोहात् पतत्यधः ।
अनेन विधिना यस्तु कुर्य्यात् शिवचतुर्द्दशीम् ।
सोऽश्वमेधसहस्रस्य फलमाप्नोति मानवः ।
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ।
पितृभिर्भ्रातृभिश्चैव तत् सर्व्वं नाशमाप्नुयात् ।

दीर्घायुरारोग्यकुलाभिवृद्धि-
रत्राक्षयामुत्र चतुर्भुजत्वम् ।
गणाधिपत्यं दिवि कल्पकोटि-
शतं वसित्वा पदमेति शम्भोः ।
न बृहस्पतिरप्यनन्तमस्याः
फलमिन्द्रो न पितामहोऽपि वक्तुम् ।
न च सिद्धगणोऽप्यलं न चाहं
यदि जिह्वायुतकोटयोऽपि वक्त्रे ।

भवनमरवल्लभः पठति यः स्मरेद्वा सदा
शृणोति च विमत्सरः सकलपापविध्वंसिनीम् ।
इमां शिवचतुर्द्दशीममरकामिनीकोटयः
स्तुवन्ति तमनिन्दितं किल समाचरेद्यः सदा ॥

या चाथ नारी कुरुते च भक्त्या
भर्त्तारमापृच्छ्य सुतं गुरुं वा ।
सापि प्रसादात् परमेश्वरस्य
परं पदं याति पिनाकपाणेः ॥"

इति मात्स्ये शिवचतुर्द्दशीव्रतं ८० अध्यायः ॥*॥ फाल्गुनी कृष्णा चतुर्द्दशी । तत्र शिवव्रतं कर्त्तव्यम् । तस्य विवरणं शिवरात्रिशब्दे द्रष्टव्यम् ।

**शिवज्ञा**, स्त्री, ( शिवं जानातीति । ज्ञा + कः ।) शिवोपासिका । मङ्गलज्ञात्री । शिवं जानाति या इत्यर्थे उपपदः ।

**शिवज्ञानं**, क्ली, (शिवस्य ज्ञापकत्वात् ।) शुभाशुभकालबोधकज्ञानम् । यदा यात्रादिक्रिया यथाकर्त्तव्या ज्योतिःशास्त्रोक्तशुभसमयप्राप्तिश्च न भवति तदा शिवज्ञानोक्तशुभसमये कर्म्म कर्त्तुमुचितं भवति । एतच्छिवज्ञानोक्तमाहेन्द्रयोगे व्रतयात्रादिकेषु अमृतयोगे कार्य्यसिद्धिं चरे कार्य्यनाशं शून्ये वस्तु अपमानं वा प्राप्नोति । दिवारात्रौ माघ-फाल्गुन-चैत्र-वैशाखश्रावणभाद्रेषु एते योगा एकरूपाः आश्विनकार्त्तिकाग्रहायणपौषेषु एकप्रकाराः ज्यैष्ठाषाढ़योश्च एकरूपा भवन्ति । यथा,—

माघ-फाल्गुन-चैत्र-वैशाख-श्रावण-भाद्रेषु
दिवादण्डा यथा ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| रविवारे | मा २ | अ ८ | शू ८ | मा २ | च १० । | | | | |
| सोमवारे | अ ४ | च ८ | अ ६ | च ६ | मा ४ | शू २ । | | | |
| मङ्गलवारे | च ४ | शू २ | अ ६ | च ४ | शू २ | अ ४ | शू २ | अ ४ | शू २ । |
| बुधवारे | अ ४ | च ६ | अ ४ | शू २ | च ४ | मा ४ | अ ४ | शू २ । | |
| गुरुवारे | मा ४ | शू २ | च ६ | मा ६ | शू ४ | च ४ | शू ४ । | | |
| शुक्रवारे | अ २ | च २ | अ ६ | च ६ | अ ६ | शू ४ | अ ४ । | | |
| शनिवारे | शू ४ | च ४ | शू २ | अ ८ | शू ४ | च ४ | शू ४ । | | |

तेषु रात्रिदण्डा यथा ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| रविवारे | शू २ | मा २ | अ ४ | च ८ | मा ८ | शू ६ । | | | |
| सोमवारे | च २ | अ ६ | च ६ | अ ८ | शू ८ । | | | | |
| मङ्गलवारे | अ २ | च ४ | शू २ | अ ६ | च ६ | अ ४ | च ४ | शू २ । | |
| बुधवारे | शू २ | अ ६ | मा ४ | च ४ | शू ४ | अ १० । | | | |
| गुरुवारे | च १४ | शू ४ | च ४ | अ २ | शू ६ । | | | | |
| शुक्रवारे | च ४ | अ ४ | शू ४ | मा २ | च ६ | शू ४ | अ २ | मा २ | शू २ । |
| शनिवारे | शू २ | च ४ | अ ६ | च ४ | अ ४ | च २ | अ ४ | शू ४ । | |

आश्विन-कार्त्तिकाग्रहायणपौषेषु
दिवादण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | शू २ | अ ६ | च ८ | अ ८ | शू २ | मा २ | शू २ । | |
| सोमवारे | अ ४ | शू ४ | अ ६ | च १६ । | | | | |
| मङ्गलवारे | अ २ | च २ | अ १० | च ६ | शू ६ | च ४ । | | |
| बुधवारे | अ २ | मा २ | अ २ | च ६ | अ ६ | शू २ | मा ६ | च ४ । |
| गुरुवारे | अ ४ | च ४ | शू ४ | च ६ | शू २ | अ ४ | च ६ । | |
| शुक्रवारे | अ २ | च २ | अ ६ | च ६ | अ ८ | शू २ | अ ४ । | |
| शनिवारे | अ २ | च २ | अ ६ | च ६ | अ ८ | शू २ | अ ४ । | |

तेषु रात्रिदण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | शू २ | च ४ | अ ४ | च ६ | अ ४ | शू २ | अ ८ । | |
| सोमवारे | च ६ | अ ८ | च ८ | अ २ | च ६ । | | | |
| मङ्गलवारे | मा ६ | अ २ | शू २ | अ ६ | च ४ | मा ४ | शू २ | अ ४ । |
| बुधवारे | च २ | अ २ | च ४ | अ १६ | च २ | शू ४ । | | |
| गुरुवारे | शू २ | अ ८ | च ६ | अ ८ | शू २ | अ ४ । | | |
| शुक्रवारे | च २ | अ ८ | च ६ | अ ८ | शू २ | अ ४ । | | |
| शनिवारे | च १४ | शू ४ | च ४ | अ २ | शू ६ । | | | |

ज्येष्ठाषाढ़योर्द्दिवादण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | शू ४ | अ ६ | व ६ | अ ६ | व ४ | मा २ | शू २ । | |
| सोमवारे | व ८ | अ ४ | शू ६ | व ८ | शू ४ । | | | |
| मङ्गलवारे | अ ६ | शू ४ | अ ६ | व ६ | मा २ | अ २ | मा २ | शू २ । |
| बुधवारे | शू २ | व ४ | अ ८ | व ६ | अ ८ | शू ४ । | | |
| गुरुवारे | मा २ | शू २ | व ६ | मा ४ | शू ४ | व ६ | अ ६ । | |
| शुक्रवारे | शू २ | मा २ | व ६ | मा २ | शू ४ | अ ६ | व ४ | शू ४ । |
| शनिवारे | मा २ | शू २ | व ६ | मा ६ | शू ४ | व ४ | अ ६ । | |

तत्र रात्रिदण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | अ ४ | शू ४ | व ४ | अ ६ | व ८ | शू ४ । | | |
| सोमवारे | व ८ | अ ८ | शू ४ | अ ४ | शू २ | मा २ | शू २ । | |
| मङ्गलवारे | अ २ | व ४ | मा ४ | शू ४ | व २ | अ ६ | शू २ | व ६ । |
| बुधवारे | अ १० | शू २ | व ४ | अ ४ | शू १० । | | | |
| गुरुवारे | शू २ | अ ६ | शू २ | व ४ | शू २ | अ ६ | शू ४ | अ ४ । |
| शुक्रवारे | अ ६ | शू २ | व ४ | शू ६ | अ ६ | शू २ | अ ४ । | |
| शनिवारे | शू २ | अ २ | व ८ | शू २ | अ ६ | शू ४ | अ ६ । | |

मतान्तरे अस्य प्रमाणं यथा,—
"माहेन्द्रे विजयो नित्यं अमृते कार्य्यशोभनम् ।
वह्नौ कार्य्यविलम्बः स्याच्छून्ये च मरणं ध्रुवम् ॥
वैशाखादिश्रावणान्तं एकभावेन संवदेत् ।
अमृतादि दिवारात्रौ चतुर्मासं यथाक्रमम् ॥
याममानं दिवामाने ज्ञेयं सर्व्वत्र मासके ।
तत्प्रमाणेन ज्ञातव्यं दण्डमानं विचक्षणैः ।
रात्रिमानप्रमाणेन ज्ञेयो दण्डप्रमाणकः ॥
न वारतिथिनक्षत्रं न योगकरणं तथा ।
शिवज्ञानं समासाद्य सर्व्वं सुविविचारयेत् ॥"
तथा ।
"भाद्रादिमार्गपर्य्यन्तं सप्तवारे समादिशेत् ।
शून्यवह्न्यादियोगं हि पौषादिचैत्रतस्तथा ॥"
इति ज्योतिषे शिवज्ञानम् ॥ * ॥
अनेकप्रकारं शिवज्ञानं शिवाज्ञा शिवालिखितं अमृतघटी च दृष्टं किन्तु परस्परमनैक्यं जातम् ॥

शिवतातिः, स्त्री, कल्याणकारिणी । इति हेमचन्द्रः ॥ अस्य पर्य्यायः शिवङ्करशब्दे द्रष्टव्यः ॥

शिवदत्तं, क्ली, ( शिवेन दत्तम् । ) विष्णुचक्रम् । इति केचित् ॥ शिवेन शिवाय वा दत्तं मात्रमात्रं च ॥

शिवदारु, क्ली, ( शिवस्य दारु । ) देवदारुवृक्षः । इति राजनिर्घण्टः ॥

शिवदूतिका, स्त्री, ( शिवदूती + स्वार्थे कन् । ) मातृकाविशेषः । इति शब्दरत्नावली ॥

शिवदूती, स्त्री, (शिवेन दूतयति सन्देशं प्रापयतीत्यर्थे दूत + णिच् + पचाद्यच् । यद्वा, शिवो दूतो यस्याः । गौरादेराकृतिगणत्वात् ङीष् ।) दुर्गा । इति त्रिकाण्डशेषः ॥ योगिनीविशेषः । यथा,
"ब्रह्माणी प्रथमा प्रोक्ता ततो माहेश्वरी परा ।
कौमारी वैष्णवी चैव वाराही पञ्चमी तथा ॥
नारसिंही तथैवैन्द्री शिवदूती तथाष्टमी ।
एताः पूज्या महाभागा योगिनीः कामदायिनीः ॥"
तस्या उत्पत्तिमन्त्रध्यानादि यथा,—
"कौषिक्या हृदयाद्देवी निःसृता ध्यानतो हरेः ।
शिवदूतीति विख्याता शिवाशतसुसंवृता ॥
मन्त्रमस्याः प्रवक्ष्यामि धर्म्मकामार्थदायकम् ।
यत् श्रुत्वा साधको याति दुर्लभं शिवमन्दिरम् ॥
येनाराध्य महादेवीं शिवदूतीं शिवात्मिकाम् ।
न चिराल्लभते कामान्नरः सर्व्वजयी भवेत् ॥
अन्तःसमाप्तिसहितौ बिन्दिन्दुभ्यां दशावरा ।
स्वरेण षष्ठदन्तेन संयुक्तोऽन्तेन पूर्व्वशः ॥
स एव बिन्दुयुगलपूर्व्वस्योपान्त्यपावकः ।
षष्ठस्वरकलाशून्यैः संहितः प्रथमस्थितः ॥
मन्त्रोऽयं शिवदूत्यास्तु शिवदूतीजयप्रदः ।
रूपमस्याः प्रवक्ष्यामि शृणु वत्सक संमतम् ॥
चतुर्भुजं महाकायं सिन्दूरसदृशद्युतिम् ।
रक्तदन्तं मुण्डमालाजटाजूटार्द्धचन्द्रधृक् ॥
नागकुण्डलहाराभ्यां शोभितं नखरोज्ज्वलम् ।
व्याघ्रचर्म्मपरीधानं दक्षिणे शूलचक्रधृक् ॥
वामे पाशं तथा चर्म्म बिभ्रदूर्द्ध्वं परिक्रमात् ।
स्थूलवक्त्रञ्च पीनोष्ठं तुङ्गनासं भयङ्करम् ॥
निक्षिप्य दक्षिणं पादं सन्तिष्ठेत् कुणपोपरि ।
वामपादं शृगालस्य पृष्ठे चैवाग्रतेर्व्वृतम् ॥
ईदृशं शिवदूत्यास्तु मूर्त्तिं ध्यायेद्विभूतये ।
ध्यानमात्रादथैतस्या नरः कल्याणमाप्नुयात् ॥
पूजनाच्चिराद्देवी सर्व्वान् कामान् ददाति च ॥
यः शिवाविरुतं श्रुत्वा शिवदूतीं शिवप्रदाम् ।
प्रणमेत् साधको भक्त्या तस्य कामाः करे स्थिताः ॥
यदा जघान जगतां रक्तबीजं हिताय वै ।
महादेवी महामाया तदास्याः कायतः स्रुता ॥
दूतं प्रस्थापयामास शिवं शुम्भाय साम्बिका ।
तेन सा शिवदूतीति देवैः सर्व्वैः प्रगीयते ॥
चैमङ्करी च शान्ता च वेदमाता महोदरी ।
कराला कामदा देवी भगास्या भगमालिनी ॥
भगोदरी भगाहारा भगजिह्वा भगा तथा ।
एता द्वादश योगिन्यः पूजने परिकीर्त्तिताः ॥
एता द्वादश योगिन्यः शिवदूत्याः सदैव हि ।
विचरन्ति स्वयं देवी यत्र यत्रैव गच्छति ॥"
इति कालिकापुराणे उत्तरतन्त्रे ५० अध्यायः ॥ प्रमाणानन्तरं वामने ५३ अध्याये मार्कण्डेयपुराणे देवीमाहात्म्ये रक्तबीजवधाख्याने च द्रष्टव्यम् ॥

शिवद्रुमः, पुं, ( शिवप्रियो द्रुमः । ) बिल्ववृक्षः । इति राजनिर्घण्टः ॥

शिवद्विष्टा, स्त्री, ( शिवेन द्विष्टा तत्पूजनागर्हत्वात् । ) केतकी । इति राजनिर्घण्टः ॥

शिवधातुः, पुं, ( शिवस्य धातुः । ) पारदम् । पारदं शिववीर्य्यं स्यादिति दर्शनात् । गोरक्षमणिः । इति केचित् ॥

शिवनाभिः, पुं, (शिवस्य नाभिरिव ।) शिवलिङ्गविशेषः । यथा,—
"उत्तमं मध्यमधमं त्रिविधं लिङ्गमीरितम् ।
चतुरङ्गुलमुत्सेधे रम्यवेदिकमुत्तमम् ॥
उत्तमं लिङ्गमाख्यातं मुनिभिः शास्त्रकोविदैः ।
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमधमं स्मृतम् ॥
शिवनाभिमयं लिङ्गं प्रतिपूज्य महर्षिभिः ।
श्रेष्ठञ्च सर्व्वलिङ्गेभ्यस्तस्मात् पूज्यं विधानतः ॥"
इति वीरमित्रोदयः ॥

शिवपुरी, स्त्री, ( शिवस्य पुरी । ) काशी । इति हेमचन्द्रः ॥

शिवप्रियं, क्ली, ( शिवस्य प्रियम् । ) स्फाटिकम् । इति राजनिर्घण्टः ॥ शिवस्य शिवायै, च ॥

शिवप्रियः, पुं, ( शिवस्य प्रियः । ) बकवृक्षः । इति जटाधरः ॥ स्फटिकः । धुस्तूरः । इति राजनिर्घण्टः ॥

शिवप्रिया, स्त्री, ( शिवस्य प्रिया । ) दुर्गा । इति शब्दमाला ॥

तत्प्रसादात्मया देव व्रतमद्य समर्पितम् ।
प्रसन्नो भव मे श्रीमन् मद्भूतिं प्रतिपद्यताम् ।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ॥”
परदिने ब्राह्मणान् भोजयित्वा चतुर्द्दशीत्यागान्ते
तत्र तदन्ते अमावस्यायां पारणं कुर्य्यात् ।
तत्र मन्त्रः ।
“संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥” * ॥
तत्र पार्थिवशिवलिङ्गपूजाविधिः । तत्र शिव-
वाक्यं स्कान्दे ।
“विप्रस्य तु सदेवाहं शुचेरप्यशुचेरपि ।
शृणुत बलिं प्रवक्ष्यामि विप्राणामिव दर्शनात् ॥”
बलिं पूजाम् । तथा,
“शूद्रः कर्म्माणि यो नित्यं स्वीयानि कुरुते
प्रिये ।
तस्याहमर्च्चां गृह्णामि चन्द्रखण्डविभूषिते ॥”
तथा,
“नमोऽन्तेन शिवेनैव स्त्रीणां पूजा विधीयते ॥”
एवकारेण प्रणवनिवृत्तिः । एवं शूद्रस्यापि ।
तथा नृसिंहतापनीये । “सावित्रीं प्रणवं यजु-
र्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति । सावित्रीं प्रणवं
यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयात् स
म्लेच्छोऽधो गच्छति इति ।” नेच्छन्ति पर्य्यन्तं
पराशरभाष्येऽपि लिखितम् । गोविन्दभट्ट-
धृतम् ।
“स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः ।
शूद्रो निरयमाप्नोति ब्राह्मणः शूद्रतामियात् ॥”
गौतमः ।
“रात्रावुदङ्मुखः कुर्य्यात् देवकार्य्यं सदैव हि ।
शिवार्च्चनं सदाप्येवं शुचिः कुर्य्यादुदङ्मुखः ॥”
सदा दिवारात्रौ । अत्र हेतुमाह वचनान्तरे ।
“न प्राचीमग्रतः शम्भोर्नोदीचीं शक्ति-
संश्रिताम् ।
न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत् ॥”
यजमानः शम्भोः प्राचीमवस्थितये न समा-
श्रयेत् शम्भोर्जगत्संहारकत्वात्तत्र तामसत्वात् ।
पश्चबलपक्षे प्रधानं मतं प्राच्यवस्थितम् ॥
एकपक्षपक्षे सुतरां तथा । तद्रूपमाह भविष्य-
पुराणम् ।
“सौम्यं मौलौ कृतवत् चार्द्धं एकवक्त्रं चतुर्भुजम् ।
शिवरूपं सदा कुर्य्यात् प्रासादे वाप्यनिश्चितम् ॥”
अथापि पूजाविधेयात् देवाग्रे तस्य चाग्रयं
प्राची प्रोक्ता गुरुक्रमैः । इत्यस्य च विषयः ।
लिङ्गभिधानादिप्रविष्टा प्राची आशा । एत-
च्छ्रद्धारादममात्रपूर्व्वाद्याग्नेय्यन्तपूजा । अतएव
श्रुत्यन्तरम् ।
“यत्रैव भानुस्तु वियत्युदेति
प्राचीति तां वेदविदो वदन्ति ।
तस्मा हरः पूजकपूज्ययोश्च
यदाननस्था: प्रवदन्ति तान्तु ॥”
एतच्च देवालयादपूजा पूर्व्वाह्णे प्राङ्मुखेन सायं
पश्चिमाभिमुखेन रात्रावुदङ्मुखेन कार्य्या ।

“प्राक्‌पश्चिमोदगास्यस्तु प्रातः सायं निशासु
च ॥”
इति वचनात् ॥
इति वाचस्पतिमिश्राः । मैवं पूजा रत्नाकरोक्त-
भविष्यपुराणीयवचनाचरणे मनःप्रमाण एव
प्रागादिदिङ्‌नियमाभिधानात् । व्यवहारोऽपि
अत्र न तथेति ॥ * ॥ लिङ्गपुराणे ।
“विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ।
तस्मान्मृदापि कर्त्तव्यं ललाटेऽपि त्रिपुण्ड्रकम् ॥”
नन्दिपुराणे ।
“आयुष्मान् बलवान् श्रीमान् पुत्त्रवान् धनवान्
सुखी ।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्च्चयेत् ।
तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्व्वार्थसाधकम् ॥”
भविष्ये ।
“भस्मगोशकृत्पिण्डं ताम्रकांस्यमयं तथा ।
कृत्वा लिङ्गं सकृत् पूज्य वसेत् कल्पायुतं दिवि ॥ * ॥
वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्व्वकामदम् ।
नर्म्मदागिरिजं श्रेष्ठमन्यदपि हि लिङ्गवत् ॥”
लिङ्गवत् लिङ्गाकारम् । कालकौमुद्याम् ।
“अङ्गुष्ठपरीमाणं न लिङ्गं कुत्रचिन्नरः ।
कुर्व्वीताकुर्व्वतो दुःखं न कदाचित् समाचरेत् ॥”
अङ्गुष्ठोऽष्टाशीतिरत्तिका । अङ्गुष्ठतः कृतपर्व्व-
ग्रन्थिः ।
“अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र कृतनुपर्व्वग्रन्थिभिर्मिनुयात् सदा ॥”
इति छन्दोगपरिशिष्टात् ॥
शिवधर्म्मे ।
“सकृत्समर्च्चयेल्लिङ्गं निरयं स न गच्छति ।
रुद्रलोकमवाप्नोति भुक्त्वा भोगान् यथोत्तमान् ॥”
तथा ।
“वालुकानि च लिङ्गानि सकृत्तानि च कारयेत् ।
सकृत्समर्च्चनात् सोऽपि लभते वाञ्छितं फलम् ॥”
तत्रवालुकलिङ्गानामसामर्थ्येऽपि “अष्ट-
मितपार्थिवशिवलिङ्गपूजनमिति यथाशक्ति
वाक्ये देयम् ॥ * ॥ मत्स्यपुराणे ।
“यावन्न दीयते चार्घ्यं भास्कराय निवेदितम् ।
तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥”
रघुनन्दनभट्टधृतम् ।
“सर्व्वमेव पृथक्‌प्रोक्तः शिवकर्म्मार्च्चनं विना ॥”
अत्र शुक्रः । अग्निपुराणे ।
“तल्लिङ्गैः पूजयेन्मन्त्रैः सर्व्वदेवान् पृथक् पृथक् ।
ध्यात्वा प्रणवपूर्व्वन्तु तन्नाम्ना सुसमाहितः ।
नमस्कारेण मन्त्रेण पुष्पाणि विन्यसेत् पृथक् ॥” *
देवीपुराणे ।
“हराहरणं शूलप्रतिष्ठाकामेन च ।
आपदं पूजनञ्चैव विसर्ज्जनमतः परम् ।
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेव इति क्रमात् ॥”
अत्र पूर्व्वोक्तक्रमकर्म्माणि परत्रचतुर्थ्यन्त-
नामभिः लिङ्गादिकल्पनिर्म्माणत्रितयमाचरेत्

सार्थकानि । [illegible]
क्रमाद्देव आवाहनात् प्राक् [illegible]
कृत्यावयवरामयम् ॥ * ॥ तत्र [illegible]
नम इति आवाहनम् । महेश्वराय नमः [illegible]
संस्थापनम् । शूलपाणे इह सुप्रतिष्ठितो भव [illegible]
प्रतिष्ठा । ध्यानेनिर्म्मलमिक्कारिणा [illegible]
पृथक् दद्यामन्ते तत्राग्राप्वाहनम् । महादेव [illegible]
इति आपनम् । एतत् पाद्यं नमः शिवाय [illegible]
एवमर्घ्यादिना पूजयेत् । शिवमन्त्रात् [illegible]
भविष्यपुराणोक्तं सभावलिङ्गप्राग्भागात् [illegible]
दिक्षु वामावर्त्तेन पूजनम् । यथा । [illegible]
क्षितिमूर्त्तये नमः । भवाय जलमूर्त्तये [illegible]
रुद्राय अग्निमूर्त्तये नमः । उग्राय वायु[illegible]
नमः । भीमाय आकाशमूर्त्तये नमः । पशु[illegible]
यजमानमूर्त्तये नमः । महादेवाय सोम[illegible]
नमः । ईशानाय सूर्य्यमूर्त्तये नमः ।
“मूर्त्तयोऽष्टौ शिवस्यैताः पूर्व्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रपूज्यास्ता वेद्यां लिङ्गे शिवं
यजेत् ।”
ततो महादेव क्षमस्व इति संहारमुद्रया [illegible]
र्जयेत् ॥ * ॥ नन्दिपुराणे ।
“गोभूतिलहिरण्यादिवस्त्रपुष्पनिवेदने ।
शिवो नमः शिवायेति मन्त्रः सर्व्वार्थसाधकः ।
सर्व्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः ।
तन्मन्त्रजापी तत्कर्म्मरतस्तद्‌गतमानसः ।
निष्कामः पुरुषो राजन् स ब्रह्मपरमश्नुते ।”
भविष्ये पञ्चाक्षरमुपक्रम्य ।
“अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा ।
महापातकयुक्तो वा मन्त्रस्यास्य जपी यदा ।
अधिकारी भवेत् सर्व्व इति देवोऽब्रवीच्छिवः ।
इति तथेत्यर्थः ॥ पूर्व्वोक्तवचनापवादरो[illegible]
तेन यथाधिकारी भवेत्तथाब्रवीच्छिवः । [illegible]
“सर्व्वेषामेव पापानां परं पापं महेश्वर ।
पतन्तं जायते यस्मात् तत्रैव नरकार्णवात् ।
शिवस्येहिह यद्दत्तं सर्व्वाकारककारकम् ।
तदन्नपानं शस्तं भवतीह विमत्सरम् ।
दत्त्वा नैवेद्यवस्त्रादि नादद्यात् कदाचन ।
अन्नं शिवस्येहिह तदादानं न तदर्पणम् [illegible]
आहारे मद्यं । शिवधर्म्मे ।
“तस्मात् पुष्पैः फलैः पत्रैरेकोऽपि [illegible]
तदन्नपानं ज्ञेयं भक्तिरेवात्र कारणम् ।”
भविष्ये ।
“लिङ्गानुलेपनं कार्य्यं दिव्यगन्धैः सुगन्धिभिः
बहुकोटिशतं दिव्यं शिवलोके महीयते ।”
शिवधर्म्मे ।
“तस्मात् पुष्पप्रदानेन लिङ्गेन प्रतिमास च [illegible]
आच्छेदितकर्म्मकोटीनां कुर्व्वीत न यदि [illegible]
स्कान्दे ।
“पुष्पाण्यपि च यानि [illegible]
सानतदानीति द्विजाः । अग्निः ।
“सुपुष्पकेन यो लिङ्गं सकृत् पूजयते [illegible]
स कीटकार्य्यं शाम शिव[illegible]

अथोवाच हरिर्ब्रह्मन् शार्व्वं लिङ्गं महर्षिभिः।
पातितन्तस्य भारार्त्ता चचाल वसुन्धरा ॥
ततस्तदद्भुततमं श्रुत्वा देवः पितामहः।
तत्र गच्छामि देवेश तमाह पुनः पुनः ॥
ततः पितामहो देवः केशवश्च जगत्पतिः।
आजग्मतुस्तदुद्देशं यत्र लिङ्गं भवस्य तत् ॥
ततोऽनन्तं हरिर्लिङ्गं दृष्ट्वारुह्य खगेश्वरम्।
पातालं प्रविवेशाथ विस्मयात्त्वरितो विभुः ॥
ब्रह्मा पद्मविमानेन ऊर्द्ध्वमाक्रम्य सर्व्वतः।
नैवान्तमलभद्ब्रह्मा विस्मितः पुनरागतः ॥
विष्णुर्गत्वाथ पातालं सप्तलोकपरायणः।
चक्रपाणिर्व्विनिष्क्रान्तो लेभेऽन्तं न महामुने ॥
विष्णुं पितामहश्चाह हरिर्ब्रह्माथमाह च।
नमोऽस्तु ते शूलपाणे नमोऽस्तु वृषभध्वज।
जीमूतवाहन कवे शर्व्व त्र्यम्बक शङ्कर ॥
महेश्वर हरेशान सुवर्णाक्ष वृषाकपे।
दक्षयज्ञक्षयकर काल रुद्र नमोऽस्तु ते ॥
त्वमादिरस्य जगतस्त्वं मध्यं परमेश्वरः।
भवानन्तश्च भगवान् सर्व्वगस्त्वं नमोऽस्तु ते ॥

पुलस्त्य उवाच।

एवं संस्तूयमानस्तु तस्मिन् दारुवने हरः।
स्वरूपी ताविदं वाक्यमुवाच वदतां वरः ॥

हर उवाच।

किमर्थं देवतानाथौ परिभूतक्रमन्त्विह।
मां स्तुवाते भृशास्वस्थं कामतापितविग्रहम् ॥

देवावूचतुः।

तवाङ्गपातितं लिङ्गं यदेतद्भुवि शङ्कर।
एतत् प्रगृह्यतां भूयस्ततो देव वदावहे ॥

हर उवाच।

यद्यर्च्चयन्ति त्रिदशा मम लिङ्गं सुरोत्तमौ।
तदेतत् प्रतिगृह्णीयात् नान्यथेति कथञ्चन ॥
ततः प्रोवाच भगवानेवमस्त्विति केशवः ॥
ब्रह्मा स्वयञ्च जग्राह लिङ्गं कनकपिङ्गलम्।
ततश्चकार भगवांश्चातुर्व्वर्ण्यं हरार्च्चने ॥
शास्त्राणि चैषां मुख्यानि नानोक्तिविदि-
तानि च।
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ॥
तृतीयं कालवदनं चतुर्थञ्च कपालिनम्।
शैव आसीत् स्वयं शक्तिर्व्वशिष्ठस्य प्रियः सुतः ॥
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः।
महापाशुपतश्चासीद्भारद्वाजस्तपोधनः ॥
तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः।
कालास्यो भगवानासीदापस्तम्बस्तपोधनः ॥
तस्य शिष्यो बभौ वैश्यो नाम्ना क्राथेश्वरो
मुने।
महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान् ॥
कुर्णोदर इति ख्यातो जात्या शूद्रो महातपाः।
एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च ॥
कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः।
गते ब्रह्मणि शर्व्वोऽपि तपः संहृत्य तं तदा ॥
लिङ्गं चित्रवने सूक्ष्मं प्रतिष्ठाप्य चचार ह ॥”

इति वामनपुराणे ६ अध्यायः ॥ ७ ॥



अपि च।

“ततः सृष्टिं चिन्तयतो ब्रह्मणो मोहितस्य च।
वालखिल्याः समुत्पन्नास्तपस्तु समारभन् ॥
दिव्यं वर्षसहस्रं वै तेपुस्ते दुश्चरं तपः।
ततः कालेन महता पार्व्वती च पतिव्रता ॥
तेषां तपः समालोक्य चाति देवी सुदुःखिता।
प्रसाद्य देवदेवेशं शङ्करं प्राह सुव्रता ॥
क्लिश्यन्ति वालखिल्याश्च प्रसादार्थं तव प्रभो।
एतेभ्योऽपि प्रियं देव विधिवत् कुरु सेवया ॥
तच्छ्रुत्वा वचनं देव्याः पिनाकी परचिन्तकः।
प्रोवाच कान्तां कान्तश्च वचनं प्रियया सह ॥
न वेत्सि देवि तत्त्वेन धर्म्मस्य गहना गतिः।
नैते धर्म्मं विजानन्ति यथार्थं धर्म्मचारिणः ॥
न दास्यामि वरं तेभ्यो यस्मात्ते मूढहृदयः।
एतत् श्रुत्वाब्रवीत् देवी मा मैवं शंसितव्रताः ॥
ततो रुद्र उवाचेदं देवीं देवः स्मिताननः।
तिष्ठ त्वमत्र यास्यामि यत्रैते मुनिसत्तमाः ॥
इत्युक्ता तु ततो देवी शङ्करेण महात्मना।
गच्छस्वेत्याह मुदिता भर्त्तारं भुवनेश्वरी ॥
यत्र ते मुनयः सर्व्वे काष्ठलोष्टसमाश्रिताः।
तान् विलोक्य ततो देवो नग्नः सर्व्वाङ्गसुन्दरः ॥
वनमालाकृतापीडो युवा भिक्षाकपालभृत्।
आश्रमे पर्य्यटन् भिक्षां मुनीनां नियतात्मनाम् ॥
देहि भिक्षां ततश्चोक्त्वा ह्याश्रमाश्रमं ययौ।
तं विलोक्याश्रमगतं योषितो ब्रह्मवादिनाम् ॥
सकौतुकस्वभावेन तस्य रूपेण मोहिताः।
प्रोचुः परस्परं कार्य्यमस्ति पश्याम भिक्षुकम् ॥
परस्परमितीवोक्त्वा गृह्य मूलफलं बहु।
गृहाण भिक्षामूचुस्तास्तं देवं मुनियोषितः ॥
तस्मै दत्त्वैव तां भिक्षां पप्रच्छुस्ताः स्मरातुराः ॥

नार्य्य ऊचुः।

कोऽसौ नाम व्रतविधिस्त्वया तापस सेव्यते।
यत्र नग्नेन लिङ्गेन वनमालाविभूषितः ॥
भवान् वै तापसो हृद्यो हृद्याः स्मो यदि
मन्यसे।
इत्युक्तस्तापसस्ताभिः प्रोवाच हसिताननः ॥
इदं मम व्रतं किञ्चिन्न रहस्यं प्रकाश्यते।
शृण्वन्ति बहवो यत्र तत्र तन्न विद्यते ॥
तस्य व्रतस्य सुभगा इति मत्वा गमिष्यथ।
एवमुक्तास्तदा तेन ताः प्रत्युचुस्तदा मुनिम् ॥
ततोऽर्थेन गमिष्यामो मुने नः कौतुकं महत्।
इत्युक्त्वा तास्तदातीव जगृहुः पाणिपल्लवैः ॥
काचित्कण्ठे बाहुभ्यां काचित् कामपरा तथा।
जानुभ्यामपरा नाभ्यां कचेषु कमलापरा ॥
अपरा तु कटीकर्व्वे चापरा पादयोरपि।
क्षोभं विलोक्य मुनय आश्रमेषु स्वयोषिताम् ॥
हन्यतामिति संभाष्य काष्ठपाषाणपाणयः।
पातयन्ति च देवस्य लिङ्गमुद्धृत्य भीषणम् ॥
पातिते तु ततो लिङ्गे गतोऽन्तर्द्धानमीश्वरः ॥
देव्या च भगवान् रुद्रः कैलासं समुपाश्रितः ॥
पतिते देवदेवस्य लिङ्गे नष्टे चराचरे।
क्षोभो बभूव सुमहानृषीणां भावितात्मनाम् ॥



[illegible]
त्रिदिवं [illegible]

एवमुक्ता सर्व्व एव ऋषयो व्याकुला भृशम्।
ब्रह्मणः सदनं जग्मुर्देवैः सह विशेषितम्।

ऋषय ऊचुः।

अज्ञानाच्च कृतं ब्रह्मन्नस्माभिर्मानदुर्म्मदैः।
तस्योपशमने यत्नं कुरु सर्व्वोपकारक।

ब्रह्मोवाच।

गच्छामः शरणं देवं शूलपाणिं त्रिलोचनम्।
प्रसादाद्देवदेवस्य भविष्यथ यथा पुरा।
इत्युक्त्वा ब्रह्मणा सार्द्धं कैलासं गिरिसत्तमम्।
ददृशुस्ते समासीनमुमया सहितं हरम्।
ततः स्तोतुं समारब्धो ब्रह्मा लोकपितामहः।
अनन्ताय नमस्तुभ्यं वरदाय पिनाकिने।
एवं स्तुतो महादेवो ब्रह्मणा ऋषिभिस्तथा।
उवाच मां मा व्रजत लिङ्गं भोः पुरतः पुनः।
क्रियतां मद्वचः शीघ्रं येन मे प्रीतिरुत्तमा।
भविष्यति प्रशस्ता या लिङ्गस्थाप न संशयः।
ये लिङ्गं पूजयिष्यन्ति मम भक्तिसमाश्रिताः।
न तेषां दुर्लभं किञ्चित् भविष्यति हितं
मतम्।”

इति वामने ४२ अध्यायः ॥

कुरुक्षेत्रस्थितानि लिङ्गानि यथा,—

सनत्कुमार उवाच।

“वटस्य दक्षिणे भागे चक्रतीर्थं प्रकीर्त्तितम्।
स्थाणोर्व्वटस्य पूर्व्वेण मम तीर्थं प्रकीर्त्तितम्।
स्थाणोर्व्वटस्योत्तरतस्तीर्थं गानेश्वरं मतम्।
स्थाणोर्व्वटस्य पश्चिमतः स्कन्दतीर्थं प्रकीर्त्तितम्।
इमानि पुण्यतीर्थानि मध्ये रुद्रवटः स्थितः।
महादेवं समभ्यर्च्च्य प्राप्नोति परमं पदम्।
वटस्य चोत्तरे पार्श्वे तक्षकेण महात्मना।
प्रतिष्ठितं महालिङ्गं सर्व्वकामप्रदायकम्।
वटस्य पूर्व्वदिग्भागे विश्वकर्म्मकृतं महत्।
लिङ्गं प्रत्यङ्मुखं दृष्ट्वा सिद्धिमाप्नोति मानवः।
तत्रैव लिङ्गरूपेण संस्थिता सा सरस्वती।
तां प्रणम्य प्रयत्नेन बुद्धिं मेधाञ्च विन्दति।
वटपार्श्वस्थितं लिङ्गं ब्रह्मणा तत् प्रतिष्ठितम्।
दृष्ट्वा वटेश्वरं देवं प्रयाति परमं पदम्।
ततः स्थाणुवटं दृष्ट्वा कृत्वा चापि प्रदक्षिणम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
स्थाणोः पश्चिमदिग्भागे नकुलीशो गणः
स्मृतः।
तमभ्यर्च्च्य प्रयत्नेन सर्व्वपापैः प्रमुच्यते।
तस्य दक्षिणदिग्भागे तीर्थं [illegible]।
तस्मिन् स्नातः सर्व्वतीर्थेस्नातो भवति मानवः।
तस्य चोत्तरदिग्भागे रावणेन महात्मना
प्रतिष्ठितं महालिङ्गं गोकर्णं नाम नामतः।
आषाढमासे या कृष्णा भविष्यति चतुर्दशी।
तस्यां पश्यति गोकर्णं [illegible]।
कामतोऽकामतो वापि यत् [illegible]

ङ्गादित्यवती यस्मात् पूजयित्वा वरं शुचिः ॥
ौमारब्रह्मचर्य्येण वत् पुत्रं प्राप्नुते नरैः ।
तु पुत्रं सकलं विवाहदनी चोऽर्थयोच्छितम् ॥
ीप्सेत् परमं रूपं सौभाग्यं धनसम्पदम् ।
ारेश्वरमाहात्म्यात् विन्दति नात्र संशयः ॥
स्य चोत्तरदिग्भागे लिङ्गपूजा विभीषणः ।
ब्रह्मचारामरत्वेव कथयित्वा बभूव ह ॥
ाषाढ़स्य तु मासस्य शुक्ला या चाष्टमी
भवेत् ।
स्मात्पूज्य चोपवासश्चाश्वमेधमवाप्नुयात् ॥
र्वैव पूजितं लिङ्गं तस्मिन् स्थाने द्विजोत्तम ।
पूजयित्वा प्रयत्नेन सर्व्वकाममवाप्नुयात् ॥
ुम्भशिरश्चैव तत्र पूज्य महेश्वरम् ।
ाभिवाञ्छितान् कामानवापतुर्मुदान्वितौ ॥
ेवे मासि सिते पक्षे यो नरस्तच्च पूजयेत् ।
स्य तौ वरदौ देवौ प्रयच्छेतां हि वाञ्छितम् ॥
ासोर्व्वटस्य पूर्व्वेण हस्तिपादेश्वरः स्थितः ।
ं दृष्ट्वा मुच्यते पापैरन्यजन्मसमुद्भवैः ॥
स्य दक्षिणतो लिङ्गं हारीतस्य ऋषेः
स्थितम् ।
ं प्रणम्य प्रयत्नेन सिद्धिमाप्नोति मानवः ॥
स्य दक्षिणपार्श्वे तु हारीतस्य महात्मनः ।
ङ्गं त्रैलोक्यविख्यातं सर्व्वपापहरं शिवम् ॥
ाहालक्ष्म्या चापि वन्दीयाशु महात्मना ।
ातिष्ठितं महालिङ्गं सर्व्वपापविनाशनम् ॥
ुक्तिमुक्तिप्रदं प्रोक्तं सर्व्वकिल्विषनाशनम् ।
ालिङ्गस्पर्शनादेव अग्निष्टोमफलं लभेत् ॥
ास्य पश्चिमदिग्भागे लिङ्गं सिद्धप्रतिष्ठितम् ।
ङ्केश्वरं भुवि ख्यातं सर्व्वसिद्धिप्रदायकम् ।
दर्शनात् पूजनाच्च सर्व्वसिद्धिं हि विन्दति ॥
ास दक्षिणदिग्भागे नकुलेन महात्मना ।
तिष्ठितं यत्तु लिङ्गं दर्शनात् सिद्धिदायकम् ॥
स पूर्व्वे च दिग्भागे आदित्येन महात्मना ।
तिष्ठितं लिङ्गवरं सर्व्वकिल्विषनाशनम् ॥
ाङ्गस्तु गन्धर्व्वो रम्भा चाप्सरसां वरा ।
ङ्कारं चाङ्गरागौ स्पर्शनकाङ्क्षिणौ ॥
ा स्थाणुं पूजयित्वा चाङ्गरागौ परस्परम् ।
ाम्य वरदं देवं प्रतिष्ठाप्य महेश्वरम् ॥
ाङ्गेश्वरं दृष्ट्वा तथा रम्भेश्वरं शिव ।
मो दर्शनीयश्च कुले जन्म समाप्नुयात् ॥
स दक्षिणतो लिङ्गं यक्षिणा स्थापितं पुरा ।
स प्रसादात् सम्प्राप्तं मनसा चिन्तितं फलम् ॥
ाक्षरेव मुनिना तथैवाराध्य शङ्करम् ।
ां वाञ्छितं परमं दर्शनाच्छङ्करस्य च ॥
ाशैव मुनिना चाराध्य परमेश्वरम् ।
ेवानं प्रभावं प्राप्तं देवप्रसादतः ॥
ो: पश्चिमदिग्भागे वायुना जगदायुना ।
ष्ठितं महालिङ्गं दर्शनात् पापनाशनम् ॥
ापि दक्षिणे भागे लिङ्गं हेमपतीश्वरम् ।
ष्ठितं शुक्रसता दर्शनात् सिद्धिदायकम् ॥
ापि दक्षिणे भागे वाल्मीकीर्मुनिनापितम् ।
ं मानवरं यस्तु दर्शनात् तुरमाप्नुयात् ॥

तस्याप्युत्तरदिग्भागे सनातने स्थापितं ध्रुवः ।
आराध्य वृहमोयाय सिद्धिं देवप्रसादतः ॥
तस्यैव पूर्व्वदिग्भागे विष्णुना प्रभविष्णुना ।
आराध्य वरदं देवं चक्रं लब्धं सुदर्शनम् ॥
तस्यापि पूर्व्वदिग्भागे इन्द्रेण वरुणेन च ।
प्रतिष्ठितौ लिङ्गवरौ सर्व्वकामप्रदायकौ ॥
एतानि मुनिभिः साध्यैरादित्यैर्वसुभिस्तथा ।
सेवितानि प्रयत्नेन सर्व्वपापहराणि वै ॥
स्थाणुलिङ्गस्य परितः ऋषिभिस्तत्त्वदर्शिभिः ।
प्रतिष्ठितानि लिङ्गानि येषां संख्या न विद्यते ॥
तथा सुगन्धस्यैव यावदोघवती नदी ।
सहस्रमेकं लिङ्गानां देवपश्चिमतः स्थितम् ॥
तस्यापि पूर्व्वदिग्भागे बालखिल्यैर्महर्षिभिः ।
प्रतिष्ठिता रुद्रकोटिर्यत्र सन्निहितं हरः ॥
दक्षिणेन तु देवस्य गन्धर्व्वैर्यक्षकिन्नरैः ।
प्रतिष्ठितानि लिङ्गानि तेषां संख्या न विद्यते ॥
तिस्रः कोट्यर्द्धकोटी च लिङ्गानां वायुरब्रवीत् ।
असंख्याताः सहस्राणि ये रुद्राः स्थाणु-
माश्रिताः ॥
एतज्ज्ञात्वा श्रद्दधानः स्थाणुलिङ्गं समाश्रयेत् ।
यस्य प्रसादात् प्राप्नोति मनसा चिन्तितं फलम् ॥
अकामो वा सकामो वा प्रविष्टः स्थाणु-
मन्दिरम् ।
विमुक्तः पातकैर्घोरैः प्राप्नोति परमं पदम् ॥
चैत्रमासे त्रयोदश्यां दिने पुण्यतमे शुभे ।
प्रतिष्ठितं स्थाणुलिङ्गं ब्रह्मणा लोकधारिणा ॥
ऋषिभिर्देवसंघैश्च पूजितं शाश्वतीः समाः ।
तस्मिन् काले निराहारा मानवाः श्रद्धया-
न्विताः ।
पूजयन्ति शिवं ये वै ते यान्ति परमं पदम् ॥
स्थाणुतीर्थमिदं ज्ञात्वा ये कुर्व्वन्ति प्रदक्षिणम् ।
प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वसुन्धरा ॥"

इति वामनपुराणे ४३ अध्यायः ॥*॥

एकगृहे लिङ्गद्वयार्च्चननिषेधो यथा,—
"गेहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा ।
द्वे चक्रे द्वारकायास्तु नार्च्ये सूर्य्यद्वयं तथा ॥"
तन्निर्म्माल्यभक्षणविधिनिषेधौ यथा,—
"अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा ॥"
इति वाराहे रौप्यसौवर्णादिमाहात्म्यनामा-
ध्यायः ॥*॥ लिङ्गपूजां विनान्यपूजाकरणनिषेधो
यथा,—
"लिङ्गपूजां विना देवि ! अन्यपूजां करोति यः ।
विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात् ।
तस्माल्लिङ्गं महेशानि प्रथमं परिपूजयेत् ॥"*॥
तत्पूजनप्रशंसा यथा,—
"यन्नाङ्गं लिङ्गपूजायां रहितं सततं प्रिये ।
तन्नाङ्गं पतितं मन्ये विष्ठाभूमिसमं स्मृतम् ॥
ब्राह्मणक्षत्रियविट् देवि यदि लिङ्गं न पूजयेत् ।
तत्क्षणात् परमेशानि चण्डालत्वं भवेत् ॥
शूद्रश्च परमेशानि यदा शूद्रवत् प्रिये ।
पूजयेत् परमेशानि चण्डालो मानवास्तथा ॥

शिवार्च्चनस्तु पूजायां वहवः कथितं मया ।
विद्यायोनिजं देवि तदूर्ध्वं सिद्धि पार्व्वति ॥
शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि ।
आदौ लिङ्गं समभ्यर्च्य विल्वपत्रैर्वरानने ।
पश्चादन्यं महेशानि शिवं प्राज्ञः प्रपूजयेत् ॥
शिवपूजां विना देवि ! अन्यपूजां करोति यः ।
स एव दयनाहीनः कुम्भीरो जायते प्रिये ॥
निर्म्माय पार्थिवं लिङ्गं संसारतारणोपायम् ।
आशुतोषं महादेवं शङ्करं वृषभध्वजम् ।
निर्म्माय पार्थिवं लिङ्गं विधिवत् पूजयेत्
शिवम् ॥
शिवपूजा महेशानि यद्गृहे सततं प्रिये ।
काशीपुरं महेशानि तद्गृहं वरवर्णिनि ।
शिवलिङ्गं प्रपूज्याथ सर्व्वपूजाफलं लभेत् ॥"*॥
चतुर्विधलिङ्गं यथा,—
"चतुर्द्धा पार्थिवं लिङ्गं चतुर्वर्णेन पार्व्वति ।
शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि ॥
शुक्लन्तु ब्राह्मणे प्रोक्तं क्षत्रिये रक्तमिष्यते ।
हरितं वैश्यजातौ तु कृष्णं शूद्रे प्रकीर्त्तितम् ।
चन्दनञ्च महेशानि सर्व्वजातिषु शस्यते ॥"

इति लिङ्गार्च्चनतन्त्रे १।२।३ पटलाः ॥*॥

अस्य पञ्चवक्त्राणि यथा,—
"तत् सर्व्वं ब्रह्म चार्व्वङ्गि पार्थिवस्य मुखं प्रिये ।
विभाव्य मुखपद्मं हि शिवस्य वरवर्णिनि ॥
सद्योजातं वामदेवमघोरञ्च ततः परम् ।
तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम् ॥
सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्निभम् ।
पीतवर्णं तथा सौम्यं वामदेवं मनोहरम् ॥
कृष्णवर्णमघोरञ्च घनं भीमविवर्द्धनम् ।
रक्तं तत्पुरुषं देवं दिव्यमूर्त्तिमनोहरम् ॥
श्यामलञ्च तथेशानं सर्व्वदेवशिवात्मकम् ।
चिन्तयेत् पश्चिमे चाद्यं द्वितीयन्तु तथोत्तरे ॥
अघोरं दक्षिणे देवं पूर्व्वे तत्पुरुषं तथा ।
ईशानं मध्यतो ध्येयं चिन्तयेत् भक्तितत्परः ॥"

इति तत्रैव ६ पटलः ॥*॥

अस्य पूजायां मुखवाद्यकरणावश्यकत्वं यथा,
"संपूज्य पार्थिवं लिङ्गं परं ब्रह्म स्वयं प्रिये ।
ततस्तु लिङ्गकवचं पठित्वा कमलानने ॥
मुखवाद्यं समृद्धं हि कृत्वा तु परमेश्वरि ।
मातृकामन्त्रसहितं मुखवाद्यं सुदुर्लभम् ॥
अकारादिक्षकारान्तं अनुलोमविलोमतः ।
उच्चार्य्य परमेशानि मुखवाद्यं शुचिस्मिते ॥
सबिन्दुवर्णमुच्चार्य्य पञ्चाशन्मातृका प्रिये ।
अनुलोमविलोमेन सर्व्वेषां च वरानने ॥
अनेनैव विधानेन मुखवाद्यं करोति यः ।
स सिद्धः समयः सोऽपि स शिवो नात्र संशयः ॥
सद्यस्तयोर्द्वयोर्देवेशि मुखवाद्यप्रसादतः ॥
यस्मिन् काले महेशानि अक्षरो नश्यति ध्रुवम् ।
तस्मिन् काले महेशानि मुखवाद्यं करोत्यहम् ॥
तत् श्रुत्वा परमेशानि अमरा राक्षसाश्च ये ।
गन्धर्व्वा महेशानि तत् श्रुत्वा परमेश्वरि ॥
ते सदा हर्षिता तिष्ठन्ति मुखवाद्यं विना प्रिये ।

स सर्व्वपातकाभोगी अन्ते कुम्भीरतां व्रजेत् ॥”
इति च तत्रैव ८ पटलः ॥*॥
अथ निर्माल्यभोजनदोषकारणं यथा,—
देव्युवाच ।
“दुर्लभं तव निर्माल्यं ब्रह्मादीनां कृपानिधे ।
तत्कथं परमेशान निर्माल्यं तव दूषितम् ॥
ईश्वर उवाच ।
मध्यस्थानस्थितं यत्तु तन्मुखं परमेश्वरि ।
श्यामलं तत्तु ईशानं सदा ऊर्द्ध शुचिस्मिते ॥
कालाग्निरूपिणं तत्तु सर्व्वशक्तिमयं सदा ।
तेजोमयं महेशानि सुखमूर्द्ध वरानने ॥
क्षीरोदमथने देवि उत्थितं गरलं महत् ।
ततः करतलीकृत्य तद्विषं परमेश्वरि ॥
निपीतं तद्विषं कृष्णं तीक्ष्णं ब्रह्माण्डनाशनम् ।
तद्विषं कण्ठदेशे तु स्थितं हि सर्व्वदा मम ॥
ततः प्रभृति देवेशि मुखं ज्वालायते सदा ।
पत्रं वा यदि वा पुष्पं फलं वा वरवर्णिनि ॥
अन्यं हि परमेशानि उपचारं मनोहरम् ।
यो दद्यात् परमेशानि मन्मुखोपरि पार्व्वति ॥
अग्राह्यं तत्तु निर्म्माल्यं साक्षाद्ब्रह्ममयं यतः ॥
एतत्तु परमेशानि निर्म्माल्यं यस्तु धारयेत् ।
स भ्रष्टो जायते देवि निष्कृतिर्नास्ति तत्र वै ।
अग्राह्यं मम निर्म्माल्यं अतएव वरानने ॥
यद्दत्तं सम्मुखे देवि पुष्पं वा फलमुत्तमम् ।
तन्निर्म्माल्यं महेशानि गृह्णीयात् शिरसा सदा ॥
प्रथमं विष्णवे दत्त्वा विष्णुमन्त्रेण पार्व्वति ।
निर्माल्यं मम देवेशि विष्णोर्ग्राह्यं वरानने ॥
देवासुरमनुष्याश्च गन्धर्व्वा किन्नरादयः ।
ते सर्व्वे परमेशानि वराकाः क्षुद्रबुद्धयः ।
निर्माल्येषु च देवेशि अधिकारी कथं भवेत् ॥”
इति च तत्रैव १३।१४ पटलौ ॥*॥
“चतुर्द्दश्यां महेशानि शुक्लायां वरवर्णिनि ।
कृष्णायां वा महेशानि अमावास्यां विशेषतः ॥
निर्माय च चतुर्द्दश्यां लिङ्गं भक्त्या च पूजयेत् ।
एकचक्रे महेशानि निर्माय पार्थिवं शिवम् ॥
दक्षिणे वामचक्रे वा निर्माय ये च पार्थिवम् ।
तत्फलं परमेशानि लक्षलिङ्गसमं भवेत् ॥”
इति लिङ्गार्च्चनतन्त्रम् ॥ * ॥
बाणलिङ्गलक्षणादिकं बाणलिङ्गशब्दे द्रष्टव्यम् ॥*॥
अथ रौद्रलिङ्गलक्षणम् । वीरमित्रोदयधृतम् ।
“नदीसमुद्भवं रौद्रमन्योन्यस्य विघर्षणात् ।
नदीवेगात् समं स्निग्धं संजातं रौद्रमुच्यते ॥”
वसुधरेऽपि ।
“हरिप्रवाहसंस्थानं बाणलिङ्गसमाकृति ।
तदन्यत्रापि चोद्भूतं रौद्रलिङ्गं सुखावहम् ॥
गङ्गादिसरिद्धारायां बाणलिङ्गसमाकृति ।
तदन्यदपि चोद्भूतं लिङ्गं रौद्रं भविष्यति ॥
रौद्रलिङ्गं समाख्यातं बाणलिङ्गसमाकृति ।
श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम् ॥
स्वभावात् [illegible] वा सर्व्वजातिषु विहितम् ।
नर्म्मदाजन्यं रौद्रं बाणलिङ्गवदीरितम् ॥”
इति रौद्रलिङ्गलक्षणम् ।

शिवनाभिलक्षणं तच्छब्दे द्रष्टव्यम् ॥ * ॥ अथ देवलिङ्गलक्षणम् । देवलिङ्गमधिकृत्य सिद्धान्तशेखरे ।
“करसंपुटसंस्थानं मूलटङ्केन्दुभूषितम् ।
रेखाकोटरसंयुक्तं निम्नोन्नतसमन्वितम् ।
दीर्घाकारञ्च यल्लिङ्गं ब्रह्मभागादिवर्ज्जितम् ॥”
अथ गोललिङ्गलक्षणम् ।
“लिङ्गं गोलमिति प्रोक्तं गोलकं प्रोच्यतेऽधुना ।
कुष्माण्डस्य फलाकारं नागरङ्गफलोपमम् ।
काकडिम्बफलाकारं गोललिङ्गमितीरितम् ॥”
इति गोललिङ्गलक्षणम् ॥*॥
अथार्षलिङ्गलक्षणम् । तत्रैव ।
“नानाकोलफलाकारं ब्रह्मसूत्रविवर्ज्जितम् ।
मूले स्थूलञ्च यल्लिङ्गं कपित्थफलसन्निभम् ।
नालस्य वा फलाकारं मध्ये स्थूलञ्च यद्भवेत् ।
मध्ये स्थूलं वरं लिङ्गमार्षमेवमुदीरितम् ॥”
इत्यार्षलिङ्गलक्षणम् ॥*॥
लिङ्गं हि द्विविधमकृत्रिमं कृत्रिमञ्च । अकृत्रिमं स्वयम्भूतं स्वयम्भु बाणलिङ्गादि । कृत्रिमं निर्म्मितं धातुलिङ्गादि । सिद्धान्तशेखरे ।
“तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलं तथा ।
प्रत्येकं त्रिविधं ज्ञेयं लिङ्गं तदुभयात्मकम् ॥
प्रासादे स्थापितं लिङ्गमचलं तच्छिलादिजम् ।
स्थापितं अचलं गेहे स्थिरं लिङ्गमयोजिते ॥
पञ्चधा तत् स्थितं लिङ्गं स्वयम्भु देवपालकम् ।
आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते ॥”
सिद्धान्तशेखरे ।
“नानाच्छिद्रसुसंयुक्तं नानावर्णसमन्वितम् ।
अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते ॥
तत् लिङ्गन्तु स्वयम्भूतमपरं लक्षणच्युतम् ।
स्वयम्भु लिङ्गमित्युक्तं तच्च नानाविधं मतम् ॥
शङ्खाभमस्तकं लिङ्गं वैष्णवं तदुदाहृतम् ।
पद्माभमस्तकं ब्राह्मं छत्राभं शाक्रमुच्यते ॥
शिरोयुग्मं तथाग्नेयं त्रिपदं याम्यमीरितम् ।
खड्गाभं नैर्ऋतं लिङ्गं वारुणं कलशाकृति ॥
वायव्यं ध्वजवल्लिङ्गं कौवेरन्तु गदान्वितम् ।
ईशानञ्च त्रिशूलाभं लोकपालादिभिःकृतम् ।
स्वयम्भु लिङ्गमाख्यातं सर्व्वशास्त्रविशारदैः ॥”
इति स्वयम्भु लिङ्गलक्षणम् ॥*॥
मत्स्यसूक्ते ।
“दृष्ट्वा लिङ्गं महेशस्य स्वयम्भूतस्य पार्व्वति ।
सर्व्वपापविनिर्मुक्तः परे ब्रह्मणि लीयते ॥”*॥
एतेषां पूजाफलन्तु तत्रैव ।
“शिवेभ्यो चाचलं मुक्त्यै भुक्तये चानुवक्रतः ।
पार्थिवं भुक्तये प्रोक्तं मुक्तये चानुवक्रतः ॥
एवं वै दारुजं ज्ञेयं चित्रलिङ्गं तथा पुनः ।
स्थिरलक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदञ्च तत् ।
पुत्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम् ॥”
पद्मपुराणम् ।
“पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकम् ।
[illegible] [illegible] [illegible] सर्व्वकामदम् ॥”

वीरमित्रोदय[illegible]
“सर्व्वा चन्द्रप्रदा भूमि[illegible]
[illegible]: [illegible] भवति [illegible]
[illegible] प्रकाशकाः सर्व्वे [illegible]
नानावर्णास्तु विज्ञेया [illegible]
वज्राद्याः स्फाटिकाद्याश्च शुक्लादि[illegible]
[illegible]
सर्व्वकामप्रदं पुंसां लिङ्गं तात्कालिकं [illegible]
लक्षणसमुच्चये ।
“गान्धं सौभाग्यदं लिङ्गं पैष्टं [illegible]
[illegible]
तथा ।
“नानागुडोद्भवं लिङ्गं नानाकामप्रदायकम् ।
सैकतं गुडदं लिङ्गं सौभाग्याय च वालजम् ।
उच्चाटने तु पाषाणं मौलं शत्रुक्षयावहम् ।
तात्कालिकं दरिद्रश्च कृत्वा भक्त्या समर्च्चयेत् ।
तथा ।
“कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य [illegible]
कुङ्कुमस्य त्रयश्चैव शशिना च चतुःसमम् ।
एतद्वै गन्धलिङ्गन्तु कृत्वा संपूज्य भक्तितः ।
शिवसायुज्यमाप्नोति बन्धुभिः सहितो नरः ।
काम्यं पुष्पमयं लिङ्गं चयगन्धसमन्वितम् ।
नवखण्डां धरां भुक्त्वा गवेशोऽधिपतिर्भवेत् ।
रजोभिर्निर्म्मितं लिङ्गं यः पूजयति भक्तितः ।
विद्याधरपदं प्राप्य पश्चात् शिवसमो भवेत् ।
श्रीकामो गोशकृल्लिङ्गं कृत्वा भक्त्या प्रपूजयेत् ।
खण्डेन कापिलेनैव गोमयेन प्रकल्पयेत् ।
काम्यं यष्टिकमं लिङ्गं यवगोधूमशालिजम् ।
श्रीकामः पुष्टिकामश्च पुत्रकामस्तदर्च्चयेत् ।
सितास्वण्डमयं लिङ्गं काम्यमारोग्यवर्द्धनम् ।
यद्वा लवणजं लिङ्गं तालजिकटुकान्वितम् ।
नवनीतमयं लिङ्गं संपूज्य बुद्धिवर्द्धनम् ।
लवणेन च सौभाग्यं पार्थिवं सर्व्वकामदम् ।
कामदं तिलपिष्टोत्थं तुषोत्थं मारणे [illegible]
भस्मोत्थं सर्व्वफलदं गुडोत्थं प्रीतिवर्द्धनम् ।
गन्धोत्थं गुणदं भूरि शर्करोत्थं सुखप्रदम् ।
वंशाङ्कुरोत्थं वंशकरं गोमयं सर्व्वरोगहम् ।
केशास्थिसम्भवं लिङ्गं सर्व्वशत्रुविनाशनम् ।
लोभर्मे मारणे पिष्टमयं लिङ्गमुत्तमम् ।
दारिद्र्यदं द्रुमोद्भूतं पिष्टं वारक्षतप्रदम् ।
दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम् ।
धान्यदं धान्यजं लिङ्गं फलोत्थं फलदं भवेत् ।
पुष्पोत्थं दिव्यभोगायुर्मन्त्रे [illegible]
नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम् ।
दूर्व्वाकाण्डसमुद्भूतमपमृत्युविनाशनम् ।
कर्पूरसम्भवं लिङ्गं नृणां वै भुक्तिमुक्तिदम् ।
अयस्कान्तं मणौ तु ज्ञेयं [illegible]
इति मत्स्यपुराणम् ।
“सर्व्वं भक्तिमयं [illegible] तव [illegible]
यमलिङ्गं महाभूत्यै सौभाग्याय च [illegible]
[illegible]
[illegible]

काणीदं वज्रुणितं स्फाटिकं सर्व्वकामदम् ।
वाणमखिलं प्रभुत्वार्थं मौक्तिकं तथा ॥
ापद्मं हीरकं प्रोक्तं रोगच्छौक्तिकोद्भवम् ।
प्रवात् पुष्पकं तीर्थं वैदूर्य्यं शत्रुदर्पहृत् ।
ीवं लक्ष्मीप्रदं प्रोक्तं स्फाटिकं सर्व्वकामदम् ॥"
इति सारसंग्रहः ॥
महाभुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम् ।
ारकूटं तथा कांस्यं चैव सामान्यमुक्तिदम् ॥
पुष्पीलायसं लिङ्गं शत्रूणां नाशने हितम् ।
ौमिदं कांस्यजं लिङ्गं राजतं पुत्त्रवर्द्धनम् ॥
ात्रं भुक्तिमुक्त्यर्थं मिश्रजं सर्व्वसिद्धिदम् ॥"
इति कालोत्तरतन्त्रम् ॥
ैव शिवनारदसंवादे ।
पितृणां मुक्तये लिङ्गं पूज्यं रजतसम्भवम् ।
मज्जं सत्यलोकस्य प्राप्तये पूजयेत् पुमान् ।
पयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः ॥"
ाख्तक ।
ताम्रलिङ्गं कलौ नार्च्चेत् रैत्यस्य सीसकस्य च ।
रक्तचन्दनलिङ्गञ्च शङ्खकांस्यायसं तथा ॥" * ॥
ाहकाभेदतन्त्रे १२ पटले ।
पार्थिवे शिवपूजायां सर्व्वसिद्धियुतो भवेत् ।
ाणे शिवपूजायां द्विगुणं फलमीरितम् ॥
र्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम् ।
र्व्वसिद्धीश्वरो रौप्ये फलं तस्माच्चतुर्गुणम् ॥
ल्ये पुष्टिं विजानीयात् कांस्ये च धनसंचयः ।
ापाणे शतगुणं लाक्षायां रोगवान् भवेत् ॥
ाटिके सर्व्वसिद्धिः स्यात्तथा मरकते प्रिये ।
ौहलिङ्गे रिपोर्नाशं कामदं भस्मलिङ्गकम् ॥
ाम्रकायां काम्यसिद्धिर्गोमये रिपुहिंसनम् ।
र्णलिङ्गस्य माहात्म्यं धर्म्मकामार्थमोक्षदम् ।
स्कारेण विना देवि पाषाणादौ न पूजयेत् ॥"
त्संस्कारस्तत्रैव यथा,—
रौप्यञ्च स्वर्णलिङ्गञ्च स्वर्णपात्रे निधाय च ।
ादुत्तोल्य तल्लिङ्गं दुग्धमध्ये दिनत्रयम् ॥
ाम्नकेन स्नापयित्वा कालरुद्रं प्रपूजयेत् ।
डशोपचारेण वेत्ताश्च पार्व्वतीं यजेत् ॥
ादुत्तोल्य तल्लिङ्गं गङ्गातोये दिनत्रयम् ।
ो वेदोक्तविधिना संस्कारमाचरेत् सुधीः ॥"
चवहीनलिङ्गपूजने दोषो यथा,—
िङ्गं सलक्षणं कुर्य्यात् सर्व्वलिङ्गमलक्षणम् ।
ंहीने भवेद्व्याधिरधिके शत्रुवर्द्धनम् ॥
ाहीने विनाशः स्यादधिके च शिशुक्षयः ।
ारे चाधिके हीने राष्ट्रनाशो भवेत् ध्रुवम् ॥
ठहीने तु दारिद्र्यं शिरोहीने कुलक्षयः ।
वलनिहीने च राज्ञो राष्ट्रञ्च नश्यति ।
ात् सर्व्वप्रयत्नेन लिङ्गं कुर्य्यात् सलक्षणम् ॥"
च लिङ्गप्रमाणम् ।
देव्युवाच ।
िङ्गप्रमाणं देवेश कथयस्व मयि प्रभो ।
र्थिवे च शिलादौ च विशेषो यत्र तद्वदेत् ॥
श्रीशिव उवाच ।
िकातोलकं ग्राह्यमथवा तोलकद्वयम् ।

एतदन्यन्न कुर्व्वीत कदाचिदपि पार्व्वति ! ॥"
इति मातृकाभेदतन्त्रे ७ पटलः ॥
अपि च ।
"मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।
निर्म्मलस्य प्रमाणेन चटनं कारयेद्बुधः ।
अङ्गुष्ठपर्व्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत् ॥"
इति षट्कर्म्मदीपिकाधृतविश्वसारतन्त्रम् ॥ * ॥
चिक्कणीकरणमुक्तं कालोत्तरे ।
"लिङ्गे वेद्यां तथा पीठे समस्तञ्च निपातनात् ।
समञ्चैव विजानीयात् चिक्कणीकरणन्त्विदम् ॥"
मृत्तिकाभेदेन ब्राह्मणादीनां पूजाफलस्य प्रश-
स्तत्वमुक्तं तत्रैव ।
"शुक्लं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स एव परमेशानि त्रिवर्गफलभाग्भवेत् ॥
क्षत्त्रियस्तु वरारोहे रक्तं निर्म्माय पार्थिवम् ।
पूजयेत् सततं यस्तु त्रिवर्गफलभाग्भवेत् ॥
हरितं पार्थिवं देवि निर्म्माय यस्तु पूजयेत् ।
स च वैश्यो महेशानि त्रिवर्गफलभाग्भवेत् ॥
कृष्णं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स शूद्रः परमेशानि त्रिवर्गफलभाग्भवेत् ॥
शिलादौ च महेशानि स्थूलञ्च फलदायकम् ।
अङ्गुष्ठमानं देवेशि यद्वा हेमाद्रिमानकम् ॥
क्रमेण देवदेवेशि फलं बहुविधं लभेत् ।
स्थूलात् स्थूलतरं लिङ्गं वदाम्यहं परमेश्वरि ।
पूजनाद्गौरवाद्देवि फलं बहुविधं स्मृतम् ॥"
स्थूलात् स्थूलतरमिति पार्थिवलिङ्गेतरपरम् ।
मृत्तिकातोलकं ग्राह्यमित्यादिवचनात् ॥ * ॥
शिलास्फाटिकमरकतादीनां चिक्कणीकरण-
मुक्तम् । यथा,—
"शिवलिङ्गस्य यन्मानं तन्मानं दक्षवक्त्रयोः ।
योन्यग्रमपि यन्मानं तदधोऽपि तथा भवेत् ॥"
इति लैङ्गम् ॥
"लिङ्गस्य यादृग्विस्तारः परिणाहोऽपि तादृशः ।
लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसम्मिता ॥
कुर्व्वीताङ्गुष्ठतो ह्रस्वं न कदाचिदपि क्वचित् ।
रत्नादिशिवनिर्म्माणे मानमिच्छावशाद्भवेत् ॥"
इति तन्त्रान्तरम् ॥
लिङ्गशब्दव्युत्पत्तिर्यथा,—
"आकाशं लिङ्गमित्याहुः पृथिवी तस्य
पीठिका ।
आलयः सर्व्वदेवानां लयनाल्लिङ्गमुच्यते ॥"
इति स्कन्दपुराणम् ॥ * ॥
लिङ्गमहिमा यथा,—
शिव उवाच ।
"न तुष्याम्यर्च्चितोऽत्यर्थं पुष्पधूपनिवेदनैः ।
लिङ्गेऽर्च्चिते तथात्यर्थं परं तुष्यामि पार्व्वति ॥
एव देवि पुरा सृष्टे लीनोऽहं सर्व्वदैवतैः ।
लिङ्गत्वाल्लिङ्गमित्युक्तं सदेवासुरकिन्नरैः ॥
प्रयच्छामि दिवं देवि यो मल्लिङ्गार्च्चने रतः ।
त्यक्त्वा सर्व्वाणि पापानि निर्म्मलो दग्धकल्मषः ।
अन्यथा मनमस्कारी मामेव प्रतिपद्यते ॥"
इति वीरमित्रोदयधृतस्कन्दपुराणम् ॥ * ॥

शवविशेषेण पूजादिफलमपि तत्रैव ।
"पञ्चपूतस्थले लिङ्गं स्थापित्वा मम मानवाः ।
अश्वमेधसहस्राणां फलमाप्नोति सत्तमः ॥
सुगन्धिचन्दनरसैर्लिङ्गमालिप्य भक्तितः ।
आलिप्यते सुरस्त्रीभिः सुगन्धैश्चन्दनैर्नरैः ॥" * ॥
लिङ्गपूजनाकरणे दोषस्तत्पूजाफलञ्च तत्रैव
शिवनारदसंवादे ।
"विना लिङ्गार्च्चनं यस्य कालो गच्छति नित्यशः ।
महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः ॥
एकतः सर्व्वदानानि व्रतानि विविधानि च ।
तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः ॥
न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि ।
विद्यते सर्व्वशास्त्राणामेष एव सुनिश्चितः ॥
भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम् ।
पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात् ॥
सर्व्वमन्यत् परित्यज्य क्रियाजालमशेषतः ।
भक्त्या परमया विद्वान् लिङ्गमेकं प्रपूजयेत् ॥"
इति स्कन्दपुराणम् ॥ * ॥
"अश्वमेधसहस्राणि वाजपेयशतानि च ।
महेशार्च्चनपुण्यस्य कलां नार्हन्ति षोडशीम् ॥"
इति मत्स्यसूक्ते १६ पटलः ॥ * ॥
"स्वयं नारायणः प्रोक्तो यदि शम्भुं प्रपूजयेत् ।
स्वर्गे मर्त्त्ये च पाताले ये देवाः संस्थिताः सदा ।
तेषां पूजा भवेद्देवि शम्भुनाथस्य पूजनात् ॥"
इति मातृकाभेदतन्त्रम् ॥ * ॥
षट्कर्म्मदीपिकायाम् ।
"असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भु-
सेवनम् ॥" * ॥
अथ पारदशिवलिङ्गमाहात्म्यम् ।
"ज्योतिर्म्मयं महालिङ्गं कैलासनगरे प्रिये ।
तस्यैव षोडशांशेन काश्यां विश्वेश्वरः स्थितः ॥
पूर्णलिङ्गं महेशानि शिवयोनं न चान्यथा ।
शिलामध्ये यथा चक्रं लक्ष्मीनारायणः परम् ।
पारदस्य शतांशेन लक्ष्मीनारायणो न हि ॥
पकारं विष्णुरूपञ्च आकारं कालिका स्वयम् ।
रेफं शिवं दकारञ्च ब्रह्मरूपं न चान्यथा ॥
पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् ।
यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः ॥"
इति मातृकाभेदतन्त्रे ७ पटलः ॥
तस्य निर्म्माणविधानं पारदशब्दे द्रष्टव्यम् ॥ * ॥
प्रकारान्तरशिवलिङ्गोत्पत्तिर्यथा,—
"ततो विवाहे निर्व्वृत्ते सन्तुष्टा यथागताः ।
गताः सर्व्वे महेशोऽपि सत्या सह तदा सह ।
जगाम रेमे सत्या च चिरं निर्भरमानसः ।
अथ काले कदाचित्तु सत्या सह महेश्वरः ।
रेमे न प्रेमे तं सोढुं सती सासीदभवत्तदा ।
उवाच दीनया वाचा देवदेवं जगद्गुरुम् ॥
भगवन् हि शक्नोमि तव भारं सुदुःसहम् ।
सम्भ्रम मां महादेव कृपां कुरु जगत्पते ॥
निशम्य वचनं तस्या भगवान् वृषभध्वजः ।
निर्भरं रमणं चक्रे नाहं निर्दयमानसः ॥

हत्वा संपूर्णरमणं सती च क्षतमैथुना ।
उत्थानाय मनश्चक्रे उभयोस्तेन उत्तमम् ।
पपात धरणीपृष्ठे तेव्याप्तमखिलं जगत् ॥
पाताले भूतले स्वर्गे शिवलिङ्गास्तदाभवन् ।
तेन भूता भविष्याश्च शिवलिङ्गाः सयोनयः ॥
यत्र लिङ्गं तत्र योनिर्यत्र योनिस्ततः शिवः ।
उभयोश्चैव तेजोभिः शिवलिङ्गं व्यजायत ॥”

इति नारदपञ्चरात्रे ३ रात्रम् ॥ * ॥

कामनाभेदे पार्थिवशिवलिङ्गसंख्या यथा,—
“संख्या पार्थिवलिङ्गस्य यथाकामं निगद्यते ।
स्थलिङ्गं पार्थिवं नाम भुक्तिमुक्तिकरं परम् ॥
देशकालादिकं ज्ञात्वा कुर्य्यात् लिङ्गं फलप्रदम् ।
न करोति यदा ज्ञात्वा न कार्य्यं तस्य सिध्यति ॥
विद्यार्थी शतसाहस्रं धनार्थी च तदर्द्धकम् ।
पुत्रार्थी सार्द्धसाहस्रं कन्यार्थी च शतत्रयम् ॥
विद्वान् लिङ्गायुतं कुर्य्यात् सर्व्वपापहरं परम् ।
राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम् ॥
मोक्षार्थी कोटिगुणितं भूतिकामः सहस्रकम् ।
रूपार्थी त्रिसहस्रन्तु तीर्थार्थी द्विसहस्रकम् ।
सुहृत्कामः सहस्रन्तु वस्त्रार्थं शतमष्टकम् ॥
मारणार्थं सप्तशतं मोहनार्थं शताष्टकम् ॥
उच्चाटनपरश्चैव सहस्रन्तु यथोक्ततः ।
स्तम्भने च सहस्रन्तु दारणे च तदर्द्धकम् ॥
महाराजभये पञ्चशतञ्चापदि सङ्कटे ।
सहस्रमयुतं सर्व्वकामदं परिकीर्त्तितम् ॥
एकं पापहरं प्रोक्तं द्विलिङ्गञ्चार्थसिद्धिदम् ।
त्रिलिङ्गं सर्व्वकामानां कारणं परमीरितम् ॥”
तथा ।
“लिङ्गानामयुतं कृत्वा पूजा राजभयं हरेत् ।
सहस्राणि च लिङ्गानां निगड़ान्मोचयेद्ध्रुवम् ॥
कारागृहविमुक्त्यर्थमयुतं कारयेद्बुधः ।
डाकिन्यादिभये पञ्चसहस्रं कारयेत्तथा ।
सहस्राणाञ्च पञ्चाशदपुत्रो हि प्रकारयेत् ॥”

इति वीरमित्रोदयधृतम् ॥

“अनेन च क्रमाद्देवि लक्षं यस्तु प्रपूजयेत् ।
सर्व्वाभीष्टफलं देवि लभते नात्र संशयः ॥” * ॥
एकीकृत्य लिङ्गपूजाविधिनिषेधौ यथा,—
“एकीकृत्य महेशानि युगलं न तु पूजयेत् ।
एकीकृत्य महेशानि दश पञ्च शतानि च ॥
प्रत्येकेनाथवा देवि विल्वपत्रैः प्रपूजयेत् ।
एकैकं पूजयेल्लिङ्गं युगलं न तु पूजयेत् ।
दरिद्रो जायते देवि युगलस्य च पूजनात् ॥”

इति लिङ्गार्च्चनतन्त्रम् ॥ * ॥

शिवलिङ्गमृत्तिकादिनिरूपणं यथा,—
“तीर्थमृत्तिकां समाहृत्य निर्म्माय लिङ्गमद्भुतम् ।
तीर्थाभावे महेशानि शुभस्य मृत्तिका प्रिये ॥
पर्व्वतप्रभवा देवि नदीनाञ्चैवदुदाहृतम् ।
एतस्मिन् महेशानि नदी शुभा इति प्रिये ॥
निर्झरस्य च देवेशि नदी सम्पत्प्रदायिनी ।
सर्व्वाभावे महेशानि गोष्पदस्थाञ्च मृत्तिकाम् ।
अथवा परमेशानि यत्र चित्तं प्रसीदति ॥
सुपीनं सुन्दरं रम्यं शर्करारहितं सदा ।
निर्म्माय पार्थिवं लिङ्गं कुक्कुटीवर्ज्जितं प्रिये ॥
यो लिङ्गं परमेशानि स बद्धः परमेश्वरः ।
कुण्डली वेष्टनी तस्य सा देवी परमेश्वरी ॥
शिवस्य पूजनात् देवि देवीदेवौ च पूजितौ ॥”

इति मत्स्यसूक्तम् ॥ * ॥

वाणलिङ्गनिर्म्माल्यग्रहणे प्रतिप्रसवो यथा,—
“वाणलिङ्गे न चाशौचं न च निर्म्माल्यकल्पना ।
सर्व्वं वाणार्पितं ग्राह्यं भक्त्या भक्तैश्च नान्यथा ॥
ग्राह्याग्राह्यविचारोऽयं वाणलिङ्गे न विद्यते ।
तदर्पितं जलं पत्रं ग्राह्यं प्रसादसंज्ञया ॥
वाणलिङ्गे स्वयम्भूते चन्द्रकान्तमसंस्थिते ।
चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणे ॥”

इति शिवनारदसंवादः ॥

शिवलोकः, पुं, (शिवस्य लोकः ।) कैलासः । यथा,
“विल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत् सकृत् ।
सर्व्वपापैर्व्विनिर्म्मुक्तः शिवलोके महीयते ॥”

इति तिथ्यादितत्त्वधृतभविष्यपुराणम् ॥

शिवस्य भुवनं जगच्च ॥

शिववल्लभा, स्त्री, (शिवस्य वल्लभा ।) शतपत्री ।
इति राजनिर्घण्टः ॥ शिवप्रिये. त्रि ॥

शिववल्लिका, स्त्री, (शिवस्य वल्लिका ।) लिङ्गिनी ।
इति राजनिर्घण्टः ॥

शिववल्ली, स्त्री, ( शिवस्य वल्ली । ) लिङ्गिनी ।
श्रीवल्ली । इति राजनिर्घण्टः ॥

शिववाहनः, पुं, ( शिवस्य वाहनः । ) अनड्वान् ।
इति राजनिर्घण्टः ॥

शिववीजं, क्ली, ( शिवस्य वीजम् । ) पारदः ।
इति राजनिर्घण्टः ॥

शिवशेखरः, पुं, ( शिवः सुखकरः शिवप्रियो वा शेखरोऽग्रो यस्य । ) वकवृक्षः । इति जटाधरः ॥ धुस्तूरः । इति राजनिर्घण्टः ॥ शिवस्य मस्तकञ्च ॥

शिवसायुज्यं, क्ली, ( शिवस्य सायुज्यम् । ) मोक्षविशेषः । स च शिवेन सह योगः । यथा ।
नागरखण्डे ।
“उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ।
अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात् ॥”

इति तिथ्यादितत्त्वम् ॥

शिवसुन्दरी, स्त्री, ( शिवस्य सुन्दरी । ) दुर्गा ।
इति तन्त्रशास्त्रम् ॥

शिवा, स्त्री, ( शिव + टाप् । ) दुर्गा । मुक्तिः ।
यथा,—
“शिवा मुक्तिः समाख्याता योगिनां मोक्षगामिनी ।
शिवाय यां जपेद्देवीं शिवा लोके ततः स्मृता ॥”

इति देवीपुराणे ४५ अध्यायः ॥

अपि च ।
“शिवा कल्याणरूपा च शिवदा च शिवप्रिया ।
प्रिये दातरि वाग्भवः शिवा तेन प्रकीर्त्तिता ॥”

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५७ अध्यायः ॥

अपरञ्च ।
“शिव कल्याणवचन एकारोत्कृष्टवाचकः ।
समूहवाचकश्चैव चाकारो दातृवाचकः ।
श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्त्ति[ता]
शिवराशिस्वर्त्तिमती शिवा तेन प्रकीर्त्ति[ता]
शिवो हि मोक्षवचनश्चाकारो दातृवाच[कः]
स्वयं निर्व्वाणदात्री या सा शिवा परिकीर्त्ति[ता]
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २० अ[ध्यायः]
शमीवृक्षः । हरीतकी । शृगालः । [...]
लकी । इत्यमरः ॥ आमलकी । इति मेदि[नी]
मुद्गशक्तिविशेषः । स तु शार्ङ्गिमिश्रमा[...]
इति त्रिकाण्डशेषः ॥ हरिद्रा । दूर्वा । [...]
चना । इति राजनिर्घण्टः ॥ * ॥ शृगाल[...]
ध्वनेः शुभाशुभं यथा,—
“शोभनं शुभफलाभिलक्षणं
कथ्यतेऽवितथं शिवारुतम् ।
शान्तदीप्तककुभो विशेषतो
ज्ञानमत्र च सदोपयुज्यते ॥
दग्धा दिगुक्ता दिननाथमुक्ता
विवस्वदाप्ता भवति प्रदीप्ता ।
सा धूमिता यां सविता प्रयातः
शेषा दिगन्ताः किल पञ्च शान्ताः ॥
दग्धा दिगैशी ज्वलिता दिगैन्द्री
प्रधूमिता चानलदिक्क्रमेण ।
प्रत्येकमेकं प्रहराष्टकेन
भुङ्क्ते दिशोऽष्टौ सविता क्रमेण ॥
आद्ये दिनस्य प्रहरे प्रहृष्टे
महेशदेवेशहुताशदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
अह्नो द्वितीये प्रहरस्य भागे
सहस्रनेत्रानलकालदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
शाक्रेऽतृतीये प्रहरे दिनस्य
हुताशवैवस्वतयातुदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
समागतेऽह्नः प्रहरे तुरीये
प्रेतेशरक्षःपतिपाशिदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
आद्ये निशायाः प्रहरे प्रहृष्टे
रक्षोऽधिपाशिःपतिवातदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
ततो द्वितीयप्रहरे रजन्या-
स्तोयोऽधिपानिलसोमदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
यामे तृतीयेऽपि च यामवत्याः
समीरसोमाकरशम्भुदिक्षु ।

शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
समारुते राक्षसुरीशयाम्ये
विद्याकरेशानसुरेशदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥”

इति शिवारुते दग्धदीप्तधूमितदिक्त्रययाम-प्रकरणं प्रथमम् ॥ * ॥

“इतीरितं दिक्त्रययामयोगात्
फलं विरुद्धं विरुतैः शिवायाः ।
ब्रूमोऽथ दिक्पञ्चकयामयोगात्
फलानि पुंसां क्रमशः शुभानि ॥
शान्तान्तरालोदयवाणिजेन्दु-
दिक्ष्वाद्ययामे रटितैः शृगाल्याः ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
ईशःप्रचेतोऽनिलसोमशम्भु-
दिक्षु द्वितीये प्रहरे रुतेन ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
अवेशवातेन्दुशिवामरेश-
दिक्ष्वारवेण प्रहरे तृतीये ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
समीरसोमेशसुरेशवह्नि-
दिक्षु स्वरेण प्रहरे चतुर्थे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
शशाङ्कवह्नीन्दुहुताशकाल-
दिक्ष्वारवैः पञ्चमयामभागे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
ईशानशक्राग्निकृतान्तरालो-
दिक्षु स्वरेण प्रहरे च षष्ठे
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
रक्षोऽग्निकालाम्बुपपाशपाणि-
दिक्ष्वारवैः सप्तमयामकाले ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥
यक्षान्तकानैर्ऋतपाशिवात-
दिक्ष्वष्टमे च प्रहरे रवेण ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
लाभः सुभिक्षं प्रियलोकसङ्गः ॥”

इति श्रीवसन्तराजे शिवारुते दिग्यामप्रकरणं द्वितीयम् ॥ * ॥

“एकादिकानां निशनाडिकानां
शिवारुतानामधुना वदामः ।
प्राच्यादिकाशस्य दिक्षु चैवं
वदृयन् फलं तत्तदुदीरयामः ॥
भयाभभीष्टाभिमभीष्टलाभं
पूर्वं ततोऽस्वेष्ट फलं शुभञ्च ।
भयं प्रयाणं कलहञ्च सौख्य-
मेकादिशब्दैः कुरुते प्रशान्ते ॥
भयाग्निदृष्टिश्रुतिरर्थहानि-
रिष्टैर्वियोगो महती च भीतिः ।
स्याद्विप्रहानिर्मरणञ्च दीप्ते
विकारीणा चेत् शतसप्तकेन ॥
ऐन्द्र्यां निनादे प्रथमेऽर्थलाभो
भवेद्द्वितीये निधिदर्शनञ्च ।
कन्यां तृतीये लभते चतुर्थे
बन्ध्वागमं पञ्चमकेऽथ सिद्धिम् ॥
षष्ठे रवे कुप्यति भूमिनाथो
भीः सप्तमे स्याद्विफलोऽष्टमेषु ॥
त्रासोऽग्निभागे प्रथमे द्वितीये
नराधिपः कुप्यति भीस्तृतीये ॥
वातश्चतुर्थे नगरस्य शब्दे
शिवाकृते पञ्चमके च युद्धम् ।
वदन्ति तज्ज्ञाः कलहञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
आद्ये शुभं स्यादशुभं द्वितीये
याम्ये महाव्याधिभयं तृतीये ।
स्वरे चतुर्थे स्वजनागमः स्यात्
पुत्रो भवेत् पञ्चम[illegible] ॥
जायेत कन्या रटिते च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
ग्रामस्य नाशो दिशि राक्षसाना-
माद्ये द्वितीयेऽपि च गोकुलस्य ॥
मृत्युस्तृतीये द्विचतुष्पदानां
हानिश्चतुर्थेऽपि च पञ्चमेऽत्र ।
चौराद्भयं राजभयञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
शब्दे शिवाया वरुणस्य भागे
आद्ये भयं हानिरथ द्वितीये ।
स्याद्राजदूतागमनं तृतीये
दाहश्चतुर्थे खलु चौरभीतिः ॥
स्यात् पञ्चमे राजभयञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
वायव्यभागे भयमेकशब्दे
भयातिरेको भवति द्वितीये ॥
वृष्टिस्तृतीये महती चतुर्थे
मेघागमो वर्षति पञ्चमे च ।
क्रोधं विधत्ते नृपतिश्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
दिश्युत्तरस्यां विहिते विरावे
म्रियेत कश्चित् प्रथमे द्वितीये ।
महाभयं विप्रवधस्तृतीये
चक्रं चतुर्थे खलु बध्यते च ॥
विट् पञ्चमे षड्रवे च भूमौ
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
राज्ञोऽन्यथा दर्शनमाद्यशब्दे
कीर्त्तिर्द्वितीये च तथोत्तरेण ॥
उल्काप्रपातश्च तु दुर्दिनञ्च
चतुर्थे भयं खलु पञ्चमे च ।
वह्नो भवेद्देहिवधेन षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
आद्ये भवेद्दुर्दिनमीशदेशे
वृष्टिर्द्वितीये च रवे शिवायाः ।
वातस्तृतीये त्वग्निश्चतुर्थे
म्रियेत कश्चित् खलु पञ्चमे च ।
लभेत पृथ्वीं निनदे च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।”

इति श्रीवसन्तराजे शिवारुते स्वराष्टकप्रकरणं तृतीयम् ॥ * ॥

“क्षेमलाभपुनरागमनानां
निश्चयं यमधिगम्य विशङ्कः ।
येन याति पथिकः परदेशं
तं शिवारुतमथ प्रथयामः ॥
यं यं देशं गन्तुमभ्युद्यतानां
पुंसां शब्दानुचरन्ती शृगाली ।
शान्तायां वा विशये वाञ्छितानां
दीप्तायान्तु स्यादभीष्टजयाय ॥
प्राचीं दिशं सम्मुखभानुबिम्बं
प्रतिष्ठमानस्य नरस्य यस्य ।
शब्दं शृगाली पुरतः करोति
वध्यं वधं वा प्रकरोति तस्य ॥
प्राचीदिगीशाभिमुखस्य पुंसः
प्रस्थानकामस्य शिवा सशब्दा ।
भियेऽर्थनाशाय च दक्षिणस्या-
श्चामा पुनर्वाञ्छितकार्यसिद्ध्यै ॥
प्रत्यक्कमाशां चलितस्य पूर्वां
शिवा विरावं पुरतस्य यस्य ।
करोति पृष्ठे प्रकरोति तस्य
सर्वप्रकारामभिलाषसिद्धिम् ॥
प्रस्थायिनो यस्य च दक्षिणाशां
शिवा रवं मुञ्चति दक्षिणेन ।
आदिक्षमुखा यदि गो तदाग्नौ
ध्रुवं भवेत्तस्य महीपतित्वम् ॥
वैवस्वताशां चलितस्य यस्य
दिवाकरस्तिष्ठति दक्षिणेन ।
शिवा च वामा कुरुते विरावं
सम्पद्यते तस्य समस्तमिष्टम् ॥
पुमान् यदा याम्यककुप्प्रयायी
करोति शब्दं पुरतः शृगाली ।
आस्ते विपक्षानपि सम्मुखश्चेत्
भवेत् तदानीमचिरेण मृत्युः ॥
नरस्य याम्यां ककुभं यियासोः
शृगालभार्या यदि पृष्ठभागे ।
चीत्कारमासूचति मानवस्य
मृत्युञ्च पुत्रेण भवत्यवश्यम् ॥
दिशं प्रतीचीं व्रजतः शृगाली
नरस्य वक्त्राभिमुखी विरौति ।
शान्ता स्थिता शान्तफलप्रदात्री
दीप्ता तु दीप्तं फलमातनोति ॥
प्राचेतसीं सञ्चलितस्य काष्ठां
शमाश्रिता नश्यति दक्षिणेन ।

यदा तदानीं सुबहून्यनर्थान्
करोति चार्थानपि हन्ति पुंसः ॥
दिशं प्रचेतःपरिपाल्यमानां
नरस्य यस्य व्रजतः शृगाली ।
वामा विरावं प्रकरोति शान्ता
भवन्त्यभिप्रेतफलानि तस्य ॥
यो वारुणीं याति दिशं मनुष्यः
शृण्वन् शिवाया रटितानि पृष्ठे ।
गतस्य तस्याशु कुताशभीति-
रसंशयं स्यात् द्रविणक्षयश्च ॥
यस्योत्तराशां चलितस्य पुंसः
प्राच्यां शिवा सूचति फेतुरुतानि ।
भानुःप्रतीच्यां विहितस्थितिश्चे-
दपेक्षितं सिध्यति तत्क्षणेन ॥
सुचत्युदीच्यां चलितस्य पृष्ठे
शिवा विरावं पुरुषस्य यस्य ।
आस्ते च मध्ये नभसो विवस्वां-
स्तस्यार्थहानिर्मरणं प्रदिष्टम् ॥
कुबेरकाष्ठां प्रति यः प्रयाति
ज्वालामुखी चाभिमुखी विरौति ।
तस्याध्वगस्याभिमतार्थसिद्धि-
र्भवेच्च सम्पत् पुनरागमश्च ॥
तिष्ठति तीक्ष्णकरो दिशि यस्यां
फेत् कुरुते यदि तत्र शृगाली ।
तद्व्रजतः पथिकस्य भवेतां
निश्चयतो धनजीवितनाशौ ॥
दक्षिणतः प्रथमं यदि पश्चात्
वामगता पथिकस्य शृगाली ।
फेत् कुरुते कुरुते तदवश्यं
क्षेमधनाप्तिसुखागमनानि ॥
अध्यास्य शान्तां ककुभं नरस्य
वामा शृगाली यदि वा रटन्ती ॥
तदार्थलाभं वितरत्यवश्य-
मर्थक्षयं दक्षिणतो रटन्ती ॥
वामा प्रदीप्ते ककुभः प्रदेशे-
ऽलाभं तथानर्थमुपादिशन्ति ।
शिवा रटन्ती पथि दक्षिणा तु
विपत्त्यनर्थांश्च बहूंस्तु ॥
शान्ते दिगन्ते यदि वा प्रदीप्ते
पृष्ठे प्रयाणे प्रतिषेधविज्ञी ।
प्रव्याहरमाणा तु शिवा पुरस्तात्
विमध्यफलाप्रदगाधविज्ञौ ॥
वामेऽपसव्ये पुरतोऽथ पृष्ठे
पुंसः शिवा जल्पति यत्र तत्र ।
आयान्ति चौराः प्रथमे विरावे
द्वयोर्भवेत्तस्करदर्शनञ्च ।
तृपादतोऽर्थागमनं तृतीये
तुर्य्ये च्युतिः पञ्चमकेऽर्थलाभः ।
षाडिङ्गकैर्भ्रादियनाय षष्ठे
भीः सप्तमे स्यादिपणोऽष्टमस्तु ॥
हाहारवं सूचति कष्टभावा
दाहं तु कुर्वन्त्यदुराधरन्ति ।

अग्रेसरा वा पथि वा विशाखीः
वा हिमप्रकारापि मनोरथाप्तेः ॥
नृपस्य यात्रासमये पुरस्तात्
प्रयाति फेत्कं निवेदयन्ती ।
कुर्य्यात्क्षिवा वैरिपराभवं त-
ज्जयश्रियश्चाभिमतं विदध्यात् ॥
कार्य्यान्तरेष्वप्यनुगम्यमाना
श्रेयःप्रदा शान्तदिशि प्रदिष्टा ।
शिवा प्रदीप्ते तु दिशि प्रदेशे
समारटन्ती महते भयाय ॥
भयोत्तमे दीप्तदिशि प्रदीप्ते-
र्नादैर्नृणां हन्ति भयानि देवी ।
महान्ति सर्व्वाण्यपि शान्तनादाः
शान्तस्थिता सर्व्वभयप्रदात्री ॥
यदा च नद्युत्तरगा नराणां
शब्दं शृगाली कुरुते कदाचित् ।
तटद्वये तत् परिरक्षणीयं
महद्भयं भावि जलेचरेभ्यः ॥"
इति श्रीवसन्तराजे शिवारुते यात्राप्रकरणं चतुर्थम् ॥ * ॥
"स्थानस्थितानामपि योगभाजां
नैमित्तिकानामुपदिश्यते तु ।
शिवाविरावैरशिवं शिवञ्च
सुनिश्चितार्थं मुनिसम्मतेन ॥
करोति फे फे इति सर्व्वदिक्षु
यदा तदा स्थानविघातयुद्धे ।
शिवा विधत्ते क्षुधिता त्वसंख्यान्
रौद्रान् स्वरान् सूचति फेरुपेक्षाम् ॥
निरन्तरं रौति विदिक्षु दिक्षु
समन्दकारुण्यरवातुरा फेत् ।
अपत्यमोहेन यदा शृगाली
तन्मृत्युहा सा कथितेह तज्ज्ञैः ॥
स्थित्वा प्रदीप्ते ककुभो विभागे
ज्वालामुखी फेत् कुरुतेऽतिरौद्रम् ।
ग्रामस्य तस्य प्रकरोति नाशं
तस्याथवा तिष्ठति यस्य मध्ये ॥
ग्रामस्य मध्यं समवाप्य यस्य
ज्वालामुखी सूचति फेतुरुतानि ।
स शून्यतां गच्छति निश्चयेन
लोकस्य वा स्यादसुखं प्रभूतम् ॥
ग्रामान्तिके सप्त दिनानि यावत्
महाभयोत्पादितफेतुरुतानि ।
विरौति फेत्कृत् कुरुते शृगाली
महाविलोकस्य भयं प्रभूतम् ॥
मध्यं दिने यावदहानि पञ्च
शिवा समीपे नगरस्य यस्य ।
विरौति घातं विदधाति तस्य
भयञ्च वह्निप्रभवं प्रभूतम् ॥
पश्चार्द्धरात्रावपि कथञ्चिदेषा
क्रूरारवा व्याहरते शृगाली ।
यस्यान्तिके तं सहसो रुदेव
मुष्णन्ति चौरा अपवासितेषु ॥

ग्रामस्य मध्योपगता यदीयं
दिनानि पञ्चाथ रौति प्रभाते ।
स्वरेण रौद्रेण शृगालभार्य्या
स्यात्तत्र हानिर्महती नराणाम् ॥
सुरक्षितस्यापि मनुष्यवर्गे-
र्ग्रामस्य घोरं भयमत्र विद्यते ।
अयं दिनानां दिवसावसाने
शिवा रटन्ती यवयस्वरेण ।
दिग्वारटन्ती सकलात्तु रौद्रं
भ्रमत्यखिन्ना परितः पुरश्चेत् ।
शृगालभार्य्या खलु तद्ब्रवीति
पुरं महत्तत्र महाभिघातम् ।
ज्वाला विमुच्यातिरौद्रनादा
समाकुला धावति या समन्तात् ।
कौमारकं वा जनयत्यकस्मात्
कुर्य्यात्क्षिवा वा युवराजपातम् ।
रोमोद्गमं या जनयत्यकस्मात्
फे इत्यतिक्रूररवा नराणाम् ।
मूत्रं पुरीषञ्च तुरङ्गमाणां
वा सर्व्वदा स्यादशिवा शिवेह ।
तरङ्गिणीरोधसि सौम्यरूपा-
ण्यौन् पञ्च वा सूचति या निनादान् ।
शिवां शिवां तां नृपतिस्तदानीं
वन्देत देवीमभिवन्दनीयाम् ॥
श्मशानभूमौ दिनमध्यभागे
मध्ये रजन्याः स्वगृहप्रदेशे ।
या रौति तस्यै बलिमर्घ्ययुक्तं
भक्त्या प्रदद्याद्यदि भद्रमिच्छेत् ।
सर्व्वेषु कार्य्येषु समुद्यतेषु
बलिः शिवाया विनिवेदनीयः ।
गृह्णाति यस्मिन् विषयेऽभ्युपेत्य
देवी बलिं जल्पति तत्र सिद्धिम् ।"
इति श्रीवसन्तराजे शिवारुते स्थानस्थितप्रकरणं पञ्चमम् ॥ * ॥
"कथ्यते बलिविधानमिदानीं
प्राक्तनागममतेन शिवायाः ।
दिव्यमन्त्रबलिबाधितदोषं
साधिताखिलसमुद्यतकार्य्यम् ॥
शून्यालयं वल्मीकं श्मशानं
चतुष्पथं मातृगृहं वनान्तम् ।
वल्मीकविवरमेवमाद्या
बलिप्रदानाय मताः प्रदेशाः ॥
तेषाञ्च मध्यादुचितप्रदेशे
विशोधितं मण्डलकं विदध्यात् ।
गौराभिकक्षोदमरीचितायाः
संगृह्य गोर्गोमयमन्तरीक्षात् ॥
अत्यन्तकौर्वदिदासा वस्त्रावाच चिह्नितः
रोमार्त्तनखक्षतावा न गोर्गोमयमाहरेत् ॥
तस्मिन् विचित्रं वितर्तं वितान-
पिष्टाक्तकैर्वाप्यथवा वरोचनम् ।
संपूजयेत्तत्र सुरार्चितार्थैः
क्रमेण चर्चापणि शीतरसानाम् ॥

मध्ये हुतैः पञ्चभिरन्वितैर्वा
शिवान्विता पिष्टमयी प्रयत्ना ।
पूज्या शिवा तुष्यति भक्तियोगात्
प्रभूतपुष्पाक्षतधूपदीपैः ॥
आज्यगुडौदनमाषकृशरै-
र्व्वटकपूपलिकाभिरथान्यैः ।
संभृतिरत्र नरासवमांसं
बुद्धिमता बलिकर्म्मणि कार्य्या ॥
प्राप्याष्टमीं वाथ चतुर्द्दशीं वा
संमन्त्र्य मन्त्रेण च सप्तशत्याः ।
बलिं शिवाया निशि निश्चयेन
दद्यान्मनुष्यो यदि भद्रमिच्छेत् ॥

अत्र मन्त्रः । ॐ शिवे ज्वालामुखि बलिं गृहाण गृहाण हुँ फट् स्वाहा । ॐ शिवे शिवदूति भगवति चण्डि इदमर्घ्यं बलिलीलासमुचितं गृहाण गृहाण आगच्छ आगच्छ वायुवेगेन शुभं कुरु कुरु स्वाहा । इत्यर्घ्यमन्त्रः । बलिदानाय मन्त्रान्तरम् । ॐ नमो भगवति एनं एनं बलिं गृह्ण गृह्ण गन्धपुष्पधूपदीपादिकं दह दह पच पच घोररूपिणि भो भगवति पिबत पिबत स्वाहा ।

एतस्य मन्त्रद्वितयस्य मध्या-
देकेन केनाप्यभिमन्त्रणीयः ।
बलिः शिवायाः सुमहाप्रभावं
पृथक् पृथक् मन्त्रयुगं वदेतत् ॥
ताम्बूलवस्त्रासनदक्षिणाभि-
र्नैमित्तिकं शाकुनशास्त्रदक्षम् ।
प्रपूजयेत्तत्र भवत्यभीष्ट-
माचार्य्यवर्य्ये परितोषिते हि ॥
अम्बिकावह्लितताम्रवस्त्र-
धिष्ठानि पूर्व्वाचितयेन सार्द्धम् ।
श्वेताश्च सत्यश्च विरौति येह
श्रेयस्करी जम्बुकगोष्ठिनी वा ॥
हितैषिणी सर्व्वसमीहितेषु
देवी भवानी भुवि भैरवा च ।
तनाधिवासा तपसा सदैव
शिवाव्रते तेन यतेत विद्वान् ॥"

इति श्रीवसन्तराजशाकुने सदागमार्य्यशोभने समस्तवस्तुकौतुके विरचितं शिवाव्रतं वृत्तम् ॥*॥
अथ तान्त्रिकशिवाबलिः । तदुक्तं कुलचूडामणौ ।
"विल्वमूले प्रान्तरे वा श्मशाने वाथ साधकः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥
काले कालीति वक्तव्यं ततः सा शिवरूपिणी ।
पशुरूपा समायाति परिवारगणैः सह ॥
हृष्टा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् ।
तदैव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यमाद्यं तथा सन्ध्यावन्दनं पितृतर्पणम् ।
तथैव कुलशैवानां नित्यता कुलपूजने ॥
पशुरूपां शिवां देवीं यो नार्च्चयति निर्ज्जने ।
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ॥
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ।
गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्ज्जने ॥
एकया भुज्यते यत्र शिवया देव भैरव ।
तत्रैव सर्व्वशक्तीनां प्रीतिः परमदुर्लभा ॥
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ।
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ॥
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ।
राजादिभयमापन्ने देशान्तरभयादिके ॥
शुभाशुभानि कर्म्माणि विचिन्त्य बलिमाहरेत् ।
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ॥
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ।
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ॥
यदि नो भुज्यते वत्स तदा नैव शुभं भवेत् ।
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ॥"
इति तन्त्रसारः ॥

**शिवाक्षं**, क्ली, (शिवस्याक्षि कारणत्वेनास्त्यस्येति । अच् ।) रुद्राक्षम् । इति राजनिर्घण्टः ॥ (अस्य विवरणं रुद्राक्षशब्दे द्रष्टव्यम् ॥)

**शिवाटिका**, स्त्री, वंशपत्री । इति भावप्रकाशः ॥

**शिवात्मकं**, क्ली, ( शिवः सुखकरः आत्मा स्वरूपं यस्य । ) सैन्धवम् । इति राजनिर्घण्टः ॥ शिवमये, त्रि ॥

**शिवानी**, स्त्री, ( शिवस्य भार्य्या । यद्वा, शिवं मङ्गलमानयतीति । आ + नी + डः । गौरादित्वात् ङीष् । ) दुर्गा । इति लोकप्रसिद्धिः ॥ जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

**शिवाप्रियः**, पुं, (शिवायाः प्रियः ।) छागः । इति त्रिकाण्डशेषः ॥ शिवस्य शिवाया अप्रियवस्तुनि शिवाया वल्लभे च त्रि ॥

**शिवापीडः**, पुं, ( शिवस्यापीड इव । ) वकवृक्षः । इति राजनिर्घण्टः ॥ शिवाशिवयोः शेखरश्च ॥

**शिवाफला**, स्त्री, ( शिवाया इव फलमस्याः । ) शमीवृक्षः । इति राजनिर्घण्टः ॥

**शिवारातिः**, पुं, ( शिवायाः शृगालस्यारातिः । ) कुक्कुरः । इति शब्दमाला ॥ शिवाशिवयोः शत्रुश्च ॥

**शिवालयं**, क्ली, ( शिवा आलीयतेऽत्रेति । आ + ली + अच् । ) श्मशानम् । इति हारावली ॥ (यथा, कथासरित्सागरे । ३ । ३३ ।
"ददर्श युद्धमानौ च पुरुषौ शून्ये शिवालये ॥")

**शिवालयः**, पुं, ( शिवायाः शिवस्य वा आलयः ।) रक्ततुलसी । इति शब्दचन्द्रिका ॥ शिवस्य गृहम् । यथा, रामार्च्चनचन्द्रिकायाम् ।
"चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥"
इति तिथ्यादितत्त्वम् ॥

**शिवालुः**, पुं, शृगालः । इति राजनिर्घण्टः ॥

**शिवा(ब)बलिः**, पुं, (शिवाभ्यो दीयमानो बलिः ।) रात्रौ शिवादेयमांसप्रधाननैवेद्यम् । यथा ।
अथ शिवाबलिः । कुलचूडामणौ ।
"बिल्वमूले प्रान्तरे वा श्मशाने वापि साधकः ।
मांसप्रधाननैवेद्यं सन्ध्याकाले निवेदयेत् ॥
काले कालीति वक्तव्ये तदा सा शिवरूपिणी ।
पशुरूपधराऽऽयाति परिवारगणैः सह ॥
हृष्टा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् ।
तदैव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यमाद्यं तथा सन्ध्यावन्दनं पितृतर्पणम् ॥
तथैव कुलशैवानां नित्यता कुलपूजने ।
पशुरूपां शिवां देवीं यो नार्च्चयति निर्ज्जने ॥
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ॥
गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्ज्जने ।
एकया भुज्यते यत्र शिवया देव भैरव ॥
तत्रैव सर्व्वशक्तीनां प्रीतिः परमदुर्लभा ।
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ॥
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ।
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ॥ * ॥
राजादिभयमापन्ने देशान्तरभयादिके ।
शुभाशुभानि कर्म्माणि विचिन्त्य बलिमाहरेत् ॥
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ।
यदि न भुज्यते वत्स तदा नैव शुभं भवेत् ॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ॥
नैवेद्योपरि मूलमन्त्रमष्टोत्तरशतं जप्त्वा बलिं दद्यादिति शिवः ।" इति तन्त्रसारः ॥

**शिवाह्वतिः**, स्त्री, जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

**शिवाह्लादः**, पुं, ( शिवस्याह्लादो यस्मात् । ) बकवृक्षः । इति राजनिर्घण्टः ॥ शिवस्यानन्दश्च ॥

**शिवाह्वा**, स्त्री, ( शिवेन आह्वा यस्याः । ) रुद्रजटा । इति राजनिर्घण्टः ॥ शिवनामके, त्रि ॥

**शिविः**, पुं, हिंस्रपशुः । इति त्रिकाण्डशेषः ॥ भूर्ज्जवृक्षः । राजविशेषः । स च उशीनरराजपुत्रः । इति मेदिनी ॥ तस्य चरितं यथा,—
मैत्रेय उवाच ।
"शृणु राजन् ! प्रवक्ष्यामि स्वमांसं शिविना यथा ।
समांसं दत्तवान् वत्सं पुरा औशीनरो युवा ॥
सत्यदानरतं ज्ञात्वा शिविमिन्द्राग्निमुख्यकौ ।
जिज्ञासार्थं समेयातां वर्त्तमाने महाध्वरे ॥
वह्निर्भूत्वा कपोतस्तु हरिश्श्येनपुरःसरः ।
शरणार्थी महीपालं निविष्टे भयविह्वलः ॥
पाहि मां पृथिवीपालेत्यवदत् श्येनजाद्भयात् ।
स तमाश्वासयामास कपोतं शरणागतम् ॥
राजानमुपगम्याथ श्येनः प्रोवाच संसदि ।
वचनं शृणु मे राजन् ! क्षुधार्त्तस्य कुटुम्बिनः ॥
धर्म्मात्मानं त्वामाहुर्व्वै पृथिव्यां सर्व्वपार्थिवाः ।
तदिदं कथं कर्म्म कर्त्तुमिच्छसि पार्थिव ॥
सर्व्वस्य सम्पदः स्वार्थाः परार्थास्तु कथञ्चित् ।
परार्था भवतो नित्यं सम्पदस्तु तरोरिव ॥
नोपकारपरेऽप्येवमुपकारपरो जनः ।
अपकारपरेऽपि त्वमुपकारपरः सदा ॥
ममैव विहितो धात्रा भक्ष्योऽयं त्वं वहस्व च ।

स श्येनमाह संप्राप्तश्चाहार्थो सन्निधौ मम ॥
तस्मात्त्वाहं न समर्पयिष्ये
कपोतकं श्येन वदस्व युक्तम् ।
त्वं मन्यसे तत् करवाणि सर्व्व-
न्वते कपोतात् खलु सत्यमत्र ॥
तुभ्यं हि सुमहद्राज्यं प्रयच्छामि विहङ्गम ।
यथा कामयसे चान्यद्वर्ज्जयित्वा कपोतकम् ॥
श्येनः प्राह किमेतत्ते प्रीतिरासीत् खगे दृढ़ा ।
कथञ्चिदस्य तुल्यानि स्वमांसानि प्रयच्छ मे ॥
राजा तमब्रवीद्धृष्टो यत्ते मांसानि याचसे ।
एतद्दयच्छामि ते सद्यः स्वमांसं तुलया धृतम् ॥
एवमुक्त्वा स्वमांसानि कपोतेन समं नृपः ।
उत्कृत्य तोलयामास प्रहृष्टो मनसा ततः ॥
तुलया ध्रियमाणस्तु कपोतो ह्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि ततः प्रादात् स पार्थिवः ।
न विद्यते यदा मांसं कपोतेन समं क्वचित् ।
ततः प्रक्षीणमांसोऽपि साधुः सुखयते परम् ॥
यदा तेन न तुल्यं तत् स तुलामारुहत् स्वयम् ।
अन्तःपुरचरस्त्रीषु न राज्ये न च जीविते ॥
तत्रस्थासक्तचित्तेन तेनापेक्षा कृता क्वचित् ।
परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि ॥
नापेक्षन्ते महात्मानः सर्व्वभूतहिते रताः ।
परार्थमुद्यताः सन्तः सन्तः किं किं न कुर्व्वते ॥
तादृगप्यम्बुधेर्व्वारि जलदैस्तत् प्रपीयते ।
एक एव सतां मार्गो यदङ्गीकृतपालनम् ॥
दहन्तमकरोत् क्रोडे पावकं यदपांपतिः ।
आत्मानं पीडयित्वापि साधुः सुखयते परम् ॥
ह्लादयन् तापितान् वृक्षो दुःखञ्च सहते स्वयम् ।
अथ तस्मिन् समारूढ़े पुष्पवर्षं पपात च ॥
देवदुन्दुभयो नेदुस्तुलामौशीनरे नृपे ।
ततस्तस्य तदा ज्ञात्वा वाक्यं चैतदभाषत ॥
शक्रः स्वरूपमास्थाय धर्म्मं राज्ञः परिस्थितिम् ।
इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवाहनः ॥
जिज्ञासमानौ त्वां राजन्निमं यज्ञमुपागतौ ।
महाकारुणिकेनेह यत् कृतं तत् सुदुष्करम् ॥
नैव पूर्व्वं नृपाश्चक्रुर्न करिष्यन्ति चापरे ।
यत्ते मांसानि गात्रेभ्यः समुत्कृत्तानि पार्थिव ॥
एषा ते शाश्वती कीर्त्तिर्लोकाननुभविष्यति ।
दिव्यरूपधरश्चैव पालयित्वा महीं चिरम् ॥
सर्व्वान् लोकानतिक्रम्य ब्रह्मलोकं गमिष्यसि ।
एवमुक्त्वा तमिन्द्राग्नी जग्मतुस्त्रिदशालयम् ।
राजा तु क्रतुमिष्ट्वा तं सुहृदे देवतां तदा ॥"
इति वह्निपुराणे शिवेरुपाख्याननामाध्यायः ॥

**शिविका**, स्त्री, (शिवं करोतीति । शिव+णिच् । ततो ण्वुल् । टापि अत इत्वम् ।) यानविशेषः । झाँपान् इति ख्यातः । इति भरतः ॥ डुली इति पाल्की इति च भाषा । तत्पर्य्यायः । याप्य-यानम् २ । इत्यमरः ॥ शिवीरथः ३ । इति हारावली ॥ तद्दानविधिर्य्यथा,—

वह्निरुवाच ।

"शृणु तावन्महीपाल महादानमनुत्तमम् ।
येन वै दत्तमात्रेण मुच्यते नरकार्णवात् ॥
मार्गशीर्षे शुभे पक्षे स्नुपोष्य हरेर्दिने ।
माघफाल्गुनयोश्चापि वैशाखस्य शरत्सु च ॥
द्वादश्यां हरिमभ्यर्च्य कलशोपरि संस्थितम् ।
शिविकां चक्रवंशोत्थां चतुर्दारुमयीं तथा ॥
आनीय सन्निधिं विष्णोः शुभच्छत्रसमन्विताम् ।
संभूष्य च सगैरूकां आगरं तत्र कारयेत् ॥
विद्याभिजनसम्पन्नविदग्धं शास्त्रवित्तमम् ।
आशाधारं शुचिं दक्षं कलत्रापत्यभूषितम् ॥
प्रातः सभार्य्यमभ्यर्च्य वासोभिः स्वर्णभूषणैः ।
उपानच्छूरिकां खड़्गां पङ्कचुकवेशकाम् ॥
आदर्शं स्थगिकां पानीयपात्रं कांस्यभाजनम् ।
चत्वारो वृषभा देया धेनवः शुभलक्षणाः ॥
शिविकावाहकानान्तु तथा कृत्स्नस्य धारकेः ।
वृत्तिर्द्देया तथान्नञ्च वर्षान्तं ब्राह्मणस्य तु ॥]
वर्षे वर्षे पुनर्द्देयं ब्राह्मणस्य तदेव तु ।
वृत्तिरेव त्वसम्पत्तौ वर्षे वर्षेऽपि वार्षिकी ॥
इहामुत्रातपत्राणं कुरु केशव मे प्रभो ।
त्वत्प्रीणनाय मे दत्तं शास्त्रविद्ब्राह्मणाय वै ॥
यत् प्रभो शिविका देव प्रीतो भव जनार्द्दन ।
दत्तवान् ज्ञानविदुषे सपत्नीकाय पुत्रिणे ॥
सुरापस्तेयकृत्तल्पगो ब्रह्महा गुरुतल्पगः ।
शिविकादानमाहात्म्यात् मुच्यते नात्र संशयः ॥
पितृपक्षान्मातृपक्षान् पत्नीपक्षांस्तथैव च ।
आत्मानं बन्धुपक्षांश्च तारयेन्नरकार्णवात् ॥
भुक्त्वा स विपुलान् भोगान् इहामुत्र सुखप्रदान् ।
सपत्नीकः सपितृको विष्णुसायुज्यमश्नुते ॥"
इति वह्निपुराणे शिविकादानाध्यायः ॥

**शिविपिष्टः**, पुं, महादेवः । इति शब्दरत्नावली ॥ शिपिविष्टशब्दार्थोऽप्यत्र ॥

**शिविरं**, क्ली, (शेरते राजबलान्यत्र । शीङ् स्वप्ने+ बाहुलकात् किरच्प्रत्ययेन साधु । इत्युणादि-वृत्तौ उज्ज्वलदत्तः । १ । ५४ ।) निवेशः । इत्य-मरः ॥ द्वे आगन्तुकसैन्यवासे । कटके इत्यन्ये । नृपस्य मूलस्थाने इत्येके । इति भरतः ॥
"शिविरन्तु निवेशे च क्लीवन्तु बुद्धवेश्मनि ॥"
इत्युणादिकोषः ॥ * ॥
अथ शिविरलक्षणम् ।

श्रीभगवानुवाच ।

"शिविरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् ।
युक्ताट्टालद्वारञ्च सिंहद्वारपुरस्कृतम् ॥
युक्तं चित्रैर्व्विचित्रैश्च कृत्रिमैश्च कपाटकैः ।
निषिद्धवृक्षरहितं प्रशस्तैश्च पुरस्कृतम् ।
सुलक्षणं चक्रवेधं प्राङ्गणञ्च तथैव च ॥"
तत्र विहितनिषिद्धकाष्ठे तथा,—

विश्वकर्मोवाच ।

"कस्य कस्य तरोः काष्ठं प्रशस्तं शिविरे प्रभो ।
अमङ्गलञ्च केषां वा सर्व्वं मां वक्तुमर्हसि ॥

श्रीभगवानुवाच ।

आश्रमे नारिकेलश्च गृहिणाञ्च धनप्रदः ।
शिविरस्य वहीशाने पूर्व्वे पुत्रप्रदस्तथा ॥
सर्व्वत्र मङ्गलार्हश्च तरुराजो मनोहरः ।
इशानेऽथ पूर्व्वस्मिन् शुभो [illegible] ॥
शुभप्रदश्च सर्व्वत्र [illegible] शिवालय ।
बिल्वश्च पनसश्चैव जम्बीरो बदरी तथा ।
प्रजाप्रदश्च पूर्व्वस्मिन् दक्षिणे धनदस्तथा ।
सम्पत्प्रदश्च सर्व्वत्र यतो हि वर्द्धते सदा ।
जम्बुश्चैव दाडिमः कदलाम्रातकस्तथा ।
बन्धुप्रदश्च पूर्व्वस्मिन् दक्षिणे मित्रदस्तथा ।
सर्व्वत्र शुभदश्चैव धनपुत्रशुभप्रदः ।
हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ।
ईशाने सुखदश्चैव सर्व्वत्रैव विश्रामय ।
सर्व्वत्र चम्पकः शुक्रो सुवि भद्रप्रदस्तथा ।
अलाबुश्चापि कुष्माण्डं मायानुच सुखानुकः ।
खर्ज्जूरी कर्कटी चापि शिविरे मङ्गलप्रदाः ।
वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदाः ।
लतापलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥ * ॥
प्रशस्तं कथितं काष्ठं निषिद्धञ्च निशामय ।
वन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ।
वटो निषिद्धः शिविरे नित्यं चौरभयं ततः ।
नगरेषु प्रसिद्धश्च दर्शनात् पुण्यदस्तथा ।
द्वे काष्ठे तिन्तिडीवृक्षो यत्नात्तं परिवर्जयेत् ।
शाल्मलिः धनहानिः स्यात् प्रजाहानिर्भवेत् ध्रुवम् ।
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च ।
न निषिद्धः प्रसिद्धश्च नगरेषु तथा पुरे ।
वाप्यामतिनिषिद्धश्च प्रशस्तं परिवर्ज्जयेत् ।
खर्ज्जूरश्च जम्बुश्चैव निषिद्धः शिविरे तथा ।
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ।
तृणञ्च चणकादीनां धान्यस्य मङ्गलप्रदम् ।
ग्रामेषु नगरे चापि शिविरे च तथैव च ।
इक्षुवृक्षश्च शुभदः सन्ततं शुभदस्तथा ।
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कदली दाडिमा शुभदा शुभदश्चाम्रकस्तथा ।
हरीतकी च शुभदा ग्रामेषु नगरेषु च ।
न वाप्यां भद्रदा नित्यं तथा चामलकी शुभम् ।
गजानामश्वि शुभदमश्वानाञ्च तथैव च ।
कल्याणमुच्चैः श्रवसो वाजी स्थापनकारिणाम् ।
न शुभप्रदमन्येषामुच्चैःसकारकं परम् ।
वानराणां नराणाञ्च महिषाणां गवामपि ।
कुक्कुराणां शृगालानां मार्ज्जाराणामभद्रकम् ।
भेटकानां मूकराणां सर्व्वेषामशुभप्रदम् ।
ईशाने चापि पूर्व्वस्मिन् पश्चिमे च तथोत्तरे ।
शिविरस्य जलं भद्रमन्यत्राशुभमेव च ॥ * ॥
दीर्घे प्रस्थे समानञ्च न कुर्य्याच्छिविरं बुधः ।
चतुरस्रे गृहे काष्ठे गृहिणां धननाशनम् ।
दीर्घप्रस्थः परिमितो नैवाङ्केनापि संवृतम् ।
शून्येन रहितं भद्रं शून्यं शून्यप्रदं ध्रुवम् ।
प्रस्थे हस्तद्वयात् पूर्व्वं दीर्घे हस्तचयं तथा ।
दक्षिणा शुभदं द्वारं प्राकारस्य गृहस्य च ।
न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ।
चतुरस्रं चक्रवेधं शिविरं मङ्गलप्रदम् ।
अभद्रं सर्व्ववेधञ्च शिविरं मङ्गलप्रदम् ।
अभद्रं सर्व्ववेधं प्राङ्गणञ्च तथैव च ।
शिविराभ्यन्तरे [illegible] ।
[illegible] ॥

।मादि सुवर्णीं दृष्ट्वा कार्त्तवीर्य्यञ्च कर्मेत् ।
मालती यूथिका कुन्दमाधवी केतकी तथा ॥
नागेश्वरं मल्लिका च काञ्चनं बकुलं शुभम् ।
अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ॥
पूर्वं च दक्षिणे चैव शुभदं नाम संशयः ।
ऊर्द्ध्वं षोड़शहस्तेभ्यो नैवं कुर्य्यादृतं यशी ॥
ऊर्द्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ।
द्वारं तैलकारं स्वर्णकारञ्च हीरकम् ॥
वाटीमध्ये ग्राममध्ये न कुर्य्यात् स्थापनं बुधः ।
गृहस्थं चाश्रितं वेश्मं सच्छूद्रं गणकं शुभम् ॥
भट्टं वैद्यं पुष्पकारं स्थापयेत् शिबिरान्तिके ॥ *
रक्षे च परिखामानं शतहस्तं प्रशस्तकम् ।
परितः शिबिराणाञ्च गम्भीरं दशहस्तकम् ।
सङ्केतपूर्व्वकञ्चैव परिखाद्वारमीप्सितम् ।
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च ॥
शाल्मलीनां तिन्तिड़ीनां हिन्तालानां तथैव
च ।
निम्बानां सिन्धुवाराणां उडुम्बराणामभद्रकम् ॥
खर्जूराणां वटानाञ्चाश्वत्थानामवाञ्छितम् ।
एतेषामतिरिक्तानां शिबिरे काम्यमीप्सितम् ॥
दृष्ट्वा वल्लहस्तकं दूरतो वर्जयेद्बुधः ।
पुत्रदारधनं हन्यादित्याह कमलोद्भवः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२अध्यायः ॥
शिबिरः, पुं, याप्ययानम् । इति हारावली ॥
शिवेष्टः, पुं, (शिवस्य इष्टः ।) बकवृक्षः । इति राजनिर्घण्टः ॥ शिवप्रिये, त्रि ॥
शिवेष्टा, स्त्री, (शिवस्य इष्टा प्रिया ।) दूर्व्वा । इति राजनिर्घण्टः ॥
शिरः, पुं, (शृणाति इतस्ततो गच्छतीति । शॄ+किरच् प्रत्ययेन साधुः ।) हिमः । इति मेदिनी ॥ (विष्णुः । यथा, महाभारते । १३ । १४९ । ११० ।
शब्दातिगः शब्दसहः शिशिरः शर्व्वरीकरः ॥")
शिरः, पुं, स्त्री, (शृणाति गच्छति इत्यादिशोभा वशात् । शॄ+"अजिरशिशिरशिथिलेति ।" उणा० १ । ५४ । इति किरच्प्रत्ययेन साधुः ।) ऋतुविशेषः । इत्यमरः ॥ स तु माघफाल्गुनमासद्वयात्मकः । तत्पर्य्यायः । कम्पनः २ शीतः ३ हिमकूटः ४ कोटनः ५ । क्वचित् पुस्तके कोटनस्थाने कोड़व इति पाठः । इति राजनिर्घण्टः ॥ तत्कालीनजलगुणा जलशब्दे द्रष्टव्याः ॥ * ॥ तत्र जातफलम् ।
"मिष्टान्नभोगी मधुरप्रवादी
कलत्रपुत्रादियुतः सुधार्मः ।
क्रोधी सुधीराञ्चककविवरश्च
यस्य प्रसूतिः शिशिराभिधाने ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र वर्ज्जनीयानि । करीषधूमः कुन्दः शालाख्याः
शिशिरीत्वकर्म्म । इति कविकल्पलता ॥ * ॥
तत्र गुणाः ।
"शिशिरं शीतलं रूक्षं शीतं वातकफोपचम् ।"
इति राजवल्लभः ।
अपि च ।
"शिशिरः शीतलोऽतीवरूक्षो वाताधि-
वर्द्धनः ।"
इति भावप्रकाशः ॥
शिशिरः, त्रि, (शश प्लुतगतौ+किरच्प्रत्ययेन साधुः ।) शीतगुणयुक्तः । यथाह अमरः ।
"शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जड़ः ।
तुषारः शीतलः शीतो हिमः सप्तान्य-
लिङ्गकाः ॥"
(यथा, रघुः । १४ । ३ ।
"आनन्दजः शोकजमश्रु बाष्प-
स्तयोरशीतं शिशिरो बिभेद ॥")
शिशुः, पुं, (शशतीति । शो+"शः कित् सन्वच ।" उणा० १ । २१ । इति उः ।) बालकः । तत्पर्य्यायः । पोतः २ पाकः ३ अर्भकः ४ डिम्भः ५ पृथुकः ६ शावकः ७ । इत्यमरः ॥ शावः ८ अर्भः ९ शिशुकः १० पोतकः ११ भिटकः १२ । इति शब्दरत्नावली ॥ गर्भः १३ । इति जटाधरः ॥ तस्य लक्षणादि यथा । वृद्धशातातपः ।
"शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादि संस्पृष्टं स्नातव्यन्तु कुमारकैः ॥
प्राक् चूड़ाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारस्तु स विज्ञेयो यावन्मौञ्जी न बन्धनम् ॥"
इति गोपालन्यायपञ्चाननकृतशुद्धितिनिर्णयः ॥
अपि च ।
"चतुर्थाद्वत्सरादूर्द्ध्वं यावदष्टौ समा वयः ।
शिशोर्व्रतं प्रकुर्व्वन्ति गुरुसम्बन्धिबान्धवाः ॥"
इति ब्रह्मपुराणवचनम् ॥
"जातमात्रः शिशुस्तावत् यावदष्टौ समा वयः ।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः ॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते ।
तस्मिन् काले न दोषः स्यात् स यावन्नोपनी-
यते ॥"
इति मनुवचनम् ॥ * ॥
तस्याध्यापनक्रमो यथा,—
"प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥"
इति मलमासतत्त्वे हरस्मृतिवचनम् ॥ * ॥
शिशुपुत्रं त्यक्त्वा प्रव्रज्याश्रमनिषेधो यथा,—
"मातरं पितरं वृद्धं भार्य्याञ्चैव पतिव्रताम् ।
शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥"
इति महानिर्व्वाणतन्त्रम् ॥
अन्यद्बालशब्दे द्रष्टव्यम् ॥ * ॥ (कुमारः । कार्त्तिकेयः । यथा, महाभारते । ३ । २११ । ४ ।
"शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभा-
ननः ॥")
शिशुकः, पुं, (शिशोरिव प्रतिकृतिः । शिशु+इवार्थे कन् ।) जलजन्तुविशेषः । शुशुक् इति भाषा । तत्पर्य्यायः । उलूपी २ । इत्यमरः ॥ द्वे जलज इति ख्याते अतिचञ्चले मत्स्ये । शिशुमाराकृतिर्मत्स्यभेदः उलूपी । इति काशिकाकारः । शौड़ इति ख्याती मत्स्यविशेषः उलूपी-
त्यन्ये । शौलाच इति ख्याते इत्येके । शिशुमार एव उच्यते इति सर्व्वस्वम् । तथा च रत्नकोषादौ 'शुशुपी शिशुमारः स्यादुलूपी शिशुकस्तथा ।' ऊर्द्ध्वं लुम्पति आच्छति उलूपी लुप् ऊ छ प णौ डीईं उपूर्व्वः पृषोदरादित्वात् मनोषादित्वात् तलोपः ओर्दीर्घश्च ह्रस्वोकारोऽपि । 'शिशुकस्तुलुपी बालः प्रोष्ठी तु शफरी द्वयोः ।' इति वाचस्पतिः । शुशुपीति चतुर्मादिपाठ इति केचित् । शिशुरिव शिशुकः ।
'शिशुकः शिशुमारेऽपि बालकोलुपिनोरपि ॥'
इति रुद्रः ॥"
इति भरतः ॥ अपि च ।
"उलुपी स्यादुलूपीच लुलुम्पी लुलकी तथा ।
शिशुकश्चेति पर्य्यायः शिशुमाराकृती भवेत् ।
केचित्तुल्यगमत्स्ये तु पर्य्यायोऽयं निगद्यते ॥"
इति शब्दरत्नावली ॥
"शिशुकः शिशुमारश्च स च ग्राहो वराहकः ॥"
इति राजनिर्घण्टः ॥ * ॥
शिशुमारः । (यथा, महाभारते ।१२।२९।२७।
"कूर्म्मान् कर्कटकान् नक्रान् मकरान् शिशु-
कानपि ॥")
बालकः । इति मेदिनी ॥ (यथा, कथासरित्-सागरे । २१ । ३९ ।
"शिशुकद्वयसंयुक्ता काचन्नी कापि दुर्गता ।
द्वारि स्थिता महाराज देवदर्शनकाङ्क्षिणी ॥")
वृक्षविशेषः । इति हेमचन्द्रः ॥
शिशुगन्धा, स्त्री, (शिशोर्गन्धो यत्र ।) मल्लिकाविशेषः । यथा,—
"अष्टीपतिर्नवल्ली स्यात् गोमाली नवमालिका ।
शिशुगन्धा मधुमल्ली तथा कवचमल्लाय ॥"
इति शब्दमाला ॥
शिशुचान्द्रायणं, क्ली, (शिशुरिव चान्द्रायणम् । स्वल्पचान्द्रायणमित्यर्थः ।) व्रतविशेषः । यथा,
"चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समा-
हितः ।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम् ॥"
इति मनुः ॥
शिशुता, स्त्री, (शिशोर्भावः । शिशु+तल् ।) शिशुत्वम् । शिशोरवस्था । इति जटाधरः ॥
शिशुत्वं, क्ली, (शिशोर्भावः । शिशु+त्व ।) शैशवम् । इत्यमरः ॥ तत्पर्य्यायः बाल्यशब्दे द्रष्टव्यः ॥
शिशुपालः, पुं, चेदिदेशीयराजः । स तु कृष्णेन हतः । शिशुपालवधकाव्यं माघेन कृतम् । तत्पर्य्यायः । दमघोषसुतः २ चैद्यः ३ चेदिराट् ४ । इति जटाधरः ॥ शिशुपालकः ५ । इति त्रिकाण्डशेषः ॥ (यथा, भागवते । ७ । १० । ३८ ।
"ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ।
हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥")
शिशुपालकः, पुं, (शिशुपाल+स्वार्थे कन् ।) दमघोषसुतः । इति त्रिकाण्डशेषः ॥ नीलकदम्बवृक्षः । इति शब्दचन्द्रिका ॥ (शिशु

पालयतीति । पालि+ण्वुल् ।) बालकपालके, त्रि ॥

शिशुपालहा, [न्] पुं, ( शिशुपालं हतवानिति । हन्+क्विप् ।) श्रीकृष्णः । इति हेमचन्द्रः ॥

शिशुभावः, पुं, ( शिशोर्भावः ।) शिशुत्वम् । तान्त्रिकभावविशेषः । यथा,—

"उक्तानुक्तञ्च यत्किञ्चित् क्रियते सर्व्वदा प्रिये । शिशुभाव इति ख्यातः सर्व्वतन्त्रेषु गोपितः ॥"

इति तन्त्रम् ॥

शिशुमारः, पुं, (शिशून् मारयतीति । मृ+णिच्+अण् ।) जलजन्तुभेदः । शोँष इति शुशुक् इति च ख्यातः । इत्यमरभरतौ ॥ ( यथा, वाजसनेयसंहितायाम् । २४ । ३० ।

"नीलङ्गोः कृमिः समुद्राय शिशुमारो हिमवते हस्ती ॥" * ॥) अस्य पर्य्यायः शिशुकशब्दे द्रष्टव्यः । अस्य गणना गुणाश्च पादिशब्दे द्रष्टव्याः ॥ ताराात्मकाच्युतः । इति मेदिनी ॥ तद्विवरणं यथा,—

"शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति ।
सन्निवेशञ्च तस्यापि शृणुष्व मुनिसत्तम ॥
यदह्ना कुरुते पापं दृष्ट्वा तन्निशि मुच्यते ।
यावत्यश्चैव ताराास्ताः शिशुमाराश्रिता दिवि ॥
तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि तु ।
उत्तानपादस्तस्याथ विज्ञेयोऽप्युत्तरो हनुः ॥
यज्ञोऽधरश्च विज्ञेयो धर्म्मो मूर्द्धानमाश्रितः ।
हृदि नारायणश्चास्ते अश्विनौ पूर्व्वपादयोः ॥
वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनी ।
शिश्नं संवत्सरस्तस्य मित्रोऽपानं समाश्रितः ॥
पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः ।
तारका शिशुमारस्य नास्तमेति चतुष्टयम् ॥
इत्येष सन्निवेशोऽयं पृथिव्या ज्योतिषां तथा ।
द्वीपानामुदधीनाञ्च पर्व्वतानाञ्च कीर्त्तितः ॥
वर्षाणाञ्च नदीनाञ्च ये च तेषु वसन्ति वै ।
तेषां स्वरूपमाख्यातं संक्षेपः श्रूयतां पुनः ॥
यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा ।
पद्माकारा समुद्भूता पर्व्वताब्ध्यादिसंयुता ॥
ज्योतींषि विष्णुर्भुवनानि विष्णु-
र्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्व्वं
यदस्ति यन्नास्ति च विप्रवर्य्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसा-
वशेषमूर्त्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपसर्व्वं
कर्म्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि
भवन्ति नो वस्तुषु वस्तुभेदाः ॥
महीघटत्वं घटतः कपालिका
कपालिकाचूर्णरजस्ततोऽप्यणुः ।
जनैः स्वकर्म्मस्तिमितात्मनिश्चयै-
रालक्ष्यते ब्रूहि किमत्र वस्तु ॥"

इति विष्णुपुराणे २ अंशे १२ अध्यायः ॥ * ॥

अपि च । "केचिदेतज्ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति । यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितः । तस्य लाङ्गूले प्रजापतिः अग्निरिन्द्रो धर्म्म इति पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः ॥ तस्य दक्षिणावर्त्तकुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे नक्षत्राणि उपकल्पयन्ति । दक्षिणायनानि तु सव्ये यथा शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवन्ति । पृष्ठे त्वजवीथी आकाशगङ्गा चोदरतः । पुनर्व्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढ़े दक्षिणवामयोर्नासिकयोर्यथासंख्यं श्रवणपूर्व्वाषाढ़े दक्षिणवामयोर्लोचनयोर्धनिष्ठामूलञ्च दक्षिणवामयोः कर्णयोर्मघादीन्यष्टनक्षत्राणि दक्षिणायनानि वामपार्श्ववङ्क्रिषु युञ्जीत । वङ्क्रिषु अस्थिषु । तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्वेषु प्रातिलोम्येन युञ्जीत । शतभिषा ज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत् । उत्तराहनावगस्त्यः अधराहनौ यमः मुखे चाङ्गारकः शनैश्चर उपस्थे वृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशनास्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्व्वाङ्गेषु रोमसु सर्व्वे ताराागणाः । एतदुहैव भगवतो विष्णोः सर्व्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत नमो नमो ज्योतिर्लोकाय कालायनायानिमिषां पतये महापुरुषायाभिधीमहीति ।

ग्रहर्क्षताराामयमाधिदैविकं
पापापहं मन्त्रकृतां त्रिकालम् ।
नमस्यतः स्मरतो वा त्रिकालं
नश्येत तत्कालजमाशु पापम् ॥"

इति श्रीभागवते ५ स्कन्धे शिशुमारसंस्थानम् २३ अध्यायः ॥

शिशुवाहकः, पुं, (शिशुं वहतीति । वह+ण्वुल् ।) वनच्छागलः । इति हेमचन्द्रः ॥ बालकवोढरि, त्रि ॥

शिशुवाह्यकः, पुं, (शिशुर्वाह्यो यस्य । ततः कन् ।) वनच्छागः । इति त्रिकाण्डशेषः ॥

शिश्नः, पुं, ( शश्नातीति । शश+बाहुलकात् नक्प्रत्ययेन साधु ।) मेढ्रः । इत्यमरः ॥ ( यथा, भागवते । २ । ६ । ८ ।

"पुंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्वृतेः ॥")

अस्य पर्य्यायः लिङ्गशब्दे द्रष्टव्यः ॥

शिश्विदानः, त्रि, (श्वेतितुमिच्छतीति । श्वित+सन् +"श्वितेर्दश्च ।"उणा० २।८६ । इति आनच् । सनो लुक् तकारस्य च दकारः ।) पापकर्म्मा । तत्पर्य्यायः । कृष्णकर्म्मा २ । इत्यमरः ॥ दि मायाचारे । श्वन्नित्यतेऽभौ शिश्विदानो मनी-षिः शिलादकः । [illegible] मायाचारात्मकर्म्मास्य कृष्णकर्म्मा । केचित्तु [illegible] इति पठन्ति । द्वे मिथ्यायै । श्विदि शौक्ल्ये [illegible] काने शिश्विदानः । अतएवं मिथ्याचारात्मकर्म्मास्य अकृष्णकर्म्मा शुक्लकर्म्मा [illegible] इति व्याचष्टे च । इति भरतः ॥ * ॥

"शिश्विदानः कृष्णकर्म्मा शुक्लकर्म्मेति स[illegible]चित् ॥"

इति जटाधरः ॥

( यथा, प्रद्युम्नविजये । ७ अङ्के ।

"शाकुनिक ! छिद्यतां छिद्यतां एष खगः शिश्विदानः ॥")

शिष, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) शेषति । इति दुर्गादासः ।

शिष, ऌ ध औ विशेषे । इति कविकल्पद्रुमः । ( रुधा०-पर०-सक०-अनिट् ।) विशेष [illegible]रञ्जनम् । ऌ, अशिषत् । ध, विशिनष्टि [illegible] मूर्त्तेर्ना यः । इति हलायुधः । मूर्त्तिविशिष्टं करोति इत्यर्थः । औ, शेष्टा । इति दुर्गादासः ।

शिष, कि असर्व्वोपयोगे । इति कविकल्पद्रुमः । ( चुरा०-पक्षे-भ्वा०-सक०-सेट् ।) असर्व्वोपयोगः परिशेषीकरणम् । कि, शेषयति शेषति यशोराशिं लोकः अवशिष्टं करोति इत्यर्थः । वैरतिशायने शिष किरनुवर्त्तते । कि, विशेषयति विशेषति सम्पत्ता भूपं विधिः । इति दुर्गादासः ॥

शिष्टः, त्रि, ( शास+क्तः । "शास इदङ्हलोः ।" ६ । ४ । ३४ । इति उपधाया इकारः । "शासिवसिघसीनाञ्च ।" ८ । ३ । ६० इति षत्वम् ।) शान्तः । सुबुद्धिः । धीरः । तल्लक्षणं यथा,—

"न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य लक्षणम् ॥"

इति महाभारते आश्वमेधपर्व्व ।

अपि च ।

"धर्म्मो नाभिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणान्विताः ॥"

इति कौर्म्मे उपविभागे २४ अध्यायः ॥

अन्यच्च ।

"विशेषशब्दनिष्ठस्तु शिषः शिष्टः प्रचक्षते ।
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्म्मिकाः ॥
मनुः सप्तर्षयश्चैव लोकसन्तानकारकाः ।
तिष्ठन्तीह च धर्म्मार्थं तान् शिष्टान् सम्प्रचक्षते ।
तैः शिष्टैः पालितो धर्म्मः स्थाप्यते वै युगे युगे ॥"

इति मात्स्ये १२० अध्यायः ॥

( अवशिष्टः । यथा, गीतायाम् । ३ । १३ ।

"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्बिषैः ॥")

शिष्टाचारः, पुं, ( शिष्ट आचारः । शिष्टानामाचारो वा ।) साधुव्यवहारः । यथा,—

"ततः [illegible] धर्म्मो [illegible]
[illegible] शिष्टाचार [illegible] ॥"

आनुष्टुभं मन्त्रराजं सहस्रं प्रजजाप ह ॥
वैशाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः ।
कृता प्रतिष्ठा भो विप्राः शोभने गुरुवासरे ॥”
तन्महाप्रसादमाहात्म्यं यथा,—
“बहून् नियोजयेत्तत्र लोकान् भैवर्गिकाद्भुत ।
लौकिकव्यवहारोऽयं पचति श्रीः स्वयं भुवम् ।
भुङ्क्ते नारायणो नित्यं तथा पक्वं शरीरवान् ॥
अन्नं तद्धि नैवेद्यं पापन्नं मूर्द्ध्नि धारयात् ।
भक्षणाद्यपानादिमहादुरितनाशनम् ॥
आघ्राणाच्छ्राणजं पापं दर्शनाद्दृष्टिजं तथा ।
आस्वादाद्वाक्कृतं पापं भावश्च व्यपोहति ॥
स्पर्शनात् त्वक्कृतं पापं मिथ्यालापं तथा द्विजाः॥
गात्रे लेपाद्धरेत् पापं शारीरं वै न संशयः ॥
महापवित्रं हि हरेर्निवेदितं
नियोजयेद्यः पितृदेवकर्म्मसु ।
तृप्यन्ति तस्मै पितरः सुराश्च
प्रयान्ति लोकं मधुसूदनस्य ॥
नातः परं हि वक्ष्यामि रहस्यं तेषु भो द्विजाः॥
नराणां रूपमास्थाय तदश्नन्ति दिवौकसः ॥
त्रिशूलयगतं तद्धि निर्म्माल्यं पतितादयः ।
स्पृशन्ति येन दुष्टं हि यथा विष्णुस्तथैव तत् ॥
निन्दन्ति ये तदन्नं मूढ़ाः पण्डितमानिनः ।
स्वयं दण्डधरस्तेषु सहते नापराधिनः ॥
येषामत्र न दण्डः स्यादधुवा तेषां हि दुर्गतिः ।
कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे ॥
चिरस्थमपि संशुष्कं नीतं वा दूरदेशतः ।
यथा तथोपयुक्तं तत् सर्व्वपापापनोदनम् ॥
नैवेद्यान्नं जगन्नाथे गाङ्गं वारि समं द्वयम् ।
दृष्टिस्पर्शनचिन्ताभिर्भक्षणादघनाशनम् ॥”
इत्युत्कलखण्डम् ॥ * ॥
स च कलेर्दशसहस्रवर्षपर्य्यन्तं पृथिव्यां स्थास्यति। यथा,—
“शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरिः पदम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
(स्वनामख्यातो बहुग्रन्थकर्त्ता पण्डितविशेषः। अयं हि तैलङ्गवंशोद्भवः । अस्य पिता पेरमभट्ट इति ख्यातः । असौ पण्डितराजजगन्नाथो दिल्लीप्रभोः शाहजहान्-ज्येष्ठतनयस्य दाराशाहस्य सभायामासीत् । यतोऽनेन जगदाभरणकाव्ये दाराशाहस्यैव यशोवर्णनं कृतम्। अपिच भामिनीविलाससमाप्तौ “दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः” इत्युक्तम्। दाराशाहस्तु १५८१ एकाशीत्यधिकपञ्चदशशतशकाब्दपर्य्यन्तं जीवित आसीत् । अतः पण्डितराजजगन्नाथोऽयं तात्कालिक इत्येवायातम्। अनेन पण्डितराजपदवी शाहजहान्नाम्नो दिल्लीप्रभोः प्राप्तेति तत्कृतरसगङ्गाधरमङ्गलादेवागम्यते यथा,—
“अथ सकललोकविस्तारविस्तारितमहोपकारपरम्पराधीनमानसेन प्रतिदिनमुद्यदनवद्यगद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः कविनिकरैः... भिरपास्यमानेन कृतयुगीनकलिकालेन क्रमतिष्ठमानसमाच्छादितवेदपथमार्गविलोकनाय समुद्दीपितसुतर्केरत्नज्वालाजालेन मूर्त्तिमतेव मन्वाधासपञ्चाननमनःप्रसादेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन सार्व्वभौमश्रीशाहजहान्प्रसादाधिगतपण्डितराजपदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत। सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवतात् ॥”

एतत्पण्डितविरचिता बहवो ग्रन्था: सन्ति । तेषु अद्यावधि ज्ञातास्त्वेते, रसगङ्गाधरः १, यमुनावर्णनचम्पूः २, रतिमन्मथनाटकम् ३, वसुमतीपरिणयनाटकम् ४, जगदाभरणकाव्यम् ५, प्राणाभरणकाव्यम् (कामरूपदेशाधिपस्य प्राणनारायणमहीपस्य स्तुतिरूपोऽयं ग्रन्थः) ६, पीयूषलहरी ७, अमृतलहरी ( यमुनास्तुतिरूपोऽयं ग्रन्थः ) ८, सुधालहरी ( सूर्य्यस्तवरूपोऽयं ग्रन्थः ) ९, करुणालहरी ( विष्णुलहरी वा ) १०, लक्ष्मीलहरी ११, भामिनीविलासः १२, मनोरमाकुचमर्द्दिनी १३, अश्वधाटीकाव्यम् १४, आसफविलासः १५ ॥ * ॥

तर्कपञ्चाननोपाधिकोऽपरपण्डितविशेषः। अयं हि विवादभङ्गार्णवसेतु-रामचरितादिग्रन्थानां प्रणेता । पितास्य रुद्रदेवः माता च अम्बिका। रुद्रदेवस्तु चतुःषष्टितमवयसि पूर्व्वसहधर्म्मिण्यां समुतायां मृतायां संसारविरक्तः काशीवाससुखमभिलषन् चिरसुहृदं त्रिवेणीनन्दपुरनिवासिनं ज्योतिर्विद्याविशारदं सुप्रसिद्धं चन्द्रशेखरवाचस्पतिमभिगम्य स्वीयान्तिमदशाफलाफलं पृष्टवान्। चन्द्रशेखरस्तु रुद्रदेवस्य जन्मलग्नानुसारतश्चरमे वयसि सुप्रसिद्धपुत्रलाभरूपं शुभफलमवगम्य वासुदेवनाम्नः कस्यचिद् विप्रवरस्याम्बिकानाम्नीं कन्यामुद्वाहयामास। रुद्रदेवस्तु ज्योतिर्विद्यापारदर्शिनश्चन्द्रशेखरस्य वाक्यादम्बिकां परिणीय सत्पुत्रप्राप्तिकामो काशीमभिगम्य विश्वेश्वरमुद्दिश्यैकविंशतिपुरश्चरणं कृतवान्। चरमपुरश्चरणदिवसीययामिन्याः शेषयामे प्राप्तसत्पुत्रलाभस्वप्नः प्रहृष्टमनाः पुनः स्वस्थानं त्रिवेणीप्रदेशं प्रत्याहृत्य गार्हस्थ्यधर्म्मानुरक्तो बभूव। अथ गच्छति काले सतिपरायणाम्बिका गर्भमुपलभ्य १६१६ शके (११०१ परिमितवङ्गाब्दे) सौराश्विनस्य देवीपक्षीयपञ्चम्यां पुत्ररत्नं जगन्नाथं प्रसूतवती। रुद्रदेवस्तु नवजातपुत्रस्य जातसंस्कारादिकं विधाय राशनुसारतो रामराम इति नाम चक्रे परं कुमारस्य मातामहो वासुदेवः अस्मिन्नेव समये श्रीजगन्नाथक्षेत्रात् तीर्थस्थानात् प्रत्याहृत्य दौहित्रमुखं दृष्ट्वा जगन्नाथ इत्याख्ययैनमयोजयत्। ततः प्रभृत्येवायं जगन्नाथ इति नाम्ना प्रसिद्धोऽभूत् ।

अयन्तु बाल्यावस्थायामतीवचञ्चलप्रकृतिर्दुर्द्दान्तोऽपि स्मृतिशक्तिसम्पादितादिगुणनिकरैश्च बहूनां नितरां प्रियपात्रमासीत् । अयं प्रथमतः पितृसन्निधाने व्याकरणमधीत्य ततो ज्येष्ठतातस्य न्यायलङ्कारोपनामकस्य भवदेवस्य समीपे साहित्यादिकमधीतवान् । ततो भवदेवस्य परलोकप्राप्त्यनन्तरं कामालपुरनिवासिनं रघुदेवविद्यावाचस्पतिं अध्यापकत्वेन स्वीकृत्य दर्शनशास्त्रादिचिन्तया कालं यापयामास। अस्य एतादृशी प्रखरा स्मृतिशक्तिरासीत् यदनधीतस्यापि भिन्नदेशीयभाषायां निबद्धस्य ग्रन्थस्य श्लिपिपचादि एकवारमात्रमाकर्ण्यैवायं अनर्गलं अभ्रान्त इव आवर्त्तयितुं समर्थः। एतादृशीमेधाशक्तिरेवैनं अल्पसमयेन बहुशास्त्रपारयायिनमकरोत् ।

पञ्चदशवर्षवयस एवासौ श्रीपद्मीनाम्नीं सुलक्षणां कन्यामुपनीतवान् । विवाहात् परमेवास्य ज्येष्ठतातो भवदेवः परलोकं गतः । माता तु पूर्व्वमेव कालधर्म्ममुपगता पिता च चतुर्व्विंशतिवर्षकमेनमवलोक्यैव इह लोकं तत्याज। पितृवियोगानन्तरमेवायं छात्रानध्यापयितुं प्रवृत्त आसीत्।

अथ कदाचित् वर्द्धमानाधिपतिर्महाराजत्रिलोकचन्द्रबाहादुरोऽस्य पाण्डित्यप्रभावमवगम्य राजसभामधिरोहयितुं निमन्त्रयामास। जगन्नाथस्तु राजप्रसादमुपलभ्य राजसभां प्रविश्य तर्कजालेन तत्रस्थान् पण्डितान् जितवान् । महीपतिस्तु जगन्नाथस्य तादृशीं बुद्धिशक्तिं मेधाशक्तिञ्चावलोक्य विशेषेण परीक्षितुं पथि दृष्टस्य समग्रवस्तुनो वार्त्तां विज्ञापयितुमादिदेश । जगन्नाथस्तु नृपतेर्मनोऽभिप्रायमवगम्य त्रिवेणीप्रदेशात् वर्द्धमानपर्य्यन्तं यावत् पथि स्थितानां प्रत्येकपादपमन्दिरादीनामपि वृत्तान्तं कथयामास। राजा तु स्वकर्म्मचारिभिरेतद्वृत्तान्तस्य याथार्थ्यमुपगम्य सातिशयेनानन्दितो बभूव।

एकदा मुर्शिदाबादाख्यप्रदेशनृपतेर्यवनस्य मन्त्री नन्दकुमारोऽस्य पाण्डित्यमवगम्य (नवाब) महीपतिसमीपमेनमानयामास। नृपतिस्तु बहुविधैर्दुरूहप्रश्नैरेनं वञ्चयितुमभिललाष परं जगन्नाथः स्वीयबुद्धिप्राखर्य्येण नृपतिकृतप्रश्नानां सदुत्तरं दत्त्वा तं सन्तोष्य च तस्माद् बहुलार्थप्रदां भूम्यादिसम्पत्तिं लब्धवान् ।

अथ कालचक्रगत्यनुसारतो यवनराजानां वैभवरविरस्तं गतः इंराजराजानां सौभाग्यसमयः समुपागतश्च। तदा इंराजनृपतयस्तदानीन्तनप्रजारक्षणार्थं विचारकार्य्यस्य सौकर्य्याय जगन्नाथतर्कपञ्चाननं समाहूय व्यवहारोपयोगिनं ग्रन्थमेकं प्रणेतुमादिदेशुः । जगन्नाथस्तु नवीननृपतिभिस्तथादिष्टः“विवादभङ्गार्णवसेतु” नामकं ग्रन्थं प्रणीतवान् ।

अस्य द्विषष्टितमवयसि सहधर्म्मिणी श्रीपद्मी बहुपुत्रपौत्रादिकं संरक्ष्य परलोकं गता । अस्य द्वौ पुत्रौ तिस्रः कन्याश्चाभवन्। पुत्रयोर्घनश्यामसार्व्वभौम एव ज्येष्ठः प्रतिभाशाली बहुशास्त्र-

पारदर्शी च। जगन्नाथोऽयमन्तिमावस्थायां दृष्ट-प्रपौत्रादिसुखमवलोक्य अतिदुर्लभमेतादृशं संसारसुखमनुभूय शकनरपतेः १७२६ वत्सरे (१२१४वङ्गाब्दे) आश्विनकृष्णपञ्चमीयुक्ततृतीयायां गङ्गातीरे प्राणान् तत्याज। मृत्योः प्राक्काल-पर्य्यन्तमेवास्येन्द्रियशैथिल्यं न जातम्। गङ्गा-तीरं गतेन मुमूर्षुणामुना मृत्युप्राक्काले कृतः श्लोको यथा,—

"केचिद् ब्रह्म निराकारं नराकारञ्च केचन।
वयन्तु दीर्घयोगेन नीराकारमुपास्महे॥" इति॥)

जगन्नुः, पुं, (जगता विश्वस्थजीवजातेन नम्यते इति। जगत्+नम्+बाहुलकात् डुः। यद्वा, नु+क्विप् कृते। नु नवनं स्तुतिरित्यर्थः जगति विश्वसंसारे नुः स्तुतिर्यस्य। सर्व्वजीवस्तुतत्वा-देवास्य तथात्वम्।) अग्निः। जन्तुः। इति विश्वः शब्दरत्नावली च॥ जगनुरपि पाठः॥

जगरः, पुं, (जागर्त्ति संग्रामेऽनेनेति। जागृ+अप्। पृषोदरादित्वात् साधुः।) कवचः। इति हेमचन्द्रः। ३। ४३०॥

जगलः, पुं, (पुनःपुनरतिशयेन वा गलतीति। गल चर्व्वणे+यङ्लुगन्तात् अच्। संज्ञापूर्व्वक-त्वात् "दीर्घोऽकितः।" ७।४।८३। इति न दीर्घः। यद्वा, जन्+डः। जः जातः सन् गलति निर्गच्छ-तीति। गल+अच्।) सुराकल्कम्। मेथा इति भाषा॥ तत्पर्य्यायः। मेदकः २। इत्य-मरः। २। १०। ४२॥ (यथा, शार्ङ्गधरे मध्य-खण्डे दशमेऽध्याये।

"तदधो जगलो ज्ञेयो मेदको जगलाढकः॥")

मदनवृक्षः पिष्टमद्यम्। (तद्गुणा यथा,—

"शूलप्रवाहिकाटोपकफवातार्शसां हितः।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भक्तपाचनः॥"

इति चरके सूत्रस्थाने सप्तविंशेऽध्याये॥

"ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोफहृत्।
हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत्॥"

इति सुश्रुते सूत्रस्थाने ४५ अध्याये॥)

धूर्त्ते त्रि। इति मेदिनी। ले, ६१॥ कवचः। रलयोरैक्यात्॥ गोमये, क्ली। इति रत्नमाला॥ (यथा, वैद्यकरत्नमालायाम्।

"गोमयं जगलं गोविट् गोहन्नं तच्च गोशकृत्॥")

जग्धं, त्रि, (अद्यते स्म इति। अद् भक्षणे+क्तः। "अदो जग्धिर्ल्यप्ति किति।" २। ४। ३६। इति जग्धादेशः। इकार उच्चारणार्थः।) भुक्तम्। इत्यमरः। ३। २। १११॥

("स्निग्धं घनं कुटजवल्कमजन्तु जग्धम्॥"

इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे॥)

जग्धिः, स्त्री, (अद भक्षणे+क्तिन्। "अदो जग्धि-र्ल्यप्ति किति।" २। ४। ३६। इति जग्धा-देशः।) सहभोजनम्। इत्यमरः। २।९।५५॥ भक्षणम्। इति हेमचन्द्रः॥ (यथा, मनौ। ३। ११५।

"अदत्त्वा तु य एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥")

जग्मिः, पुं, (गच्छति इतस्ततो यातीति। गम+"आदृगमहनजनः किकिनौ लिट् च।" ३।२।१७१। इत्यस्य "भाषायां धाञ्कृसृगमिजनि-नमिभ्यः।" इति वार्त्तिकोक्त्या किन्लिट्वञ्च।) वायुः। इति केचित्॥ *

जघनं, क्ली, (हन्यते इति। हन्+"हन्तेः शरीरा-वयवे द्वे च।" उणां। ५। ३२। इति अच् द्वित्वञ्च। "अभ्यासाच्च।" ७। ३। ५५। इति कुत्वम्।) स्त्रीकट्याः पुरोभागः। (यथा, माघे। ५। २९।

"नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां बृहज्जघनसेतुनिवारितानि॥",)

कटिः। इति मेदिनी। ने, ६७॥ (यथा, देवी-भागवते। १। ९। ८१।

"भगवान् द्विगुणं चक्रे जघनं विस्मितौ तदा।
शीर्षे सन्दधतां तत्र जघने परमाद्भुते॥")

जघनकूपकौ, पुं, (जघनकूपे इव कायतः इति। कै+कः।) कुकुन्दरौ। इति हलायुधः॥ द्विवचनान्तोऽयं शब्दः॥

जघनेफला, स्त्री, (जघने इव मध्यभागे फलमस्याः।) काकोडुम्बरिका। इत्यमरः। २। ४। ६१॥

जघन्यः, त्रि, (कुटिलं हन्यते निन्द्यते इति। हन+यङन्तात् अचो यत्। अनित्यमागमशासन-मिति नुगतोऽनुनासिकान्तस्येति न नुक्। यद्वा, जघनमिव। "शाखादिभ्यो यत्।" ५। ३। १०३। इति यत्।) चरमः। (यथा, वैद्यकचक्र-पाणिसंग्रहे स्नेहाधिकारे।

"उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च॥")

गर्हितः। (यथा, महाभारते। २। ३५। १३।

"तत्र द्यूतमभवन्नो जघन्यं
तस्मिन् जिताः प्रव्रजिताश्च सर्व्वे॥" *॥

जघने कटिदेशे भवम्। दिगादित्वात् यत्।) मेहने, क्ली। इति मेदिनी। ये, ८३॥ पुं, शूद्रः। इति शब्दरत्नावली॥ (हीनजातिमात्रम्। यथा, मनौ। ८। ३६६।

"उत्तमां सेवमानस्तु जघन्यो वधमर्हति॥"
"हीनजातिरुत्कृष्टजातीयां कन्यामिच्छन्ती-मनिच्छन्तीं वा गच्छन् जात्यपेक्षयाऽङ्गच्छेदन-मारणात्मकं वधमर्हति॥" इति तट्टीकायां कुल्लूकभट्टः॥ *॥ पृष्ठभागः। यथा, रामा-यणे। २। १०४। २९।

"ततो जघन्यं सहितैः स्वमन्त्रिभिः
पुरप्रधानैश्च तथैव सैनिकैः।
जनेन धर्म्मज्ञतमेन धर्म्मवा-
नुपोपविष्टो भरतस्तदाग्रजम्॥"

"जघन्यं जघनभागं पृष्ठभागमाश्रितः सन्।" इति तट्टीकायां रामानुजः॥ *॥ राजानुचर-विशेषः। यथा, बृहत्संहितायाम्। ६९। ३१, ३३—३४।

"पश्चापरे वामनको जघन्यः
कुब्जोऽपरो मण्डलकोऽथ सामी।
पूर्व्वोक्तभूपानुचरा भवन्ति
सङ्कीर्णसंज्ञाः प्रवदाम्यथैतान्॥"
"मालव्यसेवी तु जघन्यनामा
खर्ज्जूरतुल्यश्रवणः सुगन्धिः।
शुक्रेण सारः पिशुनः कविश्च
रूक्षच्छविः स्थूलकराङ्गुलीकः।
क्रूरो धनी स्थूलमतिः प्रतीत-
स्ताम्रच्छविः स्यात् परिहासशीलः।
उरोऽङ्घ्रिहस्तेष्वपि शक्तिपाश-
परश्वधाङ्कश्च जघन्यनामा॥")

जघन्यजः, पुं स्त्री, (जघन्ये चरमे जायते इ[ति।]
जन्+"सप्तम्यां जनेर्डः।" ३। २। ९[७।]
इति डः।) शूद्रः। कनिष्ठे, त्रि॥ इति मेदि[नी।]
जे, ३२॥ (यथा, महाभारते। १। ६५। १[५।]
"एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः॥

जघ्निः, पुं, (हन्यते इति। हन+"आदृ[गमहनजनः किकिनौ लिट् च।]
हनेति।" ३। २। १७१। इति किन् द्वित्व[ञ्च।]
हननयोर्व्याख्यम्। इति संप्रसारः॥ (य[था,]
ऋग्वेदे। ६। ६१। २०।
"अग्निर्मिभमभिश्रियं सख्ल्वानं दिवे दिवे॥

जघ्नुः, त्रि, (हन्तीति। हन वधे+"कुर्ध[...]
उणां। १।२३। चकारात् हन्तेरपि कुर्द्वित्व[ञ्च।]
हन्ता। हननकर्त्ता। इत्युणादिकोषः॥

जङ्गमः, त्रि, (पुनः पुनर्गच्छतीति। गम्+य[ङ्+]
अच्।) अस्थावरः। गतिशक्तिविशिष्टः। [...]
पर्य्यायः। चरिष्णुः २ चरः ३ त्रसः ४ इ[...]
चराचरः ६। इत्यमरः। ३। १। ७४॥ (य[था,]
रघौ। २। ४४।

"मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः॥"

"ओषधयस्तावद्द्विविधाः स्थावरा जङ्गमाश्[च ...]
"जङ्गमास्त्वपि चतुर्व्विधा जरायुजाण्डज[स्वेद]-
जोद्भिज्जाः। तत्र पशु-मनुष्य-व्यालादयो ज[रा]-
युजाः। खग-सर्प-सरीसृप-प्रभृतयोऽण्ड[जाः।]
कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। [...]
गोपमण्डूकप्रभृतय उद्भिज्जाः॥" इति [सुश्रुते]
सूत्रस्थाने प्रथमेऽध्याये॥)

जङ्गमकुटी, स्त्री, (जङ्गमा गतिशक्तिविशि[ष्टा]
कुटी गृहमिव।) छत्त्रम्। इति त्रिकाण्डशे[षः॥]

जङ्गलं, त्रि, (पुनः पुनरतिशयेन वा गलती[ति।]
गल+यङ्+अच्। पृषोदरादित्वात् साधु[ः।]
निर्ज्जलदेशः। इति शब्दरत्नावली॥ वि[...]
स्थानम्। पिशिते, स्त्री। इति मेदिनी। ते, [...]

जङ्गालः, पुं, (जङ्गं कुटिलगतिं जलमति प्रा[प्नो]-
तीति। अल+"कर्म्मण्यण्।" ३।२।१ इ[ति ...]
रोधविशेषः। जाङ्गाल इति भाषा॥ [तत्]
पर्य्यायः। आलिः २ पङ्कारः ३ सेतु[ः ४]
संवरः ५। इति जटाधरः॥

जङ्गुल, क्ली, विषम्। इति त्रिकाण्डशेषः॥

जङ्घा, स्त्री, (जङ्घन्यते कुटिलं गच्छतीति। [...]
वधे गतौ च यङ्लुगन्तात्+"अर्त्तिकोशीसि[...]

;।) गुल्फोर्द्ध्वान्यधोभाग:। जाङ् इति
ख्या॥ तत्पर्य्याय:। प्रसृता २। इत्यमर:॥
ङ्घा ३ टङ्कम् ४ टङ्किका ५। इति शब्दरत्ना-
ली॥ (यथा, महाभारते। ५। १३३। १६।
ग्नुर्निमज्जता घाशो जङ्घायां प्रपतिष्यता॥")
करिक:, पुं, (जङ्घा तत्साध्यगतिरेव आकरो
'प्ति: जीविकानिर्व्वाहधनस्येत्यर्थ:। सोऽस्य-
ोति। जङ्घाकर+"अत इनिठनौ।" ५। २।
१५। इति ठन्।) धावक:। तत्पर्य्याय:।
ङ्घिक:२। इत्यमर:। २। ८। ७३॥ जाङ-
क्री३। इति शब्दरत्नावली॥
त्राणं, क्ली, (त्रायतेऽनेनेति। त्रै+करणे
ट्। त्राणं वर्म्म। ततो जङ्घायास्त्राणमिति।)
ङ्घास्नाह:। तत्पर्य्याय:। सहस्नुषम् २।
ति त्रिकाण्डशेष:॥
ल:, त्रि, (प्रशस्ता वेगवतीत्यर्थ: जङ्घास्य-
ति। जङ्घा+"सिध्मादिभ्यश्च।"५।२।९७। इति
च्। जङ्घाबलेनैव वेगस्य जननात्तथात्वम्।)
तिवेगवान्। तत्पर्य्याय:। अतिजव:२। इत्य-
र:। २। ८। ७३॥ (यथा, काशीखण्डे
ङ्गामाहात्म्ये। २९। ६४।
शङ्करीव्या जगन्माता जय्या जङ्घाल-
वीचिका॥")
रिण.। एण:। कुरङ्ग:। ऋष्य:। पृषत:।
ङ्कु:। शम्बर:। राजीव:। मुण्डी। (यथा,—
एणहरिणर्क्ष्यकुरङ्गकरालकृतमालशरभ-
दंष्ट्राष्टपृषतचारुष्करमृगमातृकाप्रभृतयो
ङ्घाला म्रगा: कषाया मधुरा लघवो वातपित्त-
रास्तीक्ष्णा हृद्या वस्तिशोधनाश्च॥" इति
श्रुते सूत्रस्थाने ४६ अध्याय:॥)
र्गां मांसगुणा:।
ङ्घाला: प्रायश: सर्व्वे पित्तश्लेष्महरा: स्मृता:।
ंषिद्वातकराश्चापि लघवो बलवर्द्धना:॥"
इति भावप्रकाश:॥
मूलं, क्ली, (जङ्घाया: मूलं रोगविशेष:।)
ङ्घावेदना। तस्यौषधं यथा;—
हरीतकी शृङ्गवेरं देवदारु च चन्दनम्।
ाययेच्छागदुग्धेन अपामार्गस्य मूलकम्॥
ङ्घामूलमहस्तम्भं सप्तरात्रे तु नाशयेत्॥"
इति गारुडे १८७ अध्याय:॥
युधि। इति कविकल्पद्रुम:॥ (भ्वां-परं-अकं-
ट्।) जजति। युधि योधने। इति दुर्गादास:॥
र युधि। इति कविकल्पद्रुम:॥ (भ्वां-परं-
कं-सेट्।) र, जञ्जते। युधि योधने। इति
र्गादास:।
क:, त्रि, (पुन:पुनरतिशयेन वा जपतीति।
प+यङ्+"यजजपदशां यङ:।"३।२।१६६।
त ऊक:।) पुन:पुनर्जपकर्त्ता। इति मुग्ध-
धम्॥
संहतौ। इति कविकल्पद्रुम:॥ (भ्वां-परं-
कं-सेट्।) जटति केशा: परस्परं सङ्घ:
ादित्यर्थ:। इति दुर्गादास:॥

जटा, स्त्री, (जटति परस्परं संलग्ना भवतीति।
जट्+अच्। यद्वा, जायते प्रादुर्भवतीति।
जन्+"जनेष्टन् लोपश्च।" उणां। ५। ३०।
इति टन् अन्त्यलोपश्च।) व्रतिनां शिखा।
लम्बकच:। तत्पर्य्याय:। सटा २। इत्य-
मर:॥ जटि:३ जटी४ जूट:५ जुटकम्६ सटम्७
कौटीरम् ८ जूटकम् ९ हस्तम् १०। इति
शब्दरत्नावली॥ (यथा, महाभारते।३।११२।२।
"नीला: प्रसन्नाश्च जटा: सुगन्धा
हिरण्यरज्जुग्रथिता: सुदीर्घा:॥")
मूलम्। यथा,—
"यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणि:॥"
इति श्रीभागवते श्रुतिस्तवे ८७ अध्याय:॥
मांसी। इति मेदिनी। टे, १५॥ रुद्रजटा।
(यथा, सुश्रुते कल्पस्थाने ७ अध्याये।
"कालेयकं पद्मकञ्च मधुकं नागरं जटाम्॥")
शतावरी। इति राजनिर्घण्ट:॥ कपिकच्छु:।
इति रत्नमाला॥ (वेदपाठविशेष:। यथा,—
"जटा माला शिखा लेखा ध्वजो दण्डो रथो
घन:।
अष्टौ विकृतय: प्रोक्ता: क्रमपूर्व्वं महर्षिभि:॥")
जटाजूट:, पुं, (जटानां जूट: समूह:।) जटा-
समूह:। यथा, महानाटके।
"जटाजूटग्रन्थिं द्रढ़यति रघूणां परिवृढ़:॥"
शिवजटा च॥
जटाज्वाल:, पुं, (जटेव ज्वाला यस्य।) प्रदीप:।
इति हारावली। २४॥
जटाटङ्क:, पुं, (जटा टङ्क इवास्य।) शिव:।
इति त्रिकाण्डशेष:॥
जटाटीर:, पुं, (जटामटतीति। अट्+बाहु
लकादीरन्।) शिव:। इति त्रिकाण्डशेष:॥
जटाधर:, पुं, (धरतीति। धृ+अच्। जटाया
धर:।) शिव:। इति शब्दरत्नावली॥ (यथा,
महाभारते। १३। १७। १२६।
"शिनेत्रश्च विषमाङ्गो मणिविद्धो जटाधर:॥")
बुद्धभेद:। इति त्रिकाण्डशेष:॥ पर्य्याय-
नानार्थकोषाख्याभिधानग्रन्थकारश्च॥ (स्कन्द-
स्यानुचरविशेष:। यथा, महाभारते। ९।
४५। ५९।
"परिस्रुत: कोकनद: शतकेशो जटाधर:॥"
देशविशेष:। स तु दाक्षिणात्यप्रदेश:। यथा,
बृहत्संहितायाम्। १४। १३।
"अथ दक्षिणेन।" इत्युक्त्वा,—
"क्रौञ्चद्वीपजटाधरकावेर्य्यो रिष्यमूकश्च॥"
इत्युक्तवान्॥
जटाधारिणि, त्रि। यथा, रामायणे।२।८६।२५।
"जटाधरौ तौ द्रुमचीरवाससौ
महाबलौ कुञ्जरयूथपोपमौ॥")
जटामांसी, स्त्री, (जटा जटाकृतिं मस्यति इति।
मस+"मसेर्दीर्घश्च।" उणां।३।६४। इति सो
दीर्घश्च।) सुगन्धिद्रव्यविशेष:। तत्पर्य्याय:।

नलदम् २ पक्षिणी३ पेषी ४ मांसी५ कृष्णजटा६
जटी ७ किराततिनी ८ जटिला ९ लोमशा
१० तपस्विनी ११। इति रत्नमाला॥ भूत-
जटा १२। इति भावप्रकाश:॥ पेशी १३
क्रव्यादि १४ पिशिता १५ पिशी १६ पेशिनी
१७ जटा १८ हिंसा १९ मांसिनी २० जटाला
२१ नलदा २२ मेषी २३ तामसी २४ चक्र-
वर्त्तिनी २५ माता २६ अमृतजटा २७ जननी
२८ जटावती २९ मृगभक्षा ३० जड़ामांसी
३१ मिंसी ३२ मिषि: ३३ मिषी ३४ मिषिका
३५ मिषि: ३६। इति शब्दरत्नावली॥ अस्या
गुणा:। सुरभित्वम्। कषायत्वम्। कटुत्वम्।
शीतलत्वम्। कफभूतदाहपित्तनाशित्वम्। कान्ति-
मोदकारित्वञ्च। इति राजनिर्घण्ट:॥ तिक्तत्वम्।
मेध्यत्वम्। बलप्रदत्वम्। स्वादुत्वम्। त्रिदोषास्र-
वीसर्पकुष्ठनाशित्वञ्च। इति भावप्रकाश:॥ अनु-
लेपनेन ज्वरहृच्चतानाशित्वम्। इति राज-
वल्लभ:॥
जटायु:, पुं, (जटां याति प्राप्नोतीति। या+मृग-
य्वादित्वात् कु:। वाल्यपक्षे जटं संहतमायुर्यस्य।)
स्वनामख्यातपक्षी। स तु अरुणपुत्र: सम्पातेर-
नुज: दशरथराजसख: सीताहरणसमये राव-
णेन हत:। इति रामायणम्॥ (यथा, च
महाभारते। ३। २७८। १—७।
"सखा दशरथस्यासीत् जटायुररुणात्मज:।
गृध्रराजो महावीर: सम्पातिर्यस्य सोदर:॥
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम्।
सक्रोधोऽभ्यद्रवत् पक्षी रावणं राक्षसेश्वरम्॥
अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चस्व मैथिलीम्।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर!॥
नहि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूम्।
उक्त्वैवं राक्षसेन्द्रं तं चकर्त्त नखरैर्भृशम्॥"
"स वध्यमानो गृध्रेण रामप्रियहितैषिणा।
खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिण:॥
निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम्।
ऊर्द्ध्वमाचक्रमे सीतां गृहीत्वाङ्केन राक्षस:॥")
गुग्गुलु। इति मेदिनी। ये, ८४॥
("गुग्गुलुर्देवधूपश्च जटायु: कौशिक: पुर:।
कुम्भोलूखलकं क्लीवे महिषाक्ष: पलङ्कष:॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥
"जटायु: कालनिर्य्यास: कौशिकी गुग्गुलु: पुर:॥"
इति वैद्यकरत्नमालायाम्॥)
साम्नोऽप्ययम्। इति शिल्पकोष:॥ (यथा,
महाभारते। १। ६६। ७०।
"अरुणस्य भार्य्या श्येनी तु वीर्य्यवन्तौ महाबलौ।
सम्पातिं जनयामास वीर्य्यवन्तं जटायुषम्॥")
जटाल:, पुं, (जटाऽस्त्यस्येति। जटा+"सिध्मादि-
भ्यश्च।" ५। २। ९७। इति लच्।) कर्च्चूर:।
वट:। मुष्कक:। गुग्गुलु:। इति राज-
निर्घण्ट:। जटायुक्ते, त्रि। इति शब्दरत्नावली॥
(यथा, हरिवंशे। १८०। २२।
"चीरिण: शिखिनश्चान्ये जटालोर्द्ध्वशिरोरुहा:॥")

ततृचत्वादिव चाप्नोति यत्नं यत्नं सुनिश्चितम् ।”

इति च तन्त्रसारः ॥

हनूः, स्त्री, ( हन+पश्चि जङ् । ) हनुः । इत्य-
मरटीकायां भरतः । ( यथा,—
“शाखासु हन्वोः कण्ठाच्च चेष्टावन्तस्तु सन्धयः ।”
इति सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ।)

हनूमान्, [त्] पुं, ( हनूरस्यास्तीति । हनू+
मतुप् । ) हनुमान् । इति त्रिकाण्डशेषः ॥
( यथा, महाभारते । ३ । १४७ । २७ ।
“अहं केशरिणः क्षेत्रे वायुना जगदायुना ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥”)

हनूषः, पुं, (हन्ति मानुषानिति । हन+“ऋह-
निभ्यामूषन् ।” उणा० ४।७३। इति ऊषन् । )
राक्षसः । इति त्रिकाण्डशेषः ॥

हन्त, व्य, हर्षः । अनुकम्पा । ( यथा, गीता-
याम् । १० । १९ ।
“हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥”)
वाक्यारम्भः । विषादः । इत्यमरः ।३।३।२४३॥
(यथा, अमरुशतके । ८ ।
“रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥”)
अर्त्तिः । वादः । सम्भ्रमः । इति शब्दरत्ना-
वली ॥ खेदः । इति मेदिनी ॥ (यथा, रामा-
यणे ।
“काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥”)
अन्तकाव्यगम् । इत्यजयपालः ॥

हन्तकारः, पुं, ( हन्त इत्यस्य कारः करणम् । )
अतिथिदेयतण्डुलम् । इति केचित् ॥ हन्त-
शब्दः । यथा । यत्तु ।
“निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ ।
कुशस्य मध्यदेशेन तृतीयेन उदङ्मुखः ॥”
इति लघुविष्णूक्तम् ॥
हन्तप्रयोगेण जलदानमुक्तं तत् सनकादिप्रत्येक-
तर्पणे । यथा । सनकस्तृप्यतां तस्मै तदुदकं हन्त ।
इत्यादौ । न तु पद्मपुराणीयमिलिततर्पणे ।
इत्याह्निकाचारतत्त्वम् ॥ * ॥ अतिथये दानार्थ-
षोडशग्रासाः । यथा,—
“पूजयेदतिथिं नित्यं नमस्येदर्चयेद्द्विजम् ।
मनोवाक्कर्म्मभिः शान्तमागतं स्वगृहन्ततः ॥
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्वा तं परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्रञ्च स्याच्चतुर्गुणम् ।
पुष्कलं हन्तकारञ्च तच्चतुर्गुणमुच्यते ॥”
इति कूर्म्मपुराणे उपविभागे । १८।११३-११५॥
अपि च ।
“भिक्षाञ्च याचतां दद्यात् परिव्राड्ब्रह्मचारि-
णाम् ।
ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ।
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ।
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः ॥”
इति मार्कण्डेयपुराणे मदालसोपाख्याने । २९ ।
३४—३६ ॥

हन्ता, [ऋ] त्रि, ( हन्तीति । हन+तृच् । )
हननकर्त्ता । यथा, भट्टौ ५ सर्गे ।
“भवन्तं कार्त्तवीर्य्यो यो दीनसन्धिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्व्व-
लौकिकः ॥”

हन्तुः, पुं, मृत्युः । वृषः । हनधातोः तुप्रत्ययेन
निष्पन्नः । इति केचित् ॥ ( विनाशः । यथा,
भागवते । ११ । ५ । ५० ।
“भूभारासुरराजन्यहन्तवे गुप्तये सताम् ।
अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते ॥”)

हन्तोक्तिः, स्त्री, ( हन्त इत्यस्य उक्तिः । ) अनु-
कम्पोक्तिः । इति केचित् ॥

हन्नः, त्रि, (हद्+क्तः ।) कृतपुरीषोत्सर्गः । इत्य-
मरः । ३ । १ । ९६ ॥

हन्यमानः, त्रि, ( हन+कर्म्मणि शानच् । ) वर्त्त-
मानहननीयवस्तु । हनधातोः कर्म्मणि शान-
प्रत्ययेन निष्पन्नः । यथा,—
“हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् ।
अभ्यधावन्निशुम्भोऽथ मुख्ययासुरसेनया ॥”
इति मार्कण्डेये देवीमाहात्म्यम् ॥

हपुषा, स्त्री, वणिग्द्रव्यविशेषः । तत्तु मरीच-
वृन्तवद्दीर्घकृष्णवर्णवस्तु । हबुष् इति ख्यातम् ।
इति वैद्याः ॥ हाउवेर इति हिन्दीभाषा ।
तत् द्विविधम् । तन्मध्ये प्रथमं फलं मत्स्यसदृशं
विस्रगन्धम् । द्वितीयमश्वत्थफलसदृशं मत्स्य-
गन्धम् । तयोर्नामानि गुणाश्च ।
“हपुषा वपुषा विस्रा पराश्वत्थफला स्मृता ।
मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी ॥
हपुषा दीपनी तिक्ता कटूष्णा तुवरा गुरुः ।
पित्तोदरप्रमेहार्शोग्रहणीगुल्मशूलहृत् ॥
पराप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि ॥”
इति भावमिश्रकृतभावप्रकाशः ॥ * ॥
अपि च ।
“हपुषा हबुषा विस्रा विस्रगन्धा विगन्धिका ।
अन्या चाश्वी स्वल्पफला कच्छुघ्नी ध्वाङ्क्षनाशिनी ।
प्लीहशत्रुर्विषघ्नी च कपघ्नी चापराजिता ।
पूर्व्वा तु पञ्चनाम्नी स्यादपरा सप्तधाभिधा ।
हपुषा कटुतिक्तोष्णा गुरुश्लेष्मवातजित् ।
प्रदरोदरविट्भञ्जशूलगुल्मार्शसां हरा ॥”
इति श्रीनरहरिपण्डितविरचितराजनिर्घण्टे
शताह्वादिवर्गश्चतुर्थः ॥

हबुषा, स्त्री, हपुषा । इति राजनिर्घण्टः ॥

हम्बा, स्त्री, गोध्वनिः । तत्पर्य्यायः । हम्बा २
रेभणम् ३ । इति जटाधरः ॥ हम्भा ४ रम्भा ५ ।
इति हेमचन्द्रः ॥ ( यथा, महाभारते । १ ।
१७६ । ३१ ।
“क्रोधरक्तेक्षणा सा तु हम्बारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्व्वशः ॥”)

हम्भा, स्त्री, गोध्वनिः । इति हेमचन्द्रः । [illegible]
शेषश्च ॥

हम्म, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-
सक०-सेट् । ) मद्वर्गान्तः । हम्मति । [illegible]
दुर्गादासः ॥

हय, क्लमे । गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-
पर०-क्लमे अक०-गतौ सक०-सेट् । ) हयति [illegible]
क्लमो ग्लानिः । इति दुर्गादासः ॥

हयः, पुं, ( हयति गच्छतीति । हय+अच् [illegible]
हिनोतीति । हि+अच् वा । ) घोटकः [illegible]
इत्यमरः । २ । ८ । ४४ ॥ अथ हयायुर्व्वेदः ।
धन्वन्तरिरुवाच ।
“हयायुर्व्वेदमाख्यास्ये हयेः धर्म्मार्थसाधनम् ।
काकुटी कृष्णजिह्वश्च कृष्णास्यः कृष्णतालुकः ।
कराली हीनदन्तश्च शृङ्गी चाधिकदन्तकः ।
एकाण्डश्चैव जाताण्डः कञ्चुकी द्विखुरी स्तनी
मार्जारपादो व्याघ्राभः कुष्ठविद्रधिसन्निभः ।
यमजो वामनश्चैव मार्जारकपिलोचनः ।
एतद्दोषी हयस्त्याज्य उत्तमोऽश्वचतुष्करः ।
एते दोषास्तु कथिता हयस्याद्दिवृत्तमाः ।
मध्योऽर्द्धहस्तहीनोऽस्मो मुष्टिहस्तविहीनकः
कनीयांस्त्वर्द्धमानः स्यादर्द्धपञ्चस्तु दीर्घतः ।
षण्मुष्टिहीनः पञ्चोन उत्तमाद्यास्तु दीर्घतः ।
असंहता ये च वाहा वृषस्कन्धास्तथैव च ।
खरनेत्रप्रभावेषु न दीनाश्चिरजीविनः ।
रेवन्तपूजनाद्धोमाद्रक्षा स्यात् द्विजभोजनात्
लोहकं निम्बपत्राणि गुग्गुलुसर्षपा घृतम् ।
तिलाश्चैव वचा हिङ्गु बध्नीयाद्वाजिनां गले ।
आगन्तुकं दोषजन्तु व्रणं द्विविधमीरितम् ।
चिरपाकं खरं वातात् पित्तजं क्षिप्रपाकिका
कण्डुदाहात्मकं पित्तात् श्लेष्मादं मन्दवेदनम्
घनं कफात् सन्निपातात् सर्व्वरूपं त्रिदोषजम्
आगन्तुकन्तु शस्त्राद्यैर्दुष्टव्रणविशोधनम् ।
दन्तीमूलं हरिद्रे द्वे चित्रकं विम्बभेषजम् ।
रसोनं सैन्धवं वापि तक्रकाञ्जिकपेषितम् ।
तिलशक्तुकपिण्डीका दधियुक्ता सकेञ्जका ।
निम्बपत्रयुतं पिण्डं तिलैः शोधनरोपणम् ।
करवीरकदंशार्कगुडोद्धूटजचित्रकैः ।
भल्लातस्य पचेत्तैलं नाडीव्रणहरं परम् ।
पञ्चवल्कलकल्केन घृतेन च प्रलेपयेत् ।
द्वे हरिद्रे विडङ्गानि तथा लवणपञ्चकम् ।
पटोलं निम्बपत्रञ्च वचा चित्रकमेव च ।
पिप्पली शृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ।
एतत्पानं कृमिश्लेष्ममन्दाग्निविनाशनम् ।
निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा ।
क्वाथयित्वा ततो वाहं क्षतरक्तं विचक्षणः ।
प्रातमेव प्रदातव्यं पानं कुष्ठोपशान्तये ।
मूत्रवीषु च कुक्षेषु तैलं सर्षपजं हितम् ।
पञ्चवल्कलतैलं वा दग्धलक्ष्म शोभनम् ।
अनुभावान् यदि क्षयान् शक्तिपाकान्विपत्
मातुलुङ्गरसोपेतं शोणवारत्तैव वा ॥”
सोंवकाकाने सोवानामिति च पाठः ।

...वं दद्याद्योगस्य अश्वैत्रा तैलसंयुतैः ।
...द्युं प्रथमेऽह्नि एकैकपलवर्द्धितः ॥
...वह्नि शान्तिपूर्वा स्नानस्थानेस्वृत्तमात्मके ।
...मे चतुर्द्दश खुरधमेऽष्टपलानि च ॥
...निद्रायोर्नैव देयो नैव तु दापयेत् ।
...व वातिके पित्ते शर्कराज्यपयोऽन्वितैः ।
...टुतैलैः कफे चोषैः कफे मुद्गान् कुलत्थकान् ।
...लिवृश्चिककुष्ठाख्यौ हयोऽखिलकुगुप्सितः ॥
...जम्बूनिभो हैमवत्यैः श्रेष्ठश्च गुग्गुलुः ।
...पहरणे ऋर्य्ये गुग्गुलुं पाययेद्धयम् ॥
...तने पायसं दुग्धं नाड्यास्तमस्तमेति सः ।
...काले भोजयेदश्वं शाल्यन्नं वातुले हरेत् ॥
...मामाश्च रसैः पित्ते मधुमुद्गरसाज्यकैः ।
...पि मुद्गान् कुलत्थान् वा कटुतिक्तान् घ्नमान् हये ।
...धिते वाधिते श्वासे त्रिदोषादौ तु गुग्गुलुम् ।
...हैत्वा सर्व्वरोगे प्रथमेऽह्नि पलं हरेत् ॥
...वर्द्धयेत् ततो वर्षमेकादिपलपञ्चकम् ।
...त्तमे स्याच्च चत्वारि त्रीणि मध्यजघन्ययोः ॥
...नेन भोजनेनैव अशीतिपलकं वरे ।
...ध्ये षष्टिश्चाधमेऽथ चत्वारिंशच्च भोगिषु ॥
...षे कुष्ठेषु खञ्जेषु त्रिफलाक्वाथसंयुतम् ।
...द्यौ शोथरोगे च गवां मूत्रेण योजयेत् ॥
...नपित्तोल्वणे व्याधौ गोक्षीरघृतसंयुतम् ।
...यं क्षयार्त्ता पुष्ट्यर्थं माषैर्यत्नाच्च भोजनम् ॥
...पिष्टायाः प्रदातव्यं गुडूच्याः पलपञ्चकम् ।
...भाते घृतसंयुक्तं शरद्ग्रीष्मे वाजिनाम् ॥
...रोगघ्नं पुष्टिदश्चापि बलतेजोविवर्द्धनम् ।
...देवाश्वाय दद्याद्वै क्षीरयुक्तमथापि वा ॥
...गुडूचीकल्कयोगेन शतावर्य्यश्वगन्धयोः ।
...चत्वारि त्रीणि मध्यस्य जघनस्य पलानि हि ॥
...कस्माद्यत्र वाहानामेकरूपं यदा भवेत् ।
...म्रियते च तदा क्षिप्रं उपसर्गं तमादिशेत् ॥
...होमाद्यैरथवा विप्रभोजनैर्बलिकर्म्मणा ।
...शान्तोपसर्गशान्तिः स्याद्धरीतक्यादिकल्पतः ॥
...हरीतकी वगोमूत्रा तैलेन लवणान्विता ।
...चादौ पञ्च ततः पञ्चवृद्ध्या पूर्णा शतावधि ।
...उत्तमाश्वे शतं प्रोक्तमशीतिः षष्टिरन्तरे ॥*॥
...श्वायुर्वेदमासाद्य उक्ताः कल्पा गजे हिताः ।
...गजे चतुर्गुणा मात्रा ताभिर्गजवरार्द्दनम् ॥
...श्वोपसर्गबाधौघ्नं प्रमथं शान्तिकर्म्म च ।
...पूजयित्वा सुरान् विप्रान् आश्वयी कपिलां दहेत् ॥
...रात्रिद्वये मात्रा त्रिरात्रायादुपोषितः ।
...मन्त्रैर्मन्त्रिता वैद्यो वचासिद्धार्थकामदे ॥
...कर्म्माद्याः शिवदुर्गाश्रीविष्णुना रचना ग्रहः ।
...वर्षि दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥
...भोजनं मन्त्रितं दद्यात् भक्तगोहूनयेन्नयम् ।
...भूमी दत्वा शुभा मेध्या वारुणी दत्वा सदा ॥
...त्रिफला पञ्चकोषे च दशमूलं विडङ्गकम् ।
...शतावरी गुडूची च निम्बवासककिंशुकाः ॥
...सर्व्वरोगविनाशाय शीतः कल्कः कषायकः ।

आयुर्व्वेदो गजाश्वानामुक्तः संक्षेपसारतः ॥"

इति गारुडे हयायुर्व्वेदः २०७ अध्यायः ॥
युक्तिकल्पतरुक्तहयपरीक्षा घोटकशब्दे द्रष्टव्या ॥*॥ हये वर्जनीयानि यथा। वेगः १ औन्नत्यम् २ तेजः ३ सन्नाचयस्थितिः ४ खुरोत्खातरजः ५ रूपम् ६ जातिः ७ गतिविचित्रता ८। इति कविकल्पलता ॥*॥ अथ हयशकुनः।

"हेषारवं सृजति वामतो यः
क्षुसंक्षितिर्दक्षिणपादघातैः।
कण्डूयते दक्षिणमङ्गभागं
तुङ्गं तुरङ्गः स ददं ददाति ॥"

इति वसन्तराजे हयशकुनः १३ वर्गः ॥

**हयकातरा**, स्त्री, (हयः कातरो यस्याः।) अश्वकातराक्षुपः। घोड़कायरा इति हिन्दी भाषा ॥

**हयकातरिका**, स्त्री, (हयकातरा एव। स्वार्थे कन्। टाप् अत इत्वम्।) अश्वकातराक्षुपः। घोड़कायरा इति हिन्दी भाषा। यथा,—
"कातरा हयपर्य्यायैः कातरान्तैः प्रकीर्त्तिता।
अश्वकातरिका तिक्ता वातघ्नी दीपनी परा ॥"

इति राजनिर्घण्टः ॥

**हयगन्धं**, क्ली, (हयस्येव गन्धो यस्य।) काचलवणम्। इति राजनिर्घण्टः ॥ (विवरणमस्य काचलवणशब्दे ज्ञातव्यम् ॥)

**हयगन्धा**, स्त्री, (हयस्येव गन्धो यस्याः।) अश्वगन्धा। इति रत्नमाला ॥ (अस्याः पर्य्यायो यथा,—
"गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया।
वराहकर्णी वरदा बलदा कुष्ठगन्धिनी ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
अजमोदा। इति राजनिर्घण्टः ॥

**हयग्रीवः**, पुं, (हयस्य ग्रीवा इव ग्रीवा यस्य।) मधुकैटभहृतवेदोद्धारार्थं विष्णोरवतारविशेषः। तस्य रूपं यथा,—
"मृणालविकेन कायेन भूत्वा चन्द्रप्रभस्तदा।
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ॥
तस्य मूर्द्धा समभवत् द्यौः सनक्षत्रतारका।
केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः ॥
कर्णावाकाशपाताले ललाटं भूतधारिणी।
गङ्गा सरस्वती श्रोण्यौ भ्रुवावास्तां महोदधी ॥
चक्षुषी सोमसूर्य्यौ ते नासा सन्ध्या पुनः स्मृता।
प्रणवस्त्वथ संस्कारो विद्युज्जिह्वा च निर्म्मिता ॥
दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥
ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा।
एतद्धयशिरः कृत्वा नानामूर्त्तिभिरावृतम् ॥"

इति महाभारतम् ॥*॥
(हयग्रीवदैत्यवधार्थमेव भगवान् हयग्रीवमूर्त्तिरभवत्। इति देवीभागवतमतम् ॥ अस्य विवरणन्तु तत्रैव १ स्कन्धे ५ अध्याये द्रष्टव्यम् ॥)
विष्णुवध्यदैत्यविशेषः। इति हेमचन्द्रः ॥ स च कल्पान्ते ब्रह्मणि प्रसुप्ते वेदं हृतवान्। तद्वेदोद्धारार्थं विष्णुना मत्स्यावतारेण स हतः ॥ इति केचित् ॥*॥ अपि च।
"ब्रह्मगङ्गाजलस्यान्तस्तीरे ब्रह्मसुतस्य च।
विश्ववायाक्ष्यो देवः शिवलिङ्गसमन्वितः।
विश्वदेवी महादेवी योगिमङ्गलरूपिणी ॥
हयग्रीवेण युयुधे तत्र देवो जगत्पतिः।
हयग्रीवं यत्र हत्वा मणिकूटं तथागमत् ॥"

इति कालिकापुराणे ८२ अध्यायः ॥

**हयग्रीवहा**, [न्] पुं, (हयग्रीवं हन्तीति। हन् + क्विप्।) विष्णुः। इति हेमचन्द्रः ॥

**हयग्रीवा**, स्त्री, दुर्गा। यथा,—
"नारसिंही हयग्रीवा हिरण्याक्षविनाशिनी।"

इति तस्याः सहस्रनामस्तोत्रम् ॥

**हयङ्कषः**, पुं, (हयं उच्चैःश्रवसं कषतीति। कष + खच्।) मातलिः। स तु इन्द्रसारथिः। इति त्रिकाण्डशेषः ॥

**हयनं**, क्ली, (हयति गच्छत्यनेनेति। हय + ल्युट्।) कर्णीरथः। इत्यमरः ॥ तस्य रूपान्तरं वयनम्। इति तट्टीकायां भरतः ॥

**हयपुच्छी**, स्त्री, (हयस्य पुच्छमिव आकृतिर्यस्याः। ङीष्।) माषपर्णी। इत्यमरः। २।४।१३८ ॥

**हयप्रियः**, पुं, (हयस्य प्रियः।) यवः। इति हेमचन्द्रः ॥ (यवशब्देऽस्य गुणादयो ज्ञेयाः ॥)

**हयप्रिया**, स्त्री, (हयस्य प्रिया।) अश्वगन्धा। खर्ज्जूरी। इति राजनिर्घण्टः ॥

**हयमारः**, पुं, (हयं मारयतीति। मृ + णिच् + अण्।) करवीरः। इति राजनिर्घण्टः ॥

**हयमारकः**, पुं, (हयं मारयतीति। मृ + णिच्। ण्वुल्।) करवीरवृक्षः। इत्यमरः। २।४।७६ ॥

**हयमारणः**, पुं, (हयं मारयतीति। मृ + णिच् + ल्युः।) अश्वत्थवृक्षः। इति शब्दचन्द्रिका ॥

**हयवाहनः**, पुं, (हयो वाहनमस्य।) रेवन्तः। स तु सूर्य्यपुत्रः। इति हेमचन्द्रः ॥ कुबेरः। इति केचित् ॥

**हयवाहनशङ्करः**, पुं, रक्तकाञ्चनः। इति शब्दचन्द्रिका ॥

**हयशाला**, स्त्री, (हयस्य शाला।) अश्वालयः। यथा, मात्स्ये। २१७। १६—२१।
"गवां स्थानं तथैवात्र तुरगाणान्तथैव च।
उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ॥
दक्षिणाभिमुखा वाथ परिशिष्टास्तु गर्हिताः।
तुरगास्तु तथा धार्य्याः प्रदीपैः सर्व्वरात्रिकैः ॥
कुक्कुटा वानराश्चैव मर्कटाश्च नराधिप!।
धारयेदश्वशालायां सवत्सां धेनुमेव च।
अजाश्च धार्य्या यत्नेन तुरगाणां हितैषिणा ॥
गोगजाश्वादिशालासु ततपुरीषस्य निर्गमम्।
अस्तं गते न कुर्व्वीत देवदेवे दिवाकरे ॥"

**हयशीर्षः**, पुं, (हयस्य शीर्षं शीर्षं यस्य।) विष्णुः। यथा,—
"ततो जगाम हृष्टोऽसौ द्रष्टुं वाजिमुखं प्रभुम्।

तत्र देवह्रदे स्नात्वा तर्पयित्वा पितॄन् सुरान् ।
संपूज्य हयग्रीवञ्च जगाम गजसाह्वयम् ॥”
इति वामनपुराणे ७१ अध्यायः ॥

**हया**, स्त्री, ( हयस्तद्गन्धोऽस्त्यस्या इति । अच् । टाप् । ) अश्वगन्धा । इति राजनिर्घण्टः ॥

**हयाध्यक्षः**, पुं, (हयस्य अध्यक्षः ।) अश्वाध्यक्षः । तस्य लक्षणं यथा,—
“हयशिक्षाविधानज्ञस्तच्चिकित्सितपारगः ।
अश्वाध्यक्षो महीभर्त्तुः स्वासनश्च प्रशस्यते ॥”
इति मात्स्ये । २१५ । ३७ ॥

**हयानन्दः**, पुं, ( हयस्य आनन्दो यस्मात् । ) मुद्गः । इति राजनिर्घण्टः ॥ ( गुणादयोऽस्य मुद्गशब्दे ज्ञातव्याः ॥ )

**हयायुर्व्वेदः**, पुं, ( हयस्य आयुर्व्वेदः । ) घोटकचिकित्साशास्त्रविशेषः । तच्छास्त्रं हयशब्दे द्रष्टव्यम् ॥

**हयारिः**, पुं, ( हयस्य अरिः । ) करवीरः । इति रत्नमाला ॥

**हयाशना**, स्त्री, (हयानामशनं यस्याः ।) शल्लकीवृक्षः । इति शब्दचन्द्रिका ॥

**हयी**, स्त्री, ( हयस्य स्त्री । हय+ङीष् । ) घोटकी । इति जटाधरः ॥

**हयेष्टः**, पुं, ( हयानामिष्टः । ) यवः । इति राजनिर्घण्टः ॥

**हयोत्तमः**, पुं, ( हयेषु उत्तमः । ) कुलीनाश्वः । तत्पर्य्यायः । वाताश्वः २ जात्यः ३ आजानेयः ४ । इति त्रिकाण्डशेषः ॥

**हरः**, पुं, ( हरति पापानीति । हृ+अच् । ) शिवः । इत्यमरः । १ । १ । ३५ ॥ ( यथा, रघुः । ४ । ३२ ।
“स सेनां महतीं कर्षन् पूर्व्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥”)
अग्निः । गर्द्दभः । इति केचित् ॥ हरणम् । इत्यङ्कशास्त्रम् ॥ त्रि, हरणकर्त्ता । ( यथा, भागवते । ३ । १८ । ११ ।
“एते वयं न्यासहरा रसौकसां
गतह्रियो गदया द्रावितास्ते ॥”)

**हरकः**, पुं, ( हर एव । स्वार्थे कन् । ) शिवः । चौरः । इति केचित् ॥ हरणकर्त्तरि, त्रि ॥

**हरगौरी**, स्त्री, ( हरेण सह गौरी । ) अर्द्धनारीश्वरमूर्त्तिः । यथा,—
देव्युवाच ।
“यथा तवाहं सततं छायेवानुगता हर ।
भवेयं सायुज्येन तथा मां कर्त्तुमर्हसि ॥
सर्व्वगात्रेण संस्पर्शं नित्यालिङ्गनविभ्रमम् ।
अहमिच्छामि भवतस्तच्चेत् कर्त्तुमर्हसि ॥
श्रीभगवानुवाच ।
रोचते तन्ममापि यत्त्वमिच्छसि भाविनि ! ।
तत्रोपायमहं वच्मि यदि शक्नोषि तत् कुरु ॥
अर्द्धं मम शरीरस्य गृहाण त्वं मनोहरे ।
अर्द्धं भवतु मे नारी तथैवार्द्धं पुमानिति ॥
यदि त्वं नहि शक्नोषि हर्त्तुं तत्त्वर्द्धमीदृशम् ।
तदाहं ते हरिष्यामि शरीरार्द्धं वरानने ! ॥
तवैवार्द्धं तथा नारी अर्द्धं भवतु पूरुषः ।
विद्यते तव शक्तिर्मे त्वमनुज्ञातुमर्हसि ॥
श्रीदेव्युवाच ।
“तवैवाहं हरिष्यामि शरीरार्द्धं वृषध्वज ! ।
किन्त्वहं त्वेकमिच्छामि यथैत्त्वं हर इच्छसि ॥
तथाहमर्द्धं भवतो हृत्वा तिष्ठामि तावता ।
त्यजाम्यहं यदा तेऽर्द्धं सम्पूर्णं स्यात्तदा द्वयम् ॥
इत्यर्द्धभागहरणं भवेद्यदि यथेप्सितम् ।
तदेवाहं तदा शम्भोः शरीरार्द्धं हराम्यहम् ॥”
ईश्वर उवाच ।
एवमस्तु भवेन्नित्यं यथा त्वं कर्त्तुमिच्छसि ।
शरीरार्द्धस्य हरणं भूयात्तव यथेप्सितम् ॥
श्रीऔर्व्व उवाच ।
अथ गौरी तदा पूर्व्वमनुभूतं तपःस्थितौ ।
योगनिद्रास्वरूपं तदात्मानोऽचिन्तयत्स्थिया ॥
हरं प्रणम्य प्रथमं ब्रह्माणञ्च ततः परम् ।
ततस्त्रिजगतामीशं हरिं नारायणं प्रभुम् ॥
चिन्तयित्वा तथा तेषामेकतां सा जगन्मयी ।
आत्मानं योगनिद्राञ्च चिन्तयित्वा मनस्विनी ॥
दक्षिणे स्वशरीरस्य भागार्द्धं शशभृद्भृतः ।
शरीरस्य तथा वाममतिप्रेम्णा निजं हरे ॥
हरोऽपि स्वशरीरार्द्धं गौरीकाये तदा स्वयम् ।
प्रेम्णा निवेशयत्तस्याश्चिकीर्षुः प्रियमद्भुतम् ॥
अथ स्थित्वा तदा भर्गः काल्या सह चिरं तदा ।
परित्यज्य शरीरार्द्धं पृथगेव बभौ यथा ॥
काली भूत्वा स्वयं गौरी शरीरार्द्धन्तु शाङ्करम् ।
प्राप्य मोदात्तदात्मानं वन्दुष्टा च जगन्मयी ॥
एवं यदा शरीरार्द्धमादाय परमेश्वरी ।
हरस्य तिष्ठति तदा राजतेऽतीवशोभना ॥
अर्द्धं धम्मिल्लसंयुक्तं जटाजूटार्द्धयोजितम् ।
एकस्मिन् श्रवणे भोगी भागे जाम्बूनदोचितम् ।
कुण्डलं श्रवणेऽन्यस्मिन् शीर्षे तस्या वरानन ॥
अर्द्धं म्रगाक्षि चास्यार्द्धं वृषभाक्षि वरानन ।
अर्द्धं स्थूलनसं चारु तिलपुष्पनसं परम् ॥
दीर्घश्मश्रु तथैवार्द्धमर्द्धं श्मश्रुविवर्ज्जितम् ।
आरक्तचारुदशनं रक्तौष्ठमेकतस्तथा ॥
अपरं शुक्लविपुलदीर्घाहति रदं परम् ।
अर्द्धं नीलगलञ्चार्द्धमपरं हारसंयुतम् ॥
अर्द्धं कङ्कणकेयूरयुक्तबाहु तथापरम् ।
नागकेयूरसंयुक्तस्थूलबाहु निरूर्म्मिकम् ॥
अर्द्धं विशायतभुजं करिहस्तभुजं परम् ।
एकत्र सोर्म्मिकाः शाखाः करस्यान्यत्र तां विना ॥
एकस्तनन्तु हृदयं रोमावल्यर्द्धसंयुतम् ।
रम्भास्तम्भसमानोरु सुपार्ष्णि मृदुपादकम् ॥
एकं तथापरं स्थूलसंहतोरु पदाम्बुजम् ।
एकचारु मृदु स्थूलजघनं सुमनोहरम् ॥
तथापरं दृढकटि संहतोरुपदाम्बुजम् ।
एकं वैयाघ्रचर्म्मोपयुक्तं भूतिविलेपनम् ॥
अपरं मृदुकौशेयवसनं चन्दनोचितम् ।
एवमर्द्धं तथा जातं योषित्पुरुषसंयुतम् ।
अपरं वल्कवद्भूरि सुदृढं पुरुषाकृति ।
एवमर्द्धं स्मरारिर्योऽर्द्धं धार गिरिजा सती ।
हिताय सर्व्वजगतां कामाख्या कालिकोपमा
तस्याः शरीरं राजेन्द्र हरणार्द्धसंयुतम् ।
येनोपमेयं नन्नास्ति मार्गितं भुवनत्रये ।
सन्तानः पारिजातो वा एकान्तविवदत्स्वरः
अमोघया तथा वन्ध्यौ तौ चापि यथतुर्भि
वसुधा च पृथक्त्वेन तौ रेमाते नरेश्वर ।
अर्द्धनारीश्वरो भूत्वा स तु रेमे कदा च व ।
इति यद्यपि भूतेशः स्वयं शक्नोति कालिका
गौरीं कर्त्तुं तदा सर्व्वभूतकारणकारणः ।
तथापि तां गिरिसुतां संयोज्य विविधैः पु
तपस्ययोजयद्देव क्रियोपायैरनेकशः ॥
तपोनिर्धूतसर्व्वाङ्गीं पश्चाद्गौरीमथाकरोत् ।
अर्द्धञ्च प्रददौ तस्यै शरीरस्य महेश्वरः ।
नैवास्य तत्त्वं जानन्ति शक्राद्याः सकलाः सुराः
शरीरार्द्धप्रदानस्य तपसो योजनस्य च ।
एतस्य तत्त्वं जानन्ति महात्मानो महाबला
नन्दी भृङ्गी महाकालो वेतालो भैरवस्तथा
अङ्गभूता महेशस्य वीतभीतास्तपोधनाः ।
ये मानुषशरीरेण प्रापिरे तपसो बलात् ।
गणानामाधिपत्यन्तु ते जानन्ति हरं परम्
एवं सदा त्वया योष्याः सानुगा नृपसत्तम
वनिताः सत्क्रियोपायैस्ततो भद्रमवाप्स्यसि
य इदं शृणुयान्नित्यमद्भुतं पुण्यदायकम् ।
शिवयोः प्रीतिकरणं शरीरार्द्धग्रहं तथा ।
गौरीत्वापादनञ्चैव कालिकायाः शुभावह
न तस्य विघ्ना जायन्ते स च पुण्यतमो मन
दीर्घायुः स सुखी भूयात् पुत्त्रपौत्त्रसमन्वित
सततं परिभ्रमस्थानः शिवयोश्चरितं महत् ।
शिवलोकमवाप्नोति सुचिरं शिववल्लभः ॥”
इति श्रीकालिकापुराणे ४४ अध्याय

**हरचूडामणिः**, पुं, ( हरस्य चूडामणिः शि भूषणमिव ।) चन्द्रः । इति भूरिप्रयोगः । शिरोरत्नञ्च ॥

**हरणं**, क्ली, ( ह्रियते इति । हृ+ल्युट् । ) कादिदेयद्रव्यम् । ( यथा, रघुः । ७ । ३२
“स त्वानुरूपाहरणीकृतश्रीः
प्रास्थापयत् राघवमन्वगाच्च ॥” )
तत्पर्य्यायः । दायः २ । इत्यमरः । २ । ८ ।
यौतकं आदिना उपनयनभिक्षाप्रदाद
यत् देयं तत् दायहरणपदवाच्यं कन्यादा
जामात्रादिभ्यो व्रतभिक्षादौ ब्रह्मचारिभ्य
द्रव्यं दीयते तच्च दायादिपदाभिधेयम् ।
योनिसम्बन्धः तत्र भवमिति वा यौतकं
वधूवरयोरिदमिति वा कचित् यौतकं
मुकारमध्यमपि । यौतकं यौतुकञ्च तत्
वाचस्पतिः । दीयते दायः कर्म्मणि घञ्
दीयते सुदायः इति पाठः इत्यन्ये ।
हरणं कर्म्मणि ल्युट् । इति भरतः

भुजः । स्तुतिः । इति मेदिनी ॥ ( यथा, भागवते । १० । ५० । ६ ।
"एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥")
शुक्लम् । स्वर्णम् । कपर्द्दकम् । उच्चोदकम् ।
इति केचित् ॥ भाज्याङ्कात् भाजकाङ्कहारा
भागग्रहणम् । इति लीलावती ॥

हरतेजः, [स्] क्ली, ( हरस्य तेजः । ) पारदम् ।
इति राजनिर्घण्टः ॥ शिववीर्य्यञ्च ॥

हरनेत्रं, क्ली, ( हरस्य नेत्रम् । ) शिवचक्षुः ।
तत्संख्यानयम् । इति ज्योतिःशास्त्रम् ॥

हरबीजं, क्ली, ( हरस्य बीजम् । ) पारदम् ।
इति भूरिप्रयोगः ॥

हररूपः, पुं, (हरस्य रूपमिव रूपमस्य ।) शिवः ।
इति शब्दरत्नावली ॥

हरशेखरा, स्त्री, ( हरस्य शेखरं आवासत्वेना-
स्त्यस्या इति । अच् ।) गङ्गा । इति हेमचन्द्रः ॥

हरहूरा, स्त्री, हारहूरा । द्राक्षा । इति केचित् ॥

हराद्रिः, पुं, ( हरस्य अद्रिः । ) कैलासपर्व्वतः ।
इति केचित् ॥ ( यथा, कथासरित्सागरे ।११३।
६६ ।
"विद्याधराः स्त्रयुत यः क्रुरुते ममात्र
धर्म्मव्यतिक्रममितः प्रभृति प्रजासु ।
वध्यः स मे नियतमित्यभितो हराद्रि-
मुद्घोषयाञ्च स ततो भ्रमयाञ्चकार ॥")

हरिः, पुं, ( हरति पापानीति । हृ + "हृपिषि-
रुहीति ।" उणा० ४ । ११८ । इति इन् । )
विष्णुः । ( यथा, रघुः । १० । ८६ ।
"हरिरिव युगदीर्घैर्द्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥")
सिंहः । ( यथा, रघुः । २ । ५६ ।
"स न्यस्तशस्त्रो हरये स्वदेह-
मुपानयत् पिण्डमिवामिषस्य ॥")
शुकपक्षी । सर्पः । वानरः । भेकः । इत्यमरः ॥
चन्द्रः । सूर्य्यः । वायुः । अश्वः । ( यथा,
महाभारते । ३ । १६६ । ५ ।
"ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ॥ )
यमः । शिवः । ब्रह्मा । किरणः । इन्द्रः । (यथा,
रघुः । १२ । १०३ ।
"यन्ता हरेः सपदि संहृतकार्म्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्य्यम् ॥" )
वर्णविशेषः । इति मेदिनी ॥ मयूरः । कोकिलः ।
हंसः । अग्निः । इति शब्दरत्नावली ॥ भर्तृ-
हरिः । इति त्रिकाण्डशेषः ॥ पिङ्गवर्णः ।
हरिद्वर्णः । इति हेमचन्द्रः ॥ * ॥ हरेरष्टोत्तर-
शतनामानि यथा,—

श्रीसदाशिव उवाच ।
"श्रीकृष्णाष्टोत्तरशतं नाम मङ्गलदायकम् ।
तच्छृणुष्व महाभाग ! सर्व्वकल्मषनाशनम् ॥
श्रीकृष्णः पुण्डरीकाक्षो वासुदेवो जनार्द्दनः ।
नारायणो हरिर्व्विष्णुर्म्माधवः पुरुषोत्तमः ॥
गोविन्दः केशवोऽनन्तो वामनो मधुसूदनः ।
दामोदरो हृषीकेशः पद्मनाभस्त्रिविक्रमः ॥
वैकुण्ठश्चाच्युतो रामश्चक्रपाणिरधोक्षजः ।
पीताम्बरो जगन्नाथो नृसिंहो गरुड़ध्वजः ॥
राधिकापतिरानन्दस्वरूपो विश्वमोहनः ।
यशोदानन्दनः सख्यः श्रीगोपीजनवल्लभः ॥
गदाधरो हयग्रीवो वराहश्च गवीश्वरः ।
गोवर्द्धनधरो विश्वबीजं कमललोचनः ॥
सर्व्वान्तर्यामी जगदीशश्चाणूरमर्द्दनः प्रभुः ।
विश्वम्भरो यज्ञभोक्ता वनमाली सनातनः ॥
पुराणपुरुषो नन्दात्मजः श्रीवत्सलाञ्छनः ।
देवकीनन्दनः श्यामः श्रीश्यामाप्राणवल्लभः ॥
अनिरुद्धः परं ब्रह्म मुरारिः श्रीधरस्तथा ।
श्रीगोपीमोहनः शार्ङ्गधन्वा तु ब्राह्मणप्रियः ॥
ब्रह्मण्यदेवः चैतन्यस्तापत्रयविनाशनः ।
कैटभारिर्गुणातीतो रुक्मिणीरमणो विराट् ॥
सङ्कर्षणः शेषशायी दैत्यारिर्वेकभित्तथा ।
सर्व्वशास्त्रप्रणेता च मुकुन्दो भक्तवत्सलः ॥
अघासुरघ्नः प्रद्युम्नो हंसश्च सुरलीधरः ।
कुवलयापीड़घाती च पद्मधारी चतुर्भुजः ॥
भक्तलोकैकशरणो गोपालो वैष्णवप्रियः ।
वंशीपाणिर्गुणमयः कोटिकन्दर्पमोहनः ॥
वेणुवाद्यविनोदी च कंसारिर्यादवस्तथा ।
चतुर्व्वेदमयो नित्यः सच्चिदानन्दविग्रहः ।
दीननाथैकशरणं भक्तानुग्रहकारकः ॥ * ॥
एतदष्टोत्तरशतं कृष्णनाम शुभङ्करम् ।
प्रत्यहं यः पठेत् प्रातस्त्रिसन्ध्यां वा विशेषतः ॥
दिवादिचरो भक्त्या शृणोति जपति स्मरेत् ।
दुःस्वप्ननाशनं तस्य मनोमलविनाशनम् ॥
सर्व्वापराधशमनं सर्व्वपापक्षयो भवेत् ।
पावनं शान्तिदं पुण्यं तापत्रयविनाशनम् ॥
आयुष्यं सर्व्वसुखदं सर्व्वदुःखापहं सुने ! ।
व्रतयज्ञतपोदानयागतीर्थफलप्रदम् ॥
पुत्त्रदं चाशु वन्ध्यानां ग्रहपीड़ादिनाशनम् ।
सर्व्वाभीष्टप्रदं सर्व्वैश्वर्य्यदं विघ्ननाशनम् ॥
सर्व्वोपद्रवदारिद्र्यनाशनं मानवस्य तु ।
सद्बुद्धिविद्याविज्ञानयशोधर्म्मप्रदं तथा ॥
सर्व्वभीतिहरं भक्तिमुक्तिधान्यधनप्रदम् ।
सर्व्वरोगक्षयकरं बाह्यान्तःशुद्धिदं परम् ॥
फलकामिनो वैष्णवस्य सर्व्वकामफलप्रदम् ।
सर्व्वशत्रुक्षयो याति हरिभक्तिश्च जायते ॥
सरस्वती च वदनं कमलाविरतं भवेत् ।
क्षेत्रतीर्थे च मरणं गङ्गायां वा विशेषतः ॥
मोचनं भवबन्धस्य यमभीतिविनाशनम् ।
निष्कामिनस्तनयस्य प्रेमभक्तिसुखप्रदम् ।
भवेदहैतुकं ज्ञानं साक्षात् कृष्णः प्रसीदति ॥"
इति पाद्मोत्तरखण्डे १११ अध्यायः ॥ * ॥

श्रीहरिपादचिह्नानि यथा,—

श्रीसदाशिव उवाच ।
"सच्चिदानन्दरूपस्य कृष्णस्याद्भुतकर्म्मणः ।
संस्मरेत् पादचिह्नानि प्रातर्भक्त्या नरोत्तमः ॥
अतिगुह्यानि देवर्षे ! यानि भक्तिप्रदानि च ।
कर्म्मसुखप्रदानीह नव शोक्तानि वेधसा ॥
मयापि भुवनैश्वर्य्यं कथितानि प्रयत्नतः ।
पुराणी सुदक्षिणाभूत् श्रुत्वा ब्रह्मसुखप्रदा ॥

दिलीप उवाच ।
कानि कानि च चिह्नानि कृष्णस्य पादयो-
र्मुने ।
वशिष्ठ ! श्रोतुमिच्छामि तच्चक्ष्वानुपूर्व्वकम् ॥

वशिष्ठ उवाच ।
बहूनिदानृ स्वयं ब्रह्मा नारदाय नराधिप ! ।
तत् शृणुष्व महत् पुण्यमतिगोप्यतमं वचः ॥
विधिर्द्देवर्षिणा पृष्ट उपाख्यानमिदं पुरा ।
महाभागवतं पुण्यमेकदा तमुवाच ह ॥

ब्रह्मोवाच ।
शृणु नारद वक्ष्यामि पादयोश्चिह्नलक्षणम् ।
भगवत्कृष्णरूपस्य ह्यानन्दैकरसस्य च ॥
अवताराः ह्यसंख्याश्च कथिता ये तवानघ ।
परं सम्यक् प्रवक्ष्यामि कृष्णस्तु भगवान् स्वयम् ॥
देवानां कार्य्यसिद्ध्यर्थमृषीणां वा तथैव च ।
आविर्भूतस्तु भगवान् स्वानां प्रियचिकीर्षया ॥
तेनैव ज्ञायते देवो भगवान् भक्तवत्सलः ।
तान्यहं वेद्मि नान्योऽस्ति सत्यमेतन्मयोदितम् ॥
जनविंशतिचिह्नानि मया दृष्टानि तत्पदे ।
दक्षिणे दश चिह्नानि वामे च नव नारद ! ॥
ध्वजातपत्रं कमलं वज्राङ्कुशमथो यवः ।
स्वस्तिकं चोर्द्ध्वरेखा चाष्टकोणं चक्रमेव च ॥ * ॥
नवान्यानि प्रवक्ष्यामि साम्प्रतं वैष्णवोत्तम ! ।
चिह्नानि वामचरणे गोविन्दस्याद्भुतानि च ॥
इन्द्रचापं त्रिकोणञ्च कलसञ्चार्द्धचन्द्रकम् ।
शङ्खोऽम्बरं मत्स्यचिह्नं गोष्पदं जाम्बवं स्मृतम् ॥
अङ्कान्येतानि भो विप्र ! दृश्यन्ते च यदा कदा ।
कृष्णाख्यन्तु परं ब्रह्म भुवि जातं न संशयः ॥
द्वयं वाथ त्रयं वाथ चत्वारः पञ्च एव वा ।
दृश्यन्ते वञ्चविन्मल्ल ह्यवतारः कथञ्चन ॥
मध्ये ध्वजा तु विज्ञेया पद्मं दाङ्कस्मानतः ।
वज्रन्तु दक्षिणे पार्श्वे चाङ्कुशो वै तदग्रतः ॥
यवोऽप्यङ्गुष्ठमूले स्यात् स्वस्तिकं यत्र कुत्र-
चित् ।
आतपत्रं चोर्द्ध्वरेखा वामे चक्रञ्च दक्षिणे ॥
आद्यमङ्गुलिमारभ्य यावद्वै मध्यमा स्थिता ।
तावद्वै चोर्द्ध्वरेखा च कथिता पद्मलक्षणे ॥
अष्टकोणं ततो वत्स ! समागाष्टाङ्कुलैश्च तत् ।
निर्दिष्टं दक्षिणे पादे वैष्णवाङ्कुशयो हरेः ॥ * ॥
एवं पादस्य चिह्नानि नान्यं वहति वैष्णवः ।
दक्षिणेतरस्थानानि संवदामीह संस्मरेत् ॥
चतुरङ्गुलमानेन द्व्याङ्गुलिकसमीपतः ।
इन्द्रचापं ततो विद्यादन्यच च न ते क्वचित् ॥
त्रिकोणं मध्यनिर्दिष्टं कलसो यत्र कुत्रचित् ।
अष्टाङ्गुलप्रमाणेन तद्वरेरर्द्धचन्द्रकम् ॥
अर्द्धचन्द्रसमाकारं निर्दिष्टं तस्य सुव्रत ।
दृष्टं वै यत्र चिह्नन्तु शास्त्रज्ञैर्वै निरूपितम् ॥
त्रिकोणं दक्षिणे भागे त्वम्बरं तदधो यवः ।
जम्बूफलं त्रिकोणस्य वामपार्श्वे निरूपितम् ॥

गोष्पदं द्विखुरं ज्ञेयं तदा ह्यङ्गुलमानतः ।
त्रिकोणाधस्तु निर्द्दिष्टमधरा कलसो यथा ॥

श्रीनारद उवाच ।

न श्रुतं न च दृष्टञ्च चिह्नमेतन्मनोदितम् ।
रूपं वै ब्रह्मन् वद त्वं साम्प्रतं मम ॥

श्रीब्रह्मोवाच ।

पताका च ध्वजा प्रोक्ता प्रान्ते त्रैलोक्यकालय: ।
पद्मं वै साङ्गपद्मञ्च मानयं श्रुतिनोदितम् ॥
वज्रं खड्ग इति प्रोक्तं दृष्टं वै गोत्रभित्करे । *
सहस्रारं समाख्यातं कचिद्देवविदो विदुः ॥
अङ्कुशो नागश्रिक्षाख्यं निर्म्मितं यद्धि पुस्तक ।
तादृशं तन्नवेचिह्नं विज्ञेयं वैष्णवैर्नरैः ॥
यवोऽप्यङ्गुष्ठमूलेषु कथितो मुनिभिर्ध्रुवम् ।
आतपत्रं नृपच्छत्राकारं वत्स सुशोभनम् ॥
चक्रं सुदर्शनाकारं यच्चिह्नं तन्मनोहरम् ।
वासुदेवकरे यद्वत् मुनिभिः परिकीर्त्तितम् ॥
विवाहादौ च माङ्गल्ये पुत्रे जाते तथैव च ।
स्त्रीभिश्चैव सदा कार्य्यं स्वस्तिकञ्च, तदुच्यते ॥
रेखाचतस्रः संख्यातास्तिर्य्यगूर्द्ध्वं यदीरिताः ।
पल्लवेन च संयुक्तमष्टकोणं तदुच्यते ॥
दण्डाकारोर्द्ध्वरेखा स्यात् न वक्रा दृश्यते यदा ।
मध्यमाङ्गुष्ठमानेन कथिता मुनिभिः किल ॥
दशभिश्चिह्नितैः पादं वन्द्यं पूज्यञ्च सर्व्वदा ।
चिह्नान्येतानि भो विप्र दक्षिणे चरणे विभोः ।
स श्रीकृष्ण इति ज्ञेयो बुद्धिमद्भिर्नरोत्तमैः ॥ * ॥
यद्रूपाणि च चिह्नानि वामपादे च तत् शृणु ।
इन्द्रचापं धनुर्व्विद्यात् ह्यङ्गुलञ्च चतुर्गुणम् ।
मौर्व्वीसंयुक्तवक्रं चेत्तदाहुर्मुनयो ध्रुवम् ॥
त्रिकोणन्तु त्रिरेखाख्यं शकटाकारकं यदा ।
तदा वै तत्त्रिकोणाख्यं चिह्नन्तु मुनिनोदितम् ॥
कलसो वर्त्तुलाकारो ग्रीवया सहितो यदा ।
दृश्यते तादृशं पुत्र चिह्नितं सकलाधिकम् ॥
द्वितीयायां यथा चन्द्रो दृश्यते चाम्बरे क्वचित् ।
तदर्द्धचन्द्रं विज्ञेयं श्रुतौ च प्रतिपादितम् ॥
अम्बरं बिन्दुरित्येवं द्विरेखासुसमन्वितम् ।
वर्त्तुलञ्च सदा दृष्टं श्रीकृष्णे परमात्मनि ॥
मत्स्याकारो भवेद्यत्र तच्चिह्नं मत्स्यसंज्ञकम् ।
जम्बूफलसमाकारं जम्बूचिह्नं विदुर्बुधाः ॥
एतच्चिह्नं समाख्यातमूनविंशतिसंख्यकम् ।
पादयोरुभयोराद्यः कृष्णस्य मुनयोऽनघाः ॥ ७ ॥
एवं वृन्दावनेश्वर्य्याः पादयोर्म्मुनिसत्तम ! ।
ऊनविंशतिचिह्नानि कथयामीह तत् शृणु ॥
दक्षिणे नव चिह्नानि राधाया दश वामतः ।
भेदोऽयं कथितो विप्र कृष्णस्याह्लादरूपिणी ॥
एतानि पदचिह्नानि दृष्टानि च श्रुतानि च ।
त्वदग्रे कथितान्येव पुनः किं कथयाम्यहम् ॥

नारद उवाच ।

चिह्नान्येतानि भो ब्रह्मन् किं कर्त्तव्यानि वैष्णवैः ।
कथयस्व हि सर्व्वज्ञ युगयोः पादयोर्म्मम ॥

ब्रह्मोवाच ।

सौवर्णं राजतं वापि पाषाणं काष्ठकादिकम् ।
युगलं युगलं पादं कृत्वा चिह्नैश्च चिह्नितम् ॥
स्वगात्रे विन्यस्तानि पदचिह्नानि वैष्णवः ।
नाभिरूद्ध्वं मुनिः स्नात्वा वत्स वृन्दावनेशयोः ॥
अथवा चिह्नितं पादं कृत्वा भागवतोत्तम ! ।
पूजामारभते तावत् यावज्जीवति नारद ! ॥
पूजितो देवदेवेशः फलं भवति देहिनाम् ।
तथा तच्चिह्नितं पादं अर्च्चनं कुरुते यदि ॥
राजसूयाश्वमेधादिफल भवति सर्व्वथा ।
तदनन्तगुणं प्रोक्तं यद्येकं पूजयेत् सुधीः ॥”
इति पाद्मोत्तरखण्डे श्रीकृष्णपदचिह्नमाहात्म्यं नाम ११२ अध्यायः ॥ * ॥ तन्नाममाहात्म्यं यथा,

श्रीसदाशिव उवाच ।

“शृणु नारद ! भद्रं ते कथयिष्यामि चानघ ।
पाञ्चले यदहं पृष्टः प्रावोचन्तु यथातथम् ॥
वेदस्याध्ययनं यज्ञं तपो योगः शमो दमः ।
कृष्णनामसहस्रांशैर्देवर्षे ! नहि तुल्यकम् ॥
ज्ञानं देवार्च्चनं ध्यानं धारणा नियमो यमः ।
प्रत्याहारः समाधिश्च हरिनामसमं न च ॥
गोविन्दनामसादृश्यं न त्यागो न व्रतं मुने ! ।
न सङ्कल्पो नापि शौचं न पुण्यं न फलं तथा ॥
वानप्रस्थं ब्रह्मचर्य्यं गार्हस्थ्यं कर्म्मन्यासकम् ।
धर्म्म एव सदाचारो न हरेर्नामतुल्यकः ॥
न हरेर्नामसादृश्यं कर्म्म किञ्चित् तपस्तथा ।
सर्व्वतीर्थाटनञ्चैव चतुर्द्धा मुक्तिरेव च ॥
कृष्णनाम परा मुक्तिः कृष्णनाम परा गतिः ।
कृष्णनाम परं पुण्यं कृष्णनाम परं फलम् ॥
कृष्णनाम परो धर्म्मः कृष्णनाम परं तपः ।
कृष्णनाम परा शान्तिः कृष्णनाम परा स्तुतिः ॥
कृष्णनाम परा भक्तिः कृष्णनाम परा स्मृतिः ।
कृष्णनाम परं यज्ञं कृष्णनाम परा मतिः ॥
कृष्णनाम परं ज्ञानं कृष्णनाम परा स्थितिः ।
कृष्णनाम परं दानं कृष्णनाम जगत्प्रियम् ॥
कृष्णनाम परं श्राद्धं पितॄणां तर्पणं सदा ।
कृष्णनाम परा प्रीतिः कृष्णनाम परः प्रभुः ॥
कृष्णनाम जगत् सत्यं जन्तूनां कारणं परम् ।
जीवनं शरणं कृष्णनामैव विपुलं धनम् ॥
कृष्णनाम जगद्बन्धुर्न्निर्गुणं गुणः परः ।
विश्वाधारं कृष्णनाम जगतां पावनं परम् ॥
कृष्णनाम जगज्जन्म यत्किञ्चित् सचराचरम् ।
धार्य्यते पाल्यते विश्वं कृष्णनाम्ना प्रलीयते ॥
यत्किञ्चित् क्रियते कर्म्म कृष्णनाम परायणैः ।
तत् कर्म्म कर्म्म एव स्यात् साक्षादूर्द्ध्वं प्रयाति केशवः ॥
श्रीहरेर्नाम ग्रहणं प्रशस्तञ्च युगे युगे ।
क्वापि न भवेत् सिद्धिश्चित्वा तन्नाम कर्म्म च ॥
विशेषतः कलियुगे कृष्णनामैव केवलम् ।
त्यक्त्वा नास्त्येव देवर्षे ! लोकस्य गतिरन्यथा ॥
हरिनामपरः शान्तः क्षमाशीलो जितेन्द्रियः ।
नीत्वा कुलसहस्राणि लक्ष्यं प्राप्नोति स्वामि च ॥
श्रीकृष्णहरिगोविन्ददासनामादिको जनः ।
यः कश्चिद्वाति कलुषं सर्व्वं तन्नामकीर्त्तनात् ॥
हत्यायुतं पानसहस्रमयुतं
गुर्व्वङ्गनाकोटिनिषेवणञ्च ।
स्तेयान्यनेकानि हरेः प्रियेण
गोविन्दनाम्ना निहतानि सद्यः ॥
अनिच्छयापि दहति स्पृष्टो हुतवहो यथा ।
हरिनाम दहेत् पापं तथाज्ञसुखकीर्त्तितम् ॥
सकृदुच्चारितं येन हरे कृष्णेति विश्वकम् ।
यमाधिकारं नो याति कापथ्येन विना मुने ॥
अज्ञानादथवा ज्ञानादशुभाचेन वा पुनः ।
कृष्णनामैव यच्चिन्त्या स याति परमं पदम् ॥
ब्रह्महा मद्यपः स्तेयी गुरुतल्पगो गुरुतल्पगः ।
भवार्णवं तरेदन्ते कृष्णनामपरायणः ॥
पितृहा नृपहा गोघ्नः स्त्रीहन्ता पापिनोऽपरे ।
गोविन्दनामोच्चारेण पश्चात्ते शुद्धिमाप्नुयुः ॥
यद्भूतं पापमज्ञानाद्धर्म्मानाच्च नारद ! ।
यद्भविष्यति तत् सर्व्वं कृष्णनाम दहेद्ध्रुवम् ॥
जीवन्नाम्नां सदा द्रोही चाण्डालो निन्दककर्म्मकृत् ।
स पूतो जायते धन्यो नामकीर्त्तनतो हरेः ॥
क्षेत्रतीर्थतपोदानव्रतार्च्चनं फलं तथा ।
शक्तिश्च सर्व्वयज्ञानां सत्कारध्यात्मवस्तुनः ॥
ज्ञानञ्च देवमहतां सर्व्वसिद्धिप्रदं फलम् ।
नैमित्तिकानां नित्यानां तथा च काम्यकर्म्मणाम् ॥
वर्णाश्रमाणां योगानां स्थापितं येषु नामसु ।
आलस्य सर्व्वाघहरं पुरा कृष्णेन नारद ॥
त्रैलोक्ये यानि पुण्यानि धर्म्मकर्म्मफलानि च ।
तुल्यतां तानि नो यान्ति हरिनामानुकीर्त्तने ॥
नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ।
तावत् कर्त्तुं न शक्नोति पातकं पातकी जनः ॥
श्वपचो वृजिनं कर्त्तुं नहि शक्नोति यत्नतः ।
तावद्भर्त्तुं मुने यावत् कृष्णनामानुकीर्त्तनम् ॥
मानसं कर्म्मजं वाग्जं लोके तन्नास्ति कल्मषम् ।
सर्व्वाशुभघ्नं शिवदं यद्धरेर्नामकीर्त्तनम् ॥
चान्द्रायणादिभिः कृच्छ्रैः शुद्धिर्न स्यात्तथा नृणाम् ॥
कीर्त्तनेन हरेर्नाम्नः सकृदेव भवेद्यथा ।
सकृदाख्यातितं येन कृष्णनाम सुमङ्गलम् ।
तज्जिह्वा वैष्णवी नाम्नं वचो वशप्यकारकम् ।
ऋग्वेदो हि यजुर्व्वेदः सामवेदोऽप्यथर्व्वकम् ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥
पापिनोऽपि हरेर्नाम कीर्त्तयन्ति यथा यथा ।
सर्व्वाघं भस्मसात् कृत्वा कृष्णभक्तिकृता तथा ।
सहस्रारायणेरुक्त्वा पुमान् कल्पशतत्रयम् ।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति नारद ! ॥
पुराणशास्त्रागमवेदपाठ-
तीर्थावगाहादिफलं यदेतत् ।
गोविन्दनाम्नोऽपि कलाशतांशे-
स्तुल्यं भवेन्नैव मुने कदाचित् ॥
मा ऋचो मा यजुर्व्विप्र न साम पठ किञ्चन ।
कृष्णगोविन्दनामादि गेयं मायक विश्रुः ॥
गोकोटिदाने ग्रहणे खगस्य
प्रयागगङ्गाम्बुनि कल्पवासः ।
यज्ञायुतं मेरुसुवर्णदानं
गोविन्दनाम्नो न समं शतांशैः ॥

हरिलोचनः, पुं, (हरेरिव लोचनमस्य ।) कुलीरः । इति त्रिकाण्डशेषः ॥ पेचकः । इति केचित् ॥ हरिदश्वचक्षुर्युक्ते, त्रि ॥

हरिवर्षं, क्ली, (हरिप्रियं वर्षम् ।) जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषः । इति त्रिकाण्डशेषः ॥ स तु निषधहेमकूटपर्व्वतयोर्म्मध्ये वर्त्तते । यथा । "एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् । इति श्रीभागवते ५ स्कन्धे १६ अध्यायः ॥ किञ्च । हरिवर्षे चापि भगवान् नरहरिरूपेणास्ते । तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्ये तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः प्रह्लादोऽव्यवधानानन्यभक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते । इति च तत्रैव १८ अध्यायः ॥

हरिवंशः, पुं, (हरेर्वंशः ।) श्रीकृष्णस्य सन्तानः । यथा,—

"हरिवंशं प्रवक्ष्यामि कृष्णमाहात्म्यलक्षणम् ।
वसुदेवात्तु देवक्यां वासुदेवो बलोऽभवन् ॥
रुक्मिणीसत्यभामाद्या अष्टौ पत्न्यो हरेः पुरा ।
षोड़शस्त्रीसहस्राणि अन्योन्यासन् महात्मनः ॥
तासां पुत्राश्च पौत्राद्याः शतशोऽथ सहस्रशः ।
रुक्मिण्याश्चैव प्रद्युम्नो न्यवधीत् शम्बरञ्च यः ॥
तस्य पुत्रोऽनिरुद्धोऽभूत् उषाबाणसुतापतिः ।
अनिरुद्धादभूद्वज्रः स च राजा गते हरौ ।
सान्दीपनिं गुरुं चक्रे सपुत्रं यादवाधिपः ॥"
इति गारुडे १४८ । १ ; ६—८ ; ११ ॥

विस्तारस्तु महाभारतीयहरिवंशपर्व्वणि द्रष्टव्यः ॥

हरिवल्लभा, स्त्री, (हरेर्वल्लभा ।) जया । तुलसी । इति राजनिर्घण्टः ॥ लक्ष्मीश्च ॥

हरिवान्, [त्] पुं, (हरिरश्वोऽस्यास्तीति । मतुप् । "झयः ।" ८।२।१०। इति मस्य वः ।) इन्द्रः । इति हलायुधः ॥ हरिविशिष्टे, त्रि ॥ (यथा, वाजसनेयसंहितायाम् । २० । ३९ ।

"शुषाणो वर्हिर्हरिवान्न इन्द्रः
प्राचीनं सीदत्प्रदिशा पृथिव्याः ॥")

हरिवासरं, क्ली, (हरेर्वासरम् ।) श्रीहरेर्द्दिनम् । तत्तु एकादशीद्वादशीतिथिरूपम् । यथा,—

"एकादशी द्वादशी च प्रोक्ता श्रीचक्रपाणिनः ॥"
"एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्द्देवता हरिः ॥"
इति च तिथ्यादितत्त्वम् ॥

अपि च ।

"यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य सर्व्वाणि तिष्ठन्ति हरिवासरे ॥"
अघं स केवलं भुङ्क्ते यो भुङ्क्ते हरिवासरे ॥"
इत्येकादशीतत्त्वम् ॥ * ॥

द्वादश्याः प्रथमपादः । यथा । विष्णुधर्म्मोत्तरे ।

"द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः ।
तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥

अथ हरिवासरे जागरणादिविधिः । स्कान्दे श्रीब्रह्मनारदसंवादे ।

"शृणु नारद ! वक्ष्यामि जागरस्य तु लक्षणम् ।
येन विज्ञातमात्रेण दुर्लभो न जनार्द्दनः ॥
गीतं वाद्यं च नृत्यं च पुराणपठनं तथा ।
धूपं दीपं च नैवेद्यं पुष्पगन्धानुलेपनम् ॥
फलमर्घ्यञ्च श्रद्धा च दानमिन्द्रियनिग्रहः ।
सत्यान्वितं विनिद्रञ्च मुदा युक्तं क्रियान्वितम् ॥
साश्चर्य्यं चैव सोत्साहं पापालस्यादिवर्ज्जितम् ।
प्रदक्षिणाभिसंयुक्तं नमस्कारपुरःसरम् ॥
नीराजनसमायुक्तमनिर्विण्णेन चेतसा ।
यामे यामे महाभाग ! कुर्य्यादारात्रिकं हरेः ।
एतैर्गुणैः समायुक्तं कुर्य्याज्जागरणं हरेः ॥" *॥

किञ्च ।

"य एवं कुरुते भक्त्या वित्तशाठ्यविवर्ज्जितः ।
जागरं वासरे विष्णोर्लीयते परमात्मनि ॥
धनवान् वित्तशाठ्येन यः करोति प्रजागरम् ।
तेनात्मा हारितो नूनं कितवेन दुरात्मना ॥"

तत्रैव श्रीमदुमामहेश्वरसंवादे ।

"शास्त्राढ्यं जागरं यत्र नृत्यमाङ्गल्यसंयुतम् ।
सवाद्यं तालसंयुक्तं सदीपं साधुभिर्युतम् ॥
उपचारैश्च संयुक्तं यथोक्तैर्भक्तिभावितैः ।
मनसस्तुष्टिजननं सहृदं लोकरञ्जनम् ॥
गुणैर्द्वादशभिर्युक्तं जागरं माधवप्रियम् ।
कर्त्तव्यं तत् प्रयत्नेन पक्षयोः शुक्लकृष्णयोः ॥" *॥

किञ्च ।

"परापवादयुक्तं तु मनः प्रशमवर्ज्जितम् ।
शास्त्रहीनमगान्धर्व्वं तथा दीपविवर्ज्जितम् ॥
शक्त्योपचाररहितमुदासीनं सनिद्रकम् ।
कलियुक्तं विशेषेण जागरं नवधाधमम् ॥" *॥

किञ्च । तत्रैव ।

"अभावे वाचकस्याथ गीतं नृत्यञ्च कारयेत् ।
वाचके सति देवेशि ! पुराणं प्रथमं पठेत् ॥" *॥

अथ जागरणनित्यत्वम् ।

स्कान्दे ब्रह्मनारदसंवादे ।

"अतीतानागतान् वापि पातयिष्यन्ति पूर्व्वजान् ।
अकुर्व्वाणाः प्रपत्स्यन्ति पुण्यधर्म्मवसुक्षयम् ।
जायते नरके वासः पितृभिः सह कालशः ॥
न पुरश्चरणात् पापं व्रतैर्दानैः समाधिभिः ।
विलयं याति विप्रेन्द्र ! विना द्वादशीजागरम् ॥"

तत्रैवोमामहेश्वरसंवादे ।

"संप्राप्ते जागरे विष्णोर्ये न कुर्व्वन्ति जागरम् ।
भज्यते सुकृतं तेषां वैष्णवानाञ्च निन्दया ॥
मतिर्न जायते यस्य द्वादश्यां जागरं प्रति ।
न हि तस्याधिकारोऽस्ति पूजने केशवस्य हि ॥"

अतएवोक्तं ब्रह्मणा । तत्रैव ।

"हृदये वर्त्तते यस्य सदा योगेश्वरो हरिः ।
मतिरुत्पद्यते तस्य द्वादशीजागरोपरि ॥" *॥

सामान्येन पुराणेषु गीतनृत्यादिनित्यता ।
अधुना लिख्यते सेयं जागरे च विशेषतः ॥"

अथ जागरे गीतादिनित्यत्वम् । स्कान्दे उमामहेश्वरसंवादे ।

"नृत्यन्ति गायते यो वै गानं पाठञ्च नाचरेत् ।
सप्त जन्मानि मूकत्वं जायते जागरे हरेः ॥
यो न नृत्यति हृष्टात्मा पुरतो जागरे हरेः ।
पङ्गुत्वं जायते तस्य सप्त जन्मानि पार्व्वति ॥"

पाद्मे पद्मवर्द्धनोपाख्याने ।

"स्तुवन्ति न प्रशंसन्ति ये जना जागरं हरेः ।
नीलाङ्गो भवते तेषां गृहे जन्मानि सप्त च ॥
स्तुवन्ति ये प्रशंसन्ति जागरं चक्रपाणिनः ।
नित्योत्सवो भवेत्तेषां जन्मानि दश पञ्च च ॥"

अथ जागरणमाहात्म्यम् ।

स्कान्दे ब्रह्मनारदसंवादे तथा श्रीप्रह्लादसंहितायाञ्च ।

"न गयापिण्डदानेन न तीर्थैर्बहुभिर्मखैः ।
पूर्व्वजा मुक्तिमायान्ति विना द्वादशीजागरम् ॥
सर्व्वावस्थोऽपि यः कुर्य्याद्द्वादश्यां जागरं हरेः ।
यामिनैकेन दहते पापं जन्मसहस्रजम् ॥ *॥
यः कुर्य्याद्दीपदानन्तु रात्रौ जागरणे हरेः ।
निमिषे निमिषे विप्र ! लभते गोशतं फलम् ।
यः कुर्य्याज्जागरे पूजां द्वादश्यां कुसुमैर्हरेः ।
पुष्पे पुष्पेऽश्वमेधस्य फलमाप्नोति मानवः ।
यो दहेच्चागुरुं विष्णोः पूजां कृत्वा तु जागरे ।
निमिषार्द्धेन लभते तिलपात्रशतं फलम् ॥
निमेषञ्च दहेद्धूपं बहुलं गुग्गुलुं हरेः ।
लभते जागरे विप्र ! पुण्यं माघसमुद्भवम् ॥
यो दद्याज्जागरे विष्णोर्द्दिव्यान्नसमुद्भवम् ।
नैवेद्यं लभते पुण्यं शालिशैलसमुद्भवम् ॥
पक्वान्नानि च यो दद्यात् फलानि विविधानि च ।
जागरे पद्मनाभस्य लभते गोऽयुतं फलम् ॥
सकर्पूरञ्च ताम्बूलं यो ददाति हि जागरे ।
पद्मनाभप्रसादेन श्वेतद्वीपे वसेच्चिरम् ॥
जागरे पद्मनाभस्य यः कुर्य्यात् पुष्पमण्डपम् ।
स पुष्पकविमानेषु क्रीड़ते ब्रह्मसद्मनि ॥
जागरे पद्मनाभस्य सकर्पूरं तथागुरुम् ।
दहते दहते पापं जन्मलक्षसमुद्भवम् ॥
स्नानं ददाति कृष्णस्य दधिक्षीरघृतादिभिः ।
रात्रौ जागरणे विप्र ! मुक्तिभागी भवेद्धि सः ॥
दिव्याम्बराणि यो दद्याज्जागरे समुपस्थिते ।
मन्वन्तराणि वसते तन्तुसंख्यासमानि वै ॥
दद्यादाभरणं विष्णोर्हेमजं रत्नसम्भवम् ।
सप्तकल्पानि वसते सोऽलक्ष्ये मत्प्रियो हि सः ॥
श्रीचन्दनं सकर्पूरं सागुरुं तु सकेशरम् ।
युक्तं मृगमदेनापि यच्छते हरिजागरे ॥
एकैकं मुनिशार्दूल ! अश्वमेधाधिकं फलम् ।
कलौ भवेन्न सन्देहो वासुदेवप्रसादतः ॥
घृतेन दीपकं विष्णोर्गव्येन च विशेषतः ।
ज्वालयेज्जागरे रात्रौ निमेषे गोऽयुतं फलम् ।
जागरे वासुदेवस्य कर्पूरेण च दीपकम् ।
यो ज्वालयति कोटीनां कपिलानां लभेत् फलम् ॥
आरात्रिकं हरेर्यस्तु सकर्पूरञ्च जागरे ।
कुरुते मोक्षमाप्नोति कुलायुतसमन्वितः ॥
विना हि योऽपि कर्पूरं कुर्य्यादारात्रिकं हरेः

न:स्थोऽपि जागरे विष्णोर्गीता भूरिफलं लभेत् ॥
ारिकं वादित्वा पूर्वं शिरसि स्थापयेद्धरिम् ।
ंभक्ति शिरसा योऽयं गङ्गास्नानजं फलम् ॥
ृत्वा पूजां हरेर्यस्तु जागरे पुरत: शुचि: ।
ठेन्नामसहस्रन्तु गीतां नागविमोक्षणम् ।
ाहात्म्यकथनं पुण्यं स्तवराजमनुस्मृतिम् ।
ेदिकानि च जप्यानि भक्त्या रात्रौ सकृन्मुहु: ॥
भवेत् प्रत्यक्षरं पुण्यं कपिलागोशतोद्भवम् ।
ागरे यश्चरूपस्य पुरत: पठतो हरे: ॥
: पुन: कुरुते गीतं सनृत्यं वाद्यसंयुतम् ।
न तत् क्रतुशतै: पुण्यं अनदानशतैरपि ॥
: पुन: कुरुते गीतं विष्णो नृत्यते यदि ।
लभते निमिषार्द्धेन क्रतुराजसमं फलम् ॥
ागरे पद्मनाभस्य कुर्य्यात् पुस्तकवाचनम् ।
लोकसंख्यां वसेत् स्वर्गे युगानि हरिसन्निधौ ॥
कुर्य्याद्वन्दनमालां यो रम्भास्तम्भै: सुशोभनै: ।
चूतवृक्षोद्भवै: पत्रैर्जागरे चक्रपाणिन: ॥
युगानि पञ्चसंख्यानां स्वर्गे तस्योत्सवो भवेत् ।
पूज्यते वासवाद्यैश्च क्रीडते चाप्सरोगणै: ॥
कृष्णमानस्य मर्त्यस्य ये केचिन्निरयं गता: ।
विमुक्ता धर्म्मराजेन मुक्तिं यान्ति हरे: पदम् ॥
गीतध्वनिसुसन्तुष्टो जागरे तु रमापति: ।
वासवस्याधिकं सौख्यं दद्यान्मन्वन्तरं शतम् ॥
नृत्येन मर्त्ये सौख्यं तु स्वर्गे नृत्येन जागरे ।
रसातले तथा सौख्यं मुक्तिर्नृत्यादवाप्यते ॥
प्रेक्षणीयप्रदानेन यत् पुण्यं कथितं बुधै: ।
न तत् कोटिमखै: पुण्यं योगै: साङ्ख्यैरवाप्यते ॥
दीपमालां हरेरग्रे य: करोति प्रजागरे ।
विमानकोटिसंयुक्त: कल्पान्तं वसते दिवि ॥ * ॥
चरितं रामचन्द्रस्य य: शृणोति हरेर्दिने ।
रात्रौ वाल्मीकिना प्रोक्तं तत्समो न हि वैष्णव: ॥
य: पुन: पठते रात्रौ महाभारतसम्भवाम् ।
कथां जागरणे विष्णो: कुलकोटिं नयेद्दिवम् ॥
औत्तानपादेश्चरितं ध्रुवस्य च महात्मन: ।
लक्ष्मस्य बालचरितं जागरे पठते हि य: ॥
युगकोटिसहस्रस्य क्षय: पापस्य जायते ।
तस्माज्जागरणं कार्य्यं पक्षयो: शुक्लकृष्णयो: ॥
श्रीमद्भागवतं भक्त्या पठते विष्णुसन्निधौ ।
जागरे तत्पदं याति कुलवृन्दसमन्वित: ॥
अष्टादश पुराणानि पुराणपुरुषस्य च ।
दर्शितानि सदा विष्णोर्विशेषेण तु जागरे ॥
यो गीतां पठते रात्रौ विष्णोर्नामसहस्रकम् ।
वेदोक्तानां पुराणानां जागरी पुण्यमाप्नुयात् ॥
धेनुदानं तु य: कुर्य्याज्जागरे चक्रपाणिन: ।
लभते नात्र सन्देह: सप्तद्वीपावनीफलम् ॥
जागरे पद्मनाभस्य य: कुर्य्यात्कुसुमकल्पनम् ।
मन्दिरे ध्रुवलोकस्य यावत्तिष्ठति पद्मभू: ॥ * ॥
सर्व्वेषामेव पुण्यानां महत् पुण्यं महीतले ।
द्वादश्यां जागरे विप्र ! प्रसिद्धं भुवनत्रये ॥
जागरं ये विकुर्व्वन्ति कर्म्मणा मनसा गिरा ।
न तेषां पुनरावृत्तिर्विष्णुलोकात् कथञ्चन ॥
जागरे कृष्णमागम्य दृष्ट्वा वै द्वादशीदिने ।
रात्रौ मार्जयते शौरि: पापं तस्य युगा-
र्ज्जितम् ॥"

इति श्रीहरिभक्तिविलासे १६ विलास: ॥

हरिवाहन:, पुं, ( हरेर्वाहन: । ) गरुड: । इति हारावली ॥ ( हरिर्वज्रमथवा वाहनं यस्येति । इन्द्र: । यथा, महाभारते । १ । २६ । १ ।
"एवं स्तुतस्तदा कद्र्वा भगवान् हरिवाहन: ।
नीलजीमूतसङ्घातै: सर्व्वमम्बरमावृणोत् ॥"
तथाच तत्रैव । १ । ४६ । ५२ ।
"तत आनाय्य तनयं विविक्ते हरिवाहन: ।
सान्त्वयित्वा शुभैर्वाक्यै: स्वयमागोऽभ्यभा-
षत ॥" )

हरिवीजं, क्ली, (हरेर्वीजं वीर्य्यम् ।) हरितालम् । इति जटाधर: ॥

हरिवर्षं, क्ली, हरिवर्षम् । इति भूरिप्रयोग: ॥

हरिशयनं, क्ली, ( हरे: शयनम् ।) श्रीहरेर्निद्रा । यथा । उपनयने दीपिकायाम् ।
"जीवार्केन्दुशुद्धौ हरिशयनबहिर्भास्करे चोत्त-
रस्थे
स्वाध्याये वेदवर्गाधिप इह ,शुभदे चौरभे
नादितौ च ।"

इत्यादि ज्योतिस्तत्त्वम् ॥ * ॥

तद्विधिर्यथा । वामनपुराणे ।
"एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ।
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयत: शुचि: ।
लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत् ॥"
अनुज्ञां लब्ध्वेत्यन्वय: । एकादशीसमये दिवा शयनं परिकल्पयेत् रात्रौ द्वादशीचर्य्यां निद्रेति ॥ * ॥ अन्यत्त्वाराहे ।
"आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा ।
चातुर्म्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे ॥
अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती ।
कार्त्तिके शुक्लद्वादश्यां विधिवत्तत् समापयेत् ॥
चतुर्थापि हि तन्नीयां चातुर्म्मास्यं व्रतं नर: ।
कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥"
मात्स्ये ।
"चतुरो वार्षिकान् मासान् देवस्योत्थापना-
वधि ।
मधुस्वरो भवेन्नित्यं नरो गुडविवर्ज्जनात् ॥
तैलस्य वर्ज्जनादेव सुन्दराङ्ग: प्रजायते ।
कटुतैलपरित्यागात् शत्रुनाश: प्रजायते ॥
लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन् ।
सदा मुनि: सदा योगी मधुमांसस्य वर्ज्जनात् ॥
निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते ।
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् ॥
धारणान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने ।
ताम्बूलवर्ज्जनाद्भोगी रक्तकण्ठश्च जायते ॥
घृतत्यागात् सुलावण्यं सर्व्वं स्निग्धं वपुर्भवेत् ।
फलत्यागात्तु मतिमान् बहुपुत्रश्च जायते ॥
नमो नारायणायेति जप्तानशनजं फलम् ।
पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् ।
एवमादिव्रतै: पार्थ ! तुष्टिमायाति केशव: ॥" *
सनत्कुमार: ।
"इदं व्रतं मया देव ! गृहीतं पुरतस्तव ।
निर्व्विघ्नां सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव ! ॥
गृहीतेऽस्मिन् व्रते देव ! यद्यपूर्णे म्रियेऽहं ।
तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्द्दन ! ॥"
समाप्तौ च ।
"इदं व्रतं मया देव ! कृतं प्रीत्यै तव प्रभो ! ।
न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्द्दन ! ॥" * ॥
अत्रैव यतिमधिकृत्य काठकगृह्यम् ।
"एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥"
एतद्यतिविषयम् । अत्र वार्षिकाभ्यां मासाभ्यां नैकस्थानवासीति शङ्खोक्ते: ॥ * ॥ मात्स्ये ।
"शेते विष्णु: सदाषाढे भाद्रे च परिवर्त्तते ।
कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने ॥"
भविष्यनारदीययो: ।
"मैत्राद्यपादे स्वपितीह विष्णु-
र्वैष्णवमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥"
मैत्रमनुराधा । वैष्णवं श्रवणा । पौष्णं रेवती ॥ *
भविष्ये ।
"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्त-
नम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥"
अन्यत्र स्वापादिविहितरात्र्यादीतरकाले दशमी प्रतिपदोश्च ।
"किं तन्मैत्राद्यपादेन दशम्यंशेन यो दिवा ।
पौष्णांशेन किमन्तेन प्रतिपच्च यो निशि ॥"
दशम्यंशेन दशम्या अंशे यत्र पादे तेन य: पादो दिवा प्राप्तस्तेन वा किम् । अत्र दशमी प्रतिपदोर्वर्ज्जनात् तदितरैकादश्यादि-पञ्चतिथिषु मैत्रादिनक्षत्रपादविशेषलाभे द्वादशीं विनापि शयनादिरिति प्रतीयते ॥ * ॥
वचनान्तरम् ।
"रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुत: ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥"
दिनान्ते त्रिधाविभक्तदिनतृतीयभागे दिवोत्थान-निषेधानुरोधात् । विष्णुधर्म्मोत्तरे ।
"विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरे: ।
पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत् ॥"
वराहपुराणम् ।
"द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
आ-भा का-सितपक्षेषु शयनावर्त्तनादिकम् ॥"
आ-भा-कानां आषाढभाद्रकार्त्तिकानाम् ॥ * ॥
ततश्च द्वादश्यां निशादौ नक्षत्रमात्रयोगात् । द्वादश्यामृक्षाभावे तिथ्यन्तरे निशाद्यमार्द्दरेण पादविशेषयोगात् । तदभावे द्वादश्यां सन्ध्याया-मेव शयनादिकम् । बोधनन्तु द्वादश्यां रात्रौ

देवस्यान्तपादयोर्द्विलक्ष्मीयभागे इति विशेषः ॥
शयने मन्त्रमाह वराहपुराणम् ।
"नमो नारायणायेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।
पश्यन्तु मेघाम्यपि मेघश्यामं
सुपागतं सिच्यमानं महीमिमाम् ।
निद्रां भगवान् गृह्णातु लोकनाथ
वर्षास्विमं पश्यतु मेघवृन्दम् ॥
ज्ञात्वा च पश्येव च देवनाथ
मासांश्चत्वारि वैकुण्ठस्य तु पश्य नाथ ! ॥"
ततश्च ।
"सुप्ते त्वयि जगन्नाथे जगत् सुप्तं भवेदिदम् ।
विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम् ॥"
इत्यनेन पूजयेत् ॥*॥ पार्श्वपरिवर्त्तने तु ।
"वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव ! ॥"
इति पठेत् ॥
"त्वयि सुप्ते जगन्नाथे जगत् सुप्तं भवेदिदम् ।
विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम् ॥"
इत्यनेन पूजयेत् ॥
नैयतकालिककत्यमरौ ब्रह्मपुराणम् । कार्त्तिक-
शुक्लपक्षमधिकृत्य ।
"उपवासः प्रकर्त्तव्य एकादश्यां प्रजागरः ।
द्वादश्यां वासुदेवस्य पूजितव्यः प्रयत्नतः ॥"*॥
उत्थानमन्त्रस्तु ।
"महेन्द्ररुद्रैरभिनूयमानो
भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ! ॥
मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि च लोकनाथ ! ।
अहं ददानीति च पुण्यहेतो-
र्जागृष्व जागृष्व च लोकनाथ ! ॥"
ततः ।
"उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ! ।
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम् ॥"
इति पठित्वा पूजयेत् ॥
इति तिथ्यादितत्त्वम् ॥

**हरिशरः**, पुं, ( हरिः शरो यस्य । ) शिवः । इति केचित् ॥ त्रिपुरदहनार्थं हरिरेव यतस्तस्य शरोऽभूत्तस्मात् । यथा, पुष्पदन्तः ।
"रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥"

**हरिश्चन्द्रः**, पुं, नृपविशेषः । स तु त्रेतायुगे सूर्य्यवंशीयः अष्टाविंशराजः । तत्पर्य्यायः । त्रिशङ्कुजः २ । इति हेमचन्द्रः ॥ अपि च । त्रिशङ्को-र्हरिश्चन्द्रस्तस्माद्रोहिताश्वस्ततश्च हरितः । इति विष्णुपुराणे । ४ । ३ । १५ ॥

**हरिश्चन्द्रपुरं**, क्ली, ( हरिश्चन्द्रस्य पुरम् । ) हरिश्चन्द्रराजनगरम् । तत्पर्य्यायः । शौभपुरम् २ । इति त्रिकाण्डशेषः ॥

**हरिषः**, पुं, हर्षः । इति केचित् ॥

**हरिषेणः**, पुं, जिनचक्रवर्त्तिविशेषः । तत्पर्य्यायः । हरिसुतः २ । यथा,—
"हरिषेणो हरिसुतो जयो विजयनन्दनः ।
ब्रह्मसूनुर्ब्रह्मदत्तः सर्व्वे चेक्ष्वाकुवंशजाः ॥"
इति हेमचन्द्रः ॥

**हरिसङ्कीर्त्तनं**, क्ली, ( हरेः सङ्कीर्त्तनम् । ) श्रीहरेर्नामोच्चारणम् । यथा,—
"दानं व्रतं तपो यज्ञः श्राद्धं वा पितृतर्पणम् ।
सकलं निष्फलं राजन् ! हरिसङ्कीर्त्तनं विना ॥"
इति कर्म्मलोचनम् ॥
अपि च ।
"नरके पच्यमानानां नराणां पापकर्म्मणाम् ।
मुक्तिः संजायते तस्मात् नामसंकीर्त्तनाद्धरेः ॥"
इति हरिभक्तिविलासधृतं इतिहासोत्तमवचनम् ॥

**हरिसुतः**, पुं, ( हरेः सुत इव । ) हरिषेणराजा । इति हेमचन्द्रः ॥ हरेः पुत्रश्च ॥

**हरिहयः**, पुं, ( हरिरेव हयो यस्य । ) इन्द्रः । इत्यमरः । १ । १ । ४६ ॥ (यथा; महाभारते । १ । ६७ । ५० ।
"द्वितीयस्तु ततस्तेषां श्रीमान् हरिहयोपमः ।
अपराजित इत्येव स बभूव नराधिपः ॥")
सूर्य्यः । कार्त्तिकेयः । गणेशः । इति केचित् ॥

**हरिहरः**, पुं, ( हरिणा सह हरः । ) संयुक्तहरिहरमूर्त्तिः । यथा,—
पुलस्त्य उवाच ।
"विमुक्तपापा देवेशं वासुदेवमथाब्रुवन् ।
क्वासौ वद जगन्नाथ ! शम्भुस्तिष्ठति केशव ।
यं क्षीराद्यभिषेकेण स्नापयामो विधानतः ॥
अथोवाच सुरान् विष्णुरेष तिष्ठति शङ्करः ।
मद्देहे किन्न पश्यध्वं योगप्रायं प्रतिष्ठितम् ॥
तमूचुर्नैव पश्यामस्त्वत्तो वै त्रिपुरान्तकम् ।
सत्यं वद सुरेशान ! महेशानः क्व तिष्ठति ॥
ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कजशायिनम् ।
दर्शयामास देवानां मुरारिर्लिङ्गमैश्वरम् ॥
ततः सुराः क्रमेणैव क्षीरादिभिरनन्तरम् ।
स्नापयाञ्चक्रिरे लिङ्गं शाश्वतं ध्रुवमव्ययम् ॥
गोरोचनया त्वालिप्य चन्दनेन सुगन्धिना ।
बिल्वपत्राम्बुजैर्देवं पूजयामासुरञ्जसा ॥
पूजयित्वा गुरुं भक्त्या निवेद्य परमौषधीः ।
जप्त्वाष्टशतनामानि प्रणामं चक्रिरे ततः ॥
इत्येवं चिन्तयन्तश्च देवा देवौ हराच्युतौ ।
कथं योगत्वमापन्नौ सत्त्वाद्यतममात्मनः ॥
सुराणां चिन्तितं ज्ञात्वा विश्वमूर्त्तिरभूद्विभुः ।
सर्व्वलक्षणसंयुक्तः सर्व्वायुधधरोऽव्ययः ॥
सार्द्धं त्रिनेत्रं कमलाहिकुण्डलं
जटागुडाभारशिरोजमण्डितम् ।
हरिं हरध्वेजगनेन्द्रभूषणं
पीताजिनाच्छन्नकटिप्रदेशकम् ॥
चक्रासिहस्तं धनुःशार्ङ्गपाणिं
पिनाकशूलाजगवान्वितञ्च ।
कन्दर्पशत्रुत्रशपाशहस्ता-
ग्रन्थजचक्राजधरं महर्षे ! ॥
दृष्ट्वैव देवा हरिशङ्करं तं
नमोऽस्तु ते सर्व्वगताव्ययेति ॥"
इति वामनपुराणे ५८ अध्यायः ॥ शिवविष्ण्वोरभेदेनार्च्चकस्य स्वरूपवर्णनम् । यथा,
"निराममा नाम मता: समायाता वसुन्धरे ।
साद्धं हिनेत्रा: पद्मार्चा: श्रीवत्साङ्कितवक्षसः
समायाता: समारूढा वृषभध्वजिनोऽव्ययाः
महापाशुपता नाम शूलचक्रधरास्तथा ।
भैरवो विष्णुना सार्द्धमभेदेनार्च्चितो हि वै: ।
इति तत्रैव ६४ अध्यायः
अन्यच्च ।
"अथवा विष्णुरूपेण पूजयेदीश्वरं सदा ।
शङ्करं वामभागस्थं सर्व्वकाममवाप्नुयात् ॥"
इति देवीपुराणे १२ अध्यायः ।

**हरिहरक्षेत्रं**, क्ली, ( हरिहरस्य क्षेत्रम् । ) ती[र्थ]विशेषः । स तु पाटलिपुत्रनगरस्य गौर[ी]नदपारे वर्त्तते । तस्य नामान्तरं हरिहरछत्रेति देशीया वदन्ति । तत्र गङ्गागण्डकीस[ङ्गमे] कार्त्तिकपौर्णमास्यां स्नानार्थं जनसमूहमेल[नं] भवति । तस्य नामकारणं यथा,—
"ततः स पञ्चरात्राणि स्थित्वा वै विधिपूर्व्वक[म्]
गोधनाग्र्यगतः स्नात्वा हरिक्षेत्रं जगाम ह ।
हरिणाधिष्ठितं क्षेत्रं हरिक्षेत्रं ततः स्मृतम् ।
सदा नन्दी शूलपाणिर्गोधनेन पुरस्कृतः ।
स्थितवांस्तद्दिनादेव तत्क्षेत्रं हरिहरात्मकम् ।
देवानामटनाच्चैव देवाट इति संज्ञितम् ॥"
इति वाराहे भगवच्छास्त्रे सोमेश्वरादिलि[ङ्ग]महिमाविमुक्तक्षेत्रनिवेशनादिमहिमानामाध्यायः ॥

**हरिहरात्मकः**, पुं, ( हरिहरौ आत्मानौ यस्य कप् । ) गरुडः । शिववृषः । इति शब्दरत्नावली ॥

**हरिहरक्षेत्रं**, क्ली । ( हरिहरात्मकरूपे, [वि]
यथा, हरिवंशे । १८१ । ३० ।
"अनादिमध्यनिधनमेतदक्षरमव्ययम् ।
तदेव ते प्रवक्ष्यामि रूपं हरिहरात्मकम् ॥")

**हरितकी**, स्त्री, ( हरि पीतवर्णं फलमिता प्राप्ता इति हरीता । ततः संज्ञायां कन् गौरादित्वात् ङीष् । ) स्वनामख्याततरुः । हरड़ा इति हिन्दी भाषा । तत्पर्य्यायः । अभया २ अव्यथा ३ पथ्या ४ वयस्था ५ पूतना ६ अमृता ७ हैमवती ८ चेतकी ९ श्रेयसी १० शिवा ११ इत्यमरः । २ । ४ । ५९ ॥ सुधा १२ कायस्था १३ कन्या १४ रसायनफला १५ । इति शब्दरत्नावली ॥ विजया १६ । इति जटाधरः ॥ जया १७ चेतनकी १८ रोहिणी १९ प्रमथा २० जीवप्रिया २१ जीवनिका २२ भिषग्वरा २३ पुस्तकान्तरे भिषक्प्रिया इति पाठः । जीवन्ती २४ प्राणदा २५ जीवा २६ देवी २७ दि[व्या] २८ । अस्या गुणाः ।

"हरीतकी पञ्चरसा च रेचनी
शोफामयघ्नी लवणेन वर्ज्जिता ।
रसायनी नेत्रविकारहारिणी
त्वगामयघ्नी किल योगवाहिनी ।"

अन्यच्च ।

"वीजास्थितिक्तं मधुरा तदन्त-
स्त्वग्भागतः सा कटुरम्लवीर्य्या ।
मांसाश्रितस्वाम्लकषाययुक्ता
हरीतकी पञ्चरसा स्तुतेयम् ।

पथ्यामज्जा तु चक्षुष्यो वातपित्तहरो गुरुः ।"

तस्या भेदा यथा,— ॥

"हरीतक्यन्नतोत्पन्ना सप्तभेदैरुदीरिता ।
तस्या नामानि वर्णांश्च वक्ष्याम्यथ यथाक्रमात् ॥
विजया रोहिणी चैव पूतना चामृताभया ।
जीवन्ती चेतकी चेति नाम्ना सप्तविधा स्मृता ॥
अलाबुवृत्ता विजया सुवृत्ता रोहिणी मता ।
स्वल्पत्वक् पूतना ज्ञेया स्थूलमांसामृता स्मृता ॥
पञ्चास्रा चाभया ज्ञेया जीवन्ती स्वर्णवर्णभाक् ।
त्र्यस्रा तु चेतकी विद्यादित्यासां रूपलक्षणम् ॥
विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना
सिन्धौ स्यादथ रोहिणी तु विजया जाता प्रतिष्ठानके ।
चम्पायाममृताभया च जनिता देशे सुराष्ट्राह्वये
जीवन्तीति हरीतकी निगदिता सा सप्तभेदा बुधैः ॥ ॥

सर्व्वप्रयोगे विजयाथ रोहिणी
क्षतेषु लेपेषु च पूतनोदिता ।
विरेचने स्यादमृता गुणाधिका
जीवन्तिका स्यादिह जीर्णरोगजित् ॥
स्याच्चेतकी सर्व्वरुजापहारिका,
नेत्रामयघ्नीमभयां वदन्ति ताम् ।
इत्थं यथारोगमियं प्रयोजिता
ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥

चेतकी च धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्विरिच्यते वेगात्तत्प्रभावान्न संशयः ॥
सप्तानामपि जातीनां प्रधानं विजया स्मृता ।
सुखप्रयोगसुलभा सर्व्वव्याधिषु शस्यते ॥
चिप्राप्सु निमज्जति या या ज्ञेया गुणवती भिषग्वरैः ।
यस्या यस्या भूयो निमज्जनं सा गुणाढ्या स्यात् ॥
हरते प्रसभं व्याधीन् भूयस्तरति यद्वपुः ।
हरीतकी तु सा प्रोक्ता तरतिर्दीप्तवाचिका ॥
हरीतकी तु दत्तायां चक्रुस्तस्मै गजाग्रहे ।
प्रोषि नवज्वरे चीर्णे गुर्विण्यां नैव शस्यते ।"

इति राजनिर्घण्टः ॥ ॥

अपि च ।

"दक्षं प्रजापतिं स्वस्थं अश्विनौ वाक्यमूचतुः ।
कुतो हरीतकी जाता तस्यास्तु कति जातयः ॥
रसाः कति समाख्याताः कति चोपरसाः स्मृताः ।
नामानि कति चोक्तानि कञ्च तासाञ्च लक्षणम् ॥
के च वर्णा गुणाः के च का च कुत्र प्रयुज्यते ।
केन द्रव्येण संयुक्ता कांश्च रोगान् व्यपोहति ॥
पृच्छाम्येतद्यथा पृष्टं भगवन् ! वक्तुमर्हसि ।
अश्विनोर्व्वचनं श्रुत्वा दक्षो वचनमब्रवीत् ॥
पपात बिन्दुर्म्मेदिन्यां शक्रस्य पिबतोऽमृतम् ।
ततो दिव्यात् समुत्पन्ना सप्तजातिर्हरीतकी ॥
हरीतक्यभया पथ्या कायस्था पूतनामृता ।
हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा ।
वयस्था विजया चापि जीवन्ती रोहिणीति च ।
विजया रोहिणी चैव पूतना चामृताभया ।
जीवन्ती चेतकी चेति पथ्यायाः सप्त जातयः ॥ ॥
अलाबुवृत्ता विजया वृत्ता सा रोहिणी स्मृता ।
पूतनास्थिमती सूक्ष्मा कथिता मांसलामृता ॥
पञ्चरेखाभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी ।
त्रिरेखा चेतकी ज्ञेया सप्तानामियमाकृतिः ॥ ॥
विजया सर्व्वरोगेषु रोहिणी व्रणरोहिणी ।
प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता ॥
अक्षिरोगेऽभया शस्ता जीवन्ती सर्व्वरोगहृत् ॥
चूर्णार्थे चेतकी शस्ता यथा युक्तं प्रयोजयेत् ॥ ॥
चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा च वर्णतः ।
षडङ्गुलायता शुक्ला कृष्णा चैकाङ्गुलायता ॥
काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत् ।
काचित् स्पर्शेन दृष्ट्यान्या चतुर्द्धा भेदयेच्छिवा ।
चेतकीपादपच्छायामुपसर्पन्ति ये नराः ।
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादयः ॥
चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्भिद्येत वेगैस्तु प्रभावान्नात्र संशयः ॥
नृपादिसुकुमाराणां कृशानां भेषजद्विषाम् ।
चेतकी परमा शस्ता हिता सुखविरेचनी ॥
सप्तानामपि जातीनां प्रधाना विजया स्मृता ।
सुखप्रयोगा सुलभा सर्व्वरोगेषु शस्यते ॥
हरीतकी पञ्चरसालवणा तुवरा परम् ।
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी ॥
चक्षुष्या लघुरायुष्या वृंहणी चानुलोमिनी ।
श्वासकासप्रमेहार्शःकुष्ठशोथोदरक्रिमीन् ॥
वैस्वर्य्यग्रहणीरोगविबन्धविषमज्वरान् ।
गुल्माध्मानव्रणच्छर्दिहिक्काकण्डूहृदामयान् ॥
व्रणस्थाने त्वषा इति क्वचित् पुस्तके पाठः ।
कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा ।
अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत् ॥
स्वादुतिक्तकषायत्वात् पित्तहृत् कफहृत्तु सा ।
कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा ॥
पित्तकृत् कटुकाम्लत्वात् वातकृन्न कथं शिवा ।
प्रभावाद्दोषहन्तृत्वं सिद्धं यत्तत् प्रकाश्यते ॥
हेतुभिः शिष्यबोधार्थं न पूर्व्वं क्रियतेऽधुना ।
कर्म्मान्यत्वं गुणैः साम्यं दृष्टमाश्रयभेदतः ।
यतस्ततो नेति चिन्त्यं धात्रीलकुचयोर्यथा ॥
पथ्याया मज्जनि स्वादुः स्नाय्वामम्लो व्यवस्थितः ।
वृन्ते तिक्तस्त्वचि कटुरस्थिस्थस्तुवरो रसः ॥ ॥
नवा स्निग्धा घना वृत्ता गुर्व्वी क्षिप्ता च याम्भसि ।
निमज्जेत् सा प्रशस्ता कथितातिगुणप्रदा ॥
नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता ।
हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते ॥
चर्व्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी ।
स्विन्ना संग्राहिणी पथ्या भृष्टा प्रोक्ता त्रिदोषनुत् ॥

उन्मीलिनी बुद्धिबलेन्द्रियाणां
निर्म्मूलिनी पित्तकफानिलानाम् ।
विस्रंसिनी मूत्रशकृन्मलानां
हरीतकी स्यात् सह भोजनेन ॥

अन्नपानकृतान् दोषान् वातपित्तकफोद्भवान् ।
हरीतकी हरत्याशु भुक्तस्योपरियोजिता ॥
लवणेन कफं हन्ति पित्तं हन्ति सशर्करा ।
घृतेन वातजान् रोगान् सर्व्वरोगान् गुडान्विता ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥

अध्वातिखिन्नो बलवर्जितश्च
रूक्षः कृशो लङ्घनकर्षितश्च ।
पित्ताधिको गर्भवती च नारी
विमुक्तरक्तस्त्वभयां न खादेत् ॥"

इति भावप्रकाशः ॥ ॥

अन्यच्च ।

"जीवन्ती रोहिणी चैव विजया चाभयामृता ।
पूतना कालिका चेति सप्तजातिर्हरीतकी ॥
सुवर्णवर्णा जीवन्ती रोहिणी कपिलद्युतिः ।
अलाबुवृत्ता विजया पञ्चास्रा चाभया स्मृता ।"
पञ्चास्रा पञ्चशिरा ।
"स्थूलमांसामृता ज्ञेया पूतनास्थिमती मता ।
श्यामा च कालिकेत्येवं सप्तजातिर्हरीतकी ॥
लेहपानेषु सर्व्वेषु जीवन्ती तु प्रशस्यते ।
रोहिणी क्षतरोगेषु विजया सर्व्वकर्म्मसु ॥
पूतना लेपने ज्ञेया अमृता तु विरेचने ।
अभया नेत्ररोगेषु गन्धयुक्ता तु कालिका ॥
हरस्य भवने जाता हरिता च स्वभावतः ।
हरते सर्व्वरोगांश्च तेन नाम्ना हरीतकी ॥ ॥
पीयूषं पिबतस्त्रिपिष्टपपतेर्य्या बिन्दवो निर्गता-
स्तेभ्योऽभूदभया दिवाकरकरश्रेणीव दोषापहा ।
कालिन्दीव बलप्रमोदजननी गौरीव शूलिप्रिया
वह्निद्योतकरी कृतार्च्चितिरिव चौर्व्वीव नानारसा ॥
पथ्या पञ्चरसायुष्या चक्षुष्यालवणा सरा ।
मेध्योष्णा दीपनी कुष्ठशोथघ्नोपद्रवापहा ।" ॥
पञ्चरसस्य विवरणम् । त्वक् कटुः । मांसं अम्ल-
कषायम् । अस्थि तिक्तम् । तन्मध्ये माधुर्य्यम् ॥ ॥
तन्मज्जगुणाः ।
"पथ्यामज्जा तु चक्षुष्यो वातपित्तहरो गुरुः ।"

इति राजवल्लभः ॥

हरीषा, स्त्री, मांसपक्वान्नविशेषः । आव इति
हिन्दी भाषा । यथा,—
"पाकभाण्डे तु हरति मांसखण्डानि निःक्षिपेत् ।

पानीयं प्रचुरं सर्पिः प्रभूतं हिङ्गु जीरकम् ।
हरिद्रामार्द्रकं शुण्ठी लवणं मरिचानि च ।
सक्तूंश्चापि गोधूमान् जम्बीराणां रसान्
बहून् ॥
यथा सर्व्वाणि वस्तूनि सुपक्वानि भवन्ति हि ।
तथा पचेन निपुणो बहुमल्लस्थितिर्यथा ॥
यथा हरीषा बलकृद्वातपित्तापहा गुरुः ।
शीतोष्णा शुक्रदा स्निग्धा सरा सन्धान-
कारिणी ॥"
इति भावप्रकाशः ॥

हरेणुः, स्त्री, ( ह्रियते इति । हृ + "हृभ्या-
मेणुः ।" उणा० २ । १ । इति एणुः । ) रेणु-
कानामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२० ॥
कुलयोषित् । इति मेदिनी ॥

हरेणुः, पुं, (ह्रियते इति । हृ + एणुः ।) सतीलः ।
इति मेदिनी ॥ ( गुणादयोऽस्य सतीलशब्दे
ज्ञातव्याः ॥ )

हरेणुकः, पुं, ( हरेणुरिव । कन् । ) कलायः ।
इति राजनिर्घण्टः ॥ ( पर्य्यायोऽस्य यथा,—
"कलायो वर्त्तुलः प्रोक्तः सतीलश्च हरेणुकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

हर्त्ता, [ऋ] पुं, (हरति ध्वान्तमिति । हृ + तृच् ।)
सूर्य्यः । यथा,—
"लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥"
इति शाम्बपुराणे सूर्य्यस्तवः ॥

हरणकर्त्तरि, त्रि ॥ ( यथा, भागवते । ४।२४।५।
"अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ।
य इन्द्रमश्वहर्त्तारं विद्वानपि न जघ्निवान् ॥")

हर्म्म, [न्] क्ली, ( हरति ग्लानिमिति । हृ +
मनिन् । ) जृम्भणम् । इति शब्दरत्नावली ॥

हर्म्मितं, त्रि, ( हर्म्म जातमस्येति । इतच् । )
क्षिप्तम् । दग्धम् । इति मेदिनी ॥ जृम्भितम् ।
इति हर्म्मशब्दार्थदर्शनात् ॥

हर्म्मुटः, पुं, सूर्य्यः । कच्छपः । इति केचित् ॥

हर्म्म्यं, क्ली, (हरति जनमनांसीति । हृ + अन्या-
दित्वात् यत् मुट् च । ) धनिनां वासः । इत्य-
मरः । २ । २ । ६ ॥ धनिनां व्यवहारिकादीनां
वासः काष्ठेष्टकादिना कृतं धवलगृहं हर्म्म्यादि-
संज्ञकं स्यात् । हरति मनो हर्म्म्यं नाम्नीति
कृणो म्यः इति भरतः । अन्यच्च । हरति मनो
हर्म्म्यं अन्यादित्वात् यत् मुट् च हर्म्म्यम् ।
आदिशब्देन स्फटिकाट्टालिकादिर्ग्रहणम् ।
धनिनां राजव्यतिरिक्तानां वासो गृहम् । एकं
काष्ठेष्टकादिकृतस्य धनिगृहस्य । इत्यमर-
टीकायां रायमुकुट. ॥ ( यथा,—
"हर्म्म्यवालीदिभूमिनैर्भास च शयनं शीकरोष्ण-
प्रहीणे ॥"
इति वैद्यकपथ्यापथ्यविधौ वर्षोपचारे ॥ )

हर्य्य, क्रमे । गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-
पर०-क्रमे अक०-गतौ सक०-सेट् ।) रेफोपधः ।
हर्य्यति । क्रमो ग्लानिः । इति दुर्गादासः ॥

हर्य्यक्षः, पुं, ( हरि पिङ्गलं अक्षि यस्य । षच् । )
सिंहः । इत्यमरः । २ । ५ । १ ॥ कुवेरः ॥ इति
जटाधरः ॥ ( पिङ्गलनेत्रे, त्रि । यथा, महा-
भारते । ३ । ३०७ । ५ ।
"तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलम् ।
हर्य्यक्षं वृषभस्कन्धं यथास्य पितरं तथा ॥" )

हर्य्यतः, पुं, ( हर्य्यति गच्छतीति । हर्य्य + "भृमृ-
दृशियजीति ।" उणा० ३ । ११० । इति
अतच् । ) घोटकः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ अश्वमेधीयाश्वः । इत्युणादि-
कोषः ॥

हर्य्यश्वः, पुं, ( हरिनामा हरिवर्णो वा अश्वो
यस्य । ) इन्द्रः । इति केचित् ॥ ( यथा, भाग-
वते । ८ । ११ । २१ ।
"हरीन् दशशतान्याजौ हर्य्यश्वस्य बलः शरैः ।
तावद्भिरर्द्दयामास युगपल्लघुहस्तवान् ॥"
हरिनामा हरिवर्णो का अश्वः इति कर्म्मधारयेण
इन्द्राश्वः । यथा, महाभारते । ३ । २८६ । १३ ।
"अयं हर्य्यश्वयुग् जेत्रो मघोनः स्यन्दनोत्तमः ।
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ।
शतशः पुरुषव्याघ्र ! रथोदारेण जघ्निवान् ॥")

हर्षः, पुं, ( हृष तुष्टौ + घञ् । ) इष्टश्रवणजन्य-
सुखम् । इति महाभारते मोक्षधर्म्मः ॥
आह्लादः । तत्पर्य्यायः । मुत् २ प्रीतिः ३ प्रमदः ४
प्रमोदः ५ आमोदः ६ सम्मदः ७ आनन्दथुः ८
आनन्दः ९ शर्म्म १० शातम् ११ सुखम् १२ ।
इत्यमरः । १ । ४ । २४ ॥ मुदा १३ मुदिता १४
आनन्दिः १५ नन्दिः १६ सातम् १७ सौख्यम् १८ ।
केचित्तु मुदादिसप्तकं प्रीतौ आनन्दथ्वादिपञ्चकं
सुखे । प्रीतिश्च सुखजो विकारः इत्याहुः ।
इति तट्टीकायां भरतः ॥ तथा च ।
"मुत् प्रीतिः प्रमदामोदसम्मोदमोदसम्मदाः ।
प्रमोदो हर्ष इत्येव हर्षपर्य्याय ईरितः ॥
आनन्दो नन्दथुर्नन्दः सुखमानन्दथुर्म्मुदा ।
सौख्यं शर्म्मोपजोषः स्यादानन्दं जोषमित्यपि ॥
मुदादिजोषपर्य्यन्तमेकपर्य्यायः इत्यपि ॥"
इति शब्दरत्नावली ॥ * ॥
हर्षस्य पुत्त्रः कन्दर्पः । यथा,—
पुलस्त्य उवाच ।
"कन्दर्पो हर्षतनयो योऽसौ कामो निगद्यते ।
स शङ्करेण संदग्धो ह्यनङ्गत्वमुपागतः ॥"
इति वामने ५ अध्यायः ॥
( रोमाञ्चः । यथा । "हृष्येते चसंयुक्तौ भवतः
हर्षश्च रोमाञ्चप्रायः ।" इति वम्भनिश्चयस्य
वातव्याधिव्याख्याने विजयरक्षितः ॥)

हर्षकः, पुं, (हर्षयतीति । हृष् + णिच् + ण्वुल् ।)
पर्व्वतविशेषः । इति शब्दमाला ॥ हर्षकारके,
त्रि । इति शब्दरत्नावली ॥

हर्षणं, क्ली, (हृष + ल्युट् ।) हर्षः । इति धरणिः ॥
( यथा, महाभारते । ७ । १४४ । ११५ ।
"तच्छ्रुत्वा सिन्धुराजस्य शरैर्बह्वमवाकयत् ।
दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च ॥")

हर्षणः, पुं, ( हर्षयतीति । हृष् + णिच् + ल्युः ।)
विष्कम्भादिसप्तविंशतियोगान्तर्गतचतुर्द्दशयोगः ।
तत्र जातफलम् ।
"सुचारुगात्रं स्फुटपक्ष्मनेत्रं
शास्त्रप्रयत्नं विनयोपपन्नः ।
प्रसूतिकाले यदि हर्षणः स्या-
दमर्षणो नैव जनः कदाचित् ॥"
इति कोष्ठीप्रदीपः ॥*॥
चक्षूरोगविशेषः । श्राद्धविशेषः । श्राद्धदेवः ।
हर्षकारके, त्रि । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ७ । ९१ । ७६ ।
"एवं सुकलिलं युद्धमासीत् क्रव्यादहर्षणम् ।
महद्भिस्तैरभीतानां यमराष्ट्रविवर्द्धनम् ॥")

हर्षमाणः, त्रि, ( हर्ष + ताच्छील्ये शानच् ।)
हर्षयुक्तः । तत्पर्य्यायः । विकुर्व्वाणः २ प्रमनाः ३
हृष्टमानसः ४ । इत्यमरः । ३ । १ । ७ ॥ प्रीत-
मानसः ५ । इति शब्दरत्नावली ॥

हर्षयित्नुः, पुं, ( हर्षयतीति । हृष तुष्टौ + णिच् +
"स्तनिहृषिपुषीति ।" उणा० ३ । २९ । इति
इत्नुच् ।) पुत्त्रः । स्वर्णं, क्ली । इति मेदिनी ।
हर्षणशीले, त्रि ॥

हर्षस्वनः, पुं, ( हर्षसूचकः स्वनः । ) आनन्द-
ध्वनिः । तत्पर्य्यायः । किलकिला २ । इति
त्रिकाण्डशेषः ॥

हर्षिणी, स्त्री, ( हर्षयतीति । हृष् + णिच् +
णिनिः । ङीप् ।) विजया । इति राजनिर्घण्टः ।

हर्षितः, त्रि, आह्लादितः । हर्षोऽस्य जात इत्य-
नेन इतप्रत्ययेन निष्पन्नः ॥

हर्षुलः, पुं, ( हृष तुष्टौ + "हृषेरुलच् । ) उणा०
१ । ९८ । इति उलच् । ) मृगः । कामुकः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः । हर्ष-
शीले, त्रि ॥ ( यथा, कथासरित्सागरे । १२ ।
२६ ।
"प्राभृतं प्रस्तुतेऽङ्गमे सिद्धमद्येति हर्षुलः ॥")

हल, श विलेखे । इति कविकल्पद्रुमः ॥ ( भ्वा०-
पर०-सक०-सेट् । ) श, हालः हलः । हलति
भूमिं लपकः । इति दुर्गादासः ॥

हलं, क्ली, ( हलति भूमिमिति । हल + अच् ।)
लाङ्गलम् । इत्यमरः । २।९।१३ ॥ तत्पर्य्यायः ।
"हलन्तु लाङ्गलं गोदारणञ्च सीरकृत्तके ।"
इति जटाधरः ॥
तत्र गोयोजने दोषादोषौ । हारीतः ।
"अष्टागवं धर्म्महलं षड्गवं जीवितार्थिनाम् ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥"
इति तृतीययामार्द्धकृत्ये आह्निकतत्त्वम् ॥*॥
हलप्रवाहदिनादि यथा । दीपिकायाम् ।
"पूर्व्वात्रियाम्यफल्गुनिपित्र्यशिवाश्लेषा
रिक्ताष्टमीविगतचक्रतिथिं विहाय ।
शुक्लालिगोघसुदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥*॥
हलप्रवाहवदुवीजवपनस्य विधिः स्मृतः ।
पिनाकाप्य शुभे केन्द्रे क्रिस्त्रयंसशुभोदये ॥"

ीमपराक्रमे ।
"वामे तथ्यं बलीवर्द्दं दक्षिणे लोहितं न्यसेत् ।
उत्तराभिमुखो भूत्वा कर्षकः कृषिमारभेत् ॥
हले तु योजिते यत्र क्षेत्रे ग्रासं करोति गौः ।
तत्र स्याद्द्विगुणं शस्यमवश्यं गर्गभाषितम् ॥"*।
कृषिचिन्तामणौ बलभद्रः ।
"सुखदा प्रतिपच्चैव द्वितीया कार्य्यसाधिनी ।
आरोग्यदा तृतीया च चतुर्थी कीटकृत् सदा ॥
पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया ॥
सप्तमी स्यान्नदा भोग्या दुःखं हन्ति तथाष्टमी ॥
नवमी शस्यनाशाय दशमी भूतिदा सदा ।
एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम् ।
द्वादशी प्राणसन्देहा सर्व्वसिद्धा त्रयोदशी ।
चतुर्द्दशी पतिं हन्ति पञ्चदश्येव निष्फला ॥
अमावस्याष्टमीषष्ठीरिक्ताश्च परिवर्ज्जयेत् ।
सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः ॥
प्राजेशविष्णुतिष्येषु पितृकरोत्तरेषु च ।
अश्विनीवातपौष्णेषु मूलादितीन्दुभे तथा ॥
वारे भानुजशुक्रे च जीवे शीतकरे तथा ।
लग्ने स्त्रीगोमीनयुग्मे कृष्यारम्भं शुभं विदुः ॥
ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालञ्च पूजयेत् ।
सालङ्कारो हलधरः स्रग्भिश्च पूजितं हलम् ॥
दध्याज्यमधुभिः श्रेष्ठं फलाग्रञ्च प्रलेपितम् ।
कर्षं प्रावर्त्तयेत् प्राज्ञो नूतनेन हलेन च ॥"*।
हस्ताश्विनितिष्यचन्द्रेषु अर्क्केन्द्रत्रिगुवारयोः ।
वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च ॥
वारे जीवज्ञशुक्रे च सोमे दिनकरे तथा ।
युग्मे युवतिगोमीने प्रशस्तं स्याद्बीजवापनम् ॥"
राजमार्त्तण्डे ।
"प्राजेशश्रवणोत्तरादितिमघामार्त्तण्डतिष्याश्विनी-
पौष्णानुराधमरीचयः शतभिषा स्वाती विशाखा तथा ।
जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये
शस्यानां वपने भवन्ति सवने प्रशस्ते तिथौ रोपणे ॥"
देवलः ।
"गुरुसोमसूर्य्यशुक्राः सौम्याः सम्पत्कराः शुभाः ।
बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः ॥
हन्ति मेषः पशून् सर्व्वान् स्वभावेनाथ वृश्चिकः ।
कर्कटेन भवेत् सौख्यं तुलायां न प्ररोहति ॥
केशरी शस्यघाती स्यात् पार्थिवोपद्रवं धनुः ।
मकरे चैव कुम्भे च भयमेव विनिर्द्दिशेत् ।
गोस्त्रीमन्मथमीनेषु शस्तं सम्पद्यते महत् ॥"*।
प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा ।
स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः ॥
एभिश्च गन्धसंयुक्तां पूजयित्वा प्रजापतिम् ।
अर्घं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा ॥
हव्यो हवौ नियोक्तव्यौ नवनीतेन घृतेन वा ।
तत्पार्श्वं तयोर्लिप्यात् फालाग्रं कनकैः स्पृशेत् ।
उत्तराभिमुखो भूत्वा धौरेयाञ्च प्रदापयेत् ।
ततः शुभकरः श्रीमान् कृषिकर्म्म समाचरेत् ॥*
वर्ज्जयेत् भग्नहलञ्च खुरभङ्गञ्च वर्ज्जयेत् ।
विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा ॥
हलप्रवाहणं कार्य्यं गोवृषभिः कृषिकर्म्मके ।
हलादिभिर्हृढैः सीमग्रहृढैर्न शुभं भवेत् ॥
वृषभा यदि सुस्यन्ति तस्य विघ्नप्रदा भवेत् ॥"
कृषिरिति शेषः ।
"तस्मात् सर्व्वप्रयत्नेन निर्व्विघ्नं कारयेत् सदा ॥
एका जयकरी रेखा तृतीया चार्थदायिका ।
पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा ॥
अत ऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततो भवेत् ॥
संपूर्ण्यापि द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम् ।
हेमन्ति दृष्टफालाग्रं छिन्नरेखां न कारयेत् ॥
स्मर्त्तव्या वसवश्चेन्द्रः पृथू रामः सचन्द्रमाः ।
पराशरो बलभद्रः सर्व्वविघ्नोपशान्तये ॥*॥
हलि प्रवाह्यमाणे तु कूर्म्म उत्पद्यते यदि ।
गृहिणी म्रियते तस्य ततोऽग्नेश्च भयं भवेत् ॥
लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति ।
ईशाभङ्गो यदा कर्त्तुः संशयो जीवितस्य च ॥
सुतनाशो युगभङ्गे समीने म्रियते सुतः ।"
समीने योक्त्रबन्धनकाष्ठद्वये ।
"योक्त्रच्छेदे तु व्यासङ्गः शस्यहानिश्च जायते ॥
हले प्रवाह्यमाणे तु गौरेकः प्रपतेद्यदि ।
प्रपतेद्युक्तमात्रस्तु बन्धनं स प्रपद्यते ।
ज्वरातिसाररोगेण कृषिभङ्गं विनिर्द्दिशेत् ॥
प्रवहेत् युक्तमात्रस्तु ततो गौः स्रवते यदि ।
वत्सालीढ़ेन नर्द्दन्ति ततः शस्यं चतुर्गुणम् ॥*॥
हेमवारिविलिप्तस्य बीजस्योत्थयतः शुचिः ।
इन्द्रं चित्ते विधायाथ स्वयं मुष्टित्रयं वपेत् ॥
कृत्वा चान्योन्यप्रोत्साहं कर्षको हृष्टमानसः ।
प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत् ॥
त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु ।
कर्षकास्तु भवन्त्वग्रा धान्येन च धनेन च स्वाहा ॥"*।
कृत्यरत्नाकरे ब्रह्मपुराणम् ।
"पैत्रे च कृष्णपञ्चम्यां काश्मीरा च रजस्वला ।
नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियम् ॥
अभ्यङ्गवस्त्रनैवेद्यैः पूजयेच्च दिनत्रयम् ।
पुष्पालङ्कारधूपैश्च गोरसं वर्ज्जयन्ति च ॥"
काश्मीरा पृथ्वी ।
"अष्टम्याश्च ततः स्नाप्य ताभिरेव गृहे गृहे ।
सुस्नाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव च ॥
अनन्तरं द्विजैः स्नाप्या सर्व्वौषधियुतैर्जलैः ।
गन्धैर्वीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा ॥
स्नापयित्वा च तां देवीं गन्धैर्म्माल्यैश्च पूजयेत् ।
तन्निवेदितभक्ष्यञ्च प्राशितव्यं गृहे गृहे ॥
अतः परं ऋतुस्नाता गर्भं गृह्णाति मेदिनी ॥"*।
तथा ।
"ब्रह्मा विष्णुश्च वरुणश्च काश्यपः सुरभी तथा ।
इन्द्रः प्रचेताः पर्ज्जन्यः शिवचन्द्रार्कवह्नयः ।
बलदेवो हलं भूमिर्द्दवभो रामलक्ष्मणौ ।
रघोत्तौ जानकी सीता युगं गगनमेव च ॥
सीता लाङ्गलपद्धतिः । युगं युगकाष्ठम् ।
"एते द्वाविंशतिः प्रोक्ताः प्रजानां सततः शुभाः ।
गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे ॥
अर्घैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक् पृथक् ।
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः ॥"
तथा ।
"उप्ता बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह ॥"
बीजवपनं प्राजापत्यतीर्थेन । यथा, हारीतः ।
"कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होम-
तर्पणे प्राजापत्येन कुर्य्यात् । इति । होमतर्पणे
लाजहोमसक्तकादितर्पणे । राजमार्त्तण्डे ।
"नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम् ।
नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम् ॥"*।
कृषिपराशरः ।
"वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ ।
अतः परन्तु अधमं न जातु श्रावणे शुभम् ॥"
ज्योतिषे ।
"पूर्व्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी ।
विशाखा शतभिषा चाथ धान्यानां रोपणे वराः ॥
महोग्रा रजनी नीली पुत्रवित्तैर्वियुज्यते ।
स्वयं जाते पुनस्ते हि पालयन्नेव दुष्यति ॥
आरामे गृहमध्ये वा मोहात् सर्षपमावपन् ।
पराभवं रिपोर्याति सबाधनधनक्षयम् ॥
निशा नीली पलाशञ्च चिञ्चा श्वेतापराजिता ।
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति मङ्गलम् ॥"
निशा हरिद्रा । कोविदारको रक्तकाञ्चनः ॥*
"हेमाभसा तुष्टबीजं जातो सर्व्वत्र रोपयेत् ॥
वसुधेति सुशीलेति पुण्यदेति धरेति च ।
नमस्ते सुभगे नित्यं द्रुमोऽयं वर्द्धतामिति ॥*॥
लिखित्वालक्तकेनापि मन्त्रं शस्येषु बन्धयेत् ।
न व्याधिकीटहिंसायां भयं तत्र भवेत् क्वचित् ॥"
सिद्धिः प्रबलतरतरङ्गतरलितगङ्गातरसमीरण-
वनोद्देशे श्रीमद्रामभद्रपादाः कृपालिनः समुद्र-
तटे नानाशस्यसम्पन्नानरायां मध्ये स्वरनखर-
पयोद्धूलाङ्कुरं पवनसुतं वायुवेगं परचक्रप्रमथनं
श्रीमद्धनुमन्तमाज्ञापयन्ति अमुकस्याममुकक्षेत्रे
वाताभोज्यो गान्धीवतो पाककसुक्तो धूली-
प्रञ्जारतश्चा शरदाङ्गता परिङ्गा एता वानरा
गवङ्गा दमङ्का मक्षिकादिरोगं स्तम्भयत क्षण-
मपि विलम्बं मा चरत यदि विलम्बं कारयत
तदा युष्मान् शतखण्डं कारयामीति । ॐ ह्रां
ह्रीं ह्रौं श्रीरामाय नमः । इति शस्येषु बन्ध-
येत् ॥*॥ धान्यच्छेदनम् । दीपिकायाम् ।
"धान्यानपादद्विघनानलसौम्यशाक-
चित्रोत्तरोषु कुलाकंजवारवर्ज्जम् ।
प्राक्चन्द्रयोगकरयोषु तिथौ विरिक्ते
धान्यच्छिदः स्थिरनरस्त्रमृगोदयेषु ॥"
बलभद्रः ।
"रेवतीहस्तमूलेषु श्रवणे नागयाम्ययोः ।

पितृदेवे तथा सौम्ये धान्यच्छेदं मघोदये ॥”

अथ धान्यच्छेदनप्रकारः ।

“सपत्नौ माषमुद्गौ च यवधान्ये सकाङ्कके ।
छिन्द्यात्तिलञ्च निष्पन्नमेतत् पाराशरं मतम् ॥”

पराशरः ।

“न सुष्टिग्रहणं कुर्य्यात् कदाचिद्वटपौषयोः ।
ईशाने लवनं कुर्य्यात् सार्द्धसुष्टिद्वयं शुचिः ॥
पौष्णे पुष्ये शुभाहे वा पूजयित्वेष्टदेवताम् ।
शस्यविघ्नप्रशान्त्यर्थं क्षेत्रे वाहकभोजनम् ॥”

बौधायनः ।

“रथाश्वगजधान्यानां गवां चैव रजः शुभम् ।
अथाशस्तं समूहिन्याः श्वाजाविखरवाय-
साम् ॥”

समूहिनी संमार्ज्जनी ॥ * ॥ कृत्यचिन्तामणौ मेधिरोपणम् ।

वटश्च सप्तपर्णश्च गम्भारी शाल्मली तथा ।
औडुम्बरी तथा धात्री या चान्या क्षीर-
धारिणी ।
क्षोणाम्बी कर्षकैर्नित्यं मेधिः कार्य्या फलप्रदा ॥”

बीजसञ्चयदिनादि तच्छब्दे द्रष्टव्यम् ॥ * ॥ * ॥

अथ प्रयोगः ।

पौर्णमास्यन्तचैत्रीयकृष्णपञ्चम्यां पृथ्वी रजस्वला तां दिनत्रयमेकस्मिन् पर्व्वताकारे उच्चप्रदेशे सधवाः स्त्रियः प्रपूजयेयुरष्टम्यां तां स्नापयित्वा ताः पूजयेयुः । ततः शुभदिने बीजवपनादिने वा सर्व्वौषधिगन्धबीजरत्नफलान्वितसर्षपैः पृथ्वीं स्नापयित्वा गन्धादिभिः पूजयेत् । नैवेद्यशेषञ्च पञ्चाङ्गोक्तवम् ॥ * ॥ अथ हलप्रवाहदिने बीजवपनदिने च क्षेत्रस्यागादिराचान्तो गर्त्तं क्षेत्रे कृत्वा जलेनापूर्य्य तत्र प्रजापतिं सूर्य्यादिनवग्रहान् पृथ्वीञ्च पूजयेत् ।

“हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि ।
वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे ॥”

इति मन्त्रेण क्षीरेणार्घ्यं दद्यात् । ऐशान्यां पुष्पनैवेद्यैः प्रणवादिनमोऽन्तेन अनेनैव विधाने । नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा ॥ इत्यनेन त्रिः पूजयेत् । रुद्राय कश्यपाय सुरभ्यै इन्द्राय । तदर्घ्यमन्त्रस्तु ।

“शक्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ।
शतयज्ञाधिपो देव तुभ्यमिन्द्राय वै नमः ॥”

प्रचेतसे पर्ज्जन्याय शेषाय चन्द्राय अर्काय वह्नये बलदेवाय हलाय भूमये वृषभाय रामाय लक्ष्मणाय जानक्यै सीतायै युगाय गगनाय इति द्वाविंशतिं पूजयेत् क्षेत्रपालमग्निं द्विजञ्च पूजयेत् । अग्निं प्रदक्षिणीकृत्य ब्राह्मणाय दक्षिणां दद्यात् । आम्रपल्लवौदनदधीनि गर्त्ते निःक्षिप्य मृत्तिकाभिः पूरयेत् । कृष्णौ वृषौ नवनीतेन घृतेन वा मुखपार्श्वयोर्निलिम्पेत् । हलप्रवाहकान् गन्धादिना भूषयित्वा हलं माल्यादिभिः पूजयित्वा दधिघृतमधुभिः फालाग्रं प्रलिप्य हेम्ना फालाग्रं घर्षयित्वा कर्षयेत् । वज्रिन्द्रपृथुरामेन्द्रपराशरबलभद्रान् स्मरेत् । एका तिस्रः पञ्च वा रेखा हलेन कार्य्याः । भग्नशृङ्गखुरलाङ्गूलाः कपिलाश्च वृषा न योक्तव्याः । हलप्रवाहकाश्च समर्थाः कर्त्तव्याः । हलानि नवानि दृढ़ानि कर्त्तव्यानि । वृषभेयुद्धादिकं न शुभदं वृषभाणां महर्न्नेन चतुर्गुणं शस्यं मूत्रपुरीषोत्सर्गे तथा ॥ * ॥ बीजवपने त्विदमधिकम् । सुवर्णजलसंयुक्तं बीजमुष्टित्रयं इन्द्रं ध्यायन् स्वयं प्राजापत्येन तीर्थेन वपेत् । उभयत्रैव प्राङ्मुखः जलपूर्णं कलसं गृहीत्वा ।

“त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु ।
कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च
स्वाहेति प्रार्थयेदिति ॥”

इति ज्योतिस्तत्त्वम् ॥ * ॥

अपि च ।

“अमावस्यां पितृश्राद्धे अम्बुवाचीदिने तथा ।
लाङ्गलेन चतं क्षेत्रं पृथिवी कम्पते सदा ॥”

इति कर्म्मलोचनम् ॥ * ॥

स्मृतिसागरसारे गोभिलः ।

“हलैर्व्वा शकटैर्व्वापि वाहयेत् यो वृषं स्वयम् ।
प्राजापत्यद्वयं कुर्य्यात् द्विगुणं योषितां गवाम् ॥
वृषभन्तु समुत्सृष्टं कपिलां वापि कामतः ।
योजयित्वा हले कुर्य्यात् व्रतं चान्द्रायणद्वयम् ॥”

इति तिथ्यादितत्त्वम् ॥

**हलह्नी**, स्त्री, हरिद्रा । इति राजनिर्घण्टः ॥

**हलधरः**, पुं, ( धरतीति । धृ + अच् । हलस्य धरः । ) बलदेवः । यथा,—

“नीलाम्बरो हलधरो हलभृत्तालभृत् बलः ॥”

इति शब्दरत्नावली ॥

(यथा च महाभारते । १ । २२० । ७ ।

“ततो हलधरः क्षीवो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गन्धर्व्वैरचरत्तत्र भारत ! ॥”)

हालिकः । यथा, ज्योतिस्तत्त्वे ।

“सालङ्कारो हलधरः स्रग्भिश्च पूजितं हलम् ॥”

**हलभूतिः**, स्त्री, (हलसाध्या भूतिः ।) कृषिकर्म्म । यथा,—

“अथ सेवा श्ववृत्तिः स्यात् स्त्रियां कृषिश्च
कर्षणम् ।
कर्षोऽन्नतञ्च प्रस्तं हलभूतिर्म्महाधनम् ॥”

इति शब्दरत्नावली ॥

**हलभृत्**, पुं, (हलं बिभर्त्तीति । भृ + क्विप् । हलस्य भृदिति वा ।) बलदेवः । इति त्रिकाण्डशेषः ॥ ( यथा, मेघदूते । ४९ ।

“अंसन्यस्ते सति हलभृतो मेचके वाससीव ॥”)

**हलभृतिः**, पुं, ( हलेन भृतिर्भरणमस्य । ) मुनिविशेषः । तत्पर्य्यायः । उपवर्षः २ कृतकोटिः ३ अयाचितः ४ । इति त्रिकाण्डशेषः ॥ ( हलस्य हलेन वा भृतिः । ) कृषिकर्म्म च ॥

**हलराचं**, क्ली, आर्द्रकम् । इति राजनिर्घण्टः ॥

**हला**, च, नाट्योक्तौ सखीं प्रत्याह्वानम् । इत्यमरः । १ । ७ । १५ ॥

**हला**, स्त्री, सखी । इति जटाधरः ॥ मद्यम् पृथिवी । जलम् । इत्यनेकार्थकोषः ॥

**हलायुधः**, पुं, ( हलमायुधं यस्य । ) बलदेवः इत्यमरः । १ । १ । २४ ॥ (यथा, महाभारते १ । २२१ । २३ ।

“ततस्ते तद्वचः श्रुत्वा धार्त्तरूपं हलायुधात् ।
तूष्णींभूतस्ततः सर्व्वे साधु साध्विति चाब्रुवन् ।”

**हलाहः**, पुं, चित्रिताश्वः । इति हेमचन्द्रः ।

**हलाहलः**, पुं, ( हलमिव आ समन्तात् सर्व्वाङ्गे हलति कर्षतीति । आ + हल + अच् । ) वि भेदः । यथा,—

“समौ कचुकनिर्म्मोकौ क्ष्वेडस्तु गरलं विषम्
पुंसि क्लीवे च काकोलकालकूटहलाहलाः ।”

इत्यमरः । १ । ८ । १० ।

हलमिव आ समन्तात् हलति विलि हलाहलः । हल च विलेखे अच् स्वार्थे हालाहलञ्च । निपातनात् ललोपे हाहलञ्च

“हालाहलं हालहलं हाहलञ्च हलाहलम् ।

इति रुद्रः ।

एते काकोलादयस्त्रयः पुंसि क्लीवे चैत्रमय केचित्तु क्ष्वेडभेदा इति पुंस्त्वे वक्ष्यमाणम पुंसि क्लीवे चैत्यस्य विषमित्यनेन समन्व इत्याहुः । तन्नातिस्पष्टम् ।

“काकोलमुग्रतेजः स्यात् कृष्णच्छवि महा-
विषम् ।”

इति वैद्यकम्

“तत् कालकूटं विषमुग्रतेजः
कण्ठे धृतं पर्व्वतराजकन्ये ।”

इति व्यासः

हालाहलं विषमिव प्रगुणं तदेव इति वामन

“मधु तिष्ठति वाचि योषितां हृदये हलाह
महद्विषम्

अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव
ताड्यते ।

इति कुलचरितेऽश्वघोषः । इति भरतः

( मूलजविषभेदः ।

“सक्तोचं मर्कटं शृङ्गिविषं हलाहलन्तथा ।
एवमादीनि चान्यानि मूलजानि स्थिराणि च

इति चरके चिकित्सास्थाने २५ अध्याये ।

**हलाहलः**, पुं, ( हलाहलोऽस्यास्तीति । अच् अञ्जनसर्पः । अञ्जना । इति मेदिनी ॥ बुद्धविशे इति त्रिकाण्डशेषः ॥

**हलिः**, पुं, ( हलति कर्षति भूमिमिति । हल “सर्व्वधातुभ्य इन् ।” उणा० ४ । ११७ । इन् । ) हलहलम् । इति शब्दरत्नावली ॥ पर्य्यायः । जित्या २ । इति हेमचन्द्रः ॥

**हलिनी**, स्त्री, (हलमिव आकारो ऽस्त्यस्या इनिः । ङीप् ।) लाङ्गलिकीवृक्षः । विषला इति भाषा । इति रत्नमाला ॥ ( पर्य्यायो यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे

“कलिहारी तु हलिनी लाङ्गली शक्रपुष्प्या विषल्याग्निशिखानन्ता वह्निवक्त्रा च गर्भनुत्

ाङ्गली हलिनी च स्यात्” इति गारुडे २०८
ध्याये ।) हलसमूहश्च ।
ाय:, पुं, (हलिनो बलदेवस्य प्रिय: ।)
म्बश्च: । इत्यमर: । २ । ४ । ४२ । (पर्य्यायो
ा,—
द्रम्ब: प्रियको नीपो वृत्तपुष्पो हलिप्रिय: ।”
ति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)
प्रया, स्त्री, (हलिनो बलदेवस्य प्रिया ।)
दरा । इति राजनिर्घण्ट: । अमरश्च । २ ।
। ३६ । (विवरणमस्या मदिरा शब्दे
ातव्यम् ।)
स्त्री, (हल्यते इति । हल + इन् । ङीप् ।)
लङ्कारीवृक्ष: । इति राजनिर्घण्ट: ।
[न्] पुं, (हलमस्यास्तीति । हल + इनि ।)
ादेव: । इत्यमर: । १ । १ । २४ । कृषिकर्म्म-
ेता । तत्पर्य्याय: । कुटुम्बी २ कर्षक: ३ क्षेत्री
कृषिक: ५ कार्षिक: ६ कृषीवल: ७ । इति
मचन्द्र: । (यथा, उपदेशशतके । ६८ ।
द्धो हली कुरूणां पुरमुत्पाट्य क्षिपन्नद्याम् ।
गुणीनस्तदसुखत् क्रोधाविष्टोऽगुणेनत्व: ।”)
न:, पुं, (हलाय हित: । हल + छ: ।)
ाकवृक्ष: । इति शब्दचन्द्रिका ।
मक: पुं, रोगविशेष: । यथा पाण्डुरोगस्यैव
द हलीमकश्चाह ।
यदा तु पाण्डोर्व्वर्णः स्याद्धरितश्यावपीतक: ।
ोत्साह: चयस्तन्द्रामन्दाग्नित्वं मृदुज्वर: ।
ीव्रहर्षोऽङ्गमर्द्दश्च श्वासतृष्णारुचिभ्रमा: ।
लीमकं तदा तस्य विद्यादनिलपित्तत: ।”
ाण्डो: पाण्डुरोगिण: । * । तस्य चिकित्सा
था,—
मारितस्यायसश्चूर्णं मुस्ताचूर्णेन संयुतम् ।
ादिरस्य कषायेण पिबेद्धन्तुं हलीमकम् ।
मा तिक्ता बला यष्टी त्रिफला रजनीयुगै: ।
हं लिह्यात् समध्वाज्यं हलीमकनिवृत्तये ।
नलतारसकल्कप्रसाधितं तुरगविड्विष: सर्पि: ।
ीरचतुर्गुणमेतद्धितरेच हलीमकार्त्तेभ्य: ।”
इति अमृतातृतम् । * ।
मधुरैरन्नपानैस्तं वातपित्तहरैर्हरेत् ।
ामलापाण्डुरोगोक्तक्रियाश्चापि योजयेत् ।”
ाथ सामान्यत: पाण्डुरोगकामलाहलीमक-
चिकित्सा ।
फलत्रिकाम्टतावासातिक्ताभूनिम्बनिम्बज: ।
ाथ: क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥ १
ाषव्यं त्रिफला मुस्तं विडङ्गं चव्यचित्रके ।
ार्व्वी त्वङ्माक्षिको धातुर्ग्रन्थिको देवदारु च ।
शां द्विपलिकान् भागान् कृत्वा चूर्णं पृथक्
पृथक् ।
ाण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ।
ोे चाष्टगुणे पक्त्वा तस्मिंस्तत् प्रक्षिपेत्तत: ।
ौदुम्बरसमान् कृत्वा वटकांस्तान् यथाग्नि च ।
ापयुञ्जीत तक्रेण जीर्णे सात्म्यञ्च भोजनम् ।
ण्डूरवटका ह्येते प्राणदा: पाण्डुरोगिणाम् ।

कुष्ठानि जठरं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ।”
इति नवायसादिमण्डूरवटक: । २ ।
“किराततिक्तं सुरदारु दार्व्वी
मुस्ता गुडूची कटुका पटोलम् ।
दुरालभा पर्पटकं सनिम्बं
कटुत्रिकं वह्निफलत्रिकञ्च ।
फलं विडङ्गस्य समांशकानि
सर्व्वै: समं चूर्णमथायसञ्च ।
सर्पिर्मधुभ्यां वटिका विधेया
तक्रानुपानान् भिषजा प्रयोज्या ।
निघ्नन्ति पाण्डुञ्च हलीमकञ्च
शोथं प्रमेहं ग्रहणीरुजञ्च ।
श्वासञ्च कासञ्च सरक्तपित्त-
मर्शांस्यथोरुग्रहमामवातम् ।
व्रणांश्च गुल्मान् कफपित्तरोधिश्च
श्वित्रञ्च कुष्ठञ्च तत: प्रयोगात् ।”
इति अष्टादशाङ्गलौहम् । ३ ।
“यवगोधूमशाल्यन्नै रसैर्जाङ्गलजैर्हितै: ।
मुद्गाढकीमसूराद्यैरेषु भोजनमिष्यते ।”
एषु पाण्डुरोगकामलाहलीमकेषु । ४ ।
इति भावप्रकाश: ।
हलीषा, स्त्री, (हलस्य ईषा । शकन्ध्वादित्वात्
साधु: ।) लाङ्गलदण्ड: । इति मुग्धबोधव्याक-
रणम् ।
हल्यं, त्रि, (हलेन कृष्टम् । हल + यत् ।) कर्षित-
क्षेत्रम् । इत्यमर: । २ । ९ । ८ । अस्य पर्य्याय:
कृष्टशब्दे द्रष्टव्य: । (हलस्येदमिति ।) हल-
सम्बन्धि च । (पुं, हलस्य कर्ष: । हल + “मत-
जनहलात् करणजल्पकर्षेषु ।” ४ । ४ । ९७ ।
इति यत् ।)
हल्यं, क्ली, (हलस्येदमिति । यत् ।) वैरूप्यम् ।
इति केचित् ।
हल्या, स्त्री, (हलस्य समूह: । हल + “पाशा-
दिभ्यो य: ।” ४ । २ । ४९ । इति य: ।)
हलसमूह: । इत्यमर: । ३ । २ । ४१ ॥
हल्लकं, क्ली, रक्तकह्लारम् । हेला इति भाषा ।
तत्पर्य्याय: । रक्तसन्ध्यकम् २ । इत्यमर: । १ ।
१० । ३६ । रक्तसौगन्धिकम् ३ रेणना ४ ।
इति जटाधर: । अल्पगन्धम् ५ सोमाख्यम् ६
रक्तकैरवम् ७ । इति रत्नमाला ।
हल्लनं, त्रि, प्रचलायितम् । इति जटाधर: ।
हल्लीषं, क्ली, स्त्रीणां सह नर्त्तनम् । इति
त्रिकाण्डशेष: । (पुं, उपरूपकविशेष: । तल्ल-
क्षणं यथा, साहित्यदर्पणे । ६ । ५५५ ।
“हल्लीश एव एकाङ्क: सप्ताष्टौ दश वा स्त्रिय: ।
वागुदात्तैकपुरुष: कैशिकीवृत्तिसङ्कुल: ।
मुखान्तिमौ तथा सन्धी बहुताललयस्थिति: ।”)
हल्लीषकं, क्ली, (हल्लीषमेव । स्वार्थे कन् ।)
स्त्रीणां मण्डलिकानृत्यम् । इति जटाधर: ।
“मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीषकन्तु तत् ।”
इति हेमचन्द्र: ।

एकस्य पुंसो बहुभि: स्त्रीभि: क्रीडनम् । तत्तु
रासक्रीडा । यथा,—
“गोपीनां मण्डलीनृत्यबन्धे हल्लीषकं विदु: ।”
इति कोषात् ।
तत्रश्चास्तु ।
“एषु सुरतं मण्डलं विततं-
मासीनस्तं कौ विनिखन्य शङ्कुकम् ।
आक्रम्य पद्मामितरेतरन्तु
हस्तैश्च भोऽयं खलु रासगोष्ठी ।”
इति हरिवंशटीकायां नीलकण्ठ: ।
हल्लीसकं इत्यत्र सकारमध्यमपि ।
हव:, पुं, (हु लि होमे + अप् ।) होम: । आज्ञा ।
(ह्वे + “भावेऽनुपसर्गस्य ।” ३ । ३ । ७५ । इति
अप् सम्प्रसारणञ्च ।) आह्वानम् । अध्वर: ।
इत्यमर: । ३ । २ । ८ ।
हवङ्ग:, पुं, कांस्यपात्रे दधिमिश्रितान्नभक्षणम् ।
इति केचित् ।
हवनं, क्ली, (हु + ल्युट् । होम: । इति शब्द-
रत्नावली । (यथा, महाभारते । १ । १६८ ।
३४ ।
“याजस्तु हवनस्यान्ते देवीमाज्ञापयत्तदा ।
प्रैहि मां राज्ञि पृषति ! मिथुनं त्वामुपस्थितम् ।)
हवनायु:, [स्] पुं, (हवनमेव आयुर्यस्य ।)
अग्नि: । इति शब्दरत्नावली ।
हवनी, स्त्री, (हूयतेऽनेनेति । हु + ल्युट् । ङीप् ।)
होमकुण्डम् । इति त्रिकाण्डशेष: ।
हवनीयं, त्रि, होमीयद्रव्यम् । हव्यम् । जुहोते-
रनीयप्रत्ययेन निष्पन्नम् ।
हवि:, [स्] क्ली, (हूयतेऽनेनेति । हु + “अर्चि-
शुचिहुसृपिति ।” उणा० २ । १०९ । इति
इसि: ।) हवनीयद्रव्यम् । तत्पर्य्याय: । सान्ना-
य्यम् २ । घृतम् । इत्यमर: । २ । ३ । २७ ।
(यथा, महाभारते । १ । ८५ । ११ ।
“न जातु काम: कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ।”)
जलम् । इति केचित् । (विष्णु: । इति महा-
भारतम् । १३ । १४९ । ५० । शिव: । इति च
तत्रैव । १३ । १७ । १०२ ।)
हविर्धी, स्त्री, होमकुण्डम् । इति हेमचन्द्र: ।
हविरशन:, पुं, (हविरशनं यस्य ।) अग्नि: । इति
हेमचन्द्र: । घृतभोजने, क्ली ।
हविर्गन्धा, स्त्री, (हविषो गन्धो यस्याम् ।) शमी ।
इति राजनिर्घण्ट: । (शमीशब्देऽस्या गुणा-
दयो ज्ञातव्या: ।)
हविर्गेहं, क्ली, (हविषो गेहम् ।) होमगृहम् ।
तत्पर्य्याय: । प्राग्वंशम् २ । इति हेमचन्द्र: ।
हविर्मन्थ:, पुं, (हविषो हवनीयाय मथ्यते इति ।
मन्थ + घञ् ।) गणिकारीवृक्ष: । इति रत्न-
माला ।
हविष्यं, क्ली, (हविषे हितम् । हविस् + “उग-
वादिभ्यो यत् ।” ५ । १ । २ । इति यत् ।)
घृतम् । यथा,—

"घृतं हविष्यमाज्यञ्च हविराधारसर्पिषी ।"
इति हेमचन्द्रः ॥

हविष्यान्नम् । यथा,—
"त्रयोदश्यां कृतस्नानो ब्रह्मचारी समाहितः ।
निरामिषं हविष्यं वा सकृद्भुञ्जीत नान्यथा ॥"
इति शिवरात्रिव्रतकथा ॥*॥

अन्यच्च ।
"हेमन्ते प्रथमे मासि नन्द व्रजकुमारिकाः ।
चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्च्चनव्रतम् ॥"
इति श्रीमद्भागवतम् ॥

हविष्यान्नं, क्ली, ( हविष्यमन्नम् । ) व्रतादौ भक्ष्यद्रव्यविशेषः । यथा, स्मृतिः ।
"हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥
षष्टिका कालशाकञ्च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ।
तिन्तिडी जीरकञ्चैव नागरङ्गकपिप्पली ॥
कदली लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥"
अत्रास्विन्नमित्युपादानादन्यत्र स्विन्नधान्यतण्डुलेन दोषः । हैमन्तिकमित्यभिधाय अगस्त्यसंहितायाम् ।
"नारिकेलफलञ्चैव कदलीं लवलीन्तथा ।
आम्रमामलकञ्चैव पनसञ्च हरीतकीम् ।
व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः ॥"
इति तिथ्यादितत्त्वम् ॥

हव्यं, क्ली, ( हूयते इति । हु + यत् । ) देवान्नम् । इत्यमरः । २ । ७ । २४ ॥ (यथा, मनुः । ३ । ९७ ।
"नश्यन्ति हव्यकव्यानि नराणामविजानताम् ।
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥")
हवनीयद्रव्यञ्च ॥

हव्यपाकः, पुं, ( हव्याय पाको यस्य । ) चरुः । इत्यमरः । २ । ७ । २२ ॥

हव्यवाहः, पुं, ( हव्यं वहतीति । वह + अण् । ) अग्निः । इति रत्नमाला ॥ ( यथा, महाभारते । १ । २२४ । ५८ ।
"एतच्छ्रुत्वा हुतवहाङ्गवान् सर्व्वलोकभृत् ।
हव्यवाहमिदं वाक्यमुवाच प्रहसन्निव ॥" )

हव्यवाहनः, पुं, (हव्यं वाहयतीति । वह + णिच् + ल्युः । ) अग्निः । इत्यमरः । १ । १ । ५८ ॥ ( यथा, महाभारते । १ । २२४ । १३ ।
"नश्येत् कारणं ब्रह्मन्नल्पं सम्प्रतिभाति मे ।
यद्दाह ससंक्रुद्धः खाण्डवं हव्यवाहनः ॥")

हव्याशः, पुं, ( हव्यमश्नातीति । हव्य + अश् + अण् । ) हुताशनः । इति शब्दरत्नावली ॥

हव्याशनः, पुं, ( हव्यं अशनं यस्य । ) अग्निः । इति हेमचन्द्रः ॥

हस, ए हासे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-उपहासे सक०-सेट् । ) ए, अहसीत् । हासोऽपूर्व्वप्रतीत्या कपोलस्य विकसितीकरणम् । तत्रैवाकर्म्मकः । हसति शनैः शुष्कहदितस्वरी । इति गोवर्द्धनः । यदा तु कस्य चिद्दोषादिकमुद्दिश्य तत् स्यात्तदा सकर्म्मकः । हसन्ममन्तर्ब्बलमर्व्वतो रवेरिति श्रीहर्षः । हसन्ति साधवश्चौरम् । इति दुर्गादासः ॥

हसः, पुं, ( हसनमिति । हस + "स्वनहसोर्वा ।" ३ । ३ । ६२ । इति अप् । ) हास्यम् । इत्यमरः । १ । ७ । १८ ॥ ( यथा, वाजसनेयसंहितायाम् । ३० । ६ ।
"हसाय कारिमानन्दाय स्त्रीषखमिति ॥")

हसत्, [त्] त्रि, हास्यं कुर्व्वन् । हसधातोः शतृप्रत्ययेन निष्पन्नः ॥ ( यथा, हरिवंशे । १४६ । २७ ।
"हसन् विहासांश्च जहाति हर्षात्
वाण्यागमं लग्नविनोदनार्थम् ॥")

हसनं, क्ली, ( हस + ल्युट् । ) हास्यम् । इति मेदिनी ॥ ( यथा, बृहत्संहितायाम् । ४६ । २५ ।
"हसने देशभ्रंशं रुदिते च व्याधिबाहुल्यम् ॥")

हसनी, स्त्री, ( हसतीति । हस + कर्त्तरि ल्युट् इति ल्युट् । टिड्ढेति ङीप् । ) अङ्गारधानी । इति मेदिनी ॥

हसनीमणिः, पुं, अग्निः । इति त्रिकाण्डशेषः ॥

हसन्तिका, स्त्री, अङ्गारधानी । इति हेमचन्द्रः ॥

हसन्ती, स्त्री, ( हसतीति । हस + शतृ । ङीप् । ) अङ्गारधानिका । इत्यमरः । २ । ९ । २९ ॥ मल्लिकाविशेषः । शाकिनीभेदः । इति मेदिनी ॥ (हास्यं कुर्व्वती । यथा कथासरित्सागरे । ११ । ११ ।
"अस्तीहोज्जयिनी नाम नगरी भूषणं भुवः ।
हसन्तीव सुधाधौतैः प्रासादैरमरावतीम् ॥")

हसिकः, त्रि, ( हसो हासोऽस्यस्येति । ठन् । ) हास्यकर्त्ता । इति केचित् ॥ हसशब्दात् ष्णिक-प्रत्ययेन निष्पन्नः ॥

हसितं, क्ली, ( हस + क्तः । ) हास्यम् । ( यथा, बृहत्संहितायाम् । ६८ । ७४ ।
"हसितं शुभदमकम्पं
स निमीलितलोचनञ्च पापस्य ।
दुष्टस्य हसितमसकृत
सोन्मादस्यासकृत् प्रान्ते ॥")
कामदेवधनुः । इति केचित् ॥ (हास्यकरणम् । यथा, कथासरित्सागरे । ५६ । १५६ ।
"अथ कर्म्मगतिं चित्रां दृष्ट्वास्य हसितं मया ॥"
परिहासः । यथा, किराते । १३ । ४७ ।
"कीर्त्तितानि हसितेऽपि तानि यं
व्रीडयन्ति चरितानि मानिनम् ॥")

हसितः, त्रि, ( हस + क्तः । ) विकसितः । इति शब्दमाला ॥ कृतहासश्च ॥

हस्तं, क्ली, ( हस + तन् । ) चर्म्मप्रसेविका । इति केचित् ॥

हस्तः, पुं, ( हसति विकशतीति । हस + "हसिमृग्रिण्वामीति ।" उणा० ३ । ८६ । इति तन् । ) शरीरावयवविशेषः । स च कर्म्मेन्द्रियः । हात इति भाषा । तत्पर्य्यायः । पाणिः २ समः ३ शयः ४ । इत्यमरमाला ॥ पञ्चशाखः ५ । इत्यमरः ॥ करः ६ भुजः [illegible] इति जटाधरः ॥ कुलिः ८ भुजादलः ९ । इ[illegible] शब्दरत्नावली ॥
"हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतञ्च कर्म्माणि शक्रस्तत्राधिदैवतम् ॥"
इति महाभारते आश्वमेधिकपर्व्व[illegible]
हस्तस्य शुभाशुभलक्षणं बाहुशब्दे द्रष्टव्यम् [illegible]
विस्तृतकरप्रकोष्ठः । इत्यमरः । २ । ६ । ८[illegible]
स च चतुर्व्विंशत्यङ्गुलपरिमाणम् । इति भरत[illegible]
यथा,—
"यवानां तण्डुलैरेकमङ्गुलं चाष्टभिर्भवेत् ।
अष्टोर्चयोनिजैर्हस्तश्चतुर्विंशतिभिरङ्गुलैः ॥"
इति तिथ्यादितत्त्वधृतकालिकापुराणम्
अपि च ।
"यवोदरैरङ्गुलमष्टसंख्यै-
र्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः
क्रोशः सहस्रद्वितयेन तेषाम् ॥"
इति लीलावती ॥[illegible]

हस्तमात्रदत्तस्नेहादिद्रव्यभक्षणनिषेधो यथा
"हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च
दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते तु किल्बि[illegible]
[illegible]
तस्मादन्तरितं कृत्वा पर्णेनाथ तृणेन वा ।
प्रदद्यात् न तु हस्तेन नायसेन कदाचन ॥"
इति श्राद्धतत्त्वधृतवशिष्ठवचनम्

एकहस्तदत्तद्रव्यभोजननिषेधो यथा,—
"एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत् ।"
इति तद्धृतादिपुराणवचनम् ॥[illegible]
हस्तिशुण्डः । ( यथा, रामायणे । २ । २३ । ४ [illegible]
"अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः [illegible]
हस्तानक्षत्रम् । ( यथा, मार्कण्डेये । ३४ । ११ [illegible]
"प्रयाति श्रेष्ठतां सत्यं हस्ते श्राद्धप्रदो नरः [illegible]
केशात् परे तत्समूहवाचकः । इति मेदिनी [illegible]

हस्तज्योडिः, पुं, करज्योडिवृक्षः । हाता[illegible]
इति हिन्दी भाषा । अस्य गुणः । रसबद्ध[illegible]
वश्यकृत् । इति राजनिर्घण्टः ॥

हस्तधारणं, क्ली, ( हस्तस्य धारणम् । ) [illegible]
शोद्यतस्य निवारणम् । इति हस्तवारण[illegible]
टीकायां रामाश्रमः । ३ । २ । ५ ॥ ( [illegible]
त्राणम् । यथा, महाभारते । १ । २१४ । [illegible]
"ब्राह्मणस्वे हृते चौरैर्धर्म्मार्थे च विलोपि[illegible]
रोरूयमाणे च मयि क्रियतां हस्तधारण[illegible]

हस्तपुच्छं, क्ली, ( हस्तस्य पुच्छम् । ) हस्ता[illegible]
विशेषः । हातेर पोँछा इति भाषा । तत्[illegible]
र्य्यायः । कल्मषम् २ । इति त्रिकाण्डशेषः ।

हस्तबिम्बं, क्ली, (हस्तस्य बिम्बं यत्र ।) स्थासक[illegible]
स तु चन्दनादिना देहविलेपनविशेषः । इ[illegible]
हेमचन्द्रः ॥ करप्रतिबिम्बञ्च ॥

हस्तवारणं, क्ली, (हस्तेन वारणम् ।) परित्राण[illegible]
तत्तु मारणोद्यतस्य निवारणम् । इत्यमरः । [illegible]
२ । ५ ॥ करेण निषेधनञ्च ॥

हस्तसिद्धिः, स्त्री, ( हस्तस्य सिद्धिः । ) भृतिः । वेतनम् । यथा,—

"प्रतीकारमिमं कृत्वा प्रीतास्तेन प्रजाः पुनः ।
वार्त्तोपायं ततश्चक्रुर्हस्तसिद्धिञ्च कर्म्मणाम् ॥"

इति विष्णुपुराणे १ अंशे ६ अध्यायः ॥

हस्तसिद्धिं हस्ताभ्यां साध्यां सिद्धिं भृतिं तामेवाह कर्म्मणां तत्कर्म्मनिमित्ताम् । इति तट्टीका ॥ करेण साधनञ्च ॥

हस्तसूत्रं, क्ली, ( हस्तस्य सूत्रम् । ) वलयम् । यथा,

"कटको वलयं पारिहार्य्यावापौ तु कङ्कणम् ।
हस्तसूत्रं प्रतिसरः ऊर्म्मिका त्वङ्गुलीयकम् ॥"

इति हेमचन्द्रः ॥

( विवाहादिकालीनमङ्गलार्थं निबद्धकरसूत्रम् । यथा, कुमारे । ७ । २५ ।

"बबन्ध चासाकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम् ।
धात्र्याङ्गुलीभिः प्रतिसार्य्यमाण-
मूर्णामयं कौतुकहस्तसूत्रम् ॥")

हस्ता, पुं, स्त्री, अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतत्रयोदशनक्षत्रम् । तत्तु हस्ताकृतिपञ्चताराात्मकम् । अस्याधिदेवता दिनकृत् । जन्मकालीनोऽयं जघन्यगुणदायकः । इति ज्योतिस्तत्त्वम् ॥*॥ तद्दर्शनेन लग्ननिरूपणं यथा, —

"मस्तकोपरि करान्तगौ करे
तिष्ठतीन्दुमुखि ! बाणतारके ।
सिंहिकाः शरकुपञ्चसंज्ञका:
नायकासनविलग्नतो गताः ॥" इं ३।३५ ।

इति कालिदासकृतरात्रिलग्ननिरूपणग्रन्थः ॥*॥

तत्र जातफलम् ।

"दाता यशस्वी सुतरां मनस्वी
भूदेवदेवार्च्चनतत्परश्च ।
प्रसूतिकाले किल यस्य हस्ता
हस्तस्थिता तस्य समस्तसम्पत् ॥"

इति कोष्ठीप्रदीपः ॥

हस्ताङ्गुलिः, पुं, ( हस्तस्य अङ्गुलिः । ) करशाखा । यथा,—

"हस्ताङ्गुलय एव स्युरायुर्दा ललिताः शुभाः ।"

इति गारुडे ६६ अध्यायः ॥

अस्य विवरणं बाहुशब्दे द्रष्टव्यम् ॥

हस्तामलकं, क्ली, ( हस्तस्थितं आमलकम् । ) करस्थितामलकीफलम् । ( यथा, रामायणे ।

"त्वया दृष्टं जगत्सर्व्वं हस्तामलकवत् सदा ॥" )

वेदान्तग्रन्थविशेषः । तल्लिख्यते । श्रीमच्छङ्कराचार्य्यस्य दिग्विजयसमये पथिमध्ये कञ्चित् बालकं प्रति प्रश्नः ।

"कस्त्वं शिशो ! कस्य कुतोऽसि गन्ता
किं नाम ते त्वं कुत आगतोऽसि ।
एतद्वद त्वं मम सुप्रसिद्धं
मत्प्रीतये प्रीतिविवर्द्धनोऽसि ॥"

बालकस्योत्तरम् ।

"नाहं मनुष्यो न च देवयक्षो
न ब्राह्मणक्षत्रियवैश्यशूद्राः ।
न ब्रह्मचारी न गृही वनस्थो
भिक्षुर्न चाहं निजबोधरूपः ॥"

एतस्य श्लोकस्य शङ्कराचार्य्येण भाष्यं न कृतम् ।

"निमित्तं मनश्चक्षुरादिप्रवृत्तौ
निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥१॥
यमग्न्युष्णवन्नित्यबोधस्वरूपं
मनश्चक्षुरादीन्यबोधात्मकानि ।
प्रवर्त्तन्त आश्रित्य निष्कम्पमेकं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥२॥
मुखाभासको दर्पणे दृश्यमानो
मुखत्वात् पृथक्त्वेन नैवास्ति वस्तु ।
चिदाभासको धीषु जीवोऽपि तद्वत्
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥३॥
यथा दर्पणाभाव आभासहानौ
मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥४॥
मनश्चक्षुरादेर्वियुक्तः स्वयं यो
मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यस्वरूपः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥५॥
य एको विभाति स्वतः शुद्धचेताः
प्रकाशस्वरूपोऽपि नानेव धीषु ।
शरावोदकस्थो यथा भानुरेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥६॥
यथानेकचक्षुःप्रकाशो रविर्न
क्रमेण प्रकाशीकरोति प्रकाश्यम् ।
अनेका धियो यस्तथैकप्रबोधः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥७॥
विवस्वत्प्रभातं यथा रूपमक्षं
प्रगृह्णाति नाभातमेवं विवस्वान् ।
यथा भात आभासयत्यक्षमेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥८॥
यथा सूर्य्य एकोऽप्स्वनेकश्चलासु
स्थिरास्वप्यनन्यग्विभाव्यस्वरूपः ।
चलासु प्रभिन्नासु धीष्वेक एवं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥९॥
घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥१०॥
समस्तेषु वस्तुष्वनुस्यूतमेकं
समस्तानि वस्तूनि यन्न स्पृशन्ति ।
वियद्वत् सदा शुद्धमच्छस्वरूपं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥११॥
उपाधौ यथा भेदता सन्मणीनां
तथा भेदता बुद्धिभेदेषु तेषु ।
यथा चन्द्रकाणां जले चञ्चलत्वं
तथा चञ्चलत्वं तवापीह विष्णो ॥"१२॥

इति हस्तामलकं समाप्तम् ॥

हस्तिकं, क्ली, ( हस्तिनां समूहः । कन् । ) हस्तिसमूहः । तत्पर्य्यायः । गजता २ । इति शब्दरत्नावली ॥

हस्तिकच्चः, पुं, ( हस्ती कच्चे यस्य । ) सिंहः । व्याघ्रः । इति केचित् ॥

हस्तिकन्दः, पुं, ( हस्तिनः पद इव कन्दो यस्य । ) हस्तकन्दविशेषः । तत्पर्य्यायः । हस्तिपत्रः २ स्थूलकन्दः ३ अतिकन्दकः ४ हस्त्यद्रः ५ अतिपत्रः ६ हस्तिकर्णः ७ सुकर्णकः ८ त्वग्दोषारिः ९ कुष्ठहन्ता १० गिरिवासी ११ नागाश्रयः १२ गजकन्दः १३ नागकन्दः १४ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवातामयत्वग्दोषशमकुष्ठविषवैसर्पनाशित्वञ्च । इति राजनिर्घण्टः ॥

हस्तिकरञ्जः, पुं, ( हस्तीव महान् करञ्जः । ) महाकरञ्जः । इति राजनिर्घण्टः । ( गुणादयोऽस्य महाकरञ्जशब्दे ज्ञातव्याः ॥ )

हस्तिकर्णः, पुं, ( हस्तिनः कर्णमिव पर्णमस्य । ) एरण्डः । पलाशभेदः । गणदेवताभेदः । इति मेदिनी ॥ हस्तिकन्दः । रक्तैरण्डः । इति राजनिर्घण्टः ॥ हस्तिकर्णपलाशस्य गुणाः ।

"हस्तिकर्णः परं वृष्यो मेधायुर्बलवर्द्धनः ।"

इति राजवल्लभः ॥

अपि च ।

श्रीहरिरुवाच ।

"हस्तिकर्णस्य वै मूलं गृहीत्वा चूर्णयेद्धर ! ।
सर्व्वरोगविनिर्म्मुक्तं चूर्णं पलशतं शिव ! ॥
सक्षीरं भक्षितं कुर्य्यात् समाहेन वृषध्वज ! ।
नरं श्रुतिधरं शूरं गजेन्द्रगतिविक्रमम् ॥
पञ्चगौरप्रतीकाशं युक्तं दशशतायुषा ।
षोडशाब्दाकृतिं रुद्र ! सततं दुग्धभोजिनम् ॥
मधुसर्पिःसमायुक्तं जन्यमायुष्करं भवेत् ।
तज्जग्धं मधुना सार्द्धं दशवर्षसहस्रिणम् ॥
कुर्य्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम् ।
दध्ना नित्यं भक्षितन्तु वल्यादिहरं शिव ! ॥
शुण्ठीकेशसमायुक्तं नरं वर्षसहस्रिणम् ।
तच्च काञ्जिकसंयुक्तं नरं कुर्य्याच्च भक्षितम् ॥
शतवर्षं दिव्यदेहं वलीपलितवर्ज्जितम् ।
जग्धं त्रिफलया युक्तं चक्षुष्मन्तं करोति वै ॥
अन्धः पश्येत्तु चूर्णस्य साध्यस्यैव तु भक्षणात् ।
महिषक्षीरसंयुक्तं सर्पिः कृष्णकेशकृत् ॥
खल्वाटस्य च वै केशा भवन्ति वृषभध्वज ! ।
तैलयुक्तेन चूर्णेन वलीपलितवर्ज्जितम् ॥
तदुद्वर्त्तनमात्रेण सर्व्वरोगैः प्रमुच्यते ।
सच्छागक्षीरचूर्णेन दृष्टिः पञ्चाशतोऽब्दनात् ॥"

इति गारुडे १९० अध्यायः ॥

हस्तिकर्णकः, पुं, ( हस्तिनः कर्ण इव पर्णमस्य । कप् । ) किंशुकभेदः । इति शब्दरत्नावली ॥

हस्तिकर्णदलः, पुं, ( हस्तिनः कर्ण इव दलमस्य । ) पलाशभेदः । इत्यमरमाला ॥

हस्तिकोलिः, पुं, ( हस्तीव कोलिः । ) बदरीभेदः । तत्पर्य्यायः । गोपघोण्टा २ घोण्टा ३ बदरीच्छदा ४ । इति रत्नमाला ॥

हस्तिगिरिः, पुं,(हस्तिप्रधानो गिरिर्यत्र।) काञ्चीदेशः। इति केचित्॥

हस्तिघोषा, स्त्री, (हस्तीव हहती घोषा।) हहद्घोषा। बड़ी तोरई इति हिन्दी भाषा। तत्पर्य्यायः। ऐभी २ महत्पुष्पा ३ सपीतिका ४ महाकोशातकी ५। अस्या गुणाः। स्निग्धत्वम्। सारकत्वम्। पित्तानिलनाशित्वञ्च। इति मदनविनोदः॥ (पर्य्यायान्तरं यथा,—

"महाकोषातकी प्रोक्ता हस्तिघोषा महाफला।
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

हस्तिघोषातकी, स्त्री, (हस्तीव हहती घोषातकी।) हस्तिघोषा। इति रत्नमाला॥ (गुणादिकमस्या हस्तिघोषाशब्दे ज्ञातव्यम्॥)

हस्तिघ्नः, पुं, (हस्तिनं हन्तुं शक्तः। हस्तिन्+हन+"शक्तौ हस्तिकपाटयोः।"३।२।५४। इति टक्।) मनुष्यः। इति केचित्॥ करिनाशके, त्रि॥

हस्तिचारिणी, स्त्री, (हस्तीव चरतीति। चर+णिनिः। ङीप्।) महाकरञ्जः। इति राजनिर्घण्टः॥

हस्तिदन्तं, क्ली, (हस्तिनो दन्त इव आकारोऽस्त्यस्येति। अच्।) मूलकम्। इति राजनिर्घण्टः॥

हस्तिदन्तः, पुं, (हस्तिनो दन्त इव आकारोऽस्य। अच्।) मूलकम्। इति शब्दरत्नावली॥ (हस्तिनो दन्त इव।) द्रव्यरक्षार्थभित्तिस्थकीलकः। (हस्तिनो दन्तः) गजदशनञ्च॥ (यथा,—

"हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते कृष्णा पाणितलेष्वपि॥"

इति वैद्यकचक्रपाणिसंग्रहे क्षुद्ररोगाधिकारे॥)

हस्तिदन्तकं, क्ली, (हस्तिदन्तमेव। कन्।) मूलकम्। इति शब्दमाला॥ (मूलकशब्देऽस्य गुणादयो ज्ञातव्याः॥)

हस्तिदन्तफला, स्त्री, (हस्तिदन्त इव फलमस्याः।) एर्व्वारुः। इति राजनिर्घण्टः॥

हस्तिद्वयसः, त्रि, गजपरिमाणम्। हस्तिशब्दात् द्वयसच्प्रत्ययेन निष्पन्नः। इति सिद्धान्तकौमुदी॥

हस्तिनखः, पुं, (हस्तिनो नख इव।) पुरद्वारि यत् कूटं तत्। इत्यमरः।२।२।१७॥ द्वारोपरि दुर्गार्थं यत् कूटं मृत्तिकाराशिस्तस्मिन् हस्तिनखो दमदमा इति ख्यातः। दुर्गद्वारावरणार्थः क्रमनिम्नोन्नतखातोद्धृतमृत्कूटो हस्तिनख इत्यन्योऽपि। दुर्गपुरद्वारसमीपे युद्धार्थं यद्बहिरतटमन्तःसोपानयुक्तं मृत्कूटं यत्र स्थित्वा विपक्षेषु काण्डादिकं क्षिप्यते तत्र हस्तिनखो बुरुज इति ख्यात इत्यपरे। हस्तिनख इव हस्तिनखः। इति तट्टीकायां भरतः॥ (यथा, माघे। ३। ६८।

"शनैरनीयन्त रयात् पतन्तो
रथाः क्षितिं हस्तिनखादखेदैः।
सयत्नसूतायतरश्मिभुग्न-
ग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः॥")

हस्तिनपुरं, क्ली, हस्तिनापुरम्। इति हेमचन्द्रः॥

हस्तिनापुरं, क्ली, चन्द्रवंशीयहस्तिनामकराजनिर्म्मितनगरम्। परिक्षितगढ़ इति दिल्ली इति च ख्यातम्। तत्पर्य्यायः। नागाह्वः २ हस्तिनपुरम् ३ हास्तिनम् ४ गजाह्वयम् ५ गजाह्वम् ६ गजसाह्वयम् ७। इति शब्दरत्नावली॥ हस्तिनीपुरम् ८। इति हेमचन्द्रः। शतानीकादप्यश्वमेधदत्तो भविता। तस्मादप्यधिसीमकृष्णः अधिसीमकृष्णात् निचक्नुः। यो गङ्गापहृते हस्तिनापुरे कौशाम्ब्यां निवत्स्यति। इति विष्णुपुराणे ४ अंशे २१।३॥

हस्तिनी, स्त्री, (हस्तिन्+स्त्रियां ङीप्।) गजपत्नी। हातिनी इति भाषा। तत्पर्य्यायः। करेणूः २ करेणुः ३ रेणुका ४ करेणुका ५ धेनुका ६ वाशिता ७ वासा ८ करिणी ९ विशा १०। इति शब्दरत्नावली॥ कटम्भरा ११ पुष्करिणी १२ कचा १३ वसा १४ गणिका १५ गजयोषित् १६। इति जटाधरः॥ इभी १७ पद्मिनी १८ मातङ्गी १९। अस्या दुग्धगुणाः। मधुरत्वम्। वृष्यत्वम्। गुरुत्वम्। कषायत्वम्। स्निग्धत्वम्। स्थैर्य्यकरत्वम्। शीतत्वम्। चक्षुष्यत्वम्। बलवर्द्धनत्वञ्च॥ तद्दधिगुणाः। कषायत्वम्। लघुत्वम्। उष्णत्वम्। पक्तिशूलशमनत्वम्। रुचिप्रदत्वम्। दीप्तिदत्वम्। बलासगदनाशित्वम्। वीर्य्यवर्द्धनत्वम्। उत्तमबलप्रदत्वञ्च॥ तन्नवनीतगुणाः। कषायत्वम्। शीतलत्वम्। लघुत्वम्। तिक्तत्वम्। विष्टम्भिजन्तुपित्तकफक्रिमिनाशित्वञ्च॥ तद्घृतगुणाः। कफपित्तविषक्रिमिनाशित्वम्। कषायत्वम्। विष्टम्भित्वम्। तिक्तत्वम्। अग्निकरत्वञ्च। इति राजनिर्घण्टः॥ *॥ चतुर्व्विधस्त्रीमध्ये स्त्रीविशेषः। तल्लक्षणं यथा,—

"स्थूलाधरा स्थूलनितम्बभागा
स्थूलाङ्गुली स्थूलकुचा सुशीला।
कामोत्सुका गाढ़रतिप्रिया च
नितम्बखर्व्वा खलु हस्तिनी स्यात्॥"

इति रतिमञ्जरी॥

बहुविलासिनी। इति शब्दचन्द्रिका॥

हस्तिनीपुरं, क्ली, हस्तिनापुरम्। इति हेमचन्द्रः॥

हस्तिपः, पुं, (हस्तिनं पाति रक्षतीति। पा+कः।) हस्त्यारोहः। इति शब्दमाला॥ (यथा, मार्कण्डेये। ३९। १८।

"वश्यं मत्तं यथेच्छातो नागं नयति हस्तिपः।
तथैव योगी स्वच्छन्दः प्राणं नयति साधितम्॥")

हस्तिपकः, पुं, (हस्तिप एव। कन्।) गजारोहः। माहुत इति भाषा। तत्पर्य्यायः। आधोरणः २ हस्त्यारोहः ३ निषादी ४। इत्यमरः।२।८।५९॥ आद्यौ पालकौ परौ योद्धाराविति केचित्। इति भरतः॥ (यथा, माघे।५।४९।

"अग्रे जनैर्मुकुलिताग्रमनादराने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः॥")

हस्तिपत्रः, पुं, (हस्तिनः कर्ण इव पत्रमस्य।) हस्तिकन्दः। इति राजनिर्घण्टः॥

हस्तिपर्णिका, स्त्री, (हस्तिनः कर्ण इव पर्णमस्याः। कन्। टापि अत इत्वम्।) राजकोशातकी। इति राजनिर्घण्टः॥

हस्तिपर्णी, स्त्री, (हस्तिनः पर्णमिव पर्णमस्याः। ङीप्।) मोरटालता। इति रत्नमाला। कर्कटी। इति राजनिर्घण्टः॥

हस्तिमदः, पुं, (हस्तिनो मदः।) करिगण्डस्रवितमदजलम्। तत्पर्य्यायः। गजमदः २ गजदानम् ३ मदः ४ कुम्भिमदः ५ दन्तिमदः ६ दानम् ७ द्विपमदः ८। अस्य गुणाः। स्निग्धत्वम्। तिक्तत्वम्। केश्यत्वम्। अपस्मारविषकुष्ठकण्डूतिव्रणदद्रुविसर्पनाशित्वञ्च। इति राजनिर्घण्टः॥

हस्तिमल्लः, पुं, (हस्तिषु मल्लः।) गणेशः। शङ्खनागः। ऐरावतः। इति मेदिनी॥

हस्तिरोहणकः, पुं, (हस्तीव रोहते इति। रुह+ल्युः। ततः कन्।) महाकरञ्जः। इति राजनिर्घण्टः॥

हस्तिलोध्रकः, पुं, (हस्तीव महान् लोध्रः। ततः कन्।) लोध्रः। इति राजनिर्घण्टः॥

हस्तिवाहः, पुं, (हस्तिनं वाहयतीति। वह+णिच्+अण्।) अङ्कुशः। इति शब्दरत्नावली। गजवाहकश्च॥

हस्तिविषाणी, स्त्री, कदली। इति राजनिर्घण्टः॥ (विवरणमस्याः कदलीशब्दे ज्ञातव्यम्॥)

हस्तिशाला, स्त्री, (हस्तिनः शाला।) गजगृहम्। फीलखाना इति पारस्यभाषा। तत्पर्य्यायः। चतुरम् २। इति हेमचन्द्रः॥

हस्तिशुण्डा, हस्तीशुण्डी, स्त्री, (हस्तिनः शुण्ड इव आकारोऽस्त्यस्येति। अच्। विभाषया ङीष्।) क्षुपविशेषः। हातिशुँड़ा इति भाषा। तत्पर्य्यायः। हस्तिनी २ सुवर्ची ३ चलेक्षुया ४। इति शब्दचन्द्रिका॥ नागशुण्डी ५ शुण्डी ६ धूसरपत्रिका ७। (पर्य्यायान्तरं यथा,

"हस्तिशुण्डी चातिविषा त्रूषणं हेममाक्षिकम्।"

इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे।) अस्या गुणाः। कटुत्वम्। उष्णत्वम्। सन्निपातज्वरनाशित्वञ्च। इति राजनिर्घण्टः॥ करिकरे, पुं॥

हस्तिश्यामाकः, पुं, (हस्तीव स्थूलः श्यामाकः।) शस्यविशेषः। हातियाशामा इति भाषा। अस्य गुणाः। धातुशोषणत्वम्। पित्तश्लेष्मनाशित्वम्। वायुवर्द्धनत्वम्। रूक्षत्वञ्च। इति राजवल्लभः॥

हस्ती, [न्] पुं, सुहोत्रराजपुत्रः। यथा। हहत्क्षत्रस्य सुहोत्रः पुत्रः सुहोत्राद्धस्ती य इदं हस्तिनापुरम् निर्म्मापयामास। इति विष्णुपुराणे ४ अंशे १९ अध्यायः॥ अपि च।

"सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह।
तेनेदं निर्म्मितं पूर्व्वं पुरेव हस्तिनापुरम्॥
हस्तिनश्चैव दायादास्त्रयः परमधार्म्मिकाः।
अजमीढो द्विमीढश्च पुरुमीढस्तथैव च॥"
इति हरिवंशे पिङ्गकल्पे २० अध्यायः॥ *॥
अजमीढः। इति राजनिर्घण्टः॥ (हस्तोऽस्त्य-
स्येति। हस्त+इनिः।) हस्तयुक्तपशुविशेषः।
हाती इति भाषा। तत्पर्य्यायः। इभः २
इभावलः ३ द्विरदः ४ अनेकपः ५ द्विपः ६
मतङ्गजः ७ गजः ८ नागः ९ कुञ्जरः १०
वारणः ११ करी १२ इभः १३ स्तम्बेरमः १४
पद्मी १५। इत्यमरः॥ २।८।३४॥ मतङ्गः १६
मातङ्गः १७ पीलुः १८ वराङ्गः १९ पुष्करी २०
जलकङ्कुः २१ महाङ्गः २२ स्तरमः २३
शूर्पकर्णः २४ सिन्धुरः २५ सामजः २६ कटी २७
अन्तःस्वेदः २८ दीर्घमारुतः २९ विलोम-
जिह्वः ३० करटी ३१ षिण्ढपादः ३२ महा-
मदः ३३ पेटकी ३४ कटकी ३५ कुम्भी ३६
निर्झरः ३७। इति शब्दरत्नावली॥ सिन्दूर-
तिलकः ३८ पद्मनखः ३९ शुण्डारी ४०
करेणुः ४१ कर्णिकी ४२ शिञ्जी ४३ साम-
योनिः ४४। इति जटाधरः॥ राजीवः ४५
जलकाङ्क्षः ४६ सतालकः ४७ पेचिलः ४८।
इति त्रिकाण्डशेषः॥ द्विरदनः ४९ करभी ५०
विषाणी ५१ रदनी ५२ महाबलः ५३ भद्रः ५४
द्रुमारिः ५५ महाकायनः ५६। इति राज-
निर्घण्टः॥ *॥ स च चतुर्जातिर्यथा,—
"भद्रो मन्द्रो मृगो मिश्रश्चतस्रो गजजातयः॥"
इति हेमचन्द्रः॥ *॥
तद्गुणाः अमबल्गुणाः। वातकोपनत्वम्। अङ्ग-
स्थैर्य्यबलाग्निकारित्वञ्च। इति राजवल्लभः॥*॥
कामुकोन्मत्तगजारोहणदोषो यथा।
"नारोहेत् कामुकोन्मत्तं गजं राजा कदाचन।
आरुह्य कामुकं तन्तु परञ्चेह विषीदति॥"
इति कालिकापुराणे ८६ अध्यायः॥ *॥
अथ गजायुर्व्वेदः।
"गजायुर्व्वेदमाख्यास्ये उक्ताः कन्या गजे स्थिताः।
गजे चतुर्गुणा मात्रा नाभिर्गलवगर्द्दनम्॥
मलोपसर्गबाधीनां शमनं शान्तिकर्म्म च।
पूजयित्वा सुरान् विप्रान् ब्राह्मणे कपिलां ददेत्॥
दन्तिदन्तव्रणे मात्रां निवप्रीयादुपोषितः।
मन्त्रञ्च मन्त्रिता वैद्यो वचा सिद्धार्थकामवे॥
सर्व्वायाः शिवदुर्गा श्रीविष्णुना रक्षसाङ्कुशः।
बलिं दद्याच्च भूतेभ्यः स्थापयेच्च चतुष्पटे॥
भोजनं मन्त्रितं दद्यात् भञ्जनोद्वर्त्तयेज्जलम्।
भूतो रक्षा शुभा मध्या वाचना रक्षणं सदा॥
त्रिफला पञ्चकोले च दशमूलं विडङ्गकम्।
शतावरी गुडूची च निम्बवासककिंशुकाः॥
गजरोगविनाशाय प्रोक्तः कल्कः कषायकः।
आयुर्व्वेदो गजानाञ्चासकः संक्षेपतः स्मृतः॥"
इति गारुडे। २०७। ३६—४२॥ *॥ गजे
वर्ण्णनीयानि यथा,—

"गजे वरहयोधिष्ठितसुचलं कर्ण्णचापलम्।
अरिवृन्दविभेदित्वं कुम्भस्तम्भत्वमेव च॥"
इति कविकल्पलतायां १ स्तवके २ कुसुमम्॥*॥
तल्लक्षणानि यथा।
"ऊर्द्ध्वं करं यः कुरुतेऽथवा यो
धत्ते करं दन्तिकदन्तभागे।
यो वा भवेत् दक्षिणपूरिताङ्गः
करी भवेदस्त्रपूरिताङ्गः॥"
इति वसन्तराजशाकुने चतुष्पदशाकुनम्॥*॥
स च प्रजापतिदैवताकः। यथा विष्णुधर्म्मोत्तरे।
"अभयं सर्व्वदैवत्यं भूमिर्वै विष्णुदेवता।
कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः।
प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः॥"
इत्यादि॥*॥
अस्य प्रतिग्रहे आवश्यकत्वम्। यथा।
"करे गृह्य तथा कन्यां दासदास्यौ द्विजोत्तमाः।
करन्तु हृदि विन्यस्य धर्म्मोऽर्थं प्रतिग्रहः।
आरुह्य च गजस्तोकः कर्णे चास्य
कीर्त्तितः॥"
इत्यादि॥*॥
प्रतिग्रहप्रसङ्गेन तद्दानफलम्। यथा, कल्किपुरा-
णम्।
"ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा।
अयन्तमपि मातङ्गं तिलमौर्वीश्च वर्ज्जयेत्॥"
इत्यादि॥
तद्दानफलम्। यथा नन्दिपुराणम्।
"योऽश्वं रथं गजञ्चापि ब्राह्मणे प्रतिपादयेत्।
"स शक्रस्य वसेल्लोके शक्रतुल्यो युगान् दश।
प्राप्याप्ते चैव मानुष्यं राजा भवति बुद्धिमान्॥"
इति शुद्धितत्त्वम्॥*॥
अपि च।
"ग्रामञ्चैव मही हेम मणीन्द्र गजान् स्त्रियान् (?)
ये प्रयच्छन्ति पापेषु निरताः सर्व्वदा नराः (?)
न तेषां रौरवः पन्था इत्येवं दानमिच्छन्॥"
इति वह्निपुराणे यमदूतीलोपाख्याननामा-
ध्यायः॥*॥ अथ गजपरीक्षा। तत्र कालः।
"ऐन्द्रमित्रवरुणानिलपुष्या-
चन्द्रतोयरविवारिहतारे।
सूर्य्यशुक्रगुरुसोमजवारे
श्रेयसे भवति कुञ्जरयानम्॥
सर्व्वे चरे शुभचमाश्रितवीक्षिते वा
चन्द्रस्य दृष्टिभयानविधौ विरुद्धा (?)
सौम्ये दिने करनिपातवसुश्रवणाः-
तोयेशमैत्रमदितिश्च शुभप्रदाः॥
स्यात् कुञ्जरक्रयपदश्रवणदानकालः
श्विष्टे दुःखफलमार्कसुतेऽपि चैव॥"
गजानामष्टधा भेदाः संक्षेपेण प्रकाश्यते।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः॥
पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः।
एषां वंशप्रसूतत्वादृगजानामष्टजातयः॥
ये कुञ्जराः पाकरसम्भवाः (?)
सुदीर्घदन्ताः स्थितपुष्पदन्ताः।

अतोमदा अल्पसुखो बलाढ्या
महाप्रमाणा लघुपुच्छजिह्वाः॥
क्रुद्धाः क्षमीकेऽल्पयोऽल्पकाले
लघुप्रमाणा बहुलोमदाताः।
विस्तीर्णदानास्तनुलोमपुच्छा
ऐरावतस्याभिजनप्रसूताः॥
तिर्य्यक् सर्व्वेषु विशुद्धवर्णा
अतीवसत्त्वाः प्रभवन्ति सत्त्वाः।
नात्येव पुण्येन महीपतीनां
स्त्रप्ति भूमञ्जलमध्यमेते।
इन्ता विभया अपि युद्धरङ्गे
पुनः प्ररोहन्ति पुरेव तेषाम्॥१॥
ये कुञ्जराः कोमलसम्भवाश्च
पुच्छा न दन्ताः स्वरगजदेश्याः।
स्वच्छदाः सन्ततरोषभाजोऽ-
मदप्रियाः सर्व्वसुखो बलाढ्याः॥
सुतीक्ष्णदन्ता इवरा गजानां
ते पुण्डरीकप्रवरप्रसूताः।
ते पद्मगन्धं विकसन्ति दैत्यो (?)
दानञ्च तेषां वसथुः प्रभूताः॥
न तोयपानेऽभ्यधिका स्पृहा च
अमीऽपि नैते बलसुतल्लजन्ति (?)
अमी तु येषां निवसन्ति राष्ट्रे
ते वै समस्तक्षितिग्राममार्षाः॥२॥
ये कुञ्जराः कर्कशवर्ण्णदेहाः
कदापि माद्यन्ति गजञ्चदाय (?)
आहारयोगाद्बलवीर्य्यभाजो
नात्यम्बुकामा बहुलोमगात्राः।
विरूपदन्तास्तनुपुच्छकर्णा
श्चेया बुधैर्व्वामनवंशजाताः॥३॥
ये दीर्घदेहास्तनुदीर्घशुण्डाः
कुदन्तभाजो मलपूर्णदेहाः।
स्वाविलगण्डाः कलहप्रियाश्च
ते कुञ्जराः स्युः कुमुदस्य वंश्याः।
अन्धादिपान् दुर्गमगाश्च तस्य (?)
निघ्नन्ति ते दुर्गमगाश्च पुंसाम्॥४॥
ये स्निग्धदेहाः सलिलाभिलाषा
महाप्रमाणास्तनुशुक्लदन्ताः।
स्वाविलदन्ताः अमदः सदा च
ते कुञ्जराञ्जनवंशजाताः॥५॥
देतश्च दानञ्च वहन्ति शश्व-
दानपदेशे प्रभवन्ति ये तु।
ते पुष्पदन्ताभिजनप्रसूता
महाजवाश्च तनुपुच्छभागाः॥६॥
सुदीर्घदन्ता बहुलोमभाजो
महाप्रमाणाश्च सुकर्कशाङ्गाः।
आप्यन्ति साध्वभमबाभियोगा-
दाहारपानादिषु चातिशक्ताः॥
मदप्रदेशे विचरन्ति ते वै
सुसार्वभौमानामिह जन्म मध्ये।
महाशरीरा अतिसुकर्कशाङ्गा
नातिदीर्घदन्ता मदशुक्लदन्ताः॥

महाशना: क्षीणपुरीषमूत्र-
विस्तीर्णकर्णास्तनुरोमगण्डा: ।
ते सार्व्वभौमाभिजनप्रसूता
विशुद्धसत्त्वा: प्रभवन्ति चैव ॥ ७ ॥
ये दीर्घशुण्डा: सुविभक्तदेहा
महाजवा: क्रोधपरीतकाया: ।
विस्तब्धकर्णास्तनुपुच्छदन्ता:
सदाशनाश्चैव वशाप्रियाश्च ॥
प्रहृष्टगण्डास्तनुलोमयुक्ता:
ते सुप्रतीकप्रवरप्रसूता: ।
महाप्रमाणामितमौक्तिकानि
भवन्ति चैतन्निजगाद काप्य: ॥ ८ ॥

एकजातिसमुत्पन्नो गज: शुद्ध इति स्मृत: ।
लक्षणञ्च यथा प्रोक्तं शुद्धस्यैतन्न दृश्यते ॥
शुद्धद्विजातिसम्भूतस्तल्लक्षणसमन्वित: ।
जारजो नाम विख्यातो यथाख्यं बलवीर्य्यवान् ॥
द्विजातिद्वयजातो य: स शूर इति कथ्यते ।
द्विजातिजारजोत्पन्न उद्भ्रान्त इति कथ्यते ॥
एवं संयोगभेदेन गजजातिरनेकधा ।
तां यो जानाति तत्त्वेन स राज्ञ: पांशमर्हति ॥
ब्रह्मादिजातिभेदेन तेषां भेदश्चतुर्विध: ।
विशालाङ्गा: पवित्राश्च ब्राह्मणा: स्वल्पभो-
जिन: ॥
शूरा विशाला वक्राशा: क्रुद्धा: क्षत्रिय-
जातय: ॥”

अथ गुणा: ।
“यथा रत्नं यथा खड्गो यथा स्त्री सप्तयो यथा ।
परीक्ष्यन्ते गुणैरेवं गजानामपि निर्णय: ॥
रम्यो भीमो ध्वजोऽधीरो वीर: शूरोऽष्ट-
मङ्गल: ।
सुनन्द: सर्व्वतोभद्र: स्थिरो गम्भीरवेद्यपि ।
वरारोह इति प्रोक्ता गजा द्वादश सत्तमा: ॥”
तद्यथाह भोज: ।
विभक्तावयव: पुष्ट: सुदन्त: सुमहानपि ।
तेजस्वी रम्य इत्युक्तो गज: सम्पत्तिवर्द्धक: ॥ १ ॥
अङ्कुशादिप्रहारेण यस्य भीतिर्न जायते ।
स भीमोऽयं गज: शुद्धो राज्ञ: सर्व्वार्थसाधन: ॥ २
शुण्डाग्रात् पुच्छपर्य्यन्तं रेखा यस्यैव दृश्यते ।
ध्वज: शुद्धो गजो नाम साम्राज्यप्रसादा-
यक: ॥ ३ ॥
समौ कुम्भौ खराकारौ आवर्त्तौ तत्र चोर्द्ध्वगौ ।
अधीरोऽयं गजो नाम्ना राज्ञां विप्र विना-
शन: ॥ ४ ॥
आवर्त्त: पृष्ठतो यस्य स्वनाभिमभिविन्दति ।
पुष्टाङ्गो बलवान् वीरो राज्ञामभिमतप्रद: ॥ ५ ॥
महाप्रमाण: पुष्टाङ्ग: सुदन्तश्चारुगण्डक: ।
भक्षणे भक्षणे श्रान्त: शूरो लक्ष्मीविवर्द्धन: ॥ ६ ॥
सितौ दन्तौ सित: पुच्छ: सिता रेखा सिता
नखा: ।
रक्तकुम्भाविवौ यस्याङ्गैर्विज्ञेय: सोऽष्टमङ्गल: ॥
अयं गजेन्द्रो यस्यास्ति तस्य स्यात् सकला मही ।
इत्यनीतयस्तत्र यत्रास्तेऽयं गजेश्वर: ॥

आयोजनशतं यावद्दुर्भिक्षं कुरुते क्षयम् ।
नाल्पपुण्यैरयं प्राप्यो मनुजेन्द्रै: कलौ युगे ॥ ८ ॥
शुभौ दन्तौ शुभ: शुण्ड: शुभौ कुम्भौ शुभस्तनु: ।
गण्डयोर्गण्डयोर्मध्ये आवर्त्त: शुभलक्षण: ॥
प्रश्चन्नदसुतिपरिप्लुतगण्डदेशा-
स्तीव्राङ्कुशेन विनिवारयितुं न शक्या: ।
प्रातिद्विपो नवपयोदरवा गभीरा:
पृथ्वीभुजां सकलसौख्यकरा भवन्ति ॥”

अथ दोषा: ।
“दीन: क्षीणोऽथ विषमो विरूपो विकल:
खर: ।
विमदो व्यापक: काको धूम्रो जटिल इत्यपि ॥
अजिनी मण्डली श्वित्री हतावर्त्तो महाभय: ।
राष्ट्रहा सुषली भाली नि:सत्त्व इति विंशति: ।
महादोषा: समाख्याता गजानां भोजभूभुजा ॥”
तद्यथा,—
“अतिक्षीणतर: क्षीणतनुदन्तोऽतिनिष्प्रभ: ।
दीनाख्य: कुरुते दीनं भूभुजं नात्र संशय: ॥ १ ॥
सर्व्वशुष्को महापुच्छो निश्वासी वेगवर्ज्जित: ।
क्षीणोऽयं कुरुते क्षीणं स्वामिनं धनसम्पदा ॥ २
कुम्भे दन्तेऽक्षिकर्णे च वैषम्यं पार्श्वयोस्तथा ।
यस्यायं विषमो नागो नागवत् कुरुते क्षयम् ॥ ३
आस्कन्धात्तु शिर: क्षीणं पश्चाद्भागस्य पुष्टता ।
विरूप इति नागोऽयं कुरुते भूधनक्षयम् ॥ ४ ॥
नानाभोगैरपि कृतैर्यस्य नो जायते मद: ।
युद्धाय नोपक्रमते विकलं तं विवर्ज्जयेत् ॥ ५ ॥
खरता सहजा यस्य शरीरेऽस्तीति लक्ष्यते ।
तनुदन्तकरो हस्ती खर: कुलविनाशन: ॥ ६ ॥
न जायते मदो यस्य स्वकाले जायतेऽथवा ।
विरूपो विवशो वापि विमदं दूरतस्त्यजेत् ॥ ७ ॥
लघुप्रमाण: क्षीणाङ्गस्तनुशुण्डशिरोदर: ।
अश्रान्तं भ्रमति व्यग्र: पतेद्वै नेत्रयोर्म्मलम् ॥
चिह्ने पुच्छाग्रतो वापि आवर्त्तो मण्डलोऽथवा ।
बहि: प्रकुरुते लिङ्गं सर्व्वथा गतवेदवत् ॥
भूभुजा नहि वीक्ष्योऽयं व्यापकाख्यो गजाधम: ।
यदीच्छेच्छाश्वतीं भूतिं शरीरारोग्यमेव वा ॥ ८ ॥
शस्तदेशौ यस्य भग्नौ स्कन्धदेशोऽतिगुच्छक: ।
काकोऽयं कुरुते मृत्युं स्वामिनो नात्र संशय: ॥ ९ ॥
विषमौ शङ्खगौ दन्तौ यस्य शुण्डविरोधिनौ ।
भिद्येते वा विदीर्य्येतां स्वयं मूल्यान्तरावुभौ ।
कुरुते व्याधितं नाथं धूम्रनामा गजाधम: ॥ १० ॥
मूर्द्धजा: कर्कशा रूक्षा जटारूपानुबन्धिन: ।
यस्यायं जटिलो नाग: कुरुते धनसंक्षयम् ॥ ११ ॥
स्कन्धे वा गात्रदेशे वा लग्नं चर्म्मोऽवलक्ष्यते ।
अजिनी नाम नागोऽयं कुरुते भूधनक्षयम् ।
नैनं स्पृशेन्न वीक्षेत यदीच्छेदात्मन: श्रियम् ॥ १२
मण्डलानि प्रदृश्यन्ते एकं द्वे वा बहूनि वा ।
विरूपाण्युद्गतानीव मण्डली कुलनाशन: ॥ १३ ॥
तानि श्वेतानि यस्य स्यु: श्वित्री स धननाशन: ॥ १४
हृदये उदरे चैव चिह्नं पुच्छस्य मूलत: ।
गुदे मेढ्रे पदे चैव आवर्त्तेन हतश्रियम् ।
योगिनं कुरुते भूपं प्रवासिनमुपद्रुतम् ॥ १५ ॥

गच्छतो यस्य शुण्डाभ्यां भवेत् संघर्ष-
शब्द: ।
अपि सर्व्वगुणैर्युक्तस्त्याज्यश्च स महाभय: ।
राष्ट्रं धनं कुलं सैन्यं मैत्रं दारान् तथा प्रजा: ।
क्षपयत्यशुभो नागो दृष्टमात्रो न संशय: ।
तत्रापन्निपती लोकस्तत्र वधभयं भवेत् ।
व्याधिवह्निभयश्चात्र यत्रास्ते स महाभय: ॥ १६ ॥
भृशं सन्तापमानस्तु पादैकं यो न गच्छति ।
पृष्ठोदरं समावृत्ता रेखा रक्तसमा यदि ।
न्यस्ताग्रिमपदस्थाने पश्चात् पात: पदे यदि ।
अपि सर्व्वगुणैर्युक्तो राष्ट्रहायं गजाधम: ।
राष्ट्रादपाक्रियतेऽयं भूभुजा श्रियमिच्छता ।
राष्ट्रान्ते रक्षितो मोहात् कुरुते राष्ट्रसंक्ष-
यम् ॥ १७ ॥
पादाश्चात्यन्तविषमा दन्तौ चान्योन्यवैषमौ ।
पञ्जरो दृश्यते भग्न एको वाप्यौ द्वयोऽथवा ।
दन्तौ वा चलतो यस्य किंस्तु वा न प्ररोहत: ।
कुम्भौ वा विषदौ यस्य सुषली स गजाधम: ।
राष्ट्रदुर्गबलामात्यक्षयकृत्तं परित्यजेत् ॥ १८ ॥
चर्म्मखण्ड इवाभाति भाले यस्यातिकर्कश: ।
भाली स कुरुते नागो भर्त्तु: कुलधनक्षयम् ॥ १९
पुष्टो विशाल: सद्दन्त: सत्कारोऽपि शुभोऽपि-
सन् ।
न इयं साहसो यस्य स नि:सत्त्वो गजाधम: ॥
सर्व्वेषां गजदोषाणामुक्त एव महानयम् ।
येनैकेन गुणा: सर्व्वे क्षयायन्ते सुनिश्चितम् ॥” २०
पालकाप्यस्तु ।
“क्षीणदन्ताङ्गशुण्डत्वं विषमत्वं रदादिषु ।
शिर: क्षीणमध:पुच्छिरेते दोषा गजे मता: ॥”
गार्ग्यस्तु ।
“ये कुञ्जरास्तनुरदास्तनुगण्डशुण्डा:
क्षीणा: सुदीनवपुषो गुरुदीर्घपुच्छा: ।
वश्यादिभि: खलु गुणैरहिता हिताय
ते भूभुजामभिमता नहि वीक्ष्यणीया: ॥
यो न स्रवेन्मदजलं तनुमर्द्धभागो
निर्व्वीर्य्यतामुपगतो बहुभोजनेऽपि ।
नेच्छत्ययावुपगतामपरां निहन्तुं
भूमीभुजा न हि गजोऽयमवेक्षणीय: ॥
दोषैर्दुष्टान् गजान्नाजा न वीक्षेत कदाचन ।
न्यसेद्वा परराष्ट्रे नगरात् क्रियते बहि: ।
दद्यात् द्विजेभ्य: शुद्धेभ्यो गणकायाथवा नृप: ।
दृष्ट्वा यदि गजान् दुष्टान् दद्यात्कृच्छ्रगतं द्विजे ।
पुरं नीराजयेद्वापि आत्मानमथवा सुतम् ।
दैवस्रक्तेन जुहुयादयुतम्प्रातितत्पर: ।
तिलान् वा जुहुयादग्नौ तत्प्रतीकारहेतवे ।
ब्रह्मादिजातिभेदेन जातिवक्त्रा चतुर्व्विधा ॥
चतुर्व्विधानां भूपानां वाहने ते शुभप्रदा: ।
ये दोषा दोषवन्नागा: त एव स्यु: स्वजातित: ॥
ये व्याधयो नराणां स्युस्ते नागानामपि स्मृता: ।
चिकित्सापि तथा तेषां मात्रा चैव नरौषधी ॥”
इति गजपरीक्षा ॥

इति भोजराजकृतयुक्तिकल्पतरु: ॥

, च, पाणौ। यथा। हस्ते करोति। इति
मुग्धबोधव्याकरणम्॥
हरवं, क्ली, पाणिग्रहणम्। विवाहः। इति
चित्॥
॥:, त्रि, (हस्त+"तेन यथाकथाचहस्ताभ्यां
णयतौ।" ५।१।९८। इति यत्।) हस्तेन
कृतः। हस्तेन कृतः। इति सिद्धान्तकौमुदी॥
अध्यक्षः, पुं, (हस्तिषु अध्यक्षः।) गजाध्यक्षः।
तल्लक्षणं यथा,—
"हस्तिशिक्षाविधानज्ञो वन्यजातिविशारदः।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते॥"
इति मात्स्ये १८९ अध्यायः॥
आयुर्वेदः, पुं, (हस्तिन आयुर्वेदः।) गजायु-
र्वेदः। हस्तिचिकित्साशास्त्रम्। तन्नामायं
हस्तिग्रन्थे द्रष्टव्यम्॥
आरोहः, पुं, (हस्तिनमारोहतीति। आ+
रुह+कः।) हस्तिपकः। इत्यमरः।२।८।५९॥
तल्लक्षणं यथा,—
"एतैरेव गुणैर्युक्तः स्थासनश्च विशेषतः।
गजारोही नरेन्द्रस्य सर्व्वकर्म्मसु शस्यते॥"
एतैर्हस्त्यध्यक्षगुणैः। इति मात्स्ये १८९ अः॥
॥:, त्रि, (हसति निरर्थकमिति। हस+
"स्फायितञ्चीति।" उणा० २।१३। इति
रक्।) मूर्खः। इत्युणादिकोषः॥
॥, क्ली, हालाहलम्। इति शब्दचन्द्रिका॥
॥:, पुं, हाहानामगन्धर्व्वः। इति शब्दमाला॥
, ओ त्ति त्यागे। इति कविकल्पद्रुमः॥ (ह्वा०-
पर०-सक०-अनिट्।) ओ हाक त्यागे इति
प्रसिद्धोऽयम्। यत्र हाक इति गत्वं तत्रा-
प्येव। तेन दामा गे हाक इत्यादि सर्व्वत्रास्य
हीयते इत्यादि। अन्यस्य हायते इत्यादि।
ओ हीनः। त्ति जहाति। अकर्म्मकश्चायम्।
यथा। स्वार्थाद्धीनः। एवं जहाति अपैति
स्वार्थो यस्मादिति जहत्स्वार्था वृत्तिः। इति
दुर्गादासः॥
, ओ ङ त्ति गतौ। इति कविकल्पद्रुमः॥ (ह्वा०-
आत्म०-सक०-अनिट्।) ओ हानः। ङ त्ति,
जिहीते। इति दुर्गादासः॥
, व, विषादः। शोकः। आर्त्तिः। इत्यमरः।
३।४।२५५॥ (यथा, महाभारते।३।६३।३।
"हा नाथ! हा महाराज! हा स्वामिन्!
किं जहासि माम्।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने।")
कुत्सा। इति मेदिनी॥
॥रः, पुं, स्वनामख्यातजलजन्तुः। इति शब्द-
चन्द्रिका॥ तत्पर्य्यायः अवहारकशब्दे द्रष्टव्यः॥
टकं, क्ली, (हटति शोभते इति। हट दीप्तौ+
ण्वुल्।) स्वर्णम्। (यथा, माघे।१३।६१।
"नवहाटकेष्टकचितं ददर्श सः
क्षितिपस्य पत्तनमथ तत्र संसदि॥"
अस्य पर्य्यायो यथा,—
"स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्।
तपनीयञ्च गाङ्गेयं कलधौतञ्च काञ्चनम्।
चामीकरं शातकुम्भं तथा कार्त्तस्वरञ्च तत्।
जाम्बूनदं जातरूपं महारजतमित्यपि॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥
हाटकपरिमितः। "जातरूपेभ्यः परिमाणे।"
४।३।१५३। इति अण्।) धुस्तूरः। इत्य-
मरः।२।९।६४॥ स्वर्णनिर्म्मिते, त्रि॥
हाटकमयं, त्रि, स्वर्णमयम्। हाटकशब्दात् मयट्-
प्रत्ययेन निष्पन्नम्॥
हाटकेश्वरः, पुं, (हाटकस्य ईश्वरः।) गोदावरी-
तीरस्थशिवः। यथा,—
"एतस्मिन्नन्तरे प्राप्तः सर्व्व एवर्षिपार्थिवाः।
दृष्ट्वा त्रैलोक्यभर्त्तारं चाम्बकं हाटकेश्वरम्॥
ततः कपिवरः प्राप्तो हनाख्या च सुन्दरि!।
स्नात्वा गोदावरीतीर्थे दिदृक्षुर्हाटकेश्वरम्॥"
इति वामने ६२ अध्यायः॥
(वितलस्थितो महादेवः। यथा, भागवते।
५।२४।१७। "ततोऽधस्ताद्वितले हरो भग-
वान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजा-
पतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनी-
भूय आस्ते। यतः प्रवृत्ता सरित्प्रवरा हाटकी
नाम भवयोर्वीर्य्येण। यत्रचित्रभानुर्मातरिश्वना
समिध्यमान ओजसा पिबति। तन्निष्ठ्यूतं हाट-
काख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः
सह पुरुषीभिर्धारयन्ति।")
हातव्यं, त्रि, (हा+तव्य।) त्यक्तव्यम्। यथा।
"हातव्योऽयमसार एव विरसः संसार इत्यादिकम्
सर्व्वस्यैव हि वाचि चेतसि पुनः कस्यापि
पुण्यात्मनः।"
इति शान्तिशतकम्॥
हात्रं, क्ली, (हा+ष्ट्रन्।) वेतनम्। इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः॥ प्रमथनम्। मरणम्।
राक्षसः। इति संक्षिप्तसारोणादिवृत्तिः॥
हानं, क्ली, (हा+क्तः।) त्यागः। इति जटाधरः॥
हानिः, स्त्री, (हा+"वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्।" उणा०
४।५१। इति निः। यद्वा, हा+क्तिन्।
"ग्लाजिस्थश्च ग्स्नुः।"३।२।१३९। इत्यस्य
वार्त्तिकोक्त्या निः।) त्यजनम्। तत्पर्य्यायः।
अपहारः२ अपचयः३। इति जटाधरः॥
(यथा, महाभारते।५।९९।४।
"अचान्नस्त सुरैः पीता निहितं निहतारिभिः।
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते।")
हानुकः, त्रि, घातुकः। इति केचित्॥
हार्म्यं, क्ली, (हन+"असूनिगमिनमिहनिभ्यो नित।"
उणा०४।१५९। इति ड्यन् वृद्धिश्च।)
मरणम्। इत्युणादिकोषः॥
हापुत्रिका, स्त्री, पक्षिविशेषः। तत्पर्य्यायः।
सर्षपी२ खञ्जनिका३ तुलिका४ स्फोटिका५।
इति त्रिकाण्डशेषः॥
हापुत्री, स्त्री, हापुत्रिका। यथा,—
"गोभक्षीरः पद्मकीरो हापुत्री राजमक्षिका।"
इति हारावली॥
हाफिका, स्त्री, जृम्भा। हाइ इति भाषा।
तत्पर्य्यायः। जम्भृम्भिका२। इति हारा-
वली॥
हायनः, पुं, क्ली, (जहाति भावान् जिहीते
प्राप्नोति वा भावानिति। हा त्यागे हा गतौ
वा+"कृत्यल्युटो बहुलम्।" ३।३।११३।
इति ल्युट्।) वत्सरः। इत्यमरः:।१।४।२०॥
(यथा, भागवते।१।६।८।
"अहञ्च तद्ब्रह्मकुले ऊषिवांस्तदुपेक्षया।
दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः।")
हायनः, पुं, (जहात्युदकमिति। हा+"कृत्य
ल्युटो बहुलम्।" ३।३।११३। इति ल्युट्।)
व्रीहिभेदः। अचिःशिखा। इति मेदिनी॥
हारं, त्रि, (हारेरिदं। हरि+अण्। पक्षे हर-
तीति। हरं तदेव। हर+स्वार्थे अण्।)
हरिसम्बन्धीयम्। हरसम्बन्धि। यथा,—
"यच्छृण्वतोऽपैत्यरतिर्वितृष्णा
सत्त्वञ्च शुध्यत्यचिरेण पुंसः।
भक्तिर्हरौ तत्पुरुषे च सख्यं
तदेव हारं वद मन्यसे चेत्॥"
इति श्रीभागवते१०।७२॥
"तदेव हारं हरेश्चरितं मनोहरं वा।"
इति तट्टीकायां श्रीधरस्वामी॥
हारः, पुं, (ह्रियते मनो येन। हृ+घञ्।) मुक्ता-
माला। तत्पर्य्यायः। मुक्तावली२। इत्यमरः।
२।६।१०५॥ हारा३ यष्टिः४ यष्टी५
लता६। इति शब्दरत्नावली॥ (यथा, कुमारे।
५।८।
"विमुच्य सा हारमहार्य्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति॥"
ह्रियन्ते प्राणा यत्रेति।) युद्धम्। इति मेदिनी॥
(हृ+भावे घञ्। हरणम्। यथा, भाग-
वते।१०।६१।२०।
"हंसस्वभावानां हिंसया वर्त्तमानान्
जघान तान् भारहाराय भूमेः॥")
हारकः, पुं, (हरतीति। हृ+ण्वुल्।) कितवः।
चौरः। गद्यभेदः॥ विज्ञानविशेषः। इति
मेदिनी॥ शाखोटवृक्षः। इति शब्दचन्द्रिका॥
भाजकाङ्कः। इति लीलावती॥ हरणकर्त्तरि,
त्रि॥ (यथा, मनुः।११।५१।
"धान्यापहारकः न्यूनं पशूनामश्वहारकः।")
हारहारा, स्त्री, कपिलद्राक्षा। इति राज-
निर्घण्टः॥
हारहूरः, पुं, मद्यम्। इति हेमचन्द्रः॥
हारहूरा, स्त्री, द्राक्षा। इति हलायुधः॥
(पर्य्यायो यथा,—
"द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसापि च।
मृद्वीका हारहूरा च गोस्तनी चापि
कीर्त्तिता।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे।)

हारावली, स्त्री, पुरुषोत्तमकृतकोषविशेषः । यथा,
"मुक्तामयातिमधुरा महत्यावदात-
च्छायाधिरागतरलामलसद्गुणश्रीः ।
साध्वी सतां भजतु कण्ठमसौ प्रियेव
हारावली विरचिता पुरुषोत्तमेन ॥"
इति तद्धृतश्लोकः ॥
( हारस्य आवली । ) हारश्रेणी च ॥ (यथा, गीतगोविन्दे । ११ । १३ ।
"हारावलीतरलकाञ्चनकाञ्चिदाम-
मञ्जीरकङ्कणमणिद्युतिदीपितस्य ॥")

हारिः, स्त्री, (हरतीति । हृ + बाहुलकात् इण् । इत्युणादिवृत्तौ उज्ज्वलदत्तः ।४।१२४। ) पथिकसन्तानः । द्यूतादिभङ्गः । इति मेदिनी ॥ रुचिरे, त्रि ॥

हारिकण्ठः, पुं, ( हारी मनोहरः कण्ठो कण्ठरवो यस्य । ) कोकिलः । ( हारी हारयुक्तः कण्ठो यस्य । ) हारान्वितगले, त्रि । इति मेदिनी ॥

हारिणिकः, पुं, ( हरिणं हन्तीति । हरिण + "पक्षिमत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक् । ) व्याधः । हरिणघातकः । इति केचित् ॥

हारितः, पुं, पक्षिविशेषः । तत्पर्य्यायः । हरितालुकः २ । इति जटाधरः ॥ हारीतः ३ । इति मेदिनी ॥ अस्य मांसगुणाः हारीतकशब्दे द्रष्टव्याः । हरिद्वर्णश्च ॥ ( हरितस्य हरिश्चन्द्रपौत्रस्यापत्यं पुमानिति । हरित + अण् । हरितपुत्रः । यथा, हरिवंशे । १३ । २८ ।
"हरितो रोहितस्याथ चञ्चुर्हारित उच्यते ॥")

हारितकं, क्ली, ( हरितकमेव । स्वार्थे अण् । ) शाकम् । इति शब्दरत्नावली ॥

हारिद्रः, पुं, कदम्बवृक्षः । ( हरिद्रया रक्तम् । हरिद्रा + "हरिद्रामहारजनाभ्यामञ् वक्तव्यः । ४ । २ । २ । इत्यस्य वार्त्तिकोक्त्या अञ् । ) हरिद्रारञ्जिते, त्रि । इति मेदिनी ॥ ( यथा, सुश्रुतसंहितायाम् । ५ । ५८ ।
"कूष्माण्डकश्यामे हारिद्रे वापि निर्हिंशेज्ज्वर-
कम् ॥")
हरिद्रावर्णः । इति हेमचन्द्रः ॥ विषभेदः । यथा,—
"हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः ।"
इति भावप्रकाशः ॥

हारी, स्त्री, मुक्ता । यथा,—
"मुक्ता मुक्ताफलं शुक्तिबीजं हारी च मौक्ति-
कम् ॥")
इति शब्दरत्नावली ॥

हारी, [न्] त्रि, ( हारोऽस्यास्तीति । इनिः । ) हारविशिष्टः । यथा,—
"केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ।"
इति नारायणध्यानम् ॥
( हरतीति । हृ + णिनिः । ) हरणकर्त्ता ॥ यथा, महाभारते । ३ । २ । ६५ ।
"ह्रियते बध्यमानोऽपि नरो हारिभिरिन्द्रियैः ।
विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ॥"
मनोहरः । यथा, शाकुन्तले प्रस्तावनायाम् ।
"तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा ॥")

हारीतः, पुं, पक्षिभेदः । ( अस्य लक्षणं गुणाश्च ।
"हारीतो रक्तपित्तः स्याद्धरितोऽपि स कथ्यते ।"
हारीतो हारील इति लोके ।
"हारीतो रूक्ष उष्णश्च रक्तपित्तकफापहः ।
स्वेदस्वरकरः प्रोक्तः ईषद्वातकरश्च सः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥
आयुर्व्वेदकर्त्तरि च । यथा,—
"अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥"
इति चरके सूत्रस्थाने प्रथमेऽध्याये ।)
मुनिभेदः । स च धर्म्मशास्त्रकर्त्ता । ( यथा, याज्ञवल्क्यः । १ । ४ ।
"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्वर्त्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥"
अयञ्च पौराणिक आसीत् । यथा, भागवते । १२ । ७ । ५ ।
"त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
वैशम्पायनहारीतौ षड् वै पौराणिका इमे ॥")
कैतवः । इति मेदिनी ॥

हारीतकः, पुं, ( हारीत एव । स्वार्थे कन् । ) हारीतपक्षी । हारिल इति हरिताल इति च भाषा । तस्य मांसगुणाः । स्वादुत्वम् । कफपित्तास्रदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

हार्द्दं, क्ली, ( हृदयस्य भावः कर्म्म वा । हृदय + "हायनान्तयुवादिभ्योऽण् ।" ५ । १ । १३० । इत्यण् । "हृदयस्य हृल्लेखयदण्लासेषु ।" ६ । ३ । ५० । इति हृदादेशः । ) प्रेम । स्नेहः । इत्यमरः । १ । ७ । २७ ॥ (यथा, महाभारते । १३ । ७१ । ५२ ।
"गावो लोकांस्तारयन्ति क्षरन्त्यो
गावश्चान्नं संजनयन्ति लोके ।
यस्तज्जानन् न गवां हार्द्दमेति
स वै गन्ता निरयं पापचेताः ॥"
अभिप्रायः । यथा, भागवते । १ । ७ । ५५ ।
"अर्ज्जुनः सहसाज्ञाय हरेर्हार्द्दमथासिना ।
मणिं जहार मूर्द्धन्यं द्विजस्य सह मूर्द्धजम् ॥")

हार्द्दी, [न्] त्रि, ( हार्द्दमस्यास्तीति । इनिः । ) स्नेहयुक्तः । यथा,—
"अयञ्च निहतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ।
स्वजनेन च सन्त्यक्तस्तेषु हार्द्दी तथाप्यति ॥"
इति देवीमाहात्म्यम् ॥

हार्य्यः, पुं, ( ह्रियते इति । हृ + "ऋहलोर्ण्यत् ।" ३ । १ । १२४ । इति ण्यत् । ) विभीतकवृक्षः । हर्त्तव्ये, त्रि । इति मेदिनी ॥ ( यथा, कुमारे । ५ । ७० ।
"इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥")
हरणीयाङ्कः । तत्पर्य्यायः । भाज्यः २ । इति लीलावती ॥

हालः, पुं, ( हलेन क्रीडतीति । अण् । यद्वा हलतीति । हल + "ज्वलितिकसन्तेभ्यो णः ।" ३ । १ । १४० । इति णः । ) बलरामः । इति त्रिकाण्डशेषः ॥ शालिवाहनराजः । इति हेमचन्द्रः ॥ हलः । इति मेदिनी ॥

हालकः, पुं, पीतहरितवर्णाश्वः । यथा,—
"हरितः पीतहरितच्छायः स एव हालकः"
इति हेमचन्द्रः

हालहलं, क्ली, विषभेदः । इति शब्दरत्नावली ॥

हालहालं, क्ली, विषभेदः । इति शब्दरत्नावली ॥

हाला, स्त्री, ( हल्यते क्षुभ्यते इव चित्तमनयेति । हल + घञ् । टाप् । ) मद्यम् । इत्यमरः । २ । १० । ३९ ॥ (पर्य्यायो यथा,—
"मद्यन्तु सीधुमैरेयमिरा च मदिरा सुरा ।
कादम्बरी वारुणी च हालापि बलवल्लभा ।"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ।)
तालादिनिर्यासमद्यम् । इति राजनिर्घण्टः ।
( यथा, माघे । १० । २१ ।
"योषिदित्यभिललाष न हालां
दुस्त्यजः खलु सुखादपि मानः ।")

हालाहः, पुं, चित्रवर्णघोटकः । इति केचित् ।

हालाहलं, क्ली, पुं, ( हालामपि हलतीति । हल + अच् । ) विषभेदः । तत्पर्य्यायः । हालहलम् २ हाहलम् ३ हलाहलम् ४ हालहलम् ५ हाहालम् ६ । इति शब्दरत्नावली ।
तस्य स्वरूपं यथा,—
"गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा ।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ।
असौ हालाहलो ज्ञेयः किष्किन्धायां हिमा-
लये ।
दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ।"
इति भावप्रकाशः ।
मद्यम् । इति राजनिर्घण्टः ॥ (यथा च वाभ
उत्तरस्थाने ३५ अध्याये ।
"कालकूटेन्द्रवत्साख्यशृङ्गीहालाहलादि-
कम् ।"

हालाहलः, पुं, ( हालाहलमस्यास्तीति । अच् । कीटविशेषः । तत्पर्य्यायः । अञ्जलिका २ क्रुटि
कीटकः ३ । इति राजनिर्घण्टः ॥

हालाहलधरः, पुं, (धरतीति । धृ + अच् । हाल
हलस्य धरः । ) सर्पः । इति शब्दरत्नावली

हालाहला, स्त्री, ( हालाहलमस्त्यस्या इति
अच् । टाप् । ) क्षुद्रमूषिका । यथा,—
"हालाहलाञ्जलिका गिरिका बाल-
मूषिका ।
इति जटाधरः

हेमपर्व्वत:, पुं, (हेममय: पर्व्वत: ।) सुमेरुगिरि: । इति जटाधर: ॥

हेमपुष्पं, क्ली, (हेमवर्णं पुष्पम् ।) अशोकपुष्पम् । जवापुष्पम् । इति मेदिनी ॥

हेमपुष्प:, पुं, (हेमवर्णं पुष्पं यस्य ।) चम्पकवृक्ष: । इति शब्दचन्द्रिका । (अस्य पर्य्यायो यथा,—
"चाम्पेयश्चम्पक: प्रोक्तो हेमपुष्पश्च स स्मृत: ।"
अशोक: । अस्य पर्य्यायो यथा,—
"अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लव: ।
कङ्केलि: पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

हेमपुष्पक:, पुं, (हेमवर्णं पुष्पं यस्य । कप् ।) चम्पकवृक्ष: । इत्यमर: ।२ । ४ । ६३ । लोध्र: । इति राजनिर्घण्ट: ॥

हेमपुष्पिका, स्त्री, (हेमवर्णं पुष्पं यस्या: । कन् + टाप् । अत इत्वम् ।) स्वर्णयूथिका । इत्यमर: । २ । ४ । ७१ ॥ (तथास्या: पर्य्याय: ।
"यूथिका गणिकाम्बष्ठा सा पीता हेमपुष्पिका ।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

हेमपुष्पी, स्त्री, (हेमवर्णं पुष्पमस्या: । गौरादित्वात् ङीष् ।) मञ्जिष्ठा । इति शब्दमाला ॥ स्वर्णजीवन्ती । इन्द्रवारुणी । स्वर्णुली । सुवर्णी । कण्टकारी । इति राजनिर्घण्ट: ॥

हेमफला, स्त्री, (हेमवर्णानि फलान्यस्या: ।) स्वर्णकदली । इति राजनिर्घण्ट: ॥

हेममाला, स्त्री, यमपत्नी । इति केचित् । (हेमनिर्म्मिता माला ।) स्वर्णस्रक् ॥

हेममाली, [न्] पुं, (हेमेव किरणानां मालास्त्यस्य । इनि: ।) सूर्य्य: । यथा, भविष्ये ।
"या शुक्ला कुरुशार्दूल ! वैशाखे मासि वै तिथि: ।
तृतीया साक्षया लोके गीर्व्वाणैरभिवन्दिता ॥
योऽस्यां ददाति करकान् वारिवाजसमन्वितान् ।
स याति पुरुषो वीर ! लोकान् वै हेममालिन: ॥"
हेममालिन: सूर्य्यस्य । इति तिथ्यादितत्त्वम् ॥ (स्वर्णमालाविशिष्टे, त्रि ॥ )

हेमयूथिका, स्त्री, (हेमवर्णा यूथिका ।) स्वर्णयूथिका । इति राजनिर्घण्ट: ॥

हैमरागिणी, स्त्री, (हेम इव रागोऽस्या अस्तीति । इनि: । ङीप् ।) हरिद्रा । इति त्रिकाण्डशेष: ॥

हेमल:, पुं, (हेम तद्वर्णं लाति गृह्णातीति । ला + क: ।) स्वर्णकार: । कषपाव: । प्रस्तरभेद: । स तु कषपाषाण: । इति मेदिनी ॥

हेमलता, स्त्री, (हेमवर्णा लता ।) स्वर्णजीवन्ती । इति राजनिर्घण्ट: ॥ (स्वर्णजीवन्तीशब्देऽस्या विवरणं ज्ञातव्यम् ॥ )

हेमवलं, क्ली, (हेम्ना वलते शोभते इति । वल + अच् ।) मौक्तिकम् । इति राजनिर्घण्ट: ॥ हिमवलमिति वा पाठ: ॥

हेमशङ्ख:, पुं, (हेमवर्ण: शङ्खोऽस्य ।) विष्णु: । इति त्रिकाण्डशेष: ॥

हेमशिखा, स्त्री, (हेमवर्णा शिखाऽस्या: ।) स्वर्णक्षीरी । इति शब्दरत्नावली ॥

हेमसारं, क्ली, (हेम सारयति निर्म्मलीकरोतीति । सृ + णिच् + अण् ।) तुत्थम् । यथा —
"तुत्थके तु शिखिग्रीवं हेमसारं मयूरकम् ।"
इति रसचन्द्रिका ॥

हेमसूत्रकं, क्ली, (हेम्न: सूत्रमिव । कप् ।) हारविशेष: । इति धरणि: ॥

हेमहस्तिरथ:, पुं, (हेमनिर्म्मितहस्तिविशिष्टो रथो यत्र । स तु दानार्थं कल्पित: ।) महादानविशेष: । तद्विवरणं यथा,—
"अथात: संप्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्रदानात् भवनं वैष्णवं याति मानव: ॥
पुण्यां तिथिं समासाद्य तुलापुरुषदानवत् ।
विप्रवाचनकं कुर्य्यात् लोकेशावाहनं बुध: ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
अत्राप्युपोषितस्तद्वत् ब्राह्मणै: सह भोजनम् ॥
कुर्य्यात् पुष्परथाकारं काञ्चनं मणिमण्डितम् ।
वलभीभिर्व्विचित्राभिश्चतुश्चक्रसमन्वितम् ॥
लोकपालाष्टकोपेतं ब्रह्मार्कशिवसंयुतम् ।
मध्ये नारायणोपेतं लक्ष्म्या चैव समन्वितम् ॥
कृष्णाजिनतिलद्रोणं कृत्वा संस्थापयेद्रथम् ।
तथाष्टादश धान्यानि भाजनासनचन्दनै: ॥
दीपकोपानहच्छत्रदर्पणं पादुकान्वितम् ।
ध्वजे तु गरुड़ं कुर्य्यात् कूवराग्रे विनायकम् ॥
नानाफलसमायुक्तमुपरिष्टाद्वितानकम् ।
कौषेयपञ्चवर्णञ्च अम्लानकुसुमान्वितम् ॥
चतुर्भि: कलशै: सार्द्धं गोभिरष्टाभिरन्वितम् ।
चतुर्भिर्हेममातङ्गैर्मुक्तादामविभूषितम् ॥
स्नपन: करिष्यात्तु युक्तं कृत्वा निवेदयेत् ।
कुर्य्यात् पञ्चपलादूर्द्ध्वमभावादपि शक्तित: ॥
ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवै: ।
त्रि: प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलि: ॥
इममुच्चारयन्मन्त्रं ब्राह्मणेभ्यो निवेदयेत् ॥
नमो नम: शङ्करपद्मजार्क-
लोकेशविद्याधरवासुदेवै: ।
त्वं सेव्यसे वेद पुराण यज्ञ
तेजोमयस्यन्दन पाहि तस्मात् ॥
यत्तत् पदं परमगुह्यतमं सुरारे-
रानन्दहेतु गुणरूपविमुक्तमन्त: ।
योगैकमानसदृशो मुनय: समाधौ
पश्यन्ति तत्त्वमसि नाथ रथेऽधिरूढ: ॥
यस्मात्त्वमेव भवसागरसंप्लुताना-
मानन्दभाण्डभृतमध्वरपानपात्रम् ।
तस्मादघौघशमनेन कुरु प्रसादं
चामीकरेभरथमाधवसंप्रदानात् ॥
इत्थं प्रणम्य कनकेभरथप्रदानं
य: कारयेत् सकलपापविमुक्तदेह: ।
विद्याधरामरमुनीन्द्रगणाभिजुष्टं
प्राप्नोत्यसौ पदमतीन्द्रियमिन्दुमौले: ॥
सन्तुरितवितानाधुनवत्कृताच-
धनिकरज्ञनराशीरूदैगभागोऽपि सम्यक् ।
नयति च पितृपुत्रान् बान्धवानप्यशेषान्
कृतनरचरदानं शाश्वतं यत्र विष्णो: ॥"
इति मत्स्यपुराणे महादानानुकीर्त्तने हेमहस्तिरथप्रदानिको नाम २८९ अध्याय: ॥

हेमा, [न्] पुं, बुधग्रह: । इति त्रिकाण्डशेष: ॥

हैमा, स्त्री, (हैम हैमवर्णमस्त्यस्या इति अच् । टाप् ।) अप्सरा: । सुन्दरी स्त्री । इति केचित् ॥

हेमाङ्ग:, पुं, (हेमेव पीतवर्णमङ्गं यस्य ।) गरुड़: । सिंह: । सुमेरु: । ब्रह्मा । इति मेदिनी ॥ चम्पकवृक्ष: । इति शब्दरत्नावली ॥ विष्णु: । इति तस्य सहस्रनामस्तोत्रम् ॥ हेमवर्णशरीरे, क्ली । तद्युक्ते, त्रि ॥

हेमाद्रि:, पुं, (हेममयोऽद्रि: ।) सुमेरुपर्व्वत: । इत्यमर: । १ । १ । ५२ ॥ अधिपराजविशेष: । स च चिन्तामणिकामधेनुकल्पद्रुमनामकस्मृतिसंग्रहकारक: । यथा,—
"तस्यास्ति नाम हेमाद्रि: सर्व्वश्रीकरणप्रभु: ।
निजोदारतया यस्य सर्व्वश्रीकरणप्रभु: ॥
अनेन चिन्तामणिकामधेनु-
कल्पद्रुमानर्थिजनाय दत्तान् ।
विलोक्य शङ्के किममुष्य सर्व्व-
गीर्व्वाणमायोऽपि करप्रदोऽभूत् ॥
अथामुना धर्म्मकथादरिद्रं
त्रैलोक्यमालोक्य कवीश्वरेण ।
तस्योपकारे रचनासुचिन्ता
चिन्तामणि: प्रादुरकारि चाव: ॥
पञ्चखण्डात्मके शास्त्रे व्रतखण्डादनन्तरम् ।
दानखण्डमिदं तत्र द्वितीयमथ कथ्यते ॥"
इति तत्कृतचतुर्व्वर्गचिन्तामणौ दानखण्डोपक्रमणिका: ॥

हेमाद्रिचरक:, पुं, (हेमाद्रौ चोरयतीति । चुर + ल्यु: ।) स्वर्णक्षीरी । इति रत्नमाला ॥ (अस्य पर्य्यायविवरणादिकं स्वर्णक्षीरीशब्दे ज्ञातव्यम् ॥ )

हेमाह्व:, पुं, (हेम हेमवर्णमाह्वयते स्पर्द्धते इति । आ + ह्वे + क: ।) वनचम्पक: । इति राजनिर्घण्ट: ॥ (हेम आह्वा आख्या यस्य ।) धुस्तूर: । कनकाह्वशब्ददर्शनात् ॥

हेमाह्वा, स्त्री, (हेम आह्वा आह्वा आख्या यस्या: ।) स्वर्णजीवन्ती । इति राजनिर्घण्ट: ॥

हेम्न:, पुं, बुधग्रह: । यथा,—
"हेम्न: सर्व्वज्ञतमा: श्रीमदाक्ष-
हेम्ना विबुधो बोधनश्चेन्द्रपुत्र: ।"
इति ज्योतिस्तत्त्वम् ॥

हेय:, त्रि, (हा + "अचो यत् ।" ३ । १ । ९७ । इति यत् । "ईद्यति ।" ६ । ४ । ६५ । इति

ख्यात ईत्। गुणः।) ख्यात्यः। यथा,—
"ऊषरा वालुकाक्लिष्टा" इत्याद्युपक्रम्य।
"वास्तुखण्डे महादोषा हेयास्तस्मादिमे बुधैः॥"
इति युक्तिकल्पतरुः॥

हेरं, त्रि, (हि + रन्।) मुकुटभेदः। हरिद्रा। आसुरी माया। इति केचित्॥

हेरम्बः, पुं, (हे शिवे शिवसमीपे वा रम्बते इति। रबि शब्दे + पचाद्यच्।) गणेशः। इत्यमरः।१।१।४१॥ महिषः। शौर्य्यगर्व्वितः। इति मेदिनी॥ बुद्धविशेषः। तत्पर्य्यायः। हेरुकः २ चक्रसम्बरः ३ देवः ४ वज्रकपाली ५ निशुम्भी ६ शशिशेखरः ७ वज्रटीकः ८। इति त्रिकाण्डशेषः॥*॥ अथ हेरम्बमन्त्रः। स च ऊकारयुक्तो गकारः सविन्दुः प्रणवादिर्नमोऽन्तश्चतुरक्षरः। निबन्धे।
"पञ्चान्तको विन्दुयुक्तो वामकर्णविभूषितः।
ताराद्यो हृदयान्तोऽयं हेरम्बमनुरीरितः।
चतुर्व्वर्णात्मको नृणां चतुर्व्वर्गफलप्रदः॥"
अस्य पूजाप्रयोगः। प्रातःकृत्यादिपीठन्यासान्तं विधाय गणेशोक्तपीठशक्तीः पीठमनुञ्च विन्यस्य ऋष्यादिन्यासं कुर्य्यात्। अस्य गणक ऋषिर्गायत्री छन्दो हेरम्बो देवता गकारो बीजं विन्दुः शक्तिश्चतुर्व्वर्गसिद्ध्यर्थे विनियोगः। शिरसि गणकऋषये नमः। इत्यादि। ततः कराङ्गन्यासौ। गां गीं गूं गैं गौं गः इत्येतैः षडङ्गानि कुर्य्यात्। तथा च।
"षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत्॥"
ततो ध्यानम्।
"मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रान्वितै-
र्नागास्यैर्हरिवाहनं शशिधरं हेरम्बमर्कप्रभम्।
दृप्तं दानमभीतिमोदकरदान् टङ्कं शिरोऽक्षात्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे॥"
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्य्यात्। ततो गणेशोक्तपीठपूजान्तं कृत्वा ॐ हुँ हुँ महासिंहाय गां हेरम्बासनाय नम इत्यासनं पूजयेत्। तथा च निबन्धे।
"प्रणवं कवचद्वन्द्वं महासिंहाय गां ततः।
हेरम्बेति पदं पश्चात् आसनाय हृदन्ततः।
अयमासनमन्त्रः स्यात् प्रदद्यादमुनासनम्॥"
इति॥
पीठन्यासोऽप्येवं मन्त्रः। तत ॐ गं मन्त्रेण मूर्त्तिं संकल्पयेत्। तथा च निबन्धे।
"तारादिविघ्नबीजेन मूर्त्तिं तस्य प्रकल्पयेत्।"
पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आवरणपूजामारभेत्। यथा अग्न्यादिकोणे मध्ये दिक्षु च गां हृदयाय नम इत्यादिना पूजयेत्। तद्बहिरिन्द्रादीन् वज्रादींश्च संपूज्य धूपादिविसर्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं त्रिलक्षजपः। तथा च।
"त्रिलक्षञ्च जपेन्मन्त्रं दशांशं जुहुयात्ततः।"
होमद्रव्यं यथा,—
"लक्षत्रयं जपेन्मन्त्रमिक्षुदण्डैर्दशांशतः।
अपूपैराज्ययुक्तैर्व्वा जुहुयान्मन्त्रसिद्धये॥"*॥
मन्त्रान्तरम्। गं क्षिप्रप्रसादनाय हृत्। तथा च निबन्धे।
"सम्बर्त्तको मेर्व्वर्द्धेन्दुः पार्श्वो वह्न्यासने स्थितः।
प्रसादनाय हृन्मन्त्रं स्वबीजाद्यो दशाक्षरः॥"
अस्य पूजा प्रातःकृत्यादिपीठन्यासान्तं कर्म्म विधाय ऋष्यादिन्यासं कुर्य्यात्। शिरसि गणकऋषये नमः। मुखे विराट्छन्दसे नमः। हृदि क्षिप्रप्रसादनाय देवतायै नमः। तथा च निबन्धे।
"गणको मुनिराख्यातो विराट् छन्द उदीरितम्।
क्षिप्रप्रसादनो विघ्नो देवतास्य प्रकीर्त्तिता।
दीर्घयुक्तेन बीजेन षडङ्गानि प्रकल्पयेत्॥"
एकाक्षरवत् कराङ्गन्यासौ कृत्वा ध्यायेत्।
"पाशाङ्कुशौ कल्पलतां विषाणं
दधत्स्वशुण्डाहितबीजपूरः।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलि-
र्हारोज्ज्वलो हस्तिमुखोऽवताद्वः॥"
इति ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कृत्वा पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आवरणपूजामारभेत्। अग्न्यादिषु गां हृदयाय नम इत्यादिना पूजयेत्। तथा च निबन्धे।
"अङ्गानि पूर्व्वमभ्यर्च्य विघ्नाद्यष्टौ यजेत्ततः।
पश्चाद्धि पूजयेदेता मात्राद्यास्तदनन्तरम्॥"
पत्रेषु।
"विघ्नं विनायकं शूरं वीरं वरदसंज्ञकम्।
इभवक्त्रं चैकरदं लम्बोदरं प्रपूजयेत्॥"
पत्राग्रेषु मात्राद्यास्तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत्। ततो धूपादिविसर्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षजपः। तथा च।
"लक्षं जपेच्च पश्चान्ते जुहुयादयुतं तिलैः।
मधुरत्रितयैर्व्वापि द्रव्यैरष्टाभिरीरितैः॥"
इति कृष्णानन्दकृततन्त्रसारः॥

हेरम्बजननी, स्त्री, (हेरम्बस्य जननी।) दुर्गा। इति शब्दरत्नावली॥

हेरम्बहट्टः, पुं, देशविशेषः। स च दक्षिणप्रदेशे वर्त्तते। इति शब्दरत्नावली॥

हेरिकः, पुं, (हि + इक। रुट् च।) चरः। इति हेमचन्द्रः॥

हेरुकः, पुं, (हि + उक। रुट् च।) बुद्धभेदः। महाकालगणः। इति मेदिनी॥ शिवलिङ्गविशेषः। यथा,—
"शिवलिङ्गञ्च तत्रास्ति शिलायां हेरुकाह्वयम्।
महोदधिशपूर्व्वस्यां नायकं तञ्च पूजयेत्॥"
इति कालिकापुराणे कामाख्याकल्पनिर्णये ८१ अध्यायः॥ गणेशः। इति तन्त्रम्॥

हेलञ्ची, स्त्री, (हेलं चिनोतीति। चि + ड। ङीष्। पृषोदरात् साधुः।) हिलमोचिका। हेलञ्चा इति भाषा। इति शब्दचन्द्रिका॥ (हिलमोचिकाशब्देऽस्या गुणादयो ज्ञेयाः।)

हेलनं, क्ली, (हेड + ल्युट्। डलयोरैक्यम्।) अवहेला। इति शब्दरत्नावली॥ (यथा, भागवते। ६।२।१४।
"साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव च।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥")

हेला, स्त्री, (हिल् + घञ्। टाप्।) स्त्रीणां शृङ्गारभावजक्रियाविशेषः। इत्यमरः।१।७।३२॥ सुरते प्रौढेच्छा हेला। यदाह।
"प्रौढेच्छा याति रूढ़ानां नारीणां सुरतोत्सवे।
शृङ्गारशास्त्रतत्त्वज्ञैर्हेला सा परिकीर्त्तिता॥"
इति।
अन्ये तु।
"स एव हेला सुव्यक्तः शृङ्गाररससूचकः।"
इत्याहुः। अस्यार्थः। हाव एव स्फुटशृङ्गारानुभावो हेलेति। अन्ये त्वाहुः विलासादयो दश स्वाभाविकाः भावहावहेलास्त्रयोऽङ्गजाः शोभादयः सप्त अयत्नजाः। इति विंशतिरलङ्काराः। तेषु।
"देहात्मकं भवेत् सत्त्वं सत्त्वाद्भावः समुद्गमः।
भावात् समुत्थितो हावो हावाद्धेला समुत्थिता॥"
इति॥
हिल श हावकृतौ घञ् स्त्रीत्वं लोकाश्रयात्। हेलिरपि।
"हेलिः पुंसि रवौ हेलिर्हेलायामपि योषिति।"
इति रुद्रः। इति भरतः॥
अपि च।
"हाव एव भवेद्धेला व्यक्तः शृङ्गारसूचकः।"
* इत्युज्ज्वलनीलमणिः॥*॥
अवज्ञा। इति मेदिनी॥ (यथा, मार्कण्डेयपुराणे। १४।२६।
"स्वल्पं पुण्यं शुभं गन्धं हेलया सम्प्रयच्छति।
स्पर्शं वाप्यथवा शब्दं रसं रूपमथापि वा॥")
ज्योत्स्ना। इति केचित्॥

हेलावुकः, पुं, अश्वविक्रयी। इति हारावली॥

हेलिः, पुं, (हेलति। हिल + "सर्व्वधातुभ्य इन्।" उणा० ४।११७। इति इन्।) सूर्य्यः। इति त्रिकाण्डशेषः॥ आलिङ्गनम्। इति केचित्॥

हेलिः, स्त्री, (हिल श हावकृतौ + इन्।) हेला। इति रुद्रः। इत्यमरटीकायां भरतः॥

हेष, ऋ ङ अश्वानां शब्दे। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-अक०-सेट्।) ङ, हेषते घोटकः। ऋ, अजिहेषत्। इति दुर्गादासः॥

हेषा, स्त्री, (हेष + भावे अः।) अश्वानां निस्वनः। (यथा, मार्कण्डेयपुराणे। २१।२०।
"कृतार्त्तहेषाशब्दो वै मत्तः वाजिशोभनः।
नीतः सोऽथ च तेनैव दानवेन दुरात्मना॥")

तत्पर्य्यायः । हेवा २ । इत्यमरः । २।७।४७ ॥ हेषा ३ । इति तट्टीका ॥

[हे]षी, [न्] पुं, (हेषा इति शब्दोऽस्त्यस्य । इनिः ।) अश्वः । इति त्रिकाण्डशेषः ॥

है, व्य, ( हे च ई च । ) सम्बोधनम् । हूतिः । इति मेदिनी ॥

[है], व्य, ( हिनोतीति । हि गतौ बाहुलकात् डै ।) सम्बोधनम् । आह्वानम् । इति मेदिनी ॥

[है]तुकः, पुं, ( हेतुना चरतीति । हेतु+ठक् । ) असद्युक्तिव्यवहारी । यथा, मनुः ।

"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावरा ॥"

त्रैविद्यः त्रिवेदपारगः । हैतुकः असद्युक्तिव्यवहारी । इति व्यवहारतत्त्वम् ॥ हेतुद्वारा सत्कर्म्मसु सन्देहकर्त्ता । यथा,—

"पाषण्डिनो विकर्म्मस्थान् वैड़ालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥"

इति विष्णुपुराणे । ३ । १८ । ९९ ।

पाषण्डादीनां लक्षणम् ।

"अतः स्वधर्म्मात् पाषण्डो विकर्म्मस्थो निषिद्धकृत् ।
कुर्य्याद्धर्म्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैड़ालं नाम तद्व्रतम् ॥"

तद्वान् वैड़ालव्रतिकः ।

"प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् ।
व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः ॥
सन्देहकृत् हेतुभिर्यः सत्कर्म्मसु स हैतुकः ।
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकव्रतिरुदाहृतः ॥"

इति तट्टीका ॥

( फलाभिसन्धानयुक्ते, त्रि ॥ )

हैमं, क्ली, ( हिमे भवम् । अण् । ) प्रातर्हिमोद्भवजलम् । इति राजनिर्घण्टः ॥ हिमभवे, त्रि ॥ ( यथा, रघौ । १६ । ७ ।

"लब्धान्तरा सावरणेऽपि गेहे
योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम् ॥")

हेमजाते च त्रि ॥ इत्यमरः । २ । ८ । ३२ ॥ ( यथा, रघौ । ६ । १५ ।

"आकुञ्चिताग्राङ्गुलिना ततोऽन्यः
किञ्चित् समावर्ज्जितनेत्रशोभः ।
तिर्य्यग्विसंसर्पिनखप्रभेण
पादेन हैमं विलिलेख पीठम् ॥")

हैमः, पुं, भूनिम्बः । इति राजनिर्घण्टः ॥ ( हेम्नो विकारः । हेम+अण् । ) हेम्नो विकारः । इति मुग्धबोधव्याकरणम् ॥ ( शिवः । यथा, महाभारते । १३ । १७ । ९३ ।

"हैमो हेमकरो यज्ञः सर्व्वधारी धरोत्तमः ।"

पर्व्वतविशेषः । यथा, महाभारते । १३ । १९ । ५३ ।

"कैलासं मन्दरं हैमं सर्व्वाननुचचार ह ।
तानतीत्य महाशैलान् कैरातं स्थानमुत्तमम् ॥")

हैमनं, क्ली, पुं, (हेमन्त एव इति । "सर्व्वत्राण् च तलोपश्च ।" ४ । ३ । २२ । इति स्वार्थे अण् तलोपश्च । ) हेमन्त ऋतुः । यथा । हेमन्तहैमनावस्त्री । इति शब्दरत्नावली । ( हेम्न इदमित्यण् । न टिलोपः । ) स्वर्णजाते हिमजाते च त्रि ॥ ( हेमन्तभवे च त्रि । यथा, किरातार्ज्जुनीये । १७ । १२ ।

"उमापतिं पाण्डुसुतप्रणुन्नाः
शिलीमुखास्तथ्यवचोऽभ्युपेतुः ।
अभ्युत्थितस्याद्रिपतेर्नितम्ब-
मर्कस्य पादा इव हैमनस्य ॥")

हैमनः, पुं, ( हेमन्त एव अण् । तलोपश्च । ) मार्गशीर्षमासः । इति राजनिर्घण्टः ॥ ( हेमन्ते जातः अण् तलोपश्च ।) हिमकालोद्भवव्रीहिकधान्यम् । अस्य गुणाः ।

"हैमनास्तु हिमा वृष्या मधुरा बहुवर्च्चसः ।"

इति राजवल्लभः ॥

हैमन्तं, क्ली, पुं, (हेमन्त+"सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।" ४।३।१६। इति अण् ।) हेमन्त ऋतुः । हेमन्तसम्बन्धिनि, त्रि । इति हेमन्तशब्दात् स्वार्थे अणप्रत्ययेन निष्पन्नम् ॥

हैमन्तिकं, क्ली, ( हेमन्ते भवः । ठञ् । ) शालिधान्यम् । आमन धान इति भाषा । यथा,—

"हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ॥"

इति हविष्यान्नप्रकरणे तिथ्यादितत्त्वम् ॥

हेमन्तकालजाते, त्रि ॥ ( यथा, आश्वलायनगृह्यसूत्रे । ४ । १९ । १ ।

"बृहस्पतिः पांक्तश्छन्दः शक्वरी हैमन्तिकः ॥")

हैमसुद्रिकः, त्रि, स्वर्णमुद्रिकाविशिष्टः । हैमी मुद्रिका यस्य इति बहुव्रीहिसमासनिष्पन्नः ॥ इति मुग्धबोधव्याकरणम् ॥

हैमलः, पुं, क्ली, (हिमल+अण् ।) हेमन्त ऋतुः । हिमलशब्दात् अणप्रत्ययेन निष्पन्नः । इति क्वचित् शब्दरत्नावली ॥ हैमन इति साधुपाठः ॥

हैमवतं, क्ली, ( हिमवतोऽदूरभवो देशः हिमवत इदं वा । अण् ।) भारतवर्षम् । इति त्रिकाण्डशेषः ॥

हैमवतः, पुं, विषभेदः । इति हेमचन्द्रः ॥ (हिमालयसम्बन्धिनि, तज्जाते च त्रि ॥ देशविशेषः । यथा, महाभारते । २ । ५० । ८० ।

"निषादान् पारसीकांश्च लब्ध्वा हैमवतास्तथा ॥")

हैमवतवर्षं, क्ली, भारतवर्षम् । यथा,—

"एतद्धैमवतं वर्षं भारती यत्र सन्ततिः ।
हेमकूटं परं यत्र नाम्ना किंपुरुषोत्तमः ॥"

इति वाराहे रुद्रगीता ॥

हैमवती, स्त्री, (हिमवतोऽपत्यं स्त्री । अण् ङीप् ।) पार्व्वती । ( यथा, देवीभागवते ।१२।८।५७।

"उमाभिधानां पुरतो देवीं हैमवतीं शिवाम् ॥")

हरीतकी । इत्यमरः ।२।१।१८ ; २ । ४ । ५९ ॥ स्वर्णक्षीरी । ( अस्याः पर्य्यायो यथा,—

"कटुपर्णी हैमवती हेमक्षीरी हिमावती ।
हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।) श्वेतवचा । इति मेदिनी ॥ (अस्याः पर्य्यायो यथा,

"षड्ग्रन्थाग्रोग्रा वचा श्वेता हैमवतीति च ।"

इति गारुडे २०८ अध्याये ॥

हिमवतः प्रभवति प्रकाशते प्रथमं दृश्यते इति । "प्रभवति ।" ४ । ३ । ८३ । इत्यण् ।) गङ्गा । इति धरणिः ॥ ( यथा, महाभारते । ३ । १०८ । १६ ।

"एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
पितामहा मे वरदे ! कपिलेन महानदि ! ।
अनेषमाणास्तुरगं नीता वैवस्वतक्षयम् ॥"

हिमवति भवा इति । अण् ।) रेणुका । कपिलद्राक्षा । अतसी । इति राजनिर्घण्टः ॥

हैमा, हैमी, } स्त्री, ( हेम तद्वर्णोऽस्त्यस्याः इति अण् । वा ङीप् । ) पीतयूथिका । इति शब्दरत्नावली ॥ ( यूथिकाशब्देऽस्या विवरणं ज्ञातव्यः ॥ )

हैयङ्गवीनं, क्ली, ( ह्यो गोदोहस्य विकारः इति । "हैयङ्गवीनं संज्ञायाम् ।" ५ । २ । २३ । इति खञ् ह्यस्शब्दस्य हियङ्गादेशश्च ।) ह्योगोदोहोद्भवं घृतम् । इत्यमरः । २ । ९ । ५२ ॥ नवनीतम् । इति रत्नमाला राजनिर्घण्टश्च ॥ ( यथा, हरिवंशे । भविष्यपर्व्वणि । ५८ । १० ।

"हैयङ्गवीनं क्षीराणि दधि वा किमणीजनम् ।
गोधनं सर्व्वमेवेदं गौरोगं प्रतिपद्यते ॥" )

तत्पर्य्यायः । सरजम् २ मन्थजम् ३ कलसूटम् ४ । इति हारावली ॥

हैरिकः, पुं,(हिनोतीति । रक् । हेरं आसुरी माया । तज्जानाति । ठक् । ) चौरः । इति धरणिः ॥

हैहयः, पुं, ( हय्या अपत्यम् । "स्त्रीभ्यो ढक् ।" ४।१।१२०। इति ढक् । पृषोदरादित्वात् साधुः । यद्वा हिशब्देन नाभिकन्दप्रयत्नेन नामग्रहणात् हेयाशब्देन हेयाशब्दं कुर्व्वन् हयति गच्छतीति हेहयोऽश्वः तस्यायं "शिवादिभ्योऽण् ।" ४ । १ । ११२ । इत्यण् । यद्वा, हे भक्त हे भक्त इति वदन् हयति गच्छतीति हेहयो विष्णुः । तस्यायं हैहयः । ) कार्त्तवीर्य्यः । इति हेमचन्द्रः ॥ देशविशेषः । यथा,—

"पश्चिमे हैहयास्तात्रिम्लेच्छवासपुरकादयः ॥"

इति ज्योतिस्तत्त्वे कूर्म्मचक्रम् ॥

हैहयः, पुं, ( हैहयाः तद्देशवासिनः तेषां राजा अण् ।) कार्त्तवीर्य्यराजः । इति शब्दरत्नावली ॥ (यथा, रघौ । ११ । ७४ ।

"बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं
द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्सहरणाच्च हैहय-
स्त्वं च कीर्त्तिमपहर्त्तुमुद्यतः ॥")

मुद्धृत्य कुण्डोपरि त्रिः परिभ्राम्य जानुस्पृ-
गृहीतजः शिववीजबुद्ध्या आत्मनोऽभिमुखं
कृत्वा योनौ एनं क्षिपेत्। ततो ह्रीं वह्निमूर्त्तये
नमः इत्यभ्यर्च्य रं वह्निचैतन्याय नमः इति
पितन्यं तत्र संयोज्य ॐ चित् पिङ्गल हन हन
दह दह पच पच सर्व्वं ज्ञापय ज्ञापय स्वाहा
इति ज्वालयेत्। ततः।
"अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्॥"
इत्युपतिष्ठेत्॥
ततो अग्ने त्वमसुकनामासीति नाम कृत्वा ॐ
वैश्वानर जातवेद इहावह लोहिताक्ष सर्व्व-
कर्म्माणि साधय स्वाहा। अनेनार्घ्यादिभिः
संपूज्य ॐ अग्नेर्हिरण्यादिसप्तजिह्वाभ्यो नमः।
ॐ सहस्रार्च्चिषे हृदयाय नमः इत्यादि अग्नि-
षडङ्गेभ्यो नमः। ॐ अग्नये जातवेदसे इत्या-
द्यष्टमूर्त्तिभ्यो नमः। तद्वाह्ये ॐ ब्राह्म्याद्यष्ट-
शक्तिभ्यो नमः। तद्बहिः ॐ पद्माद्यष्टनिधिभ्यो
नमः। तद्बाह्ये ॐ इन्द्रादिलोकपालेभ्यो नमः।
तद्बाह्ये ॐ वज्राद्यस्त्रेभ्यो नमः। ततः प्रादेश-
मात्रं कुशपत्रद्वयं घृतमध्ये निक्षिप्य सव्यासव्य-
मध्यभागेषु इडां पिङ्गलां सुषुम्नां ध्यात्वा होमं
कुर्य्यात्। स्रुवेण दक्षिणभागादाज्यं गृहीत्वा
ॐ अग्नये स्वाहा इति अग्नेर्दक्षिणनेत्रे जुहु-
यात्। तथा वामभागादाज्यं गृहीत्वा ॐ
सोमाय स्वाहा इति वामनेत्रे जुहुयात्। ततो
मध्यभागादाज्यं गृहीत्वा ॐ अग्निसोमाभ्यां
स्वाहा इत्यग्नेर्ललाटनेत्रे जुहुयात्। पुनर्दक्षि-
णतः नम इति घृतं गृहीत्वा ॐ अग्नये
स्विष्टकृते स्वाहा इत्यग्निमुखे। ततो महा-
व्याहृतिहोमः। ॐ भूः स्वाहा ॐ भुवः स्वाहा
ॐ स्वः स्वाहा ॐ वैश्वानर जातवेद इहावह
लोहिताक्ष सर्व्वकर्म्माणि साधय स्वाहा इत्यनेन
त्रिवारं जुहुयात्। ततः अग्नौ मूलेन पीठ-
पूर्व्वकं देवतां संपूज्य तन्मुखे घृतेन मूलमन्त्रेण
पञ्चविंशतिवारं जुहुयात्। वह्निदेवतयोरा-
त्मना सह ऐक्यं विभाव्य मूलमन्त्रेण एकादशा-
हुतीर्ज्जुहुयात्। ततो मूलमन्त्रस्य अङ्गदेव-
ताभ्यः स्वाहा प्रकल्पेन् प्रत्येकमेकैकाहुतिं
जुहुयात्। ततः सङ्कल्पं विधाय तत्तत्कल्पोक्त-
विधिना होमं कुर्य्यात्। ततो मूलमन्त्रेण पूर्णाहुतिं
दत्त्वा संहारमुद्रया स्वेष्टदेवतां हृदये समानीय
क्षमस्वेति विसृज्य दक्षिणां दत्त्वा अच्छिद्राव-
धारणं कुर्य्यात्। इति तन्त्रसारः॥ इष्टहोम-
प्रयोगस्तु तत्रैव द्रष्टव्यः॥

**होमकः**, पुं, (होमः + संज्ञायां कन्।) होता।
यथा, मात्स्ये ९३। १२८—१२९ श्लोकौ।
"पूर्व्वद्वारे च संस्थाप्य बह्वृचं वेदपारगम्।
यजुर्व्विदं तथा याम्ये पश्चिमे सामवेदिनम्॥
अथर्व्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः।
अष्टौ तु होमकाः कार्य्या वेदवेदाङ्गवेदिनः॥"

**होमकुण्डं**, क्ली, (होमार्थं कुण्डम्।) होमार्थ-
कुण्डम्। तत्पर्य्यायः। हवनी २। इति त्रिकाण्ड-
शेषः॥ अस्य विवरणं कुण्डशब्दे द्रष्टव्यम्॥

**होमधान्यं**, क्ली, (होमोपयुक्तं धान्यम्।) तिलः।
इति राजनिर्घण्टः॥

**होमधूमः**, पुं, (होमजातः धूमः।) होमीयाग्नि-
धूमः। तत्पर्य्यायः। निगमः २। इति हेमचन्द्रः॥

**होमभस्म**, [न्] क्ली, (होमजातं भस्म। तत्-
पर्य्यायः। वैष्टुतम् २। इति हेमचन्द्रः॥

**होमाग्निः**, पुं, (होमस्य अग्निः। यज्ञवह्निः।
तत्पर्य्यायः। महाज्वालः २ महावीरः ३
प्रवर्गः ४। इति हेमचन्द्रः॥

**होमिः**, पुं, (हूयते अस्मिन्निति। हु + इन्।
सुट् च।) अग्निः। (हूयते अनेनेति। इन्
सुट् च।) घृतम्। इति मेदिनी॥ जलम्।
इति शब्दरत्नावली॥

**होमी**, [न्] पुं, (होमः अस्यास्तीति। इनिः।)
होमकर्त्ता। यथा, तिथ्यादितत्त्वे।
"तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः।
तिलभुक् तिलवापी च षट्तिली नावसीदति॥"
(जुहोतीति। हु + "उत्सुक्रदर्विहोमिनः।"
उणा० ३। ८४। इति मिनिः। निपातितश्च।
यजमानः। इत्युज्ज्वलदत्तः॥)

**होम्यं**, क्ली, (होमाय हितम्। यत्।) घृतम्।
इति राजनिर्घण्टः॥ होमीयद्रव्यमात्रे, त्रि॥
(यथा, हरिवंशे भविष्यपर्व्वणि २५१ अध्याये।
"होता पोता हन्ता नेता मन्ता होम्यहोता
परात्परश्च॥")

**होरा**, स्त्री, (होलति कुत्स्यते वेति। हुल हिंसा-
संवरणयोः + अच् घञ् वा। रलयोरैक्यम्
टाप्।) लग्नम्। राश्यर्द्धम्। रेखा। शास्त्र-
भेदः। इति मेदिनी॥ द्वितीयार्थस्य विशेषो
यथा, ज्योतिस्तत्त्वे।
"विषमर्क्षेषु प्रथमं होराः स्युश्चक्ररोचिषः।
द्वितीयाः शशिनो युग्मे व्यत्ययात्कथयेत् सदा॥"
सार्द्धदण्डद्वयात्मककालः। स तु इंरेजानां आव-
यार इति ख्यातः। यथा, वह्निपुराणे गणभेदाध्याये।
"चतुर्विंशतिवेलाभिरहोरात्रं प्रपद्यते।
पश्चिमादर्द्धरात्रादिहोराणां विद्यते क्रमः॥"

**होलकः**, पुं, (हु + विच्। लक्ष्यते आस्वाद्यते इति।
लक् + अप्।) तृणाग्निभृष्टार्द्धपक्वशमीधान्यम्।
होरा इति हिन्दी भाषा। यथा, भावप्रकाशे।
"अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च होलकः।
होलकोऽल्पानिलो मेदःकफदोषत्रयापहः॥
भवेद्यो होलको यस्य स च तत्तद्गुणो भवेत्॥"

**होलाकः**, पुं, स्वेदविशेषः। यथा, चरकसूत्रस्थाने।
"धीतीकान्तु करीषाणां यथोक्तानां प्रदीपयेत्।
शयनान्तःप्रमाणेन शय्यामुपरि तत्र च।
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत्॥
स्ववच्छन्नः सुखं तत्राभ्यक्तः स्विद्यति ना सुखम्।
होलाकस्वेद इत्येष सुखप्रोक्तो महर्षिणा॥"
धीतीका शुष्कगोमयकृतोऽग्निविशेषः॥

**होलाका**, स्त्री, (हु + विच्। तं लाति ला +
संज्ञायां कन् टाप्।) वसन्तोत्सवः। होली
इति भाषा। इति दायभागटीका॥ तदधि-
करणन्यायो यथा। अथ होलाकाधिकरणम्।
प्रतीच्यानां होलाकाचारदर्शनेन तदर्थं होलाका
आचरणीया इति सामान्यविधिः कल्प्यते।
न तु प्राच्यानामनाचरणात् प्रतीच्यैरिति तत्र
पदं देयं सामान्यविधिनैव प्रतीच्याचारोपपत्तिः।
प्राच्यानामनाचारस्य इच्छाविरहेणैव उपपत्तिः।
इच्छाविरहश्च तद्देशीयपूर्व्वपूर्व्वानाचारदर्शनात्।
प्रतीच्यानामुल्काद्यानयनाचारविरहवत्। न
त्वनाचारार्थं वेदः कल्प्यते। तथा च यत्र
सामान्यश्रुत्या उपपत्तिस्तत्र विशेषविधिर्न
कल्प्यते गुरुत्वगुणत्वात् मद्देशिवत्। न हि
कर्मकाले तदसम्भवात् तदन्यकाले इति विशेष-
णीयम्। इति अधिकरणकौमुदी॥*॥ अन्यच्च।
यथा होलाकाधिकरणे प्राच्यकर्तृकहोलाकानु-
ष्ठानोपपत्तये होलाका कर्त्तव्येति श्रुतिः
कल्पिता। तावतैव तदुपपत्तिः। न तु प्राच्यादि-
पदवती कल्पनागौरवात्। तद्वदत्रापि अर्व्वाक्
संग्रहयं गृह्णीयादिति श्रुतिः कल्पनीया न तु
शिष्टादिपदवती तदयुक्तं तत्र प्राच्यकर्तृकानु-
ष्ठानस्यावश्यकल्पनीयसामान्यश्रुत्यैवोपपत्तिः। न
चाप्राच्यानामनुष्ठानार्थं प्राच्यपदवती कल्प्यता-
मिति वाच्यम्। तेषामननुष्ठानस्यानाचाररूपस्य
श्रुतिकल्पनानिमित्तत्वानुपपत्तिः। इति दाय-
भागः॥

**हौ**, अ, (हूयते अनेनेति। ह्वे + डौ।) सम्बो-
धनम्। आह्वानम्। इति मेदिनी॥

**हौड**, ऋ ङ गतौ। अनादरे। इति कविकल्पद्रुमः॥
(भ्वा०-आत्म०-सक०-सेट्।) चतुर्द्दशस्वरी।
ऋ, अजुहौडत्। ङ, हौडते। इति दुर्गादासः॥

**हौत्रकः**, त्रि, (होतुरागतम्। "ऋतष्ठञ्।" ४।
३। ७८। इति ठञ्) होतृसम्बन्धीयः। इति
होतृशब्दात् कप्रत्ययेन निष्पन्नः॥

**हौम्यं**, क्ली, (होमाय अर्हं। यत्।) घृतम्। इति
राजनिर्घण्टः॥ होमीयद्रव्ये, त्रि॥

**हौम्यधान्यं**, क्ली, (हौम्यञ्च तत् धान्यञ्च।)
तिलः। इति राजनिर्घण्टः॥ इति केचित्॥

**ह्नु**, ङ नु चौर्य्ये। इति कविकल्पद्रुमः॥ (अदा०-
आत्म०-सक०-अनिट्।) ङ नु ह्नुते। इति
दुर्गादासः॥

**ह्मल**, म चाले। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-
अक०-सेट्।) म ह्मलयति। मितोऽप्यस्य णौ
ज्वलह्वलह्मल इत्यादिना कंयलस्य नुसविकल्प-
नात् सोपसर्गस्यैव नित्यं ह्रस्वः। आह्मलयति
आह्मालयति। चालनम्। इति दुर्गादासः॥

**ह्यः**, [स्] अ, (गतमहः। ह्यो निपातितः।) गत-
दिनम्। इत्यमरः। ३। ४। २२॥ (यथा,
राजतरङ्गिण्याम्। ६। ४६।
"अयि राजनि निश्चौरेऽध्वभिर्विश्रुतः सुखम्।
ह्योऽभवद्यत्वौतद्दि मे दिनान्ते आप्यतः क्षितिः॥")

**ह्यस्तनं**, त्रि, (ह्यो भवम्। ह्यस् + "सायंचिरम्प्राह्णे-

मनोऽन्यतरस्याम् ।” ४।२।१०५ । इति पक्षे ण्यलौ ।) ह्रीभवम् । गन्तदिवसीयम् । इति शब्दमाला ॥ (यथा, महाभारते । ५।१८६।४ । “ह्यस्तनेन च कोपेन शक्तिं वै प्राहिणोन्मयि ॥”)

ह्यस्त्य, त्रि, ( ह्यो भव इति । ह्यस्+“ऐषमोह्यः-श्वसोऽन्यतरस्याम् ।” ४।२।१०५। इति त्यप् । ) ह्यस्तनम् । इति शब्दमाला ॥

ह्मग, म ए संवरणे । इति कविकल्पद्रुमः । ( भ्वा०-पर०-सक०-सेट् । ) रेफमध्यः । म, ह्मगयति । ए, अह्मगीत् । इति दुर्गादासः ॥

ह्रगिया, स्त्री, ( ह्रियीया । पृषोदरादित्वात् साधुः । ) ह्रियीया । इत्यमरटीकायां भरतः ॥

ह्रदः, पुं, (ह्रादते इति । ह्राद अव्यक्तशब्दे + अच् । पृषोदरादित्वात् ह्रस्वः । ) अगाधजलाशयः । इत्यमरः । १ । १० । २५ ॥ तज्जलगुणाः । ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यञ्च । इति राजनिर्घण्टः ॥ किरणः । इत्यमरटीकायां रामाश्रमः ॥

ह्रदग्रहः, पुं, ( ह्रदस्य ग्रहः । ) कुम्भीरः । इति त्रिकाण्डशेषः ॥

ह्रदिनी, स्त्री, (ह्रदोऽस्यामस्तीति । इनि । ङीप् ।) नदी । इत्यमरः । १ । १६ । २५ ॥ ( यथा, भागवते । २ । ७ । २८ ।

“तच्छुश्रुयेति विषवीर्य्यविलोलजिह्व-
मुच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम् ॥” )

ह्रप, क भाषणे । ( चुरा०-पर०-सक०-सेट् । ) रेफयुक्तादिरयिके । क, ह्रापयति । भाषणं कथनम् । इति कविकल्पद्रुमटीकायां क्लपधातु-कथने दुर्गादासः ॥

ह्रस, रवे । इति कविकल्पद्रुमः । (भ्वा०-पर०-अक०-सेट् । ) रेफयुक्तः । ह्रसति । इति दुर्गादासः ॥

ह्रसिमा, [ न् ] पुं, ( ह्रस्वस्य भावः । “पृथ्वादिभ्य इमनिज् वा ।” ५ । १ । १२२ । इति इमनिच् । “स्थूलदूरयुवह्रस्वक्षिप्रेति ।” ६ । ४ । १५६ । इति ह्रसादेशः । ) ह्रस्वता । ह्रस्वशब्दात् इमनुप्रत्ययेन निष्पन्नः ॥

ह्रसिष्ठः, त्रि, (अतिशयेन ह्रस्वः । इष्ठन् । “स्थूल-दूरयुवह्रस्वेति ।” ६ । ४ । १५६ । इति ह्रसा-देशः । ) अतिशयह्रस्वः । इत्यमरः । ३ । १ । ११२ ॥ ह्रस्वशब्दात् इष्ठप्रत्ययेन निष्पन्नः ॥

ह्रसीयान्, [ स् ] त्रि, ( ह्रस्व + ईयसुन् । ह्रसा-देशः । ) अतिशयह्रस्वः ॥

ह्रस्वं, क्ली, (“सर्व्वनिघृष्वरिष्वेति ।”उणा० १।१५३। इत्यत्र “ह्रसशब्दे बाहुलकात् ततोऽपि वन् ।” इत्युज्ज्वलदत्तोक्तेर्वन् ।) परिमाणविशेषः । यथा, “अणु दीर्घं महद्ह्रस्वमिति तद्भेद ईरितः ।”

इति भाषापरिच्छेदः ॥

गौरसुवर्णशाकम् । पुष्पकासीसम् । इति राज-निर्घण्टः ॥

ह्रस्वः, पुं, स्त्री, ( ह्रस + वन् । ) प्रकृतपुरुषप्रमा-णात् न्यूनमनुष्यः । बाउने इति भाषा । तत्-पर्य्यायः । खर्व्वः २ वामनः ३ वामनौ ४ । इत्यमरभरतौ । २ । ६ । ४६ ॥ नीचकः ५ नीचः ६ । इति शब्दरत्नावली ॥ अकर्णनः ७ । इति जटाधरः ॥ एकमात्रवर्णे, पुं । यथा,—

“एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् ॥”

इति मुग्धबोधटीकायां दुर्गादासः ॥

मुग्धबोधमते अस्य ख-संज्ञा । यथा । आवन्-खर्घप्लं । अ-आ-आ इति वर्णत्रयं क्रमेण ख-घ-प्ल-संज्ञं स्यात् । वच्छब्दात् इ-ई-इ इत्या-दिषु च । तन्मते अस्य मुसंज्ञापि । यथा । खर्वो मुश्च । ख्वोर्घसंज्ञो घोसंज्ञः स्यात् । इति वोपदेवः ॥ मेषदृषकुम्भमीनराशयः । यथा । ह्रस्वास्तिमिगोऽविघटाः । इति ज्योतिस्तत्त्वम् ॥

ह्रस्वः, त्रि, ( ह्रस + वन् । ) क्षुद्रवस्तुमात्रम् । तत्पर्य्यायः । वामनः २ न्यङ् ३ नीचः ४ खर्व्वः ५ । इत्यमरः । ३ । १ । ७० ॥ नीचैः ६ । इति शब्दरत्नावली । अणुः ७ । इति जटा धरः ॥ तद्वैदिकपर्य्यायः । क्षद्र १ ह्रस्वः २ निघृष्वः ३ मायुकः ४ प्रतिष्ठा ५ क्षुधु ६ वम्रकः ७ दभ्रम् ८ अर्भकः ९ क्षुल्लकः १० अल्पः ११ । इत्येकादश ह्रस्वनामानि । इति वेदनिघण्टौ ३ अध्यायः ॥

ह्रस्वकुशः, पुं, (ह्रस्वश्चासौ कुशश्चेति । नित्यकर्म्म-धारयः । ) श्वेतकुशः । इति राजनिर्घण्टः ॥

ह्रस्वगर्भः, पुं, ( ह्रस्वो गर्भोऽस्य । ) कुशः । इति रत्नमाला ॥

ह्रस्वगवेधुका, स्त्री, ( ह्रस्वा गवेधुका । नित्यकर्म्म-धारयः । ) नागबला । इत्यमरः ।२।४।११७। अस्याः पर्य्यायगुणा नागबलाशब्दे द्रष्टव्याः ॥

ह्रस्वजम्बुः, पुं, ( ह्रस्वो जम्बुः । ) क्षुद्रजम्बुः । इति रत्नमाला ॥

ह्रस्वतण्डुलः, पुं, ( ह्रस्वः तण्डुलः । ) राजान्नम् । इति राजनिर्घण्टः ॥

ह्रस्वदर्भः, पुं, ( ह्रस्वो दर्भः । ) श्वेतकुशः । इति राजनिर्घण्टे ह्रस्वकुशशब्ददर्शनात् ॥

ह्रस्वदा, स्त्री, ( ह्रस्वेऽपि दीयते छिद्यते इति । दो + क । ) शल्लकी । इति राजनिर्घण्टः ॥

ह्रस्वपत्रकः, पुं, ( ह्रस्वानि पत्राणि यस्य । कप् ।) गिरिजमधूकवृक्षः । इति जटाधरः ॥

ह्रस्वपत्रिका, स्त्री, (ह्रस्वानि पत्राण्यस्याः । कप् । टाप् अत इत्वम् ।) अश्वत्थी । इति राजनिर्घण्टः ॥

ह्रस्वप्लक्षः, पुं, ( ह्रस्वश्चासौ प्लक्षश्चेति । ) क्षुद्रप्लक्ष-वृक्षः । तत्पर्य्यायः । सुशीतः २ शीतवीर्य्यकः ३ पुष्कः ४ महावरोहः ५ ह्रस्वपर्णः ६ पीपरिः ७ भिदुरः ८ मङ्गलच्छायः ९ । अस्य गुणाः ।

“प्लक्षः कटुः कषायश्च शिशिरो रक्तदोषजित् ।
मूर्च्छाभ्रमप्रलापघ्नो ह्रस्वप्लक्षो विशेषतः ॥”)

इति राजनिर्घण्टः ॥

ह्रस्वफला, स्त्री, (ह्रस्वं फलं यस्याः ।) भूमिजम्बुः । इति राजनिर्घण्टः ॥

ह्रस्वमूलः, पुं, ( ह्रस्वं मूलं यस्य । ) रक्तेक्षुः । इति राजनिर्घण्टः ॥

ह्रस्वशाखाशिफः, पुं, (शाखा च शिफा च शाखाशिफे ह्रस्वे शाखाशिफे यस्य ।) क्षुपः । इत्यमरः ।

ह्रस्वा, स्त्री, सूक्ष्मपर्णी । नागबला । भूमिजम्बुः । इति राजनिर्घण्टः । वामनी च ॥

ह्रस्वाग्निः, पुं, ( ह्रस्वोऽग्निरस्मात् । ) अर्कवृक्षः । इति शब्दचन्द्रिका ॥

ह्रस्वाङ्गः, पुं, ( ह्रस्वमङ्गमस्य । ) जीवकौषधम् । इत्यमरः । २ । ४ । १४२ ॥ वामनश्च ॥

ह्राद, ङ स्वने । इति कविकल्पद्रुमः । ( भ्वा०-आत्म०-अक०-सेट् । ) रेफयुक्तो द्वितीयवर्णो ङ, ह्रादते । इति दुर्गादासः ॥

ह्रादः, पुं, ( ह्राद + घञ् । ) शब्दः । इति हेम-चन्द्रः ॥ (यथा, महाभारते । ७ । ८० । ११ ।

“ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।”

हिरण्यकशिपुपुत्रः । यथा,—

“हिरण्यकशिपोः पुत्राश्चत्वारः सुमहाबलाः ।
प्रह्लादः पूर्व्वजस्तेषामनुह्रादस्तथैव च ।
संह्रादश्चैव ह्रादश्च ह्रादपुत्रान् शृणुष्व तान् ।
ह्रादस्य पुत्रौ द्वावास्तां शिविर्भीमस्तथैव च ।”

इति वह्निपुराणे काश्यपीयप्रजासर्गः ॥)

ह्रादिनी, स्त्री, ( ह्रादते शब्दायते इति । ह्राद + णिनि । ङीप् ।) विद्युत् । (यथा, महाभारते ६ । ११ । २६ ।

“ह्रादिन्य इव मेघेभ्यः शल्यस्य न्यपतन् शराः ।”)

वज्रम् । इत्यमरः ।१ ।३ ।९ ; ३।३।५१ ॥ नदी इति भरतः राजनिर्घण्टश्च ॥ शल्लकी । इति शब्दरत्नावली ॥

ह्रादी, [ न् ] त्रि, (ह्रादोऽस्यास्तीति । ह्राद + इनि शब्दविशिष्टः । (यथा, महाभारते ।५।१।५।

“रथाः पञ्चशताश्चान्ये ह्रादिनस्तु सुवर्मिणः ।”

ह्रासः, पुं, ( ह्रस रवे + घञ् । ) शब्दः । इति त्रिकाण्डशेषः ॥ क्षयः । यथा, तिथ्यादितत्त्वे ।

“ह्रासवृद्धी च सततं दिनरात्र्योर्यथाक्रमम् ।
सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समा स्मृता ॥”

ह्रिगीया, स्त्री, लज्जा । इत्यमरटीकायां भरतः अस्य रूपान्तरम् । ह्रगिया ह्रगीया च ॥

ह्रितः, त्रि, ( ह्रीतः । पृषोदरादित्वात् साधुः । लज्जितः । विभक्तः । भीतः । इति कश्चित्

अंशः, क्ली ॥

ह्रितिः, स्त्री, ( ह्रीतिः । पृषोदरादित्वात् साधुः । ह्रीतिः । हेरम्बम् । इति कश्चित् ॥

ह्रिबेर, क्ली, ( ह्रिये लज्जायै बेरमङ्गमस्य । पृषो-दरादित्वात् ह्रस्वः । ) ह्रीबेरम् । इति भर-द्विरूपकोषः शब्दरत्नावली च ॥

ह्री, लि लज्जे । इति कविकल्पद्रुमः । ( जुहो०-पर०-अक०-अनिट् । ) लि, जिह्रेति मौ-नङ्ख्या यः । इति दुर्गादासः ॥

ह्रीः, स्त्री, (ह्री लज्जायां + सम्पदादित्वात् क्विप् ।) लज्जा । इत्यमरः । १ । ७ । २३ ॥ (यथा मार्कण्डेयपुराणे । १२६ । २९ ।

“नाहं तात ! करिष्यामि पृथिव्याः परिपालनम्
नापेति ह्रीर्मे मनसो राज्येऽस्मिं त्वं नियोजय ॥

ह्रीका, स्त्री, (ह्री + "ह्रियो रश्च लो वा ।" उणा० १ । ४८ । इति कन् । टाप् । ) त्रासः । इत्युणादिकोषः ॥ लज्जा । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

ह्रीकुः, त्रि, ( ह्री + "ह्रियः कुक् रश्च लो वा ।" उणा० ३ । ८५ । इति कुक् । ) लज्जितः । सलज्जः । इत्युणादिकोषः ॥

ह्रीकुः, पुं, ( ह्री + कुक् । ) जतुकः । त्रपुः । इत्युणादिकोषः ॥

ह्रीच्छ, लज्जे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) रेफयुक्तादिचतुर्थस्वरी । ह्रीच्छति वधूः । इति दुर्गादासः ॥

ह्रीजितः, त्रि, ( ह्रिया जितः । ) लज्जाशीलः । इति जटाधरः ॥

ह्रीणः, } ह्रीतः, } त्रि, ( ह्री + क्तः । तस्य वा नः । ) लज्जितः । इत्यमरः । ३ । १ । ६१ ॥ ( यथा, महाभारते । ३ । २३ । ८ ।

"हा नाथ ! हा धर्म्म इति ब्रुवाणा
ह्रीतार्च सर्व्वेऽश्रुमुखाश्च राजन् ! ॥"

यथा च नैषधे । ३ । ६७ ।

"इतीरिता पत्त्ररथेन तेन
ह्रीणा च हृष्टा च बभाण भैमी ।")

ह्रीवेरं, क्ली, ( ह्रिये लज्जायै वेरमङ्गयस्य । क्षुद्रत्वात् । ) बालकम् । इत्यमरः ।२।४।१२२॥ बाला इति भाषा । अस्य गुणाः राजवल्लभे ।
"ह्रीवेरं छर्द्दिहृल्लासतृष्णातीसारनाशनम् ।"
अन्यत् ह्रीवेरशब्दे द्रष्टव्यम् ॥

ह्रीवेलं, } ह्रीवेलकं, } क्ली, (ह्रीवेर + पृषोदरादित्वात् रस्य लः । पक्षे ह्रीवेल + स्वार्थे कन् । ) ह्रीवेरम् । इत्यमरटीकायां भरतः ॥

हुड, } हूड, } ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् । ) ऋ, अजुहुडत् । अजुहोडत् । ङ, हूडते ह्रोडते । इति दुर्गादासः ॥

ह्रेप, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् । ) ऋ, अजिह्रेपत् । ङ, ह्रेपते जिह्रेपे । इ. दुर्गादासः ॥

ह्रेष, ऋ ङ सर्पणे । अव्यक्तशब्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-अव्यक्तशब्दे अक०-सर्पणे सक०-सेट् । ) रेफयुक्ताद्यः । ऋ, अजिह्रेषत् । ङ, ह्रेषते जिह्रेषे । ङ, ह्रेषृ च स्वनेऽश्वानाम् । ङ, ह्रेषते घोटकः जिह्रेषे । ऋ, अजिह्रेषत् । चकारात् ह्रेषृ ङ च । मधुरमधुपं ह्रेषन्ते ।

इति गत्यर्थत्वात् । वस्तुतस्तु पचादित्वादनि ह्रेषा इवाचरन्तीति क्वौ साध्यम् । इति दुर्गादासः ॥

ह्रेषा, स्त्री, (ह्रेष + भावे अः ।) अश्वानां कण्ठादिनिर्गतशब्दः । इत्यमरः । २ । ८ । ४७ ॥

ह्रौड, ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् । ) ऋ, अजुह्रौडत् । ह्रौडते । इति दुर्गादासः ॥

ह्लग, म ए संवरणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ) म, ह्लगयति अह्लगीत् । इति दुर्गादासः ॥

ह्लप, क भाषणे । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-सक०-सेट् ।) कं, ह्लापयति । रेफयुक्तादिरित्येके । ह्रापयति । अन्तःस्थहलोययुक्तः कण्ठ्यवर्गाद्यादिरिति दुर्गसिंहादयः । क्लापयति अचिक्लपत् । भाषणं कथनम् । इति दुर्गादासः ॥

ह्लस, रवे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-सेट् । ) ह्लसति । इति दुर्गादासः ॥

ह्लाद, ई ङ मोदने । स्वने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-मोदने सक०-सेट् । निष्ठायामनिट् । ) मोदनं हृष्टीकरणं हृष्टीभावश्च । ई, ह्लन्नः । ङ, ह्लादते चन्द्रो गात्रम् । बलात् प्रह्लादते मनः । इति किराते । इति दुर्गादासः ॥

ह्लादः, पुं, (ह्लाद + घञ् ।) आह्लादः । इति हेमचन्द्रः ॥ ( यथा, मार्कण्डेये । १५ । ५३ ।
"ततस्तद्गात्रसंसर्गी पवनो ह्लाददायकः ।
पापकर्म्मकृतो राजन् ! यातना न प्रबाधते ॥"
हिरण्यकशिपोः पुत्त्रभेदः । यथा, विष्णुपुराणे । १ । १५ । १४२ ।
"अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव बुद्धिमान् ।
संह्लादश्च महावीर्य्या दैत्यवंशविवर्द्धनाः ॥" )

ह्लादिनी, स्त्री, (ह्रादिनी इत्यर्थेऽपत्यात् रस्य लः ।) विद्युत् । वज्रम् । इत्यमरः । २ । ४ । १२४ ॥ ( ह्लादयते इति । ह्लादि + णिनि । ङीप् । ) शक्तिविशेषः । यथा,—
"ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः ।
स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः ॥"
इति श्रीभागवते ७।१।७ टीकायां श्रीधरस्वामी ।

ह्लीका, स्त्री, ( ह्री लज्जायाम् + "ह्रियोरश्च लो वा ।" उणा० ३।४८। इति कन् । रस्य लः ।) लज्जा । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

ह्लीकुः, स्त्री, (ह्री + "ह्रियः कुक् रश्च लो वा ।" इति कुक् पक्षे रस्य लः ।) ह्रीकुः । इत्युणादिकोषः ॥

ह्लीकुः, पुं, ( ह्री + कुक् । रस्य लः ।) जतु त्रपु । इत्युणादिकोषः ॥

ह्लेषा, स्त्री, ( ह्रेषा । रस्य लः । ) ह्रेषा । इत्यमरटीकायां नीलकण्ठः ॥

ह्वल, म चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ) म, प्रह्वलयति । मित्त्वेऽप्यस्य ज्वलह्वल इत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्य नित्यं ह्रस्वः । ह्वलयति ह्वालयति । चालश्चलनम् । इति दुर्गादासः ॥

ह्वृ, कौटिल्ये । लति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-अनिट् । ) ह्वरति लतां वायुः । इति दुर्गादासः ॥

ह्वे, ञ ऐ स्पर्द्धे । शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-शब्दे अक०-स्पर्द्धे-सक०-अनिट् ।) स्पर्द्धः पराभिभवेच्छा । इति वोपदेवः । ञ, ह्वयति ह्वयते मल्लो मल्लमभिभवितुमिच्छति । ह्वयति जनं लोकः । आह्वयतीत्यर्थः । ऐ हूयात् । गोविन्दभट्टस्तु स्पर्द्धाविषये अकर्म्मकोऽयमित्याह । इति दुर्गादासः ॥

---

## ॡ

ॡ, दीर्घलृकारः । गौडदेशे अस्याकारोच्चारणयोर्भेदो नास्ति । किन्त्वस्याध एकबिन्दुमात्रचिह्नं क्रियते । वेदे अस्य उच्चारणस्थानं जिह्वामूलम् । देवनागरवर्णमालायां अस्याकारः एवं प्रकारः ळ । अस्य प्रयोगः । अग्निमीळे । वैं इळ बीळु चित् । इत्यादि ऋग्वेदः ॥ * ॥ तन्त्रवर्णमालायामपि अस्य प्रयोजनम् । यथा,—
"अनुलोमविलोमेन कल्पया वर्णमालया ।
आदिलान्तं लादि आन्तक्रमेण परमेश्वरि ! ।
चकारं मेरुरूपञ्च लङ्घयेन्न कदाचन ॥"
इति मुण्डमालातन्त्रम् ॥

मातृकान्यासेऽपि अस्य प्रयोजनम् । तत्प्रमाणं मातृकाशब्दे द्रष्टव्यम् ॥ * ॥ तस्य नामानि यथा,
"ॡः एष्वा विमला मेधा अनन्तोऽयवचामिता ।
व्यापिनी शिवदा कैतुव्यंगनृसारकं ध्वठः ।
स्त्रीमूर्द्धाने च वेदार्थसारो नारायणः स्वयम् ।
जठरा नकुलिः पीता शिवपोऽक्षमालिनी ॥"
इति श्रीमन्नन्दभट्टाचार्य्यविरचितवर्णाभिधानम् ॥
अपि च ।
"ॡकारो विमलो जीवः शिवमूर्त्तिश्चरासनं ।"
इति श्रीरुद्रयामले ८ पटले मन्त्राभिधानम् ॥

कोषः श्रीवरदाप्रसादवसुना श्रीशब्दकल्पद्रुमो यत्र श्रीहरिपूर्व्वकेण चरणेनाकल्पितो यत्नतः ।
सोऽयं कोविदवारिदैर्बहुगुणैः संसेचितः सन्ततं सन्तोषं नयतु क्षितौ बुधगणान् पीयूषगर्भैः फलैः ॥
रसेन्दुनागोडुपतिप्रमाणे शाके शुभेऽस्मिन् भगवत्प्रसादात् ।
नीतः समाप्तिं बहुलप्रयासैः स शब्दकल्पद्रुम एष कोषः ॥

---

समाप्तोऽयं ग्रन्थः ।